आचार्यश्रीहर्षप्रणीतं

# खण्डनखण्डखाद्यम्

खण्डनभूषामणिव्याख्यया विभूषितम्

परिष्कारकः सम्पादकश्च

आचार्यश्रीब्रह्मदत्तद्विवेदी

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः

वाराणसी

सरस्वतीभवन-ग्रन्थमाला

[ १२१ ]

आचार्यश्रीहर्षप्रणीतं

# खण्डनखण्डखाद्यम्

श्रीरघुनाथशिरोमणिप्रणीतया

खण्डनभूषामणिव्याख्यया विभूषितम्

परिष्कारकः सम्पादकश्च

विद्यावाचस्पतिः

आचार्यश्री[illegible]दत्तद्विवेदी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

# SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 129 ]



## KHAṆḌANAKHAṆḌAKHĀDYAM

OF

**ĀCĀRYA ŚRĪHARṢA**

With the Commentary

**KHAṆḌANABHŪṢĀMAṆI**

By

**ŚRĪ RAGHUNĀTHA SIROMAṆI**

EDITED BY

Vidyāvācaspati

**ĀCĀRYA ŚRĪ BRAHMADATTA DVIVEDĪ**

Recipient of President Award

Former Principal

Ram Niranjan Das Murarka Sanskrit College,

Patna



VARANASI

1990

Research Publication Supervisor —
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

•

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.

•

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002.

•

First Edition—1000 Copies
Price Rs. 120·00

•

Printed by—
Dr. Ram Manohar Mishra
O. S. D.
Sampurnanand Sanskrit University Press
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १२९ ]

आचार्यश्रीहर्षप्रणीतं

# खण्डनखण्डखाद्यम्



श्रीरघुनाथशिरोमणिप्रणीतया

खण्डनभूषामणिव्याख्यया विभूषितम्

परिष्कारकः सम्पादकश्च
विद्यावाचस्पतिः
आचार्यश्रीब्रह्मदत्तद्विवेदी
राष्ट्रपतिसम्मानितः
पाटलिपुत्रस्थरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयस्य प्राचार्यचरः



वाराणस्याम्

२०४७ तमे वैक्रमाब्दे १९१२ तमे शकाब्दे १९९० तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

●

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

●

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२

●

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्—१२०.०० रूप्यकाणि

●

मुद्रकः—
**डॉ० राममनोहरमिश्रः**
विशेषाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी

# पुरोवाक्

ग्रन्थग्रन्थिनिधेयश्रीहर्षस्य खण्डनखण्डखाद्यं वितण्डामाश्रित्य रचितः कश्चनापूर्वो ग्रन्थः । अद्वैतवेदान्तव्यतिरिक्तान्यत्र सोपपत्ति खण्डितानि । अत एव एवमपि निगद्यते यदद्वैतवेदान्तप्रस्थानेऽस्य ग्रन्थस्य परिगणनम् । अमुं ग्रन्थमाश्रित्य प्रागुख्येण द्वादशटीकाः प्रसिद्धाः, ता भूमिकायां निर्दिष्टाः । तासु खण्डनभूषामणिरित्याख्या दीधितिकाराणां श्रीरघुनाथशिरोमणिमहोदयानां टीका सर्वतोऽभ्यधिका तर्कपरिपुष्टा विशदा च दृश्यते; किन्त्वस्याष्टीकाया मात्रिकाः केवलं प्रथमपरिच्छेदपर्यन्तमेव लभ्यन्ते । सोंऽशः शिवसायुज्यं प्राप्तैर्विद्वद्वर्यैः श्रीब्रह्मदत्तद्विवेदिभिः परिष्कृत्य सम्पादितः । पाण्डुलिपिद्वयं सह स्थाप्य तैः पाठः समाशोधि । स ग्रन्थस्तेषां जीवनकाले न प्रकाशमानीतः, इति खेदस्य विषयः । अधुना स प्रकाशमानीयते ।

खण्डनभूषामणिग्रन्थो न केवलं टीका, अपि तु स्वतन्त्र एव ग्रन्थः । तत्र श्रीहर्षयुक्तयो न केवलं नूतनैस्तर्कैः संवलिताः, अपि तु विधिरूपतया खण्डनग्रन्थस्य यद् व्यङ्ग्यम्, तद् अद्वैतवेदान्तमतं परिस्फुटतां नीतम् । न्यायशास्त्रनिष्णातैः श्रीरघुनाथशिरोमणिभिरस्मिन् ग्रन्थे काचन नव्यन्यायपरिष्कारपद्धतिव्यतिरेकिणी प्रसन्नसुभगा पद्धतिरुररीकृता । अत एव गभीरापि सुखावगाहा विषयपरामर्शविशदा शैली विदुषाम्मुदमावहति । अप्रकाशितचरस्यास्य ग्रन्थस्य प्रकाशनं विश्वविद्यालयस्य कृते महते परितोषाय ।

शेषो ग्रन्थोऽपि अपरखण्डात्मकः समयेन प्रकाशमानेष्यते । पण्डितप्रवरेभ्यः शिवलोकाध्युषितेभ्यो द्विवेदिमहाभागेभ्यः प्रणामाञ्जलिं वितरामीति ।

वाराणस्याम्,
विजयादशम्याम्
वि० सं० २०४७
(२९।९।१९९० खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसीस्थस्य



विद्यावाचस्पतिः आचार्यब्रह्मदत्तद्विवेदी
प्राचार्यचरः, रामनिरञ्जनदासमुरारका-संस्कृत-महाविद्यालयः
चौक, पटना सिटी ( बिहार )

## परिष्कर्तुः आचार्यब्रह्मदत्तद्विवेदिनः

### परिचयः

अस्य ग्रन्थस्य सम्पादकाः विद्यावाचस्पतय आचार्यश्रीब्रह्मदत्तद्विवेदिनः सारस्वतवैभवमूले वंशे १९६३ तमे वैक्रमे कार्त्तिकशुल्कद्वितीयायां (१९०६ तमे खृैस्ताब्दे) प्रयागमण्डले करछनाखण्डे पण्डितपुराभिधाने ग्रामे अजनिषत। तेषां पितृचरणा महामहोपाध्यायपण्डित **श्रीहरिहरकृपालुद्विवेदिमहाशयाः** वाग्देवतावतारमूर्त्तयः संस्कृतस्य पाण्डित्यपरम्परायां निरुपमं यशोराशिमाशिश्रियन्। आबालं लक्ष्मीसरस्वतीभ्यां समानस्नेहेन लालिता एते महाभागाः पितुरेव चरणयोः काणादम्, पाणिनीयम्, अथ च साहित्यविद्यां सविधिसमध्यगीषत।

सर्वप्रथमं व्याकरणशास्त्रे १९२७ खृैस्ताब्दे, तदनन्तरं न्यायशास्त्रे १९३० खृैस्ताब्दे, ततश्च साहित्यशास्त्रे १९३२ तमे खृैस्ताब्दे आचार्यपरीक्षां समुत्तीर्य सर्वासु परीक्षासु प्रथमश्रेण्यां प्रथमं स्थानं चाधिगत्य विहारोत्कलसंस्कृतसमितेः स्वर्णपदकनिबहान् व्यजैजीषत। १९३२ ईसवीयवर्षतः विद्यावतां राजधान्यां पाटलिपुत्रनगर्यां मुरारकासंस्कृतमहाविद्यालये नितरां तरुणे वयस्येव प्राचार्यपदं व्यभूषयन्। तत एवैषां विद्वन्मूर्धन्यानां शिष्याणां माध्यमेन पाण्डित्यकीर्त्तिः निखिलेऽपि राष्ट्रे प्राचुर्येण प्रासरत्। एवमेते स्वपितृचरणानां कीर्तिमवर्धयन्।

१९५५ तमेऽब्दे विहारशासनं पाटलिपुत्रस्थराजकीयसंस्कृतमहाविद्यालये आचार्यद्विवेदिवर्यं सादरमामन्त्र्य नियोजितवान्। तस्मिन्नेव वर्षे पाण्डित्यनिकषस्वरूपया धौतप्रतिष्ठया श्रीमता महाराजाधिराजेन मिथिलायाः विशिष्टसम्मानेन सम्मानिताः। १९७६ तमे वर्षे दरभङ्गासंस्कृतविश्वविद्यालयस्य सम्मानितेन 'वाचस्पति' (डी० लिट्) इत्युपाधिना विभूषिताः। १९७८ तमे वर्षे वाराणस्यां सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये अतिथिप्राध्यापकाः (visiting professor) समजायन्त। १९७९ तमे वर्षे कलकत्ताविश्वविद्यालये पाणिनिमधिकृत्य इमे व्याख्यानार्थमामन्त्रिताः।

१९८१ तमे वर्षे एभिः सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य दीक्षान्तसमारोहावसरे "**शब्दाद्वैतविन्दुः**" इति विषयमधिकृत्य समीक्षामयं व्याख्यानं प्रस्तुतम्। १९८२ तमे वर्षे भारतशासनस्य शास्त्रचूडामणियोजनायां श्रीगङ्गानाथझा-केन्द्रीयसंस्कृतविद्यापीठे अध्यापकान् अनुसन्धित्सूंश्च प्राध्यापिपन्। १९८२ तमेऽब्दे संस्कृतविद्योन्नयनपरम्परायां महत्त्वपूर्णयोगदानाय उत्तरप्रदेशसंस्कृतअकादमीसंस्थया विशिष्टसम्मानेन सम्मानिताः।

अथ च १९८६ तमेऽब्दे संस्कृतविद्यानां समुन्नयने श्लाघ्यश्रमा इमे महामहिम-भारतराष्ट्रपतिमहोदयैः ससम्मानमभ्यर्चिताः।

एभिः स्वपितृचरणैः कृताया मधुसूदनीगीताभाष्यस्य हिन्दीव्याख्यायाः सम्पादनं कृतम।

ततो वैयाकरणभूषणसारस्य संस्कृत-हिन्दी-भाषामयं भाष्यम् एवञ्च शब्द-विद्यायां शेखरायमाणस्य लघुशब्देन्दुशेखरस्य संस्कृत-हिन्दी-व्याख्या तेषां पाण्डित्य-प्रकर्षं द्योतयति।

एवमिमे महामनीषिणो यावज्जीवं सारस्वतसाधनासु कालक्षेपं विधाय काशीं निवसन्तः १९८७ तमेऽब्दे अगस्तमासस्य पञ्चदशदिवसे शिवसायुज्यमवापुः।

# प्रस्तावना

जगत्यस्मिन् सुखावाप्तये दुःखनिवृत्तये च समे प्राणिनः प्रयतमाना दृश्यन्ते। तत्र आध्यात्मिकाधिभौतिकाधिदैविकभेदेन दुःखस्य त्रैविध्यमस्ति। दुःखनिवृत्तेरपि उपायास्त्रिविधाः सन्ति। दृष्टः, अदृष्टः, शास्त्रीयश्च। मानवानामेषोऽस्ति स्वभावः, यत्ते दुःखमपसारयितुं पूर्वं सरलान् दृष्टानुपायान् अन्विष्यन्ति। तैस्तैरुपायै दुःखनिवृत्तिमलभमाना अदृष्टेषूपायेषु प्रवर्तन्ते, ते चोपायाः सन्ति वेदप्रतिपादिता दर्शपूर्णमासादयः। तैरपि उपायैरैकान्तिकात्यन्तिकदुःखध्वंसमपश्यन्तः शास्त्रीयानुपायानाश्रयन्ते। एतदर्थमेवास्माकं पूर्वजैर्महर्षिभिः दर्शनशास्त्राणि प्रणीतानि, यत्र च दुःखानां कारणानि तदपसारणसाधनानि च निर्दिष्टानि सन्ति।

एतेषां दर्शनशास्त्राणामपि मूलस्रोतांसि वेदष्वेव प्रायेण प्राप्यन्ते। यथा वेदस्योपनिषद्भागमेवाधृत्य ब्रह्मसूत्राणि रचितानि पुनश्च पश्चाद्वर्तिभिराचार्यैस्तत्र भाष्याणि निर्मितानि, पुनश्च तत्र टीकोपटीकाभिरत्यन्तं संवर्धनकृतवन्तोऽपरे आचार्याः। एषा च दर्शनशास्त्रप्रणाली आस्तिकानां वेदप्रामाण्यमभ्युपगन्तृणाम्।

एतद्व्यतिरिक्तान्यपि सन्ति नास्तिकदर्शनानि। येषां प्रणेतार आचार्या वेदस्य प्रामाण्यं नाभ्युपगच्छन्ति। तानि सन्ति दर्शनानि चार्वाक-जैन-बौद्धभेदेन त्रिविधानि।

### चार्वाकदर्शनम्

अस्य दर्शनस्य निर्माता आचार्यो बृहस्पतिः। लोकायतिना पल्लवितत्वाद् लौकायतपदेनाऽप्यभिधीयते एतद्। प्रत्यक्षमेव प्रमाणमत्र मते, पृथिव्यादीनि चत्वारि भूतान्येव तत्त्वानि। एषां सम्मिश्रणेनैव चैतन्यमुपद्यते। चैतन्यविशिष्टो देह एवात्मा, काम एव पुरुषार्थः। वार्हस्पत्यसूत्रम् तत्त्वोपप्लवसिंहश्चैतस्य दर्शनस्य मूलग्रन्थौ स्तः।

### जैनदर्शनम्

रागद्वेषादिविजेता सर्वशक्तिसम्पन्नः सर्वज्ञः पुरुषः अर्हत्पदेनोच्यते। एतत्प्रचारितो धर्मो जैनधर्मः कथ्यते। अत्र धर्मप्रचारकाः महात्मानः तीर्थङ्करपदेन संकीर्त्यन्ते। तत्र प्रथमस्तीर्थङ्करः श्रीमदृषभदेवः। अन्तिमो वर्धमानमहा-

वीरः। रागादिदोषेषु विजयप्राप्त्या एव श्रीवर्धमानो जिनपदेन भूषितो बभूव। अतएवैनेन प्रचारितोऽयं धर्मो जैनधर्म इति प्रोच्यते। अत्र प्रत्यक्षमनुमानमागमश्चेति प्रमाणात्रयमभ्युपगतमस्ति। जीवः, अजीवः, आश्रवः संवरः, निर्जरा, बन्धः, मोक्षश्चेति सप्तपदार्थाः स्वीकृताः सन्ति। सम्यग् दर्शनम्, सम्यग्ज्ञानम्, सम्यक् चरित्रमिति त्रय उपाया मोक्षप्रापकाः। चेतनद्रव्यं जीवः। अस्य परिमाणं शरीराकाररूपम् जीवः स्वभावतोऽनन्तसामर्थ्यानन्तज्ञानादियुक्तो भवति परन्तु शुभाशुभकर्मभिस्तस्य स्वभावस्य तिरोधानं भवति। कर्ता भोक्ता च स एवास्ति।

अनेकान्तवादः स्याद्वादो वा अस्य दर्शनस्य मुख्यं वैशिष्टयमस्ति। प्रत्येकं पदार्थे सप्तभङ्गीन्यायः प्रयुक्तो भवति। अतः कस्यापि पदार्थस्य निश्चितं स्वरूपं न भवति। अदसीया विवेचनपद्धतिरतिसूक्ष्माऽस्ति।

## बौद्धदर्शनम्

भगवता बुद्धेन प्रवर्तितो धर्मो बौद्धपदेन संकीर्त्यते। एतदीयं दर्शनमपि प्रमुखमस्ति, तच्च चतुर्धा विभक्तमस्ति। वैभाषिक–सौत्रान्तिक-योगाचार-माध्यमिकभेदात्।

## 'वैभाषिकदर्शनम्'

एतद् दर्शनं सर्वास्तित्ववादं सम्मनुते। सर्वे पदार्थाः यथायोग्यं ग्राह्या अनुमेयाश्च सन्ति। निर्विकल्पकं ज्ञानं कल्पनारहितं भवति, अतश्च प्रमारूपमुच्यते। सविकल्पकं ज्ञानं तु कल्पनासहत्वाद् अप्रमारूपमुच्यते। सर्वं वस्तु क्षणिकं दुःखरूपं स्वलक्षणं शून्यरूपं चास्ति। बाह्याभ्यन्तरभेदेन पदार्थानां द्वैविध्यमपि। एवमेव भूत-भौतिक-चित्त-चैत्यभेदेन चातुर्विध्यमपि स्वीकृतमस्ति।

## 'सौत्रान्तिकदर्शनम्'

वैभाषिकदर्शनवदस्मिन्नपि दर्शने पदार्थस्थितिस्तादृशी एवास्ति। भेदस्त्वियानेव यद् वैभाषिकदर्शने बाह्यार्थानां यथायोग्यं प्रत्यक्षविषयता, अनुमानविषयता च। परन्तु अस्मिन् दर्शनेऽनुमेयत्वमेव न तु प्रत्यक्षविषयत्वम्। अस्मिन् मते ज्ञानज्ञेययोर्भेदो भवति।

यस्य विषयस्य प्रतीतिर्भवति, तत्रैव प्रवृत्तिर्भवति इत्यस्ति नियमः। घटादिबाह्यविषयाणां ज्ञानेन बाह्येष्वेव प्रवृत्तिर्भवति, न तु आन्तरे ज्ञाने। एतेनेदं सिद्धयति यद् विषयस्य ज्ञानेन सह भेदः। इन्द्रियसन्निकृष्टविषयो यदा ज्ञाने स्वाकारं समर्पयति, तदा तस्मिन्नेवाकारे विषयस्यानुमितिर्भवति, प्रत्यक्षं न भवति।

## 'योगाचारदर्शनम्'

अस्मिन् दर्शने विज्ञानमेव सत्यं न तु बाह्यार्थं इति मन्यते। विज्ञानं स्वप्रकाशमिति च। बाह्यं वस्तु यदि प्रत्यक्षविषय इति मन्यते, तदा विकल्पद्वयमापतति। वर्तमानस्य ग्रहणमिति प्रथमः पक्षः, अतीतस्य ग्रहणमिति द्वितीयः पक्षः। तत्र प्रथमपक्षे वर्तमानेन सह चक्षुरिन्द्रियस्य सन्निकर्षो नास्ति, यतो हि सर्वक्षणिकमिति सिद्धान्तेन येन पदार्थेन सह चक्षुषः सन्निकर्ष आसीत्, स तु द्वितीयक्षणे एव नष्टः। यश्च प्रत्यक्षरूपेण गृह्यते स तु चक्षुषा सम्बद्ध एव नास्ति। द्वितीयपक्षस्तु सर्वथा तर्कविरुद्धः, वर्तमानस्यैव प्रत्यक्षविषयत्वनियमात्।

आलयविज्ञान-प्रवृत्तिविज्ञानभेदेन विज्ञानस्यास्ति द्वैविध्यम्। अहमिति प्रतीतिराद्यं विज्ञानम्, नील-पीतादि–प्रतीतिः द्वितीयं विज्ञानमिति चोच्यते।

आलयविज्ञानेषु प्रवृत्तिविज्ञानजननशक्तिविशिष्टाभावना अनादिकालतोऽवतिष्ठन्ते। सर्वं क्षणिकमित्यादिचतुर्विधभावनासन्तानद्वारा यदा सर्ववासनानिवृत्तिर्भवति, तदा विविधविषयाकारैः शून्या बुद्धिः विज्ञानसन्तानरूपेऽवस्थिता भवति, इदमेव मोक्षस्वरूपमुच्यते।

## 'माध्यमिकदर्शनम्'

सर्वं शून्यम्, सर्वं शून्यमित्येवं सर्वशून्यत्ववादोऽस्मिन् दर्शने सिद्धान्तितोऽस्ति। मया यद् दृष्टं तद्रजतं नास्ति, एषा प्रतीतिः सर्वसम्मता। अनया प्रतीत्या रजतस्यासत्वसिद्धौ रजतस्य ज्ञानं, ज्ञाता, रजतत्वम्, समवायः, इत्यादिकं सर्वमसदेव सिध्यति। एतावता निषेधज्ञानविषयत्वेन सर्वं निषेध्यमेव भवति। किञ्चिन्निषेध्यं किञ्चिदनिषेध्यं यदि मन्येत, तदा अर्धजरतीयन्यायप्रसङ्गः स्यात्। अतश्चाध्यस्ताधिष्ठानयोर्मध्ये कस्यचिदेकस्यासत्त्वे सिद्धे सर्वेषामसत्त्वं सुतरां सिध्यत्येव। अथ च सर्वशून्यत्वादिचतुर्विधभावनाभिः सर्ववासनानिवृत्तौ सत्यां शून्यस्वरूपं परमनिर्वाणमधिगतं भवति।

## न्यायदर्शनम्

नास्तिकदर्शनानां संक्षिप्तं स्वरूपं प्रदर्श्य, अधुना आस्तिकदर्शनानां संक्षिप्तं स्वरूपम् प्रदर्श्यते। तत्रादौ न्यायदर्शनमुपक्रम्यते—

महर्षिगौतमप्रणीतानि सूत्राण्याश्रित्येदं दर्शनं प्रवृत्तमस्ति। अत्र प्रमाणप्रमेयप्रभृतयः षोडशपदार्थाः स्वीकृताः सन्ति। प्रत्यक्षमनुमानमुपमानं शब्दश्चेति चत्वारि प्रमाणानि। जीवात्मपरमात्मभेदेनात्मनो द्वैविध्यम्। तत्र जीवः प्रतिशरीरं भिन्नः, विभुः, नित्यः समवायसम्बन्धेन ज्ञानाश्रयश्च। परमात्मा सर्वज्ञः सर्वेश्वरः सृष्टिनिर्माता एक एव। परमात्मनो ज्ञानं सुखमिच्छा कृतिश्च नित्य-

त्वेनाभिमन्यन्ते । जीवात्मनः सुखादिकमनित्यम्, शरीरावच्छेदेनोत्पाद्यन्ते । मिथ्याज्ञानवशतोऽनात्मनि आत्मबुद्धिः, अनित्ये नित्यबुद्धिः, दुःखे सुखबुद्धिश्च जायते । दुःख-जन्म-प्रवृत्ति-मिथ्याज्ञानानामुत्तरोत्तरापायेऽनन्तरापायादपवर्गं इति न्यायदर्शनसिद्धान्तेनावगम्यते—यद् मिथ्याज्ञानस्य विनाशे सति प्रवृत्तिविनाशः, ततश्च जन्मनोऽभावः ततश्चैकविंशतिदुःखानामपायस्ततोऽपवर्गः, इयमेव मोक्ष-स्थितिः । यद्यपि मनसो नित्यत्वात् मोक्षावस्थायामपि तस्य ध्वंसो न भवति तथापि सहकारिकारणाभावे सति ज्ञानादिजननशक्तेरभावेन तस्य ध्वंससादृशी एव स्थिति-र्मन्यते । पृथिव्यादिभूतचतुष्टयपरमाणवः, आकाशः, कालः, दिक्, आत्मा, मनश्चै-तन्मते नित्यान्येव स्वीकृतानि सन्ति ।

## वैशेषिकदर्शनम्

महामुनिना कणादेन प्रवर्तितं दर्शनं वैशेषिकं दर्शनम् । कणादमुनेरपरं नाम उलूक इत्यपि आसीत् अतश्चेदं दर्शनमौलूक्यदर्शनमित्यपि कथ्यते । नित्यद्रव्येषु अन्त्यव्यावर्तकरूपेण विशेषनामक एकः पदार्थ एतद्दर्शने न्यायदर्शनापेक्षयाऽऽधि-क्येनाभिमत इति कृत्वा वैशेषिकनाम्ना प्रसिद्धिरस्य दर्शनस्य । प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवास्मिन् मते स्वीकृतमस्ति, शब्दोपमानयोस्तु अनुमानेऽन्तर्भावः, अन्यत्सर्वं प्रायेण न्यायदर्शनतुल्यमेव ।

## सांख्यदर्शनम्

महामुनिना कपिलेन प्रवर्तितमिदं दर्शनम् । प्रत्यक्षमनुमानमागमश्चेति त्रीण्येव प्रमाणानि अत्र दर्शने स्वीकृतानि सन्ति ।

पञ्चविंशतितत्त्वानि अत्र दर्शने । तानि च—प्रकृतिः, महत्, अहंकारः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, एकादशं मनः, शब्दादिपञ्चतन्मात्राश्च, पञ्चतन्मात्राभ्यः पञ्च महाभूतानि, पञ्चविंशः पुरुषः ।

प्रकृतिः सत्त्वरजस्तमोगुणात्मिका, तस्या एव विजातीयपरिणामरूपा महदादिसृष्टिः । प्रलयकालेऽपि सजातीयः परिणामो भवत्येव, एतन्नये प्रकृतिः प्रतिक्षणं परिणमति । प्रकृतिरेव सृष्टिं विदधाति, पालयति, संहारयति च । पुरुषस्तु पुष्करपलाशवन्निर्लेपः, विभुः नित्यः, अनेकश्च । ईश्वरस्तु एतन्मते न स्वीक्रियते । उपासनाविषयतया तु स्वीकृतोऽपि । श्रीमद्भागवते तु महामुनेः कपिलस्य मते सेश्वरसांख्यदर्शनस्याभ्युपगमोऽस्ति । प्रकृतिर्भोग्या, पुरुषो भोक्ता । प्रकृतिर्भोक्तारं पुरुषमपेक्षते । पुरुषोऽपि प्रकृतिपरिणामभूतया महत्तत्त्वरूपबुद्ध्या सहाभेदं मन्वानो बुद्धिधर्मान् दुःखादीन् स्वस्मिन्नारोप्य दुःखादि अनुभवति । यदा बुद्धिरन्या अहमन्य इति भेदं साक्षात्करोति, तदा पुरुषः कैवल्यं ( मोक्षम् ) प्राप्नोति ।

## योगदर्शनम्

अस्य दर्शनस्य प्रथमो वक्ता हिरण्यगर्भापरनामा महामुनिः कपिल एव। महामुनिना पतञ्जलिनाऽस्य दर्शनस्य संग्रथनं सूत्ररूपेण कृतमस्ति। व्यासनाम्ना प्रसिद्धेन केनचिद् विदुषा इमानि सूत्राणि आश्रित्य भाष्यं विरचितम्। तत्र च तत्त्ववैशारदी टीका अत्यन्तं प्रसिद्धिमाटीकते।

सांख्यदर्शने इवात्रापि पञ्चविंशतितत्त्वानि स्वीकृतानि परन्तु अत्र दर्शने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, महता संरम्भेण स्वीकृतोऽस्ति। तदुपासनया क्लेशनाशे सति क्रमशोऽसम्प्रज्ञातसमाधिसिद्धौ सत्यां विषयैः सह चित्तस्य सम्बन्धो नश्यति। अस्यामवस्थायां जीवः स्वस्वरूपे स्थितो भूत्वा कैवल्यं लभते। चित्तवृत्तिनिरोधो योगः, अत्र मानवमात्रस्याधिकारोऽस्ति।

## मीमांसादर्शनम्

एतस्य दर्शनस्य सूत्ररूपेण संग्रथनं कृतं महर्षिजैमिनिना। तत्र द्वादशाध्यायात्मिका 'द्वादशलक्षणी, प्रसिद्धाऽस्ति। अग्रिमाश्चत्वारोऽध्याया दैवतकाण्डनाम्ना प्रसिद्धाः सन्ति। शबरस्वामिना द्वादशलक्षण्यां भाष्यं विनिर्मितमस्ति। अस्य दर्शनस्य प्रतिपाद्यो विषयो वैदिकं कर्मकाण्डमस्ति, तत्र यागविधिषु प्राप्तस्य विरोधस्य परिहारः क्रियतेऽनेन दर्शनेन। अथ च कर्मकाण्डीयमूलभूतसिद्धान्तानां सयुक्तिकं व्यवस्थापनं क्रियते। अस्मिन् दर्शने त्रयः सम्प्रदायाः प्रचलन्ति, भाट्टमतम्, गुरुमतम्, मुरारिमिश्रमतम्।

कुमारिलभट्टेन शावरभाष्यमादाय वृत्तिग्रन्था विलिखिताः। तत्र प्रथमाध्यायप्रथमपादे श्लोकवार्तिकाभिधो ग्रन्थः, पुनः प्रथमाध्यायीयद्वितीयपादतः तृतीयाध्यायं यावत् तन्त्रवार्तिकनामा ग्रन्थः, अवशिष्टेषु अध्यायेषु टुप्टीका विरचिताऽस्ति। पार्थसारथिमिश्र—खण्डदेवमिश्राभ्यां स्वीयरचनया एतद्दर्शनं पल्लवितम्।

गुरुमतस्य संस्थापकोऽस्ति प्रभाकरमिश्रः। कुमारिलभट्टस्य शिष्योऽयमाचार्योऽलौकिकप्रतिभासम्पत्त्या गुरुपदेन गुरुणा एव सम्मानितः। शावरभाष्यमाधृत्य एनेनापि टीकाद्वयं निर्मितमस्ति।

मुरारिमिश्रस्य मतं मिश्रमतमित्युच्यते। तत्त्वचिन्तामणिग्रन्थेऽस्य मतस्योल्लेखोऽस्ति।

अनधिगताबाधितविषयकं ज्ञानं प्रमा तत्करणं प्रमाणं, तच्च षड्विधम्—प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अनुपलब्धिश्च। प्राभाकरमतेऽनुपलब्धिः प्रमाणतया नाभ्युपेयते। एतन्मते सर्वं ज्ञानं यथार्थमेव। ज्ञानगतं प्रामाण्यं स्वत उत्पद्यते, स्वतश्च ज्ञायते। अप्रामाण्यं तु परत उत्पद्यते, परत एव ज्ञायते च।

कर्मणा एव सर्वमभिलषितं पूर्णं भवति अतः कर्म एव सर्वस्वं मन्यते। तत्सम्मुखे ईश्वरस्यापि उपादेयता समापिता। आत्मा नित्यः, कर्ता, व्यापकः, भोक्ता, अनेकश्चास्ति। भोगायतनशरीरेण, भोगसाधनेन्द्रियैः, भोगविषयवस्तुभिश्चैतैस्त्रिभिबन्धनैरात्मा आबद्धो भवति। काम्यानां निषिद्धकर्मणां च परित्यागेन नित्यनैमित्तिककर्माऽनुष्ठानेन चान्तःकरणं विशुद्धं भवति, ततश्चात्मनः संसारसम्बन्धविच्छेदो जायते। अयमेव प्रपञ्चसम्बन्धविलयो नित्यसुखावाप्तिर्मोक्ष इत्यभिधीयते।

## वेदान्तदर्शनम्

वेदानामन्तः सिद्धान्तो वेदान्त इत्युच्यते। अयमेव ज्ञानकाण्डपदेन उपनिषत्पदेन चाभिधीयते। अत्राद्वैतवादः प्रमुखतया प्रतिपादितोऽस्ति। 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः, इत्यस्ति स्वरूपमस्याद्वैतवादस्य। 'एकमेवाद्वितीयं ब्रह्म, सत्यमन्यत्सर्वं मिथ्या इति तात्पर्यम्। निर्गुणं निराकारं सच्चिदानन्दं ब्रह्मैव अविद्यावशेन परमेश्वरो भवति। सा चाविद्या शुद्धसत्त्वप्रधाना भवति। पुनश्च मलिनसत्त्वप्रधानयाऽविद्यया सम्बद्धं ब्रह्म जीवात्मपदेन कथ्यते।

**जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।**
**अविद्या तच्चितोर्योगः, षडस्माकमनादयः॥**

इत्येवं षट्सु अनादिपदार्थेषु ब्रह्मैव अनादि-अनन्तम्। अन्यत् जीवादिपञ्चकमनादित्वे सति सान्तम्। इयं चाविद्या सत्त्वेनासत्त्वेन च निर्वक्तुमशक्या, अतश्चानिर्वाच्या। उक्तं च–

**नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।**
**अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी॥**

ब्रह्मज्ञानेनैव मोक्षः संभवति। ब्रह्मज्ञानं च ब्रह्माकारवृत्तिः। अनया वृत्त्या जगतो बाधः स्वस्यापि च बाधः, शुद्धस्वरूपे ब्रह्मणि अवस्थानम्, इदमेव मोक्षस्य स्वरूपम्। एवमेव विशिष्टाद्वैत–द्वैताद्वैत–सिद्धान्ता अपि वेदत एव प्रतिपादिताः सन्ति।

## प्रकृतग्रन्थस्तन्नामधेयं वर्ण्यविषयश्च

प्रकृतग्रन्थोऽद्वैतसिद्धान्तं विषयीकुर्वन् 'खण्डनखण्डखाद्य' नाम्ना प्रसिद्धोऽस्ति। इदं नामकरणमायुर्वेदीयपरिभाषाभिज्ञानेनानुप्राणितो वर्तते। खण्डखाद्यनामा एकोऽवलेहः प्रसिद्धोऽस्ति आयुर्वेदशास्त्रे। स चावलेहश्चक्षूरोगापहारकोऽस्ति। अयं ग्रन्थोऽपि निर्वचनीयताया रोगमपहरति।

अत्र ग्रन्थे न्याय-वैशेषिक–मीमांसादिप्रतिपाद्यविषयाणां तीक्ष्णाऽऽलोचना कृताऽस्ति। अस्य ग्रन्थस्य रचयिता श्रीहर्ष आसीत्। तस्य पिता श्री हरिनामा

विद्वान् कान्यकुब्जनरेशस्य सभापण्डितः श्रीमतोदयनाचार्येण शास्त्रार्थे पराजितः। स्वपितुः प्रतिशोधं कर्तुं श्रीहर्षः उदयनाचार्यस्य सम्मतान् सिद्धान्तान् पदे-पदे प्राचखण्डत्। उक्तं च नैषधीयचरितस्य टीकायां श्रीचाण्डूपण्डितेन–"प्रथमं तावत्कविर्विजिगीषुकथायां स्वपितुः परिभावकमुदयनमत्यमर्षणतया कटाक्षयन् तद्ग्रन्थग्रन्थीन् उद्ग्रन्थयितुं खण्डनं प्रारिप्सुर्मानसमेकतानताभगिनिनाय" इति। उदयनाचार्यो न्यायवैशेषिकदर्शनयोर्महान् विद्वान् आसीत्। अतस्तत्प्रतिस्पर्धायां न्याय-वैशेषिकयोः खण्डने श्रीहर्षस्य स्वाभाविकी प्रवृत्तिर्बभूव। चार्वाकदर्शने तत्त्वोपप्लवसिंहस्य रचयित्रा श्रीजयराशिभट्टेनोक्तमस्ति— "पृथिव्यादीनि तत्त्वानि लोके प्रसिद्धानि, तान्यपि विचार्यमाणानि न व्यवतिष्ठन्ते। कथं न तानि सन्ति ? तदुच्यते—सल्लक्षणनिबन्धनं मानव्यवस्थापनम्, माननिबन्धना च मेयस्थितिः, तदभावे तयोः कथं सद्व्यवहारविषयत्वम्' इति। (तत्त्वोप० पृ० १)

अयं तत्त्वोपप्लवग्रन्थः खण्डनखण्डखाद्यात् प्राक्तनः। अतश्च ज्ञायते, यत् न्यायवैशेषिकयोः खण्डने श्रीहर्षस्य प्रवृत्तिर्नहि नवीना।

जैनदर्शनाचार्यैरपि न्यायसिद्धान्तखण्डने महान् प्रयासः कृतः।

**'खण्डनखण्डखाद्यस्य वैतण्डिकता'**

**कथा त्रिविधा भवति, वादो जल्पो वितण्डा च।**
**तत्त्वबुभुत्सया क्रियमाणा कथा वादकथा॥**
**विजिगीषया क्रियमाणा कथा जल्पकथा।**
**परपक्षखण्डनपरा स्वपक्षस्थापनाहीना कथा वितण्डाकथा॥**

अत्र ग्रन्थे तृतीया वितण्डाकथैव समाश्रिताऽस्ति। यद्यपि खण्डनकारेण क्वचित् क्वचित् स्वपक्षं समर्थयमानेनेवोक्तमस्ति, यद् मम त्वेवं दर्शनम्, प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणं भवदपि जगत् तथा सत्तोपगमेऽपि बाध्यमानत्वादनिर्वचनीयम्[१] तथापि स्वपक्षसंकीर्तनमात्रमेतत्, न तु स्वपक्षस्थापनम्। वैतण्डिकेन स्वपक्षकथनेऽपि तस्य स्थापना न क्रियते।

न्यायभाष्यकृताऽपि उच्यते[२]—यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यम्, स वैतण्डिकस्य पक्षः। न खल्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयति, इति।

१—ख० ख० खाद्ये प्रथमपरिच्छेदे स्वामी योगीन्द्रानन्द-प्रकाशिते प्रथमसंस्करणे, पृष्ठ संख्या १९४।

२. न्या० भा० १।२।३

महावैतण्डिकेन श्रीनागार्जुनेनापि उच्यते—

**यदि काचन प्रतिज्ञा तत्र स्यादेव मे भवेद् दोषः ।**
**नास्ति च मम प्रतिज्ञा, तस्मान्नैवास्ति मे दोषः ।।**[१]

वैतण्डिकशिरोमणिना श्रीहर्षेणापि प्रोच्यते—[२]

"वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात्, तत्र च व्यावृत्य स्वपक्ष-निर्वाहं प्रति पर्यनुयोगानवकाशात्" इति। पुनश्च "तथाप्यनुपजातप्रबोधस्तु जडतमः कश्चित्[3] इति"।

## खण्डनखण्डखाद्यस्य टीकास्तत्कर्तारश्च

अस्य ग्रन्थस्य प्रचारे प्रसारे च वेदान्तिन इव नैयायिका अपि पश्चात्पदा न सन्ति। तथ्यमेतद् ज्ञातुं शक्यते प्रकृतग्रन्थस्य टीकानां तत्कर्त्रीणां विवरणेन। तथाहि—

(१) श्रीचित्सुखाचार्यकृता भावदीपिका-टीका, (२) श्रीवर्धमानोपाध्याय-कृता प्रकाश-टीका (३) खण्डनफक्किकाविभजनी-टीका आनन्दपूर्ण विद्यासागर-विरचिता, (४) श्रीशङ्करमिश्रकृताऽऽनन्दवर्धनी. (५) श्रीरघुनाथशिरोमणिना-रचिता भूषामणि-टीका, (६) श्रीपद्मनाभकृता शिष्यहितैषिणी, (७) श्रीप्रगल्भ-मिश्रकृता खण्डनदर्पण—टीका, (८) श्रीवरदपण्डितनिर्मिता खण्डनमण्डन-टीका, (९) श्रीपद्मनाभदत्तनिर्मिता खण्डनटीका, (१०) श्रीसूर्यनारायणशुक्लरचिता खण्डनरत्नमालिका, (११) श्रीशङ्करचैतन्यभारतीरचिता शारदाटीका।

### खण्डनग्रन्थावतार प्रयोजनम्

श्रीहर्षस्य समये ईश्वरतत्त्वे आस्थामविदधती बौद्धपरम्परा ह्रासोन्मुखी आसीत्। ईश्वरवादिनः कापालिकादयोऽपि निष्प्राणा आसन्। धर्मचक्रस्य स्थाने भैरवीचक्रस्य प्रभावो दृश्यते स्म। नैयायिकैः शाङ्कराद्वैतवादस्योपहासः क्रियते स्म। मीमांसकैः यागपक्षं परित्यज्य प्रमाणचिन्तायां समयो दीयते स्म।

अस्यां परिस्थितौ प्रमाणमीमांसाक्षेत्रे प्रबलः प्रहार आवश्यक आसीत्।

अतः तार्किकयुक्तिभिस्तत्पक्षं तिरोहितं कृत्वा वेदस्य वेदान्तस्य च द्वाराणि उद्घाटितानि। तदनु श्रीचित्सुखाचार्य-विद्यारण्यादि-वैदान्तिकैर्वेदान्तसिद्धान्ताः पल्लविताः पोषिताश्च। अस्मिन्नेवावसरे मनीषिमूर्धन्येन श्रीहर्षेण नैयायिकपद्धत्या चार्वाकान् सौगतांश्च पराजयमानेन स्वीयखण्डनयुक्तिभिः तर्कपद्धतिरपि प्रत्याख्येय-कोटौ चक्रे।

---

१. विग्रह २९। २. ख० ख० खा०–प्र० परि०–पृ० १२४। स्वामी योगीन्द्रानन्दः।
३. ख० ख० खा०–प्र० परि०–पृ० २३१। स्वामी योगीन्द्रानन्द।

## खण्डनग्रन्थे प्रतिपाद्या विषयाः

खण्डनग्रन्थे चतुर्षु परिच्छेदेषु विषया विभाजिताः सन्ति—

(१) प्रथमे परिच्छेदे प्रमाणसामान्यस्य प्रमाणविशेषस्य च खण्डनमस्ति। भट्टपादाभिमतानि षट् प्रमाणानि वेदान्तेऽपि व्यवह्रियन्ते, तेषां समालोचना पूर्णतया कृताऽस्ति। परिच्छेदान्ते न्यायसूत्रोक्तानां हेत्वाभासानां चर्चा कृता।

( ) द्वितीये परिच्छेदे न्यायसूत्रोक्तानां प्रतिज्ञाहान्यादिनिग्रहस्थानानां खण्डनाय चतुष्पञ्चानां निग्रहस्थानानां निराकरणमुदाहरणरूपेण दर्शितम्। उदयनाचार्यप्रणीतन्यायपरिशिष्टस्य खण्डने एव तत्तात्पर्यमवसीयते।

(३) सर्वनामपदार्थ-निर्वचनं प्रत्याख्यातम्। ततश्च तदादिसर्वनामद्वारा न्यायदर्शनविद्भिः क्रियमाणं लक्षणाभिधानं निराधारतां प्रापितम्।

(४) चतुर्थे परिच्छेदे नैयायिकानां वैशेषिकाणां च साम्प्रदायिक्यः परिभाषास्तदर्थाश्च समालोच्य उन्मूलिताः। अनेन प्रयासेन श्रीमदुदयनाचार्यस्य कीर्तिध्वजोऽवमानितः। न्याय-वैशेषिकदर्शनाभ्यां साकमन्येषामपि दर्शनानां सिद्धान्ताः खण्डिताः। निर्वचनीयताश्रृङ्खलायामाबद्धानां दर्शनानां तादृशश्रृङ्खलोन्मोचने खण्डनकारस्य तात्पर्यमासीत्, तत्तु पूर्णतया सफलतां प्रापत्।

## खण्डनग्रन्थे भूषामणिः

तार्किकचक्रचूडामणिना श्रीरघुनाथशिरोमणिना खण्डनग्रन्थे भूषामणिनाम्नालङ्कृता व्याख्या व्यरचि। या च प्रथमपरिच्छेदे एव प्राप्ताऽस्ति, इति विद्वत्समाजस्य कृते महतो दौर्भाग्यस्यास्ति विषयः।

अस्तु अस्यां टीकायां यः कोऽपि अंशो दृश्यते स सर्वटीकाकर्तुः प्रतिभाविलासमुद्भावयति तदीयमसाधारणं वैदुष्यमवद्योतयति। एतस्मिन्नेव प्रसङ्गे आदर्शतया कतिपयेंऽशाः प्रदर्श्यन्ते—

(१) शब्दार्थनिर्वचनखण्डनया नयन्तः सर्वत्र निर्वचनभावमखर्वगर्वान्।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा लोकेषु दिग्विजयकौतुकमातनुध्वम्॥
इत्यस्ति खण्डनस्य तृतीयो मङ्गलश्लोकः—

श्रुतिजनितबोधरक्षामेव खण्डनप्रयोजनं मत्वा परान् शिक्षयति—शब्दार्थेति। यथोक्तमेतद् ग्रन्थस्वरूपं शुकवदुक्त्वापि दिग्विजयेन यत्कौतुकं तद् विस्तारयत दिक्षु इत्यर्थः।

सरलः साधारणोऽर्थः स्फुट एव। किन्तु भूषामणेर्वैशिष्टयं निभाल्यताम्—

'शब्दश्चार्थश्च तयोर्निर्वचनं निरुक्तिः, इत्येवमेकं प्रथममंशं व्याख्याय संघटनं क्रियते - यथा तत्त्वानुभूतिः प्रमा, इत्येकं वाक्यं गृह्यताम्। तत्र तस्य भावस्तत्त्वमिति, तत्त्वशब्दव्युत्पत्तिं प्रदर्श्य व्याचष्टे टीकाकारः—किमयं यौगिकः शब्दः, किं वाऽखण्डमेव तत्त्वपदं क्वचिदर्थे रूढमिति शब्दनिरुक्तिः। तत्त्वं यदि अबाधितं रूपम् तदपि किं स्वस्याबाधितमुतपरस्य तत्रापि किं यस्य कस्यचिद्वथ सर्वस्य। अथवा स्वपरसाधारणस्य सर्वस्य। तदपि किञ्चित् कालनियतं सर्वकालनियतं वेत्याद्यर्थनिरुक्तिः, तस्याः खण्डना दोषज्ञापना।

दृश्यतां तावत् सहृदयैर्विद्वद्भिः—कियती विलक्षणदृष्टिरस्ति 'शब्दार्थनिर्वचनखण्डनतया' इत्येकस्मिन् समस्ते पदे। शब्दस्य निर्वचने विकल्पद्वयं योगिको वा रूढो वा इति। अत्र टीकाकारेण संकेतः कृतोऽस्ति, यद् यौगिकत्वे कृदन्तस्तद्धितान्तः समस्तो वा। आद्यपक्षयोः का प्रकृतिः, कश्च प्रत्ययः, तृतीये पक्षे तु कः समासः? किं च तत्र पदद्वयादिकम्—इत्यादि। पुनश्च रूढत्वे पङ्कजपदवद् योगरूढः, अश्वगन्धादिवद् यौगिकरूढः, मणि-नूपुर इत्यादिवद्रूढो वा। पुनश्च पक्षद्वये योगशक्तिः, रूढिशक्तिश्च प्रविष्टाऽस्ति। सा च योगशक्तिः किं न्यायदर्शने इवेश्वरेच्छारूपा प्राचीनव्याकरणदर्शने इव किं बोधजनकरूपा, नव्यव्याकरणदर्शने इव किं वाच्यवाचकभावरूपा वा? पुनश्च सा शक्तिः प्रसिद्धा अप्रसिद्धा वा? एवमेव रूढत्वपक्षे अवयवार्थबोधनिरपेक्षसमुदायार्थबोधजनिका शक्तिरिति परिभाषणेऽवयवाः किं प्रकृतिप्रत्ययादयः? किं वा सुबन्ततिङन्तान्यतरपदादय इत्यादिरूपेण शब्दनिरुक्तौ बहवो विकल्पाः संकेतिताः सन्ति।

अर्थनिरुक्तावपि 'तत्त्वं यदि अबाधितं रूपम्, तदपि किं स्वस्याबाधितमुतपरस्य इत्यादिकम्। अत्रालोच्यतां विकल्पप्रसूतौ। कीदृशो बुद्धिविलासो मणिकाराणाम्।

अग्रे च निर्वचनभावमित्यस्य मूकत्वं पुनश्चानिर्वचनीयत्वमर्थं व्याचक्षणानाम्, अग्रे च 'दिश्यते व्यपदिश्यते आचार्यैरिति दिक् ब्रह्म, तद् विजयते। एतेन तद्विजयोऽविद्यादि, तस्य कौतुकं कोलाहलमातनुध्वम् इत्येवं दिक्पद ब्रह्मपरतया व्याचक्षाणानां च शिरोमणि महाशयानां प्रतिभामहात्म्यं महदाश्चर्यकरं निभालयताम्।

(२) चतुर्विधभेदखण्डनप्रकरणे प्रोक्तं खण्डनकृता---

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात्। इति

अत्र भूषामणिकारेण व्याख्यातम् घटपटयोः स्वरूपोल्लेखनमन्तरा उभयोर्भेदोल्लेखनं न सम्भवति। तदुभयस्वरूपोल्लेखस्तु तदुभयभेदमनुल्लिख्याऽपि

सम्भवति इति अभेदगृह उपजीव्यो भेदग्रहस्येति अभेद एव पारमार्थिकः इत्यर्थः। आद्ये अभेदे सा धीः प्रमाणम्, अन्ते स्वस्य भेदग्रहस्य अपेक्ष्य उपजीव्योऽभेदग्रहस्तद्विरोधात्। एवं व्याख्याय श्रीपादाचार्यस्य व्याख्यानमनूदितम्। मध्ये च श्रीमिश्रविद्यासागरयोश्च दूषणोद्धारोऽज्ञानविजृम्भित इत्युक्तम्। एतेन तदीयव्याख्याया गुरुत्वं विद्वद्भिः स्वयं ज्ञातव्यम्।

(३) अथ च चतुर्विधभेदखण्डनप्रकरणे एव प्रोच्यते ग्रन्थकारेण—

सेयमद्वैतबुद्धिर्न तर्कशतमवतार्य प्राज्ञैरपनेया।
यदाह श्रुतिः—नैषा तर्केण मतिरापनेया—इति।

तस्माद्—

धीधनाः! बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदाच्छथ॥

अग्रे च—

सेयमद्वैतदृष्टिर्दृष्टार्थाऽपि। यदाहुः — स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।"

तस्मात्—

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणां यदि जायते॥ इति

अस्य प्रघट्टकस्य कारिकाद्वयसंवलितस्य व्याख्यानं यद्यपि सरलं प्रतीयते, तथापि 'निरस्तसमस्तदुःखं निरतिशयानन्दं विदेहकैवल्यं फलं यद्यपि शास्त्रदृष्टम्, तथापि ब्रह्मास्मीति निश्चयवतः संसारभयाद् निवृत्तिः इति प्रत्यक्षमपि फलमस्येत्यर्थः।

अथ च यद्यपि एकस्य यदि न जायतेऽद्वैतप्रमा, तदापि द्वित्राणां जायते एव, तेषामपि ईश्वरानुग्रहादेव। कियती स्पष्टा लोकोपकारगर्भा एषा व्याख्या भूषामणौ द्रष्टव्या।

(४) स्मृत्यन्यत्वखण्डनप्रकरणे खण्डनकारेणोच्यते—'इतोऽपि न स्मृत्यन्यत्वमनुभवार्थः, तथाहि—स्मृत्यन्यत्वं यत्किञ्चित्स्मरणान्यत्वं वा सर्वस्मृतिव्यक्त्यन्यता वा, स्मृतित्वरहितत्वं वा—इति।

अत्र सर्वेति प्रतीकं धृत्वा भूषामणिकारेणोक्तम्—स्मृतित्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्त्वमित्यर्थः। स्मृतित्वात्यन्ताभावाधिकरणत्वमिति तृतीयविकल्पार्थः। अन्यपदं तु वैधर्म्यपरमिति नापदार्थे विकल्पः इति।

अत्र 'सर्वस्मृतिव्यक्त्यन्यता' इत्यस्य विवरणं स्मृतित्वावच्छिन्नप्रतियोगिको योऽन्योऽन्याभावः ( भेदः ) तद्वत्त्वम्, इत्यादि तात्पर्यप्रकाशनेन टीकाकारस्य सूक्ष्मेक्षिका द्रष्टव्या ।

(५) अव्यभिचारिज्ञानप्रमात्वखण्डनप्रस्तावे प्रोक्तं ग्रन्थकृता अथैवमुच्यते–अव्यभिचारित्वमर्थाविनाभूतत्वम्, तदा प्रष्टव्यं कोऽस्यार्थः–किं यदैवार्थस्तदैव ज्ञानम् ? किं यत्रार्थस्तत्रैव देशे ज्ञानम् ? अथ यादृगर्थस्तादृगेव ज्ञानं यत्तत्प्रमितिरिति ? नाद्यः–व्यतीतानागतानुमित्याद्यव्यापनात् । न च द्वितीयः–ज्ञानसमानदेशार्थप्रमितीनामव्यापनात् ··· इत्यादि ।

अत्र भूषाकारेण ज्ञानसमानदेशार्थप्रमितीनामिति प्रतीकं धृत्वा व्याख्यायते–घटप्रत्यक्ष–वह्न्यनुमिति प्रमादीनामित्यर्थः । आत्मसमवेतसुखादिप्रमायां नाव्याप्तिः सम्भवतीति ज्ञानसमानदेशेत्याह । ज्ञानसमानदेशमर्थमित्यात्मत्व मत्यर्थः । अन्यत्र देहादौ आरोपयतः अहं मनुष्य इत्येवं भ्राम्यतः, तथा च देहात्मभ्रमेऽतिव्याप्तिरित्यर्थः इति ।

एवं कतिपयांशविवरणप्रदर्शनेन भूषामणिकारस्य व्याख्यानपाटवं वैदुष्यातिशयश्च स्पष्टं प्रत्येतुं शक्यते विद्वद्भिः ।

## खण्डनकारस्य जीवनवृत्तम्

"ताम्बूलद्वयमासनं च लभते, यः कान्यकुब्जेश्वरात्" खण्डनग्रन्थस्यानयान्तिमोक्त्या प्रतीयते यदयं महामेधावी कान्यकुब्जदेशीय आसीत् । अथ च अस्य पद्यस्य व्याख्यां कुर्वता आचार्य श्रीविद्यासागरेणोक्तम्–कान्यकुब्जेश्वरः काशिराजः इति । एतेन ज्ञायते यत् कान्यकुब्जेश्वरस्य विशिष्टं स्थानं राजधानीरूपं काशीनगरी आसीत् । अतश्च वाराणस्यामपि अस्य महाकवेर्निवासः प्राचुर्येणासीदित्यपि निश्चेतुं शक्यते । उक्तं च स्वयमेव––

वाराणसी निविशते न बसुन्धरायां तत्रस्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः स्वर्गात् परं पदमुदेतु मुदे तु कीदृक् ॥
(नै० च० ११-११६)

अयं महाकविः कविसम्राजः श्रीहीरस्य पुत्रः । माता चास्य मामल्लदेवी आसीत् । उक्तं च स्वयमेव–

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम् ।
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥
(नै० च० स० १—१४५)

ब्रह्मविद्याभरणस्य पातनिकायां श्रीहर्षमिश्रेण तान्त्रिकचिद्विलासस्य चर्चा कृताऽसीत् । अस्य चिद्विलासस्य समयः कामकोटिपीठपरम्परायाम् ११६७ ईस्वीतः

१२०० ई० यावत् निर्णीत आसीत् । एतेन ज्ञायते यदस्य महाकवेः समयः ११६० ईस्वीयवत्सरस्य सन्निहित आसीत् ।

अथ च स्वरचिते प्रबन्धकोशे 'गोविन्दनन्दनतया च वपुः श्रिया च' इत्यादिना श्लोकेन कान्यकुब्जेश्वरस्य श्रीगोविन्दचन्द्रस्य पुत्रः श्रीविजयचन्द्रः महत्या श्लाघया संकीर्तितः । श्रीविजयचन्द्रस्य कालः ११६९ ईस्वीयो वत्सर आसीत् । एतावता श्रीहर्षस्य समयः ११६९ ईस्वीयवर्षसन्निहितः स्यादिति सम्भाव्यते ।

श्री हर्षस्य पितृपादाः श्रीहीरेत्यभिधयाऽलङ्कृता विद्वद्वराः महान्तः कवय आसन् । श्रीहर्षस्यापि कवित्वशक्तिरलौकिकी आसीत् । नैषधीयचरितं महाकाव्यं यस्याज्वलत्प्रमाणमस्ति तत्सममेव दार्शनिकं ज्ञानमपितस्य अनितरसाधारणमासीत् । यद्बलेन खण्डनखण्डखाद्यग्रन्थस्य रचना कृता । उपनिषत्सु अनणु अह्रस्वमलक्षणमित्यादिनिषेधपद्धत्या यथा ब्रह्मतत्त्वस्य निरूपणं कृतम्, तथैव वितण्डाकथामाश्रित्यानिर्वचनीयतावादं स्थापयन्नयं महामनीषी अद्वैतवादमेव सुदृढं स्थापितवान् ।

एतादृशप्रतिभाशालिनो महान्तो मेधाविनः सरस्वत्या वरदपुत्राः क्वचित् कदाचिदेवावतरन्ति—इत्यत्र नास्ति संशयावसरः ।

## भूषामणिकर्तुरितिवृत्तम्

खण्डनग्रन्थे भूषामणिनामिकां व्याख्यां व्यरचयत् श्रीरघुनाथशिरोमणिः । बङ्गदेशे कलिकातानगरीसमीपवर्तिनं पावनसलिलाया भगवत्या भागीरथ्यास्तटे विराजमानं नदियाशान्तिपुराभिधं ग्रामं स्वजन्मना १४७७ ईस्वीयेऽब्देऽलञ्चकार । एतत्समये नापरो विद्वत्प्रवरपदवीधरो बभूवेत्यैतिह्यविदां प्रवादः । बौद्धाधिकारे, न्यायलीलावतीप्रकाशे, किरणावलीप्रकाशे, तत्त्वचिन्तामणौ च दीधितिनाम्नीं व्याख्यां विशिष्टवैदुष्यप्रकाशिकां विरचय्य विद्वत्समाजे महतीं प्रतिष्ठामाप्तवान् । पदार्थतत्त्वनिरूपणादिकान् स्वतन्त्रनिबन्धग्रन्थान् च निर्मितवान् । अदसीया लेखनशैली अतीव सारगर्भा संक्षिप्ता । सीदिति सर्वेऽप्यं तदीयग्रन्था अतिदुरूहतामापन्नाः । तथा चोक्तं प्रामाण्यवादारम्भादौ श्रीगदाधरभट्टाचार्यैः – "संक्षिप्तोक्त्यतिदक्षदीधितिकृतः" इत्यादि, "अतिदुर्बोधगिरः शिरोमणेः" इत्यादि च । एनां चातिदुरूहां दीधितिं दीधितिप्रकाशाख्यया व्याख्यया जागदीशीति विख्यातिं प्राप्तया उपबृंहितवान् श्रीजगदीशतर्कालङ्कारः ।

शिरोमणेर्वैदुष्यप्रकाशनायैतत्सर्वमलम् । उक्तं च स्वयं श्रीशिरोमणिना—

विदुषां निवहैरिहैकमत्या यददुष्टं निरटङ्कि यच्च दुष्टम् ।<br>मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव ॥

न ह्येषा गर्वोक्तिरिति भ्रमितव्यम्, अपि तु यथार्थोक्तिः स्वाभाविकी । या चैतद्ग्रन्थाध्ययनात् सुस्पष्टं प्रतीयते । एषा चैतत्कृता भूषामणिव्याख्या खण्डनस्य प्रथमे परिच्छेदे एव प्राप्यते इत्यस्ति खेदस्य विजयः—

## भूषामणि-सम्पादयितुः संक्षिप्तं वृत्तम्

एषा भूषामणिव्याख्या पाण्डुलिपिरूपेण यत्र तत्र विकृतविच्छिन्नकर्गलपटेषु निबद्धा, विद्वत्समाजकल्याणायाकस्मात् दृष्टिपथमागता विद्यावाचस्पतेराचार्यश्रीब्रह्मदत्तद्विवेदिमहानुभावस्य। तस्याः सम्पादनं महता मनोयोगेन विहितमाचार्यप्रवरेण द्विवेदिमहानुभावेन। एतत्कार्यमतीव दुरूहं गहनं चासीत्, अन्येन विदुषा कर्तुमशक्यमेवेति मन्ये। सारस्वतवैभववरिष्ठे विप्रकुले १९६३ तमे वैक्रमे वर्षे कार्तिकशुक्लद्वितीयायां प्रयागमण्डले करछना खण्डे पण्डितपुराभिधे ग्रामे आचार्यप्रवरस्य जनिरभवत्। एतदीयपितृचरणा महामहोपाध्यायपण्डित-श्रीहरिहरकृपालुद्विवेदिमहाशया वाग्देवतावतारमूर्तयः संस्कृतवाङ्मये विद्वत्परम्परायामनितरसाधारणं यशोराशिमाप्नुवन्। पितृचरणयोरेवान्ते वसता महानुभावेनैनेन न्याय-व्याकरणवेदान्ताद्यखिलविद्यारहस्यभाञ्जस्येनावाप्तम्। १९३२ ईस्वीयवर्षतः पाटलिपुत्रनगरे मुरारकासंस्कृतमहाविद्यालये प्राचार्यपदं ससम्मानमधिगत्य शिष्योपशिष्यपरम्परया स्वीयं पाण्डित्यं प्रख्यापयता पितृपादानां कीर्तिध्वज ऊर्ध्वमुत्थापितः।

१९५५ तमे ईस्वीयवर्षे बिहारशासनं पाटलिपुत्रे स्थापिते संस्कृतमहाविद्यालये आचार्यवर्यं नियोजितवान्। तस्मिन्नेव वर्षे धौतप्रतिष्ठया महाराजाधिराजः मिथिलाया विशिष्टसम्मानेन सम्मानितमकुर्वन्। १९८६ तमे ईस्वीये वर्षे महामहिमभारतराष्ट्रपतिमहोदया यावज्जीवनं स्वीयविशिष्टपुरस्कारेण माननीयमाचार्यवर्यं सम्मानितं कृत्वा भारतराष्ट्रस्य यशो वर्धितवन्तः।

एवं मनसा वचसा कर्मणा च सुरभारत्याः समर्चां सम्पादयता महामनीषिणा पूज्यचरणेनाचार्यवरेण १९८७ ईस्वीये वर्षे शिवसायुज्यं लेभे।

खण्डनखण्डखाद्यस्यैतादृश्या विशिष्टव्याख्याया भूषामणिनाम्न्याः सम्पादने तत्परः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः तदीयाः कुलपतिमहाभागाः श्रीमन्तो विद्यानिवासमिश्रचरणाः अन्ये प्रकाशनाधिकारिणः कर्मचारिणश्च सर्वे धन्यवादार्हाः। एतादृशं कार्यमग्रेऽपि पौनःपुन्येन स्यादिति भगवन्तं भवानीपतिं विश्वनाथं प्रार्थयते--

विदुषामाश्रवः

**रामप्रसादत्रिपाठी**

सम्मानिताध्यापकः

विभागाध्यक्षचरः (व्याकरणविभागस्य)

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणस्याम्।

भ्रातृ-द्वितीया

सं० २०४७ वैक्रमोऽब्दः

# भूमिका

सर्वो लोकः सुखमिप्सुः दुःखं जिहासुः परिलक्ष्यते इति नातिशयितं वचः। सुखं विषयप्रभवं विषयाभावेऽननुभूयमानतया विनाशीति न सर्वथेष्टमनोरथपथमधिरोहति प्रेक्षावताम्।

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्पदं स्वपदास्पदम्"॥ इति।

निर्दिष्टदिशा अविनाशिसुखं सर्वेषामनौपाधिकेच्छाविषयत्वेन इष्टतमं भवति। न च तादृशं सुखं विषयज्वालाजालजटिलमानसे मानवैः शक्यमासादयितुम् अतोऽध्यात्मचिन्तनजागर्तिरनिवार्या भवति।

तथासति अध्यात्मविचाराय वेदान्तशास्त्रं प्राथम्येन स्पृशति मानसपटलम्। तत्रापि च अन्यापेक्षया शाङ्करवेदान्तस्य विषयोपमर्दनपुरस्सरं परमात्मनो बोधकतया निर्विशेषसुखस्वरूपमोक्षसाधनताया अधिगमः सौकर्येण जायते। मतान्तरे तु सावयवत्वेन लोकानां विनाशसम्भावनया अदृष्टापरनामधेयस्य पुण्यस्य जन्यत्वेनानित्यतया च कदाचित् ततो भ्रंशोऽपि स्यादित्यनल्पकल्पनाजाले नावरुद्धं मनो नितान्तं न तस्य सुखसाधनतां झटिति आकलयितुं शक्नोति। उक्तञ्च– क्षीणे पुण्ये मर्त्यलोकं विशन्तीति।

तादृशसुखप्राप्तये संसारस्य अनिर्वचनीयताख्यातिः। निकटतमउपाय उपायान्तरापेक्षया प्रतिभातीति खण्डनखण्डखाद्यनामधेयं ग्रन्थमनिर्वचनीयतासर्वस्वं व्यररचन् अप्रतिमप्रतिभाः युक्तिपथस्य सुदृढ़पान्था श्री श्रीहर्षमिश्राः।

तिसृषु वादजल्पवितण्डाकथासु वितण्डा कथामाश्रित्य रचितोऽयं ग्रन्थो न कमपि पक्षविशेषं साधयितुं प्रायतत। अतएव आत्मनो वैतण्डिकत्वं व्याजहार ग्रन्थकाराः।

यत्र कुत्रचित् पक्षविशेषोल्लेखो लक्ष्यमाणः स परकीयाभिप्रायेणैव। तथा चोक्तं तेनैव—

"परस्यैव व्यवस्थयैवं पर्यवस्यति। निर्वचनप्रतिरूपादनिर्वचनीयत्वं विधिनिषेधयोरेकतरनिरासस्य इतरपर्यवसायिता या स्तेनाभ्युपगमात्। ततः परकीयरीत्या इदमुच्यते"

वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे: चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे" इत्यादि पृष्ठे-द्रष्टव्यः।

स प्रतिपक्षस्थापनाहीनो वितण्डेति वितण्डास्वरूपं न्यायसूत्रं निर्दिशति। सर्वेषां पदार्थानां खण्डने ग्रन्थकृतस्तात्पर्यमवधारणायं न तु कस्यचित् पक्षस्य स्थापने इति।

लक्षणप्रमाणाभ्यां निर्वक्तुमशक्यत्वं नाभिवचनीयत्त्वं किन्तु सत्त्वासत्त्वान्तरं निर्वक्तुमशक्यत्वेन तथोच्यते। जगतो विनाशित्वेन न तत्सत् वक्तुं शक्यते नाप्यसद् वक्तुं शक्यते प्रतीयमानत्वात्।

सत्तासमवायित्वेन अर्थक्रियाकारित्वेन वा न किञ्चित् सद्भवतुमर्हति। सत्तायां सत्तान्तराभावात् स्वस्याः स्वस्यामभाच्च सत्साधिकायाः सत्ताया एव असत्त्वापातात् एवमेव अर्थक्रियाकारित्वे अर्थक्रियाकारित्वाभावात् स्वस्मिन् स्वस्याभावाच्च अर्थक्रियाकारित्वमेवासद् भवत् कथमन्यस्य सत्त्वसम्पादकं स्यात्। तस्मात् त्रिषु कालेषु यस्य प्रतीतिर्न बाधिता तदेव सत्। तादृशञ्च ब्रह्मैवेति तदेव सत् इत्याद्यनिर्वचनीयता प्रकारे वेदितव्यः।

अस्य ग्रन्थस्य विशिष्टशेमुषीकैर्विद्वद्भिष्टीका रचिताः। तासां नामनिर्देशोऽधोलिखितो वेदितव्यः।

| टीका-नाम | रचयितुर्नाम |
|---|---|
| १–भावदीपिका | चित्सुखमुनिः |
| २–खण्डनफक्किकाविभजनम् विद्यासागरी | विद्यासागरोपनामकानन्दपूर्णमुनिः। |
| ३–प्रकाशः | वर्द्धमानोपाध्यायः |
| ४–आनन्दवर्धिनी | शङ्करमिश्रः |
| ५–शिष्यहितैषिणी | पद्मनाभः |
| ६–खण्डनभूषामणिः | रघुनाथ शिरोमणिः |
| ७–खण्डनदर्पणः | प्रगल्भमिश्रः |
| ८–खण्डनमण्डनम् | वरदपण्डितः |
| ९–खण्डनटीका | पद्मनाभदत्तः |
| १०–खण्डनटीका | शुभङ्करः |
| ११–शारदा | शङ्करचैतन्यस्वामी |
| १२–रत्नमालिका | सूर्यनारायण शुक्लः |

पण्डित श्रीचण्डीप्रसादशुक्लेन तथा स्वामिप्रवरेण श्रीहनुमानदासाभिधेन षट्शास्त्रिणा हिन्दीभाषानुवादोऽप्यस्य कृतः।

आसु खण्डनभूषामणिनाम्नी टीका अनुपलब्धिप्रकरणस्य कियन्तं भागं यावदेव सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये (वाराणसीस्थे) कश्मीर-पुस्तकालये च समासाद्यते। उभयत्र उपलभ्यमाना पाण्डुलिपिः अशुद्धिबहुलाः बहुत्र नाभीष्ट-मर्थं बोधयितुं क्षमते। दन्त्यतालव्यसकारशकारयोः णत्त्वनत्वयोर्विभजने दूरे आस्तां पङ्क्तावयवस्तथा प्रतिलिपिबद्धाः विरामादिचिन्हरहिता भ्रंशिता येनार्थाव-गतिस्थानेऽनर्थावगतिर्भवति। यथा न चेत्यस्य स्थाने तेन चेति कल्पनं प्रकृतार्थोप-योगितया युज्यतेतमम्। तत्र ते इति पदांशो विलोपिते नार्थमुचितं बोधयितुं क्षमते। सन्त्येवंविधानि नैकानि स्थलानि। उदाहरणमात्रमेतत्।

टीकायामस्यां बहूनां पूर्वविदुषां नामानि निर्दिष्टानि। केषाञ्चित् स्वमतो-पपादनाय केषाञ्चित् तन्मतोपमर्दनाय। तथाहि—

१—दाक्षिणात्यगुण्डसमभट्टः

२—परमगुरुभिः सार्वभौम भट्टाचार्यैरुक्तम्

३—प्रकाशानन्द सरस्वती श्रीपादः

४—वर्धमानोपाध्यायः

५—गङ्गेशोपाध्यायस्य स्वशिष्यप्रतारणाप्यपास्त

६—शालिकनाथोक्तं स्मृतिलक्षणं दूषयति

७—शालिवाहनो नाम राजा पुष्करिणीतीरं लीलावत्या सह

८—भट्टचरणाः इत्यादि।

निम्नलिखितानां ग्रन्थानामुद्धरणम्—

१—वार्त्तिकामृतम्

२—न्यायटीका

३—शिष्यहितैषिण्याम्

४—गुणभाष्यम्

५—मितभाषिण्याम्

शङ्करमिश्रस्य मतं निराचिकीर्षुः शिरोमणिः क्वचित् मिश्रपदेन क्वचिच्च मैथिलिपदेन तमुपजग्राह। तथाहि-मैथिलानामल्पज्ञानतः। "मैथिलानाम्" इत्यादि।

शङ्करमिश्रः खण्डनयुक्तिं वाधितुं यत्र प्रायतत तत्र तेषां खण्डनमत्र प्रायेणोपलभ्यते। क्वचित् तां टीकामनुसरत्यपि शिरोमणिः।

विद्यासागरेण व्याख्यातमर्थं बहुत्र खण्डनभूषामणिकारोऽनुवदति। विद्यासागर्यां यथोपलब्धं तथैवायं निर्दिशति टीकायाम्। क्वचिच्च तदुक्तं युक्तया निराकरोति। बहुत्र च न्यायपद्धत्या स्वोत्प्रेक्षितं प्रतिपादयति।

कस्मिन् पृष्ठे किं निर्दिष्टमिति तु पुस्तकप्रकाशानन्तरमेव निर्देष्टुं शक्ष्यते अप्रकाशितस्य पृष्ठसंख्याया अभावात् अप्रकाशितपुस्तकस्य भूमिकालेखनं भूमिकाप्रतिकृतिलेखनमेव।

खण्डनभूषामणिकारस्य रघुनाथशिरोमणेः सम्बन्धे एषा आख्यापिका प्रचलति।

सप्तवर्षदेशीयो रघुनाथः पितृरहितः भ्रातुरादेशेन स्वगृहोपकण्ठं स्थितायां सार्वभौमपाठशालायां अग्नेरानयनाय समागतश्छात्रमेकं पाकप्रवृत्तं वह्निं प्रार्थयामास। स च अर्थयितारं तं रिक्तपाणिं विलोक्य सद्य एव ज्वलन्तमङ्गारं दर्वीमुखेन चुल्हीतो निष्काश्य अकथयत् गृहाण भो अग्निम्। प्रत्युत्पन्नबुद्धिर्बालो रघुनाथः तस्मिन्नेव क्षणे धूलिपटलेन निजमञ्जलिं पूरयित्वा तदग्रे प्रसार्य च अब्रवीत् दीयतामग्निरिति। दैवात् तदानीमेव उपाध्यायः सार्वभौमः समागमत्। बालकस्य चेष्टितेन प्रतिभातिशयमाकलयन् मातुः सम्मतिं गृहीत्वा रघुनाथस्य विद्यारम्भं समकरोत्। वर्णोपदेशकाले एव स वालो रघुनाथो वर्णोपदेशकं सार्वभौमगुरुमपृच्छत्। कथं ककारस्य प्राथम्यं न खकारादेरिति। एवं विधेनानुयोगेनातीव तुष्टः स्वयमेव तमध्यापयामास।

अयं पञ्चाशीत्यधिकत्रयोदशशततमे शकाब्दे वङ्गदेशं स्वजन्मना समलञ्चकार। सार्वभौमपण्डितात् समधीत्य विशेषवुभुत्सया मिथिलामगच्छत्। तत्र नैयायिकचक्रचूड़ामणेः पक्षधरमिश्रस्य चरणयोरन्तिके अधीतविद्यः पुनर्नवद्वीपमाजगाम। अनेनैव तत्त्वचिन्तामणेर्दीधिति नाम्नी टीका निरमायि। संक्षिप्तोत्यैः नैपुण्यमतिशयेन आलक्ष्यते एषाम्।

इयमपि किंवदन्ती अस्य विषये श्रूयते–मिथिलायां सम्प्राप्तविद्यो रघुनाथः कठिनस्थलस्य परिष्कृतरूपं लिखित्वा नवद्वीपं स्वदेशमानेतुं प्रवृत्तो गुरुणा वारितः। कण्ठस्थीकृताः विषयाः वहिरानेतुं शक्यते न लिपिवद्धाः इति।

अयमेव रघुनाथशिरोमणेः खण्डनभूषामणिना खण्डनखण्डखाद्यं समभूषयत् इति साधिकारं वक्तुमिदानीं न पारयामि। टीकायां नैयायिकप्रवरस्य

सार्वभौमस्य महागुरुपदसम्बोधनेन दीधितिकारो रघुनाथ एवास्य टीकाकार इति प्रतिभाति ।

गुरुणा पक्षधरमिश्रेण कक्षक्षीकृते विमनायमानेऽस्यां टीकायां मैथिलपदं यत्र तत्र व्याहृत्य दूषयन् असौ तेषु स्वासद्भावनां प्रकाशयामास । अन्यथा अन्येतु यत्तु इत्यादि पदेन तदुल्लेखः स्यादित्यपि तस्य एतट्टीका कर्तृत्वे गमकमिति । प्रमाणान्तराणि कालान्तरे बोधयिष्यामि ।

खण्डनखण्डखाद्यस्य रचयितुर्विद्वन्मणेः श्रीहर्षस्य पिता श्री हीरो माता च मामल्लदेवी आसीत् । अयं मिश्रोपाधिकः कान्यकुब्जब्राह्मणः कन्नौजदेशे काश्याञ्च न्यवसत् । अस्य कालः एकादशशताब्दी द्वादशशताब्योर्मध्ये अस्ति । एतत् सर्वं बहुभिः पण्डितैः बहुधा विवेचितं तत एवावधार्यम् ।

तत्त्वोपप्लवसिंहनामक ग्रन्थनिर्दिष्टा खण्डनपद्धतिरनेनानूसृतेति नैतावता अस्य महत्वम् अपचीयते । यावदर्थे साम्यं तावदर्थं साधयितुं विरोधिनोऽपि युक्ति समुद्धरणञ्च सर्वे परीक्षकाः विदधति । भगवान् शङ्कराचार्योऽपि समादरेण न्याय-सूत्रमुदाहरति–"तथा च आचार्योपबृंहितं न्यायसूत्रम्" "दुःखजन्मप्रवृत्तिदोषमिथ्या-ज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" ।

एतस्य खण्डनप्रणाली अभूतपूर्वा । सर्वान् खण्डनप्रकारान् अतिशय्य वर्तते । चित्सुख्यादौ एतस्यैव खण्डनप्रकारः समादृताः ।

वाराणसीस्थ सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य आदरणीय कुलपतिना विद्वच्चक्रचूडामणिना श्री बदरीनाथशुक्लमहोदयेन प्रेरितोऽहं खण्डनभूषामणिं संशोध्य सम्पादनयोग्यतां नेतुं प्रावर्तिषि ।

क्वेयं खण्डनटीका क्व च ममाल्पमतिः, परं निर्देशोऽनुपाल्य इति धिया गुरोश्चरणौ ध्यात्वा समारम्भाय मतो न्यवेशयम् । यथाकालं तथाविधयोग्यता-मनयम् ।

इच्छतोऽपि मया विस्तृतटिप्पण्या नायोजि । अत्रत्य विश्वविद्यालयस्य पाण्डुलिपेश्छाया ( फोटो ) करणे कियान् कालो व्यतीतः । ततः परं संशोध्य छायापुस्तकस्य प्रतिलिपिं विधाय विस्तृतटिप्पणेन योजयितुं मतिमाकलयमहं ताव-देव कश्मीरपुस्तकालयात् समुपलब्धा द्वितीया पाण्डुलिपिरिति । तथापि मूलनाय-मिति पुस्तकालयाध्यक्षेण निर्दिष्टोऽन्तःसंकल्पं शोधयित्वा पुनः पिष्टपेषणमिव तयोः सम्मेलने मतिमकरवम् । उभयोः सम्मेलनेनापि न सर्वथा विशुद्धा प्रतिलिपि-रुदपद्यत । अशुद्धौ प्रायेण तयोः साम्यात् । तथाचान्ते मम मतिरेव प्रमाणमभूत् ।

प्रमादात् अभिप्रायानवधारणाच्च जाता अशुद्धयो मुद्रणसमये निराकरिष्यन्ते इति सम्भावनया सन्तोषमावहामि ।

प्रार्थये च अनाथनाथं श्री विश्वनाथं यदस्य प्रकाशनं मज्जीवनकाले स्यात् ।

विद्वज्जनविधेयः
ब्रह्मदत्तद्विवेदी ९।१२।८०
भू. पू. प्राचार्यः
श्री रामनिरञ्जनदास मुरारका-संस्कृत-महाविद्यालय, चौक, पटना सिटी ।



# आत्मकथ्यं किञ्चित्

"प्रार्थये च अनाथनाथं श्री विश्वनाथं यदस्य (रघुनाथ शिरोमणेः 'खण्डन-भूषामणि" नाम्न्या टीकया संवलितस्य खण्डनखण्डखाद्यस्य) ग्रन्थस्य प्रकाशनं मज्जीवनकाले स्यात्" । इयमासीदभिलाषा मम तातपादानाम् (**आचार्य ब्रह्मदत्त-द्विवेदिनां**) अस्य ग्रन्थस्य प्रकाशनविषये । परञ्च दैवदुर्विपाकात् अस्माकमपुण्यतया च प्रार्थना चैषा विश्वेश्वरेण न स्वीकृता । सहसा अस्मान् सर्वान् विहाय ते शिवसायुज्यमवापुः । विषयेऽस्मिन् तेषां समीहितं न सम्पन्नमिति चेखिद्यतेस्म मामकीनं मनः ।

**यच्चिन्तितं तदिह दूरतरं प्रयाति ।**
**यच्चेतसापि न कृतं तदिहाभ्युपैति ।।**

दैवेनैषा भणितिर्मे जीवने चारितार्थ्यं नीता । दुरूहग्रन्थग्रन्थिविमोचनं मे तातपादानामासीन्नैसर्गिकं व्यसनम् । प्रकाशनमप्यस्य ग्रन्थस्य तेषामेव कृते सुकरमासीत्, किन्त्वघटितघटनापटीयसाऽदृष्टेन यो भारराशिर्मयि निक्षिप्तस्तमुररीकृत्य अहं कर्मण्यस्मिन्नात्मानं न्ययोजयम् ।

प्रारब्धे सति काचन समस्याः समुत्पन्नाः । अस्माकं सौभाग्येन विद्वद्वरेण्याः विश्रुतकीर्तयः संस्कृतवाङ्मयं प्रति समर्पिताः पूज्यतमाः आचार्य विद्यानिवासमिश्र-महोदयाः एतद् विज्ञाय झटिति सर्वबाधान् निरस्य प्रथमखण्डस्य प्रकाशनाय आदेशं प्रदत्तवान्, सारगर्भितेन "पुरोवाक्" लेखनेन चालङ्कृतवान् । तेषां प्रति कया वाचा स्वकृतज्ञतां प्रकाशयेयमिति न संवेद्मि । केवलं स्नेहाशिषं कामये ।

प्रथमं तावत् विद्याविद्योतितान्तःकरणानां विविधोपाधिविभूषितां अस्मद्गुरूणां श्रीमतां रामप्रसादत्रिपाठिमहाभागानां कृते कृतज्ञतां ज्ञापयामि ये खलु अस्य ग्रन्थस्य प्रतिपदं संशोधनं कृत्वा पाठगतसमस्तसंशयोच्छेदं कृतवन्तः ।

मम दृढनिश्चयं ज्ञात्वा पालिविभागाध्यक्षाः आचार्याः डा० लक्ष्मीनारायण-तिवारिमहाभागाः प्रकाशनौपायिकान् विधीन् सातिशयं पूरितवन्तः । विश्वविद्यालयप्रकाशनाधिकारिणः डा० हरिश्चन्द्रमणित्रिपाठिमहोदयाः सहर्षं प्राथम्येन प्रकाशनव्यवस्था कृतवन्तः । आसीच्च मे मनसि विचिकित्सा यत् विश्वविद्यालय-मुद्रणालये कदाचित् शोभनं मुद्रणं न स्यात् । परञ्च मुद्रणालयस्य विशेषाधिकारिणःव्याकरणविभागीय प्राध्यापकस्य डा० राममनोहरमिश्र-महोदयस्य सत्प्रयासेन एषाऽशङ्काऽपि निर्मूला सिद्धा । संशोधनकार्यस्य गुरुतरं

भारं शिक्षाशास्त्रविभागस्य प्राध्यापकैः डा० देवनारायणमिश्रमहोदयैः महता श्रमेण यथा निर्वाहितं तदतीवाभिनन्दनीयम् ।

एतान् सर्वान् महानुभावान् प्रति सश्रद्धमाधमर्ण्यं बिभर्मि ।

मुद्रणालयस्य कर्मचारिणः सोत्साहं कार्यमिदमनुष्ठितम् तेषां प्रति कृतज्ञोऽस्मि ।

आशासे यदस्य ग्रन्थस्य द्वितीयखण्डस्यापि प्रकाशनं शीघ्रमेव स्यात्—

विदुषामाश्रवः
**वाचस्पतिद्विवेदी**

भ्रातृद्वितीया सं० २०४७
वाराणसी

उपाचार्यः, शिक्षाशास्त्रविभागः
सं० सं० विश्वविद्यालयः, वाराणसी

# विषयक्रमः

श्री श्रीहर्षप्रणीतम्

# खण्डनखण्डखाद्यम्

❀ ❀ ❀

## प्रथमः परिच्छेदः

अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।
ईश्वरमुमया न परं वन्देऽनुमयापि तमधिगतम् ॥

॥ श्रीगणेशाय नमः ॥

श्रीरघुनाथशिरोमणिप्रणीतः
आचार्यब्रह्मदत्त द्विवेदिना परिष्कृतः

## खण्डनभूषामणिः

आनम्य भक्तिनम्रः शम्भुं साम्भोधिजाकान्तम् ।
श्रीरघुनाथस्तनुते खण्डनभूषामणिं कुतुकात् ॥ १ ॥

धीराः[१] कुशाग्रमतयो [२]नितरां नितान्त-
वेदान्ततन्त्रमिह ये परिशीलयन्ति ।
तेभ्यो ममेदमुपढौकितमल्पबुद्धेः[३]
क्षोभप्रदं यदि भवेन्मम कोऽपराधः ॥ २ ॥

जाततत्त्वसाक्षात्कारोऽपि लोकसंग्रहार्थं मङ्गलमातनोति—"अविकल्पे"-त्यादिना । विकल्पो विरुद्धकोटिकं ज्ञानं संशयस्तदविषयः । यः श्रुतिषु उपनिषत्सु श्रुतः अस्ति सद्रूपः एकः 'स्थाणुः पुरुष' इति । संशये हि स्थाणुविशेष्यके स्थाणुपुरुषाभेदो भासमानो वार्थोल्लेखी, अयं तु श्रुतौ न तथा प्रतीतः किन्तु निश्चित इति चित्रम् । यदि च धर्मिभेदेन तथा ज्ञानं स्यात्, स्यादप्यविरोधः न चैवं—किन्तु एक एव, अथ च स्थाणुः स्थिर एव वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्, इत्यन्ता[४] "अयं स्थाणुः"

१. "धारा" इति आदर्शपुस्तके पाठः । २. "नितान्त" इति पाठः ।
३. "बुद्धि" इति पाठः । ४. "इत्यचतो"

मानापनोदनविनोदनते गिरीशे
भासेव सङ्कुचितयोरुचितं तदिन्दोः ।
भेत्तुं भवानिशचितं दुरितं भवानि !
नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते ॥ २ ॥

---

इत्याद्याः श्रुतयः । तथा–'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं नमसः परस्तात्'[१] इति कैवल्योपनिषत्प्रतिपाद्यं तस्य रूपं नमस्यतौपयिकमाह—ईश्वरमुमयाधिगतमिति । उमा पार्वती तया आश्लिष्टम् अर्द्धनारीश्वरमित्यर्थः । लौकिकमपि प्रमाणं तत्रास्तीत्याह— अनुमया=अनुमित्या न परम्, उमया किन्तु अनुमित्यापीत्यर्थः । श्रुतिसहायी[२] कृत्यानुमायि तत्र प्रवर्तत इत्याशयः ।

नुः सम्बन्धने[३] मया लक्ष्म्या चाश्लिष्टं 'मा मातरि च माने च मा च लक्ष्मीः प्रकीर्तिते'ति कोशात् । तेनेश्वरस्य विष्णोरभेदो ध्वनित इति शङ्करमिश्राः ।

वन्दे स्तौमि अभिवादयामि चेत्यर्थः । अनु उमातः पश्चात् मयाप्यधिगतं साक्षात् कृतमित्यपि व्याचक्षते ।

यस्याः प्रसादात् सर्वशास्त्रार्थविज्ञानमात्मसाक्षात्कारपर्यन्तं जातं तां द्वितीयश्लोकेन प्रणमति—हे भवानीति । अङ्घ्रिसरोजयोः घनं निरन्तरं नम्रीभवानि । किमर्थं भवे संसारे अनिशं सर्वदा चितं=सेवितं दुरितं भेत्तुं नाशयितुम् । यद्वा नत्वा प्रार्थयतेऽनिराचितं दुरितं भेत्तुं भवेति । प्रार्थनायां लोट् । गिरीशे मानापनोदनविनोदनते सति तदिन्दोः भासा संकुचितयोरिव चन्द्रकिरणेन पद्मसंकोचनमुचितमेव वस्तुगत्या चोचितं भर्तुः शिरःस्पर्शभयादित्यर्थः । उचितं यथा स्यात्तथा संकुचितयोरित्यर्थः ॥२॥

श्रुतिजनितबोधरक्षामेव खण्डनप्रयोजनं मत्वा परान् शिक्षयति—शब्दार्थेति । यथोक्तमेतद् ग्रन्थस्वरूपं शुकवदुक्त्वापि दिग्विजयेन यत् कौतुकं तद्विस्तारयत दिक्ष्वित्यर्थः । कुतर्काभ्यासरसिकानां पराजयः कौतुकं क्रीड़ा तथा च ईदृशक्रीडैव बहिर्मुखतादशायां कार्येत्युपदेशः । कौतुकमाश्चर्यं लोके[४] हि दर्शयतेत्यपि केचित् । अखर्वगर्वान्=अनल्पगर्वान् शब्दश्चार्थश्च तयोर्निर्वचनं निरुक्तिः, तत्त्वानुभूतिः प्रमेत्यत्र तस्य भावस्तत्त्वमिति किमयं यौगिकः शब्दः किं वाऽखण्डमेव तत्त्वपदं क्वचिदर्थे रूढमिति शब्दनिरुक्तिः । तत्त्वं यदि अबाधितं रूपं तदपि किं स्वस्याबाधितम् उत परस्य, तत्रापि किं यस्य कस्यचिदथ सर्वस्य अथवा स्वपरसाधा-

---

१. कै० प्र० ख० ७ २. "श्रुति" ३. सम्बोधने इति पाठः । ४. तोके ।

**शब्दार्थनिर्वचनखण्डनया नयन्तः सर्वत्र निर्वचनभावमखर्वगर्वान् ।**
**धीरा यथोक्तमपि कीरवदेतदुक्त्वा लोकेषु दिग्विजयकौतुकमातनुध्वम् ।। ३ ।।**

## १. प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डनम्

**अथ कथायां वादिनो नियममेतादृशं मन्यन्ते--'प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्' ।**

---

रणस्य सर्वस्य, तदपि किञ्चित् कालनियतं सर्वकालनियतं वेत्याद्यर्थनिरुक्तिः, तस्याः खण्डना दोषज्ञापना । सर्वत्र सर्वस्यां कथायां वादजल्पवितण्डात्मिकायाम् । यद् वा सर्वत्र शब्दे अर्थे लक्ष्ये लक्षणे च निर्गतं वचनं येभ्यस्ते निर्वचना मूकास्तस्य भावो मूकत्वं नयन्तः प्रापयन्तः उक्त्वापि उच्चार्यापि अर्थज्ञानाधिकोत्प्रेक्षाहीना अपीत्यर्थः ।

शब्दार्थयोः निर्वचने निरुच्येते इति निर्वचने सदसत्त्वे शब्दार्थौ न सन्तौ बाध्यमानत्वात्, नाप्यसन्तौ प्रत्यक्षत्वादिति तत्खण्डना—न सन्नाप्यसन् नापि सदसत् किन्त्वनिर्वचनीयं शब्दार्थयुगलमित्येवं रूपा तथा सर्वत्र देवासुरमानुषयोनिषु येऽभिमानाः गर्वापरपर्याया अहङ्कारा अखर्वाश्च ते गर्वाः तान् निर्वचनभावमनिर्वचनीयत्वं नयन्तः अध्यासरूपतामापादयन्त इति यावत् ।

दिश्यते व्यपदिश्यते आचार्येणेति दिक् ब्रह्म, तद् विजयते[१] । एतेन तद् विजयोऽविद्यादि तस्य कौतुकं कोलाहलमातनुध्वम् । किं कृत्वा उक्त्वा = निरुच्य, सत्त्वेनेति शेषः । एतत् = नामार्थयुगलं यथोक्तं प्रथमश्लोकोक्तविशेषणयुक्तम् । अपिशब्दाद् वक्ष्यमाणस्वरूपं ब्रह्मैव[२] इत्यर्थ इत्यपि व्याचक्षते । तदसाधीयः तथासति ब्रह्मोपासनैव निदिध्यासनात्मिकेत्युक्तं भवति ।। (इति खण्डनप्रणयनानर्थक्यं स्यात्) ।

विजयकौतुकस्य कथाफलत्वाद् विजयकामिभिरवश्यं कथारभ्येति तदर्थं कथाभूनिबद्धं विचारमारभते—

**"अथे"ति** । अथशब्द आरम्भे, अधिकृतं खण्डनं वेदितव्यमित्यर्थः । मङ्गलमयशब्द इति तु भिन्नः । वस्तुतस्तु प्रश्नवचनोऽथशब्दः, तथा च कथाधिकार एव नास्ति कुतः खण्डनिकस्य दिग्विजयसम्भावना इति प्रष्टुराशयः ।

उत्तरमाह—**तदपरे इति** । कश्चित्तु प्रथमश्लोके श्रुतिप्रमाणकं ब्रह्मप्रतिज्ञातं तत्र प्रमाणसत्त्वानभ्युपगमे विरुद्धेतेत्याशङ्क्य प्रमाणरचनत्वाभ्युपगमः कथाङ्गं न

---

१. विजयते इति दिग्विजयः इति मुद्रितपुस्तके पाठः । २. ब्रह्म ध्यात्वा कीरः शुकः इति मुद्रितपुस्तके पाठः ।

**तदपरे न क्षमन्ते। तथा हि—प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत्कस्य हेतोः ? किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य वाग्व्यवहारस्य प्रवर्तयितुमशक्यत्वात् ? उत कथकाभ्यां प्रवर्तनीयवाग्व्यवहारं**

---

भवति किन्तु प्रमाणाभ्युपगम इति कथयितुं विचारमारभते अथेत्यादिना इति व्याचष्टे । तन्न, समयबन्धस्यैव कथाङ्गत्वात् । नन्वद्वैतबोधरक्षाद्वैतखण्डनसाध्या न च खण्डनिकस्य तत्सम्भावना अस्ति सर्वपदार्थस्य खण्डनस्य प्रमाणसाध्यत्वात् । न च प्रमाणं खण्डयतः तत्सम्भवति । न वा प्रयोजनमपि द्वैतभयात् खण्डयतो वितण्डायां प्रवृत्तिरपि सम्भवति,प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते,किमुत ब्रह्मवादी विशेषदर्शी । यश्च चार्वाकादिः प्रवर्तते तेन सह कथा आस्तिकानां धर्मशास्त्रे निषिद्धैवेत्याशयेन भेदवादिभिरास्तिकैः कथाया निमित्तभूतं[१] वादिनो निर्यममेतादृशं मन्यन्ते पाषण्डत्वाभावज्ञानाय । ततश्च यदि ब्रह्मवादिनापि नाङ्गीकर्त्तव्यं प्रमाणादिकं तर्हि केन[२] नास्तिकेन सह कथा कार्या । न च नास्तिकेन सह प्रसङ्गो भवतोऽप्युचितः । सर्वास्तिकप्रवरस्याशरीरं सत्त्वादित्याशङ्क्य न प्रमाणादिखण्डनमात्रेण नास्तिकता किन्तु तेषामप्राणत्वज्ञापनेन, न तु वयं तथा ब्रूमः किन्तु प्रमामसतीमेव तानि जनयन्ति। न सन्ति श्रुतिविरोधाद् युक्तिबाध्यत्वाच्चेति । ततश्च ब्रह्मवादिनो मम पाख(ष)ण्डत्वं दूरापास्तं तथापि च मया सह कथा नास्तीति वदतः कथाप्रयोजकाभावात् कथा मम न सम्भवतीति तैर्बोधनीयम्, तदर्थं तेषां योऽयं प्रकार उपन्यस्तः स तस्य प्रयोजकत्वाभावप्रदर्शनेन खण्डनीय इत्याशयेन तन्मतं सिद्धवन्निर्दिशति–कथायामित्यादिना । कथायामिति[३] निमित्तसप्तमी[४] । वादिनोः= कथकयोः वादिप्रतिवादिनोरित्यर्थः । मन्यन्ते–भेदवादिनो न्यायभाष्यकारादयः प्रमाणादयः षोडश सन्तीति[५] सत्त्वेन प्रकारेण । अन्यथाप्रमाणाभ्युपगमो ब्रह्मवादिनामस्त्येवेति कथाप्रवेशो दुर्वार एव स्यादिति भावः । कथकेनेत्येकवचनं खण्डनिकाभिप्रायेण ।

तदितरस्य प्रमाणसत्त्वाभ्युपगमस्य सिद्धत्वादेव तदभ्युपगमविशिष्टं सत्त्वं[६] सत्त्वाभ्युपगमनमित्यर्थः । कस्य हेतोः=कस्माद्धेतोरित्यर्थः[७] तत्र किं निमित्तमिति

---

१. नियमभूताया इति पाठः, २. केनास्तिकेनेति उभयपुस्तके । ३. नानाप्रावत्सको विचारगोचरो वचनसन्दर्भः कथा तस्यामित्यर्थः । ४. चमणि द्वीपिनं हन्ति इत्यत्र यथा ।

५. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानात्मकाः षोडश इति ।

६. सत्त्वेन प्रमाणानामभ्युपगमो वादिप्रतिवादिनोः कथायाः पूर्वमावश्यक इति भेदवादिनो मन्यन्ते ।

७. कथाहेतोरित्युभयपुस्तके ।

**प्रति हेतुत्वात् ? उत लोकसिद्धत्वात् ? अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयफलातिप्रसञ्जकत्वात् ?**

**(१) न तावदाद्यः, तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वात् । तस्यैव वाऽनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । सोऽयमपूर्वः**

---

यावत् । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनात् इति कात्यायन[१]स्मरणात् । साहित्यत्य नियमोऽविनाभावः । या या कथा सा प्रमाणादिसत्त्वाभ्युपगमपूर्विकेति व्याप्तिरिति प्रथमविकल्पार्थः । हेतुभावादित्यत्र प्रमाणादीनामनुषङ्गः । तथा च कथकव्यवहारं प्रति यतो हेतुरतः कारणत्वात्तेषां सत्त्वमभ्युपेयमसतोऽकारणत्वादित्यनुभूतिस्वान्तः[२] । अत एव द्वितीयविकल्पनिरासग्रन्थोऽपि साधु सङ्गच्छते । प्रमाणाद्यभ्युपगमः कथाकारणमिति द्वितीयविकल्पार्थः । वाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वं सम्भाव्येतापि तु तदभ्युपगमस्यापि माध्यमिकादिवाग्व्यवहारे व्यभिचारादित्यर्थः ।

ननु[3] यदि प्रमाणादीनां हेतुत्वं ब्रूषे तदा तदभ्युपगमस्यापि मंस्यसे यतो नियतपूर्वसत्त्वं हेतुत्वं सच्चावश्यमभ्युपेयमित्यवर्जनीय एव प्रमाणादिसत्त्वाभ्युपगम इत्याशङ्कते—अथेति । यद् यदा सत्तया ज्ञायते तत्तदाभ्युपगम्यत इति ।

व्याप्तेरुभयसिद्धत्वात् इति शङ्करमिश्रव्याख्यानं यथाश्रुतवक्ष्यमाणग्रन्थविरुद्धं हेयमेव तत् । इदन्तु स्यात् प्रमाणस्य न व्यवहारहेतुर्नाशक्यशङ्का ज्ञानेच्छादीनामेव तद्धेतुतायाः परैरङ्गीकारात् । यदि च विधायकानां प्रमाणानामपि ज्ञानद्वारा प्रवर्तकत्वं भट्टैरङ्गीकृतमिति तदभिप्रायेण शङ्का । तदपि न युक्ता तेषामपि वाग्व्यवहारहेतुता नास्ति तेषां विधायकत्वव्यपदेशात् तावन्मात्र एव हेतुत्वात् । यदि च हेतुपदं प्रयोजकमात्रपरं तदा पूर्वविकल्पाभेद इति चेन्न । आदिपदग्राह्यप्रमेयमध्यपातिवृत्तिपरत्वात् । संशयाभिप्रायकत्वाद् वा शङ्काया इति ।

तृतीयविकल्पे लोकपदं प्राणिनिकायव्यवहारपरम् लोकावगतसामर्थ्यात् शब्दो वेदेऽपि बोधक इति [४]व्यवहारे लोकशब्दस्य प्रयोगदर्शनात् । अत एव विकल्पस्यास्य दूषणावसरे स्वयमेव तथा व्याख्यास्यति । तथा च यतो लोकाः प्रमाणादीनि

---

१. हेतौ २।३।२३। पाणिनिसूत्रे पठितमिदं वार्तिकम् । निमित्तादिप्रयोगे तेभ्यः तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रायेण प्रयोगो भवति इत्यर्थः ।

२. "अनुमिति स्वान्यम्" पुस्तकान्तरे ।

३. ननु यदित्यर्थ इत्यधिकः पाठः ।

४. "व्यवहारे लोकशब्दस्येति" आदर्श पुस्तके एवं कश्मीरपुस्तके च नास्ति ।

**प्रमाणादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताऽभ्यूहितः, नूनं यस्य प्रभावाद् भगवता सुरगुरुणा लोकायतकानि सूत्राणि न प्रणीतानि, तथागतेन वा मध्यमागमा नोपदिष्टाः, भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि ।**

**प्रमाणाद्यनभ्युपगम्यापि प्रवर्तयन्तु नाम ते वाचो भङ्गीः, तास्तु साधन-बाधनक्षमा न भवन्ति तावतेति ब्रूम इति चेत्, न; प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं तदीयसाधनबाधनाक्षमतायां न नियामकम्, किन्तु सद्वचनाभासलक्षणयोगित्व-**

---

सत्तया व्यवहरन्ति अतो लोकप्रसिद्धसत्वात् कथकेनापि सत्त्वमभ्युपेयमिति तृतीय-विकल्पार्थः । यद्यप्येवमपि कथारम्भे सत्त्वाभ्युपगमो न आयाति स च प्रकृतोपयोगी तथापि कथकव्यवहारसिद्धत्वात् कथारम्भकाले तदभ्युपगमोऽपि लोकव्यवहारसिद्ध इत्यभिप्रायः परेषामिति ।

तत्त्वनिर्णयो वादस्य फलं विजयस्तु जल्पवितण्डयोः फलं, तस्य अतिप्रसक्तिरप्रमाणेन व्यवहर्तरि सम्बन्धः, स तदनभ्युपगमे स्यादिति अनतिप्रसक्तफलाकाङ्क्षया कथकेन प्रमाणादिसत्त्वाभ्युपगमः कथावत्समये कार्य इति चतुर्थविकल्पार्थः ।

**नाद्य इति**[1] । तथा च व्यभिचाराद् व्याप्तिभङ्ग इति । यदि च चार्वाकादि व्यवहारोऽपि पक्षेऽन्तर्गतस्तदांशतो बाध इति भावः । तन्निराकरणानुपपत्तिरेव तद्व्यवहारं पूर्वपक्षाख्यं व्यनक्तीत्याशयः ।

परिहसति सोऽयमपूर्व इति । अन्यस्मिन् वाक्स्तम्भनमन्त्रे प्रयुज्यमाने वाङ् न निस्सरति त्वन्मन्त्रे तु प्रयुज्यमाने पुनः स्थित एव निस्सरतीति विलक्षणोऽयं मन्त्र इत्यर्थः । **प्रभावात्**–सामर्थ्यात् प्रमाणादिसत्तायाः सर्वस्याः ।

वा अभ्युपगमो व्यापकः यस्याः कस्याश्चिद् वा । आद्ये सुरगुरुणेति । द्वितीये तथागतेनेति । मध्यमागमाः=सर्वशून्यताबोधका आगमाः यदध्येतृषु माध्यमिकत्व-प्रसिद्धिः[2] नोपदिष्टा इत्यपि न वाग्व्यवहारः स्पष्टितः । **भगवत्पादेन** वेति—श्रीशङ्कराचार्येणेत्यर्थः । तस्य प्रमेयमध्यपतितस्यापवर्गस्य प्रयोजनत्वानभ्युपगमेन पुनरुपन्यासः । तस्य हि नापवर्गेऽपि प्रयोजनं कूटस्थानन्दरूपस्य पुरुषप्रवृत्तयेऽप्रयोजकत्वात् । येन हि प्रयुक्तः पुरुषः प्रवर्तते तत्प्रयोजनमिति हि न्यायविदः । भेदाभेद-वादिभाष्यव्यावृत्तये भगवत्पादेनेत्युक्तम् । भाष्ये तमेतमात्मानात्मनोरितरेतराध्या-समविद्याख्यं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहाराः प्रवृत्ता इत्यादि ।

( प्रथमविकल्पखण्डनाक्षेपः )

---

१. यद्यपि चार्वाकेण प्रत्यक्षप्रमाणस्य सत्वमभ्युपगम्यते इति तस्य प्रमाणसत्त्वानभ्युपगम-कथनमयुक्तं तथापि तद्गतप्रमाणस्य अनुमानगम्यतया अनुमानानभ्युपगमे तदनभ्युपगम इत्याशयात् । २. माध्यमकर्तृत्व इति पाठः ।

**मित्यवश्यमभ्युपेयं भवता, येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्तिता मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरव्यवहारिभिरपरैरतथाभूता इति कथ्यन्ते। यदि त्वस्मद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे,**

---

वाचोभङ्गी—साधनदूषणप्रकारात् कथा इति यावत्। तास्तु वाचोभङ्ग्यः इत्यर्थः। तथा च ताः कथाभासा इति। साधनं—स्वपक्षस्य स्थापनं बाधनं-परपक्षस्य दुष्टत्वज्ञापनं तत् क्षमाः—स्वपक्षप्रमितिपरपक्षस्याभावप्रमितिजनका इत्यर्थः[१]।

तदीयेति—वाग्व्यवहारीयेत्यर्थः। तथा च वाग्व्यवहारत्वावच्छिन्न—साध्यव्यापकसद्वचनाभासलक्षणयोगित्वमुपाधिः अन्यथा घटादौ साध्याव्यापकतापत्तेः तथा च कथाविशेषव्यापकतायां न व्यभिचार इति भावः। तावतेति–[२]तथानभ्युपगम्य प्रवर्ततेऽपीत्यर्थः।

( प्रथमविकल्पखण्डनाक्षेपपरिहारः )

सद्वचनं—सद्वाक्यं-साधनबाधनक्षमं वाक्यमित्यर्थः। तथा भासते न तु तत् यद् वचनं तद् सद्वचनाभासं तस्य यल्लक्षणं हेत्वाभासादि आभासीभूतार्थबोधकत्वेनैव वाक्यमाभासीभवति। तथा चायं हेतुर्व्यभिचारादिदोषान्यतरवान् इत्येवं व्यभिचारादिर्दर्शनीयः। सति च तस्मिन् साधको बाधको वार्थाभासो भवतीत्यर्थः।

अन्ये तु सद्वचनाभासा निग्रहस्थानं तल्लक्षणं कथाङ्गं तत्त्वज्ञानाभावलिङ्गं तद्वत्त्वमित्यर्थ इति व्याचक्षते। प्रयोजको हि धर्म उपाधिर्भवति न च तस्मिन् सत्यपि क्व भवतस्तत्प्रयोज्यत्वमित्याशयेनाह—येन[३] कथ्यन्त इत्यर्थः, सद्वचनाभासलक्षणयोगित्वमेवान्वयव्यतिरेकाभ्यां कथायां कार्यक्षमत्वाभावप्रयोजकं न तु भवदुक्तं प्रमाणाभावादित्याशयः। एवं व्याख्यायमाने व्यापकव्यभिचारादर्शनमतन्त्रं स्यात्।

यद्वा व्याप्यवृत्तिव्यतिरेकिणोर्व्यतिरेकव्याप्तावि[४]वान्वयव्याप्तिरित्यभिप्रायेणानभ्युपगतव्यतिरेकेऽपि न कथाभासत्वव्यतिरेक इत्याह—

**तथाभूता**[५] इति साधनाक्षमा इत्यर्थः। शक्यत एवेति। एतेन भवदीयो

---

१. तावतेति—तयानभ्युपगम्यात् प्रवर्ततेऽपीत्यर्थः इति मुद्रितपुस्तकेऽधिकः पाठः।

२. "तथानभ्युपगमा प्रवर्ततेपीति" पाठः। ३. "यों न सप्तते" इति पाठः।

४. "व्यतिरेकव्याप्तावेवेति" काश्मीरपुस्तके पाठः।

५. मूले "अतथाभूता" इति पाठः तस्यापि अयमेवार्थः।

**तदाऽनभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इति शतकृत्वस्त्वया उच्यमानेऽपि नास्माकमादरः। अन्यथा अभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यत एव।**

---

व्यवहारः आभासः प्रमाणाद्यभ्युपगमपूर्वकत्वात् अभ्युपगतप्रमाणादिसत्त्वसम्मतकथाभासवादीति प्रयोगः सूचितः।

( आक्षेपान्तरम् )

अत्रैव भ्रान्त आश्रयासिद्धिं शङ्कते **नन्विति**। तथा च धर्मिग्राहकतया प्रमाणसत्त्वसिद्धौ तदनभ्युपगमो व्याहतः। यच्च कथाभासलक्षणयोगित्वं कथाया आभासत्वप्रयोजकमित्युक्तं तदपि प्रमाणादिसत्ताभ्युपगमं विना नोपपन्नमित्याह--दूषणादीनि आभासताप्रयोजकं दूषणमभिप्रेत्योक्तम्।

ननु न मया तथोच्यते किन्तु भवता तथा वाच्यमित्येव। अतएवावश्यमभ्युपेयं भवतेत्येवोक्तमित्यनुक्तोपालम्भोऽयमिति चेत् सत्यमुक्तं किन्तु प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं न नियामकमित्यपि चोक्तम्। किञ्चान्यथेत्यादिना साधनप्रयोगोऽपि कृतः सोऽनुपपन्न एव स्यादित्याशयेनाह--सर्वविधि**निषेधाना**मिति। विधिर्भावः, निषेधः अभावः, दूषणादीत्यादिपद[१]परिगृहीतो दूषणभूषणविभागोऽपि सर्वपदेन परिगृहीतः[२]।

( आक्षेपपरिहारः )

**मैवमिति**—प्रमाणादिसत्त्वाभ्युपगमे। न कथाङ्गमिति वदतामस्माकं प्रमाणादिसत्त्वाभावः स्वीकृत इति लोकोत्तरप्रज्ञेन कथं ज्ञातं येनैवं वदता त्वया निरनुयोज्यानुयोगादपि न भीतं भ्रान्तेन। तथा च धर्मी दूषणादिश्चास्माकं प्रतीतमेवेति तावतैव व्यवहारनिर्वाहः। सा च प्रतीतिः प्रमाणजन्या न वेति विचारस्य नायमवसरोऽर्थान्तरापत्तेरिति भावः। यद्यपि प्रमाणादिसत्ता स्वीकृतेत्येव परस्याशङ्केत्यनुक्तोपालम्भोऽयं तथापि तव हृदयस्थमीदृशमन्यथा तदङ्गत्ववादिनो मम निग्रहायेदमुच्यमानं संगच्छेत। त्वया प्रमाणाद्यभावे व्यवहारः कथं पक्षीक्रियत इति यतो मया निरनुयोज्यानियोगेनैव त्वं पराजेयो भावः केनोच्यते प्रमाणादीनि न सन्ति इति। तस्मादयं तव भ्रमः यतः कथारम्भे प्रमाणादिसत्त्वाभ्युपगमं न कुरुते, अतोऽस्य न सन्ति प्रमाणादीनीत्यभ्युपगम इति कथाकालेऽपि तत्स्वीकारोऽस्त्येवेति तत्पूर्वक एवारम्भः कथायाः। इदमेव व्यक्तीकरिष्यति न सन्ति प्रमाणा**दीनीति**मत( अस्माकम् )मारोप्येति।

---

१. "अदूषणादित्यादि परिगृहीत इति" तृतीयपुस्तके पाठः।

२. "परिहरति" इति तृतीयपुस्तके अधिकः पाठः।

**ननु यदि प्रमाणादीनि न सन्ति, तदा व्यवहार एव धर्मी कथं सिध्येत् ? दूषणादिव्यवस्था वा कथं स्यात् ? सर्वविधिनिषेधानां प्रमाणाधीनत्वात् । मैवम्; न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथाऽऽरभ्येति । किन्नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैः, यथा स्वीकृत्य तानि भवता व्यवह्रियते, तथा व्यवहारिभिरेव कथा प्रवर्त्यतामिति । अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदं भवता दूषणमुक्तम्, तदपि वक्तुं न शक्यम् । कीदृशीं मर्यादामालम्ब्य प्रवृत्तायां कथायामिदं दूषणमुक्तम् ? किं प्रमाणादीनां**

---

किन्नामेत्याद्युदासीनैरित्यस्य कथा प्रवर्त्यतामित्यनेन सम्बन्धः । तानि प्रमाणादीनि स्वीकृत्य यथा भवता व्यवह्रियते भोजनादिव्यवहारः क्रियते तथा व्यवहारिभिर्भोजनादिकाले प्रमाणादिसत्त्वासत्त्वचिन्तोदासीनैः सहेति ।

अयं भावः, यथा भोजनादिव्यवहारप्राक्काले प्रमाणादिसत्त्वासत्त्वचिन्ता नोपयुज्यते, अन्यथा बालकादीनां व्यवहारलोपापत्तेस्तथा कथात्मकव्यवहारेऽपि समानसामग्रीकत्त्वात् सति कथाङ्गतत्त्वज्ञाने इष्टसाधनता ज्ञानादिभिरेवावश्याभ्युपेयैरुपपत्तेरिति भावः ।

यद् वोदासीनैरित्यस्य कथारभ्येत्यनेनैवान्वयः । लोकप्रसिद्धिसिद्धमेव प्रमाणादिकमाश्रित्य[१] व्यवह्रियताम् । यथा तानि प्रमाणादीनि सद्रूपाणि प्रमाणमेव वस्तुसाधकं न तदाभासमित्यादि त्वया व्यवह्रियते तथा व्यवहारिभिः सर्वैरेव सत्त्वासत्त्वचिन्तायामुदासीनैः कथा प्रवर्त्यतामिति त्वपव्याख्यानम् । सद्रूपाणीत्यभ्युपगमे तदसत्त्वसाधने व्याघातापत्तेः, किन्तु लोकप्रसिद्धैः प्रमाणादिभिरेव व्यवहरणशीलैः खाण्डनिकैरित्यर्थः । नहि ते लोकप्रसिद्धिमुल्लङ्घ्य व्यवहरन्ति किन्तु लोकप्रसिद्धिमेव प्रमाणमूलिकां न पश्यन्ति ।

यदाहुरिष्टसिद्धिकाराः—सत्यं प्रसिद्धिरस्ति अत एव व्यवहरामः, किन्तु नास्याः मूलं पश्यामः, इत्येव [२]यथेत्यादेरर्थान्तरम् । प्रमाणादिसत्तामनभ्युपगम्य कथाप्रवृत्तिस्तवाप्यस्त्येव परं तद् ब्रह्मवादिभिः सह विद्वेषवशान्न कथ्यते वृद्धैरिव पूर्वापरामर्शशून्यतया वेत्याह–अन्यथेति । प्रमाणादिसत्त्वाभ्युपगमो न कथाङ्गमित्यस्माकं मतं प्रमाणाद्यसत्त्वावगमविषयत्वेनारोपितमित्येको दोषः ।

दूषणमिति—कथायां हि दूषणमिदमाश्रयासिध्यादिकमुद्भाव्यम् । न हि भुञ्जानस्य गच्छतो वा तदुद्भाव्यत इत्यर्थः, तथा च निग्रहस्थानोद्भावनावसरसमयाभावात् दूषणाभिधानस्य शक्यत्वाज्ञानमप्यपरमिति[३] भावः ।

---

१. "प्रमाणादि कथामाश्रित्येति" तृतीय पुस्तके पाठः ।

२. 'यथात्यादेः' इति तृतीयपुस्तके आदर्शपुस्तके च पाठः । ३. 'पर' इति प्रथमपुस्तके पाठः ।

२

**सत्त्वमभ्युपगम्य उभाभ्यां वादिभ्यां प्रवर्तितायां कथायाम् ? उतासत्त्वमभ्युपेत्य ? अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य ? नाद्यः, अभ्युपगतप्रमाणादिसत्त्वं प्रति एतादृशपर्यनुयोगानवकाशात्। द्वितीये स्वतोऽव्यापत्तेः। न तृतीयः, तथैव कथान्तरस्यापि प्रसक्तेः।**

**उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य, अन्यथा स्वाभिप्रायमालम्ब्य तेनापि त्वद्वचसि यत्किंचिद्वागात्मनि दूषणेऽभिहिते कस्य जयो व्यवतिष्ठताम् ? प्रमाणाभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात्। तस्मात् प्रमाणादिसत्त्वा-**

आक्षेपोक्तदूषणस्य विकल्पासहत्वम् [१]**ईदृक्पर्यनुयोगानवकाशादिति**। तवाश्रयासिद्धिदूषणादिभिर्भागासिद्धिरिति पर्यनुयोगस्यावसरो नास्ति। तथा च तदुद्भावने तवैव निरनुयोज्यानुयोगो निग्रहः स्यादिति भावः। आपत्तेरित्यस्य पर्यनुयोगस्येत्यनुषङ्गः। तया च जात्युत्तरत्वम्। कश्चित्तु चकारं पठित्वा पर्यनुयोग-निरवकाशश्चेति व्याचष्टे। ननु तथापि मदीयप्रमाणादिसत्ताभ्युपगमसत्त्वात् कथायाः प्रमाणादिसत्त्वाभ्युपगमाव्यभिचारः स्थित एवेत्याह—**उभयाभ्युपगमेति**। तथा च सन्नपि अन्यतराभ्युपगमो न तन्त्रं किन्तु वक्ष्यमाण उभयवाद्यनुमतः समय-बन्ध एव तथा अन्यथा [२]अन्यतराभ्युपगममात्रेण चेदिष्टसिद्धिस्तदा नैयायिकेन पञ्चावयवन्याये प्रयुक्ते सौगतेन त्र्यवयववादिना तत्राधिक्ये दूषण उक्तेऽपि निग्रहः स्यान्नैयायिकस्येति। यत् किञ्चिद् वागात्मनीति—वाङ्मात्ररूपे न तु वास्तव दोष प्रतिपादके। नहि अत्राधिकनिग्रहस्थानं सम्भवति नैयायिकैर्न्यायः पञ्चावयवः सौगतेन तु द्व्यवयवः प्रयोज्यः, इति समयबन्धे उभाभ्यां नियमस्य कृतत्वादिति। तत्किं नैयायिकेन प्रमाणादिसत्त्वं सौगतेन प्रमाणाद्यसत्वमभ्युपेत्य कथा कार्येत्यु-भयाभ्युपगमानुरोधिनी कथा भविष्यति। नेत्याह—**प्रमाणादीति**। सत्त्वेनेति शेषः। यावन्नियमेति। यावांश्चासौ नियमश्चेति यावान् प्रमाणादिसत्त्वाभ्युपगमस्तावानेव स भरस्तेन गौरवं लक्ष्यते तेन महती यन्त्रणा पीडा स्यादित्यर्थः। प्रमाणादि सत्ताभ्युपगन्त्रा हि प्रमाणेन तेन च निश्चितसत्त्वेनैव वक्तव्यमन्येन तु प्रमाणाभासे-नापि निश्चितासत्त्वेनापीति। तथा च तस्यावसादो न स्यात् स्याच्च पूर्वस्येति। एवंभूतायाः कथायाः विरामो न सम्भवति बलवद् निष्ठानुबन्धितया ज्ञाते प्रवृत्त्य-सम्भवात्। तत्किं त्वया सह मम कथा न जातैव यदि चैवं तथा सति मया कथं दूषणमभिहितं त्वया च कथं लोकसिद्धेन व्यवह्रियतेऽस्माभिरित्युक्तं, निरनुयोज्यानु-योगो वा मां प्रति कथं नोच्यत इत्याह—**तस्मादिति**। वक्ष्यमाणसमयबन्धनियम एव कथाङ्गं न तु सत्त्वासत्त्वाभ्युपगमौ ताभ्यां विनापि कथासम्भवात्। ततश्च

१. "एतादृशेति" मूलपाठो बहुत्र।

२. "अन्यतरा" इति युक्तः पाठः, प्रथमपुस्तके "नतरा" इति पाठः। तृतीयपुस्तके "न तवाभ्युपगम" इति पाठः।

**सत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमेन समयं बद्ध्वा प्रवर्तितायां कथायां भवतेदं दूषणमुक्तमित्युचितमेव तथासति स्यात्। योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्नोति, दूरतस्तस्मिन् पराभिसन्धानावधारणप्रत्याशा।**

**अथ वादीकृत्य दुर्वैतण्डिकं तस्मिन्नुपाधौ बाधोऽभिधीयते इत्येव नेष्यते, शिष्यादयस्तु तस्य कथानधिकारं ज्ञाप्यन्ते। अत एव भगवान् भाष्यकारः—'स**

---

तादृश्यां कथायामिदं दूषणं भवता वक्तुमुचितमेवेति मयापि तत्परिहार एव कृतो[१], नतु निरनुयोज्यानुयोग उद्भावितः, एवं बोधयित्वा परिहसति—**योऽयमिति**। प्रमाणादिसत्तामनभ्युपगम्य प्रवर्तितायां कथायां दोषो दीयते प्रमाणादिसत्ता-मनभ्युपगम्य कथं प्रवृत्तिरिति स्वाभिप्रायानवधारणम्। यद् वा ईदृश्यां कथायामहं दोषमवादिषमिति स्वाभिप्रायानवधारणं पराभिसन्धानं—परस्य मम अभिप्राय-स्तदवधारणं कथाङ्गं न प्रमाणादिसत्त्वावधारणमिति। मदिच्छा तवाप्रत्यक्षाऽनु-मानेन कथं ज्ञातुं शक्या स्वस्य प्रत्यक्षयोग्याऽपि स्वेच्छा दुर्वैतण्डिकेन सहास्माकं कथा प्रवृत्ता स्यात् न चैवमित्याशयेनाशङ्कते—**अथेति** दुर्वैतण्डिकः सर्वशून्यवादी माध्यमिकः। तदाहुर्भट्टचरणाः—

> अर्थशून्यमिदं ज्ञानं योगाचाराः[२] प्रपेदिरे।
> तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः॥ इति।

तस्मिन् बाधोऽभावः अधिकारस्य प्रमाप्यते इत्यर्थः। यदि च बाधः आश्रय-सिद्ध्यादिरित्युच्यते तदा तस्मिन्निति निमित्तसप्तमी। भाष्यकारः—न्यायसूत्राणां वात्स्यायनः। प्रतिपद्यते इत्यनन्तरं स एवास्य स्थाप्यः पक्ष इति वैतण्डिकत्वं विजहाति। नोचेन्नासौ लौकिको न वा परीक्षक इत्युन्मत्तवदुपेक्षणीय इति शेषः। स वैतण्डिकः कथाप्रयोजनं तत्त्वनिर्णयविजयाख्यं प्रतिपद्यते इति प्रथमपुरुषो न तु प्रतिपद्यसे इति मध्यमपुरुषः कथाधिकाराभावेन पुरोऽनवस्थानादित्याशयः। इदमुप-लक्षणं त्वं प्रयोजनमनुयुक्त इत्यपि द्रष्टव्यम्। वादिनि संबोध्ये[३] मध्यमपुरुषस्यै-वोचितत्वादिति मिश्राः। यद्यपि भवान् प्रतिपद्यते, इत्यप्रयोगोऽपि युष्मदो युक्त एव तथापि स इति परोक्षनिर्देशोपष्टम्भेन इदमुक्तम्। **कथं च तथा स्यादिति**। दोषाभिधानं स्यादित्यर्थः। **कथाप्रवेशनाप्रवेशनयोरिति**।

ननु तस्य कथाधिकारो नास्त्युन्मत्ततुल्यो हि स इति कथायामप्रवेशोऽपि वक्तुं शक्यः (म्), अतएव कथायामेव हि निग्रह इत्यपि न युक्तम्, नहि निग्रहस्थानत्वेनो-

---

१. "कृते" इति प्रथमपुस्तके पाठः।

२. "योग्याचाराः" इति तृतीयपुस्तके पाठः। ३. "संवाध्ये" इनि प्रथमपुस्तके पाठः।

प्रयोजनमनुयुक्तो यदि प्रतिपद्यते' इत्याह स्म, न तु प्रतिपद्यसे इति। मैवम्, शिष्यादीन् प्रत्यपि चार्वाकादेर्दोषोऽयमित्येवाभिधातव्यम्। कथं च तथा स्यात्? तस्य कथाप्रवेशनाप्रवेशनयोः तद्बाधाक्षमत्वात्। कथायामेव हि निग्रहः।

(२) नापि द्वितीयः, तथाहि—स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्तेत। न त्वेवं सम्भवति, तथा

---

द्भावनमिहाभिमतं तथा सति अखण्डिताहङ्कारेण पराहङ्कारखण्डनस्य कथाङ्गत्वज्ञानाभावात्मनो वा निग्रहस्य कथाप्रवेशनियतत्वात्। स्यादप्येवं नत्वेवं किन्तु कथाङ्गप्रयोजनशून्यस्य नास्ति कथाधिकार इति शिष्यान् प्रत्युपदेशः। स च प्रवेशाभावबोधनोपयोगी कथातः प्रागपि वर्तमानस्य चार्वाकादेर्न बाधः। सत्यमेवं परन्त्वेवमुपदेशः शिष्यान् प्रति किं कथायां प्रविष्टस्य चार्वाकादेरधिकाराभावबोधनाय अप्रविष्टस्य वा। नाद्यः प्रविष्टस्य प्रवृत्तिमतोऽधिकाराभावबोधनस्याशक्यत्वात्। नहि प्रयोजनं विना कश्चित् प्रवर्तते। न च प्रयोजनसत्ताधिकारे उपयुज्यते अग्निहोत्रादावप्रवृत्यापत्तेः। दुष्कर्मणामायुर्नाशे फलानुत्पत्तेः। किञ्च तदधिकाराभावबोधनस्य प्रयोजनम् कथाप्रवेशस्य जातत्वात्।

नापि द्वितीयः। शिष्यान् प्रति तदुपदेशो न चार्वाकादेः कथाविरोधी व्यधिकरणत्वात्। यदि तु शिष्याणां कथानधिकारं तस्य जानतां तेन सह कथा नास्ति ततश्च तस्य कथायां प्रवेश एवानया प्रणाल्या निरस्यते एकाकिनः कथकत्वाभावादिति दुष्प्रत्याशाऽपि न युक्ता। कथां प्रत्युत्सुकं तमवलोक्य त्वच्छिष्याणामपि तदधिकाराभावनिर्णयाशक्तेः। न चातएव प्रयोजनं बुद्ध्वा तदभावो निर्णेय इति वाच्यम्। तथा सति स चेत् ब्रूयात् किमेतेनाप्रस्तुतप्रश्नेन। तव यद्यस्ति कथासामर्थ्यं तथा कथयेति तदा त्वच्छिष्याः किं कुर्युः, तर्हि न कथयेयुरिति सिद्धं नः समीहितमिति चेन्न। शिष्या अपि सभायां गताः समर्थाश्च कथं भवच्छिक्षामात्रान्निवर्तेरन्[2]। तथा सति तेषां कथासामर्थ्याभावमेव परिषदोऽपि निश्चिनुयुरिति विनैव कथां[3] स्वापकर्षं प्रकाशयन्तः कथं स्वगृहेऽप्यागच्छेयुः। परं तु परिषत्स्वकथाधिकाराभावं प्रकाशयेयुः न चैतावतापि निस्तारः। सभासदामपि कथनमनधिकार इति जिज्ञासासम्भवात्। न च तेऽपि त्वदुपदेशमात्रश्रवणादेव निराकाङ्क्षा इति कथानधिकारव्यवस्थार्थं कथाप्रवेश आवश्यक इति साधूक्तं कथायामेव हि निग्रह इति।

---

१. "दुष्कर्मणेति" युक्तः, अथवा बहुव्रीहिरत्र बोध्यः।

२. शिक्षाभावात् इति कश्मीरपुस्तके पाठः। ३. कथम् इति तृतीयपुस्तके पाठः। कथा इति आदर्शपुस्तके पाठः।

**सति तत्सत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत, हेत्वनुपपत्तेः। उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यत इति।**

**अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वम्, सत्त्वाच्चाभ्युपगमः, यत्सत् तदभ्युपगम्यते इति स्थितेरिति। मैवम्, कयापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः। कथातः पूर्वं तत्त्वावधारणं वा परपरा-**

सत्यां हि कथायां प्रयोजनानङ्गीकर्तुरनधिकाराख्यो दोषो भवदभिमतः शक्यनिर्णयः इति। किञ्च यदि शिष्या अपि गुरुं प्रति वैतण्डिकोक्तयुक्त्या प्रत्यवतिष्ठेरन् तदा गुरोः किमुत्तरं स्यादित्यसङ्गतमेवैतदथेत्यादि। प्रसिद्धा च भट्टाचार्यप्रभृतीनां तैः सह कथा कथमपलप्या। किञ्च प्रवृत्युत्सुकं प्रति प्रयोजनप्रश्नोऽयं त्वयाऽपि कथं कार्यः प्रवृत्त्यैव स्वयमुन्नीयतामिति तस्मात्तैरप्येवं शक्यं वक्तुं कथारम्भेऽमुं प्रति प्रयोजनप्रष्टा चोन्मत्तवदुपेक्षणीय इति। यत्सत्तदभ्युपगम्यत इति यद्यप्येतावताप्यभ्युपगममात्रमेव सिध्यति न तु कथारम्भकाले तथापि यद् यदा सत्तया ज्ञायते तत्तदाभ्युपगम्यत इति व्याप्तेरुभयसिद्धत्वात्तत्कालेऽभ्युपगमोऽपि सिध्यति। यद्यपि प्रमाणादीनामेव हेतुत्वात् सत्तया ज्ञाततत्वं हेतुरेव नास्ति तथापि प्रमाणादिपदस्य कश्चित्परतया तस्याः अप्रकाशत्वादिदमुक्तम्।

वस्तुतस्तु अयमपि दोषोऽस्त्येव तथापि दोषान्तरमाह—मैवमित्यादिना। **भवता प्रसाध्य** इति। भवतेत्युक्त्यास्माकं न साध्यो बाधादेव प्रसाध्यो न तु सिद्धः इत्यत्रापि कथारम्भकाले इति शेषः। तथा च कथाहेतुत्वं व्यभिचारीति दोष उक्तः अन्यथा [१]उत्तरकालप्रमितमपि प्रमाणसिद्धमेवेत्यदोषापत्तेः। वस्तुतोऽप्रयोजक एवायं हेतुरित्यत्राऽपि तात्पर्यम्। अन्ये तु कथायामारब्धायां सत्त्वसाधनं, सिद्धे च सत्त्वे कथारम्भ इत्यन्योन्याश्रयः। यदि चान्या कथाऽरभ्या तदा चक्रकम्, अन्यान्या चेदनवस्था पूर्वकथारम्भस्यापि सत्त्वसाधनपूर्वकत्वादित्यर्थः इति व्याचक्षते। तन्न कथायामपि समयस्थित्यारब्धायामिति मूलविरोधात्।

विद्यासागरस्तु सत्ताभ्युपगमे मानमिदं कथायामेव। सा च कथा प्रमाणसत्त्वाभ्युपगमपूर्विका समयबन्धमात्रपूर्विका वा। आद्ये असिद्धिः। अन्ते अस्मत्समीहितसिद्धिरिति व्याचष्टे।

एतेन[२] पराभिमतं कथाङ्गं दूषयित्वा समयबन्धस्य तथात्वं व्यवस्थापयितुं भूमिमारचयति **कथातः पूर्वमिति**।

१. "उक्तकाल" इति प्रथमपुस्तके पाठः।
२. "न परेति" आदर्शपुस्तके पाठः।

**जयं वाऽभिलषद्भ्यां कथकाभ्यां यावता विनाऽभिलषितं न पर्यवस्यति, तावदनुरोद्धव्यम्। तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यते इति व्यवहारनियमसमयमेव बध्नीतः।**

**स च 'प्रमाणेन तर्केण च व्यवहर्तव्यं वादिना। प्रतिवादिनाऽपि कथाङ्गतत्त्वज्ञानविपर्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं तस्य दर्शनीयम्। तद्व्युत्पादने प्रथमस्य भङ्गो व्यवहर्त्तव्यः, अन्यथा तु द्वितीयस्यैव। तादृशेतरौ जेतृतया व्यवहर्तव्यौ, प्रामाणिकः पक्षस्तात्त्विकतया व्यवहर्त्तव्यः' इत्यादिरूपः।**

---

( कथायां समयबन्धस्यावश्यकत्वनिरूपणम् )

**तच्चेति** फलं चेत्यर्थः। स चेति इत्यादिरूपः इत्यनेन सम्बध्यते कथाङ्गानि प्रमाणादीनि तस्य तत्त्वं स्वरूपं तस्य ज्ञानं तन्निश्चयः तद्विपर्ययोऽज्ञानं भ्रमो वा तत् ख्यापकं प्रतिज्ञाहान्यादिभङ्गो निग्रहः तादृशेतरौ निगृहीतेतरौ। द्विवचनमविवक्षितम् एकस्यैव जेतृत्वात्।

यद् वा तादृशो निगृहीतः इतरश्च जेतृतया च, चकारात् पराजेतृतया च व्यवहर्तव्याविति च शब्दयोगेनान्वयाद् विवक्षितमेव द्विवचनम्। युज्यते च निगृहीते व्यवहारस्यापि प्रदर्शनम्। कथायां (नियमस्य) अपरमप्यंशमाह—**प्रामाणिक इति**। तत्त्वतः फलनिश्चयविषयत्वेनेत्यर्थः। आदिपदेन वादिनि साधनमात्रं प्रयुज्य संक्षेपतो विस्तरतो वा हेत्वाभासान् उद्धृत्य विरते सति अनुक्तग्राह्योच्यमानग्राह्यहेत्वाभासबहिरुक्त[१]ग्राह्यरूपनिग्रहस्थानालाभे तद्वाक्यार्थमनूद्य हेत्वाभासेन दूषयित्वा प्रतिवादी स्वपक्षस्थापनां प्रयुञ्जीत। अप्रयुञ्जानो हि दूषितपरपक्षोऽपि न विजयेत आत्मानमरक्षन् परघाती वीर इवेति। तस्मिन्नपि च विरते तद्वाक्यगतोक्तनिग्रहस्थानमलभमानो वादी तद्वाक्यार्थमनूद्य तदुक्तदूषणमुद्धृत्य उक्तदूषणत्रयहीनामपि तदीयां स्थापनां दूषयेत् अन्यथा सुरक्षितस्वपक्षोऽपि न जयी स्यात्। श्लाघ्यस्तु भवेदेव वञ्चितपरप्रहारो वीर इव तमप्रहरमाणो दूषणत्रयलाभे तावतैव कथाविरतिर्न तु साधनविचारावकाशः शरसन्धानसमय एव यो मूर्च्छितस्तस्य तद्वाणावरणतत्प्रहरणानुष्ठानवद् विफलत्वात्। तत्रानुक्तग्राह्यमप्रतिभादि उच्यमानग्राह्यमपभ्रंशाप्राप्तकालादि[२]हेत्वाभासातिरिक्तोक्तग्राह्यं प्रतिज्ञाविरोधादि एवंविधो जल्पः, स एव प्रतिपक्षस्थापनहीनो[३] वितण्डा इत्यादेः परिग्रहः। अतएव=वक्ष्यमाणहेतोरेव। विनोदे[४] हि हेतुप्रयोगोऽपेक्षित इति भावः। अत्रापि

---

१. "तिरिक्त" इति तृतीयपुस्तके पाठः। २. "आभासबहिरुक्त" इति आदर्शपुस्तके पाठः। ३. "प्रतिपक्षस्थापनो वितण्डा" इति आदर्शपुस्तके पाठः।

४. "प्रमाणाद्यगोचराद्यज्ञानशून्ययोर्या" इति आदर्शपुस्तके कश्मीरपुस्तके च पाठः।

**अत एव व्यवहारनियमसमयबन्धोऽपि हेतुर्वक्तव्यः। तथा च सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्त इति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थानमनवकाशम्, द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्या अभिलष्यमाणतत्त्वव्यवस्थाजयमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात्।**

**न चैवं प्रमाणानुपज्ञस्वेच्छामात्रपरिगृहीतमूलत्वात् मूलापरिशुद्धिसम्भवेन**

---

समयबन्धस्य स्वेच्छापरिगृहीतत्वे विप्रतिपन्नः कक्षायामेव बोध्य इति स दोषस्तदवस्थ इति शङ्करमिश्राणां या आशङ्का सा कथाया न विरोधिनी अन्यथानुपपद्यमानया कथया समयबन्धस्य कारणत्वप्रमितेः समयबन्धोऽपि च स्वेच्छामात्रमेव हेतुमाक्षिपति न तु विचारसाध्यं स्वस्यानिष्पत्त्यापत्तेः। न च स्वेच्छामात्रपरिगृहीतत्वज्ञानं समयबन्धोपयोगि किन्तु स्वरूपसतीच्छैवेति।

( समयबन्धस्य स्वेच्छामूलत्वेऽपि विचारविप्लवासम्भवनिरूपणम् )

**प्रमाणानुपज्ञेति**—प्रमाणानुपज्ञा प्रमाणादिगोचराद्यज्ञानशून्या या स्वेच्छा तन्मात्रेण गृहीतो नियमबन्धो मूलं यस्य विचारस्येत्यर्थः। ज्ञानमात्रं तु पूर्वापरकोटिरेवेह शून्यं वर्तमानमपि पूर्वज्ञानमूलमेव न तु प्रमाणमूलकं पूर्वपूर्वज्ञानसापेक्षमूलत्वात्। यद्धि आद्यं ज्ञानं तच्च प्रमाणमूलकं तच्चेह नास्तीत्याशयः। यदि हि प्रमाणमूलकज्ञानवदिच्छया परिगृहीतोऽयं समयनियमः स्यात्तदा स्यादपि विचारः सन्मूलः। इह तु तन्नास्तीति बोधयेच्छाविशेषणं मात्रपदं विचारपूर्वकत्वाभावप्रदर्शनार्थम्। यदि विचारपूर्विका[२] कथा इच्छया परिगृहीता स्यात् तदा स्यादपि समूलः। स च न सम्भवति उक्त दोषादेवेति भावः। विचारविप्लवः प्रमानुत्पादकत्वं विचार्यस्य विप्लवो भ्रान्तिविषयत्वं फलस्य विप्लवो वादितत्त्वावधारणास्या-[१]सिद्धिरितरयोस्तु जयस्येति। प्रमाणेन नास्त्युपज्ञा आद्यज्ञानं यस्य तत् प्रमाणानुपज्ञं प्रमाणमूलं यत् स्वेच्छामात्रं तस्य समयबन्धमूलत्वेन गृहीतत्वात् सर्वस्य विचारस्य

---

१. "इच्छावतोर्विशेषणमिति" आदर्शपुस्तके कश्मीरपुस्तके च पाठः।

२. "विचारपूर्विकया इच्छया" इति पाठः कश्मीरपुस्तके। ३. "वादे" इत्यधिको तृतीयपुस्तके पाठः। अविद्यमान आदिर्यस्य एवंभूतस्य परम्परायातस्येत्यर्थः। अनादीति प्रयोक्तव्ये तादृशाभिधानं वक्रोक्तिप्रियत्वात् खण्डनकर्तुः। अविद्याविद्यमानानादिपारम्पर्यापातस्येति पाठमभिप्रेत्य ग्रन्थो व्याख्यातः शङ्करमिश्रैः। अविद्यया विद्यमानश्चासौ अनादिपारम्पर्यायातश्चेति विग्रहः।

**सर्वविचारविचार्यफलविप्लवापत्तिः स्यात्, अविद्यमानादिपारम्पर्यायातस्य लोकव्युत्पत्तिगृहीतसंवादस्य च तस्य अन्यथाभावासम्भाव्यतालक्षणस्वतःसिद्धिपरिशुद्धत्वात् ।**

**न च प्रमाणादीनां सत्तापीत्थमेवोभाभ्यामङ्गीकर्तुमुचिता, तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः । प्रमाणादिसत्त्वाभ्युपगमेऽपि तथाविधव्यवहारनियमव्यतिरेके तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्यवसानात् ।**

---

विचार्यस्य तत्फलस्य च जयादेरनिश्चयापत्तिरित्यर्थः इति शिष्यहितैषिण्याम् अनुभूतिस्वरूपश्रीपादाः ।

**अविद्यमानेति** । अविद्येति समयबन्धस्य पारमार्थिकत्वनिरासाय । अनादिपारम्पर्यायातस्येत्यवश्याभ्युपगन्तव्यत्वार्थमिति मिश्रव्याख्यातो ग्रन्थः प्राचीनैर्न धृतः, किन्त्वविद्यमानादिपारम्पर्यायातस्येत्येव । अत एव विद्यासागरेणोक्तमनादीति वक्तव्ये अविद्यमानादित्वाभिधानं वक्रकारित्वस्वभावादिति । न वा समयबन्धस्यापारमार्थिकत्वाभिधानं प्रकृतोपयोगि । यच्चावश्याभ्युपगन्तव्यार्थमिति तदपि न अन्वयव्यतिरेकाभ्यामेव तस्यावश्यकतेत्युक्तेः, अनन्तरं वक्ष्यमाणत्वाच्चेति । तस्येत्यनेनापि न समयबन्धस्य परामर्शः किन्तु विचारस्यैव तस्यैव सम्भावित दोषसमयबन्धमूलकत्वेन दुष्टत्वस्योक्तत्वात् ।

न वा संवादः सम्बन्धे[1] सम्भवी किन्तु विचार एव तस्यैव प्रमित्युत्पादकत्वेन प्रवृत्तिसंवादित्वात् । पारम्पर्येणायातस्य=प्राप्तस्य । तथा च न तस्य न्धपरम्परातुल्यत्वं स्वयमपि दृष्टत्वेन पराधीनप्रमाणत्वाभावात् । अनादिपरम्परागत विचारस्य प्रामाण्यं लोकव्युत्पत्तौ शब्दस्य सङ्केतग्रहे गृहीतसंवादस्य, अन्यथा तन्मूलकशाब्दव्यवहारोच्छेदापत्तेः ।

यद् वा विप्रलम्भकव्यवहारे योऽन्यथाभावः सम्भवति तथाभूतस्य अन्यथाभावस्य या असम्भाव्यता तल्लक्षणा या स्वतः सिद्धिस्तया शुद्धत्वात् । असम्भाव्यतैव कुत इत्याशङ्क्योक्तं—**लोकेति** । लोकः कथकस्तद्व्युत्पत्त्या तद्व्यवहारेण गृहीतोऽन्यथा न भवतीति संवादो यस्येत्यर्थः । लोकस्य किं मूलमित्यकाङ्क्षायाम् अनादिपारम्पर्यं मूलमिति व्याख्येयम् । कथायास्तावद् विचार्यनिश्चयः सर्वपरिषदामनुभवसिद्धः । स च स्वतः सिद्धिरूपः तस्य चाशुद्धता अर्थस्यान्यथाभावनिश्चयेन बाधितविषयतया स्यात् । सा चेह प्रवृत्तिसंवादेन निरस्ता । अतएवान्यथाभावसम्भावना उत्कटकोटिकसंशयात्मिका साऽपि नेह सम्भावनार्हा । न च तथाप्यज्ञानात्मक-

---

१. "समयबन्धे" इति तृतीयपुस्तके पाठः ।

(३) नापि तृतीयः। लोकव्यवहारो हि प्रमाणलोकव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा ? नाद्यः, विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात्, तदर्थमेव च पूर्वं नियमस्य गवेषणात्। नापि द्वितीयः, शरीरात्मत्वादीनामपि तथा सति भवता स्वीकर्तव्यत्वापातात्। पश्चात् तद्विचारबाध्यतया नाभ्युपेयते इति चेत् तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव, अन्यथा तु उपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवति।

(४) नापि चतुर्थः। यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते, तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्। तस्य यदि मां प्रति फलातिप्रसञ्जकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः।

स्यादेतत्–नियतवाग्व्यवहारक्रियासमयबन्धेन कथां प्रवर्तयताऽपि व्यवहारसत्ता अभ्युपगन्तव्या। न हि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या। क्रिया हि निष्पादना, असतः सद्रूपताप्रापणमिति यावत्। प्रमाणैर्व्यवहर्तव्यमिति नियमबन्धनं प्रमाणकारणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वं कारणत्वं प्रमाणानामनादाय न पर्यवस्यति। दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने साधनाङ्गव्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भः शक्यत इति।

---

ज्ञानाजनकत्वलक्षणप्रामाण्यं विचारस्य वाच्यं तज्जन्यस्य स्वतःसिद्धिरूपत्वात्। तथा च अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैरिति भट्टोक्तमप्रामाण्यत्रयं निरस्तम्। हेतुदोषदुष्टत्वं तु अनादिपरम्परागतत्वेनैव निरस्तमिति। ततश्च स्वतोऽशुद्धिः शङ्क्यते कारणदोषतो वा। नाद्यः स्वतःसिद्धत्वेनैव शुद्धत्वात्, नहि ज्ञानं स्वरूपतो दुष्टं किन्तु कारणदोषेणैव। अन्त्यश्चेन्नास्ति तदासिद्धं तस्य शुद्धत्वमित्यपि शक्यं योजयितुमिति।

**रिक्तमिति**[1] परस्परपराहतत्वेन वाक्यमिदमर्थशून्यमित्यर्थः। ननु अर्थस्य मया[2] न सत्वं साध्यते किन्तु व्यवहारनियमस्यैव सत्ताङ्गीकारपर्यवसानमात्रमुच्यत इत्याशङ्क्यनिषेधति न चेत्यादिना।

(पूर्वोक्तबाधाया परिहाराशङ्कायाः निराकरणम्)

नन्वेवं सति प्रमाणादिसत्वावगमे उभयसिद्धे कथकाभ्यामभ्युपेयमिति।

---

१. "बीजमिति" पाठः। २. "मया सत्त्वं साध्यते" इति प्रथम पुस्तके पाठः।

मैवम्; एभिरपि बाधकैः कथायामारब्धायामेव अभिमतस्य प्रसाधनीयत्वे पूर्वोक्तबाधाया अनिस्तारात् । न च व्यवहारनियमस्य स्वेच्छास्वीकृतस्यैव प्रमाणादिसत्तास्वीकारपर्यवसायितया नायं दोषः स्यात् । यतः सत्ताज्ञानस्य तत्राङ्गत्वम् न तु सत्तायाः ।

तत्र किं सत्त्वावगममात्रात् सत्ताऽभ्युपगम्येति मन्यसे, अबाधितात् तदवगमाद्वा ? न तावदाद्यः, मरुमरीचिकादौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् । द्वितीयेऽपि किं वादिप्रतिवादिमध्यस्थमात्रस्य तस्यापि कथाकालमात्र एव बाधितावगमाभावाद् ? अथवा कस्यचिदपि कालान्तरेऽपि च बाधितबोधविरहात् ?

---

किमिदमभ्युपगमः साध्यते किं वेदमुच्यते स प्रयोजनमनुयुक्त इत्यादीनि पर्यनुयोगार्हो भेदवादीति चेत् सत्यम् । तथापि प्रौढवादितया तदुपेक्ष्य दूषणान्तरमुच्यते अन्यथा कश्चित् पार्श्वस्थ एवं वदेत्तस्य किमुत्तरमिति तन्निराकरणं कथं स्यात् । स ह्येवं वदेद् भेदवादी भवांश्च उन्मादादेव सर्वान् विस्मृत्य विवादं कुरुते इति । ननु सत्ताया इति । व्यवहारे व्यवहर्तव्यज्ञानमेव हेतुरसत्यपि व्यवहर्तव्ये तज्ज्ञानाद् व्यवहाराद्, सत्यपि तस्मिन्न ज्ञाने व्यवहाराभावादिति भावः[१] । ननु ज्ञानमात्रं[२] नाङ्गं किन्तु सत्तापीति सिद्धं तर्हि प्रमाणादिकमिति क्वाद्वैतबुद्धिप्रत्याशेत्याशङ्क्य विकल्प्य दूषयति-तत्रकिमिति । यद् यत्र प्रतीयते तत्तत्र सदित्यत्र व्यभिचारमाह–नाद्य इत्यादि । अभ्युपगमप्रसङ्गादिति । तत्र जलं सत् स्यादित्यर्थः । नच तत्राप्यनिर्वचनीयं जलमुत्पद्यत एव कस्यचिद् वेदान्तिनो मत इष्टापत्तिरिति वाच्यम् । तथा सति सत्वेनैव निर्वचनादनिर्वचनीयताक्षतिप्रसङ्गात्[३]। न चोत्पत्तावपि किञ्चित् प्रमाणमस्ति । न चापरोक्षतैव मानं शशविषाणादिवत् परोक्षत्वाभावादिति वाच्यम् । तावतापि तद्वैलक्षण्यमात्रं सिद्धचति नतूत्पत्तिरपि । अपरोक्षता तर्हि कुत इति चेत् अपरोक्षज्ञानविषयत्वादेव । नहि शशविषाणादौ परोक्षधी सामग्रीवदिह शब्दादिकमस्ति प्रत्युतान्धादीनां तदनुत्पत्तेः, इन्द्रियघटितैव संस्कारसध्रीचीना दोषसमवहितैव तत्सामग्री । नच तर्हि नदी जलमेव तत्र भासतामित्यन्यथाख्यातिप्रसङ्ग इति वाच्यम् । नदीजलप्रत्यक्षे तर्हीन्द्रियसन्निकर्षस्य कारणत्वेन क्लृप्तस्याभावेन तस्यानुत्पत्तेः । न च तोयप्रत्यक्षे तोयेन्द्रियसन्निकर्षो हेतुः क्लृप्त इति कथं तेन विनेदमपि प्रत्यक्षम्, तोयाभासमेवेदं नतु तोयमित्यङ्गीकारात् । प्रतीत्यविशेषात्तोयान्तरमेवेदमिति किन्न स्यादिति चेत् तथा सति सत्प्रत्यक्षापत्तेरेव । न च तोयप्रत्यक्षप्रमायामेव सन्निकर्षो हेतुः गौरवापत्तेः । स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासं लक्षयते । भाष्यकृतोऽप्येवमेव संमतमिति लक्ष्यते । तर्हि अध्यस्तं जल-

---

१. "व्यवहार" इति पाठः । २. "ननु अज्ञानमात्रं नाङ्गमिति" पाठः ।

३. अनिर्वचनीयरजतादीनामुत्पत्तौ विमतिः ।

**नाद्यः, अतिप्रसङ्गात्–पुरुषत्रयावगतस्यापि एकक्षणावगतस्य पुरुषान्तरेण तेनापि क्षणान्तरे बहुलं बाध्यत्वदर्शनात्। न चासौ अर्थोऽसत्योऽपि द्वित्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधात् बाधदर्शने संजातेऽपि तथैव सन्नित्यभ्युपगम्यते। तस्माद् द्वितीयः पक्षः परिशिष्यते—यत्र सर्वप्रकारेण बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम्।**

**तदित्थं यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथा-**

---

मनादिस्यादिति चेन्न। अविद्यमानत्वादनादितापि नास्ति। यदि च स्यात्तदा बाध्यमानताऽपि न स्यात् आत्मवत्। ततो विलक्षणा तु अविद्यायामिव नानिष्टा षडस्माकमनादयः इति तु व्यवहारः सतां संख्या नियमभिप्राय ( अभिप्रायेण ) इति दिक्।

अस्तु तर्हि प्रमाणादि सत्ता पारमार्थिकी अबाधितप्रतीतिविषयत्वादित्यत्र स्वरूपसिद्धिमाह—द्वितीयेऽपि **किमित्यादिना**। **द्वित्रेति**। द्वौवा त्रयो वा द्वित्रः तदादयः एव पुरुषाः द्वित्रादिपुरुषास्त एव मात्रा प्रमाणं यस्य तस्य पूर्वजाता सा च तस्य वस्तुनः प्रतीतिरिति विग्रह इति विद्यासागरः। द्वित्राः पुरुषाः आदिभूताः कारणभूताः नतु तस्यैव याः प्रतीतयः पूर्वजाता प्रमास्तदनुरोधेनेति वार्थः। बाधदर्शने इत्यत्र तेषामेवेति शेषः **तथैव**। प्रतीतरूपेण नतु प्रमेयत्वादिना सद्रूपतायाः ( अभ्युपगम्य तादवस्थ्यसिद्धयः )।

अथवा स एव पदार्थ आभासात्मना सन्नभ्युपेयत इत्याशङ्कावारणाय विशेषादर्शनदशायां द्वित्रिचतुःपुरुषाणां प्रतीतिः तैरेव विशेषदर्शनदशायां बाध्यत इति। अन्धकारे च भुजङ्गतया पश्यतां जातकम्पानामुत्तरकालं भयाभावदर्शनादिति भावः।

योगाचारसौत्रान्तिकवैभाषिकावगतस्य क्षणभङ्गस्य वाद्यन्तराणां बाध्यतादर्शनादिति विद्यासागरः। **यत्र सर्वप्रकारैरिति**। देशान्तरकालान्तरपुरुषान्तरैर्बाधो नास्तीत्यर्थः। **अभ्युपगन्तव्यमिति** नचेदं शक्यं परकीयबाधाभावस्य विषयनिष्ठरूपायोग्यत्वादितिभावः।

ननु भवतामप्यबाधितो व्याप्त्याद्यभ्युपगमः कथाङ्गं चेत्तर्हि न असत्यत्वम्। नचेत्तर्हि बाधितमपि दूषणमादाय व्यवहरतो जयभङ्गव्यवस्थादौस्थ्यमित्याशङ्क्य स्वमतं प्रतिपादयति—**तदित्थमिति**।

---

१. आदिपदं मूले प्रभृत्यर्थकं विद्यासागराः मन्यन्ते। इमे तु आदिपदस्य कारणभूता इत्यर्थं मत्वा तस्यैव कथकस्य याः पूर्वजाताः प्रतीतयः प्रमाभूताः तासामनुरोधो न विवक्षित इति बोधनाय द्वित्राणामादिभूतानामित्यर्थं मन्यन्ते।

**कालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते, तदा किमायातं सर्वप्रकाराबाधित-तत्सत्त्वावगमायत्ततत्सत्ताभ्युपगमकथाङ्गतानङ्गीकारस्य ? । कतिपयप्रतिपत्तृ-कतिपयकालतथात्वावगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते, तादृशश्चायं सत्त्वागमः कथाङ्गम् ।**

**एतत्तदुच्यते—व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति । तस्माद् यादृग्व्यवहारनियमः कृतः, तन्मर्यादा अनेन नोल्लंघितेति यद्वादिवाग्व्यवहारे**

( प्रमाणसत्ताभ्युपगमस्य अबाधितसत्त्वावगममूलकत्व निरासः )

**तैरिति**—बाधाभावः स्वरूपसत्त्वे च हेतुरिति नातिप्रसङ्ग इति । ननु प्रमाणादिसत्ताभ्युपगमः कथाङ्गं न भवतीति प्रतिज्ञाय सर्वप्रकाराबाधितप्रमाणादि-सत्ताभ्युपगमः कथाङ्गं न भवतीति वदतस्तव प्रतिज्ञान्तरं दोषः स्यात् इति चेन्न । भवतो यादृशी प्रतिज्ञा तद्विपरीतार्थविषयिकैव मम प्रतिज्ञेति कुतः प्रतिज्ञान्तर-त्वमित्युद्भावयतो निरनुयोज्यानुयोगापत्तिः ।

ननु कथायाः सम्यक्त्वासम्यक्त्वं तदधीना च वस्तुनो व्यवस्था न स्यात् पुरुषत्रयव्यवस्थापितस्यापि अपरैर्दूषयिष्यमाणत्वात् । इति चेत्सत्यम्—नास्त्येव वस्तुनो व्यवस्था न्यायतः, किं कुर्मः सर्वो हि लौकिको व्यवहारः तत्कालप्रतीत्या तत्कालेऽबाध्यमानतया जन्यते अन्यथा क्षुधार्तो भोजनमपि न कुर्यात् । यथा च तत्र फललाभात् स व्यवहारः सर्वलोकानां प्रकर्षेण जायते नतु तद्विस्तारः केनाऽपि लौकिकेन बाध्यते । तथा कथात्मको व्यवहारोऽपि समयबन्धानुल्लङ्घी चेत् सम्यक्त्वेन व्यवह्रियते कथकेषु प्रतीयते च न केनापि प्रतिजन्यते[१] चेत्याशयवानाह—**कतिपयेत्यादि** । घटोऽयमित्यादिव्यवहारस्य आत्मतत्त्वबोधात् प्राक् सर्वेषां तथा-वगमादेव भवतीत्यत आह—**प्रायेणेति** । विधिविधेयव्यवहारे व्यभिचारमाशङ्कयाह **लौकिक इति** । ननु शास्त्रविदां व्यवहारः कथं तथा तव तु ते तत्त्वविदः इत्या-शङ्क्याह—**तादृशश्च सत्तावगमः कथाङ्गमिति** । कथाङ्गमपि तादृगवगम एव । अत्र शास्त्रकृतामेव सम्मतिमाह—एतदुच्यते **व्यावहारिकीं सत्तामादाय विचाररम्भः** । इति ।

यदुच्यते तदेतदेव सत्त्वावगमरूपमेव इत्यर्थः । व्यावहारिकीं व्यवहाराय समर्थां नत्वबाध्यां विचारासहत्वात् । नाप्यवगमादतिरिक्तः **मध्यमसत्तां** प्रमाणा-भावात् । शुक्तिरजतप्रतीतिजव्यवहारस्यापि दृश्यमानत्वेन व्यवच्छेदाद्यशक्यत्वात् । न च सति प्रमातरि अबाध्यमानत्वमेवाकाशादीनां व्यावहारिकं सत्त्वमिति वाच्यम् । सापि च प्रतीते बाध्यमानतैव पर्यवस्यतीति, प्रतीति[२] प्रतीतिसत्तैव भङ्ग्यन्तरे-

१. "प्रतिहन्यते" इति युक्तः । "न केनापि प्रतिजन्यते" इत्यंशः कश्मीर पुस्तके नास्ति ।
२. "प्रतीतेरबाध्यमानतैव" इति आदर्श पुस्तके पाठः "प्रतीति सत्तैवेत्ति" पाठः कश्मीरपुस्तके ।

**मध्यस्थावगमः स विजयते; यस्य तु वचसि नैवं तस्यावगमस्तस्य पराजयः; यत्र वाद्युक्तनिग्रहसत्त्वावगमः स निगृहीतः; तदितरस्तु न तथेत्यादिनियम एव कथारम्भाय ग्राह्यः ।**

## २. असतोऽपि समयबन्धस्य कारणत्वम्

**अनेन नियमेन वक्तव्यमित्यस्य अयमर्थः–अनेन नियमेनोक्तमनेनेति मध्यस्थावगमस्य विषयीभवितव्यमिति । न च वाच्यमन्ततस्तदवगमस्यापि सत्ताऽभ्युपेयेति;**

---

णोक्ता भवति । नहि प्रतीतौ बाधितायामसत्यां सा सत्ता आकाशादीनामस्तीति शक्यं वदितुम् । सा हि सत्ता नाकाशादेः स्वतः सम्भवति जड़त्वात्, नापि प्रमाणात् प्रत्यक्षादेः लौकिकमानत्वात् तस्य सम्भावितदोषत्वेन निश्चायकत्वासम्भवात् । नापि यतो वा इमानि भूतानि जायन्ते तस्मात् ( आत्मनः ) आकाशः सम्भूतः इत्यादि श्रुतिः तस्याः तद् ब्रह्मेति ब्रह्मपदार्थस्यालौकिकस्य बोधकत्वात् 'तद्विजिज्ञासस्वेति' जिज्ञासा विधिशेषत्वात् । जन्मस्थितिभङ्गानां च ज्ञानातिरिक्तानां स्वीकारे द्वैतापत्ते ब्रह्मपदार्थसत्त्वापत्तेः शक्तिग्राहकत्वाभावप्रसङ्गाच्च । नेह नानास्ति 'किञ्चने'ति श्रुत्या प्रपञ्चाभावस्य बोध्यत्वात् सत्त्वमेव तेषां नास्ति कुतो व्यावहारिकत्वाख्यस्तद् विशेषः । तदाहुः भट्टचरणाः—

तस्माद् यन्नास्ति नास्त्येवं यत्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥[१] इति

तस्मात् प्रतीतिरेव तेषामपि सत्तेति भावः । व्यावहारिकपदसिद्धिस्तु स्वागतादीनां[२] चेत्यनेन ऐजागमनिषेधादिवृद्धिभ्याम् । यथाह—स्वागतिकः स्वाध्वरिकः स्वाङ्गि व्याङ्गि व्यावहारिक[३] इति । वस्तु सत्ता न व्यवहाराङ्गं किन्त्ववगम इति प्रागुक्तं निगमयति--

( व्यवहारनियमस्य कथाकरणत्वोपसंहारः )

**तस्मादिति** । अदुष्टेऽपि न्याये दुष्टमिति विप्रलम्भकवाक्याद् दोषावगमो न पराजयहेतुरिति सूचयितुं मध्यस्थावगम इत्युक्तम् ।

**शरणत्वादिति** तथा च तस्यापि प्रातीतिकी सत्ता न पारमार्थिकीति भावः । अवगमः सन्निति वीक्षायामपगमोऽस्तीत्यवगमान्तरं चेच्छरणं तत्राप्यपरं तत्राप्यपरमित्यनवस्थापत्तिरित्याशङ्कतेनचेति ।

( अनवस्थापरिहारः )

यथा रत्नतत्त्वपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात् सम्यग्ज्ञाने जाते न

---

१. श्लोकवार्त्तिकनिरालम्बन वादे कारिका सं० १० । २. पा० सू० ७।३।७ । ३. व्यवहारेण चरति व्यावहारिकः ।

**तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात् । न चैवमनवस्था; तदनुसरणावश्यम्भावानङ्गीकारात् । 'एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः' इति न्यायात् ।**

**न चान्तिमासत्त्वे पूर्वप्रवाहासत्त्वापत्तिः, तथा च अवगममादायापि व्यवहरतो न निस्तार इति वाच्यम् । अस्तु एवं हि, तथापि त्रिचतुरज्ञानकक्षा-**

---

पुनर्ज्ञानान्तरमपेक्षते तथात्रापि ज्ञानान्तरानुसरणस्यानावश्यकत्वात् इत्याशयेन परिहरति—**तदनुसारणावश्यंभावानङ्गीकारादिति** । अन्यथा सर्वव्यवहारोच्छेद-प्रसङ्गात् । यावद् विज्ञानतज्ज्ञानपरम्परा नोदेति तावज्ज्ञानानामप्रतीतानामसत्त्वात् । नच तान्यविरललग्नान्यनुभूयन्त इति तस्मादन्तिमज्ञानमप्रतीतमेव सत् । नचैवं प्रमेयान्तरस्यापि सत्ता परैरङ्गीक्रियते प्रमाणव्युत्पादनवैयर्थ्यापत्तेरिति भावः । आपाततस्तदनुसरणं हि विषयव्यवहारार्थं न ज्ञानव्यवहारार्थं नच सर्वस्यावश्यं व्यवहार्यता नचान्यव्यवहारसिद्धये ज्ञानज्ञानापेक्षा तथा सति सर्वव्यवहारोच्छेदा-पत्तेरिति भावः, इति शङ्करमिश्राः ।

ज्ञानत्रये चतुष्टये वा जाते ज्ञानान्तरं नापेक्ष्यत इत्यत्र भट्टाचार्याणां सम्मति-माह—एवमिति ।

प्रार्थ्यंते तावदेवैनां[२] स्वतःप्रामाण्यमश्नुते—इत्युत्तरार्द्धम् । तच्च प्रकृत-विरुद्धतया न लिखितम् । नवा तत्सम्मतिरत्रोक्ता तन्न्यायस्य ज्ञानस्वतः प्रामाण्य-विषयत्वात् । एवं हि तत्र–विचारितम्, किं सर्वमेवपूर्वज्ञानं परेण विरोधिविषयिणा बाध्यत एव नैवम् । यदि परं दुष्टकारणजन्यत्वबोधेन नैतदेवमिति विषयान्यथा-त्वबोधेन वा वाधितं न भवति तदैव । स यदि हि बाधको द्वितीये, प्रथमं निरपवाद मेव औत्सर्गिकं प्रामाण्यं लभते । ननु तृतीयमेव किमिति द्वितीयेन न बाध्यते इति चेन्न । अज्ञायमानदोषो हि बाधको भवति नच द्वितीयं तथा किन्तु तृतीयमेव । यदा तु तृतीयेऽपि ज्ञाने दोषनिर्णयो बाधकं वा जायते तदा द्वितीयेनैव पूर्णज्ञानस्य बाध इति चतुर्थज्ञानावसान एव निर्णयः । यथाहुः—

पूर्वबाधेन चोत्पत्तिः उत्तारस्य हि सिद्धचति ।
तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।।

तदुद्भूतौ द्वितीयस्य मिथ्यात्वाद् बाध्यमानता । तृतीयेऽपि यदि बाध-

---

१. श्लोकवार्त्तिके चोदनासूत्र कारिका सं० ६१ । २. "तावतैवैकमपि" पाठः ।

**गवेषणमात्रविश्रान्तेन विचारेण ततः परमननुसरणरमणीयेनैव च समयं बद्ध्वा कथायां मिथः सम्प्रतिपत्त्या प्रवर्तनात्। अन्यथा प्रमाणादिसत्त्वाभ्युपगमेऽपि ज्ञानानवस्थायाः दुष्परिहरत्वात्।**

**न च वाच्यं मत्पक्षे स्वरूपसत्ता ज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् तज्ज्ञानपरम्परानुसरणमुचितम्, न त्वेवं त्वत्पक्षे स्वरूपसताज्ञानेन व्यवहारस्य**

---

धीस्तदा चतुर्थेनैव द्वितीयस्य बाधकस्य निर्णयः[१] न पुनः पञ्चमस्यावकाशः इत्याशयेनाह—

एवं त्रिचतुरज्ञान जन्मनो बाधिका मतिः।
प्रार्थ्यते तावतैबैकं स्वतःप्रामाण्यमश्नुते ।। इति

अयं भावः—प्रथमस्य स्वतःप्राप्तमपि प्रामाण्यं द्वितीयेन बाध्यते प्रकारीभूतधर्मस्य धर्मिणि अभावबोध एव पूर्वज्ञानस्य बाधो न तु तदुत्पत्तिप्रतिबन्धकत्वम्। उत्पन्नं हि तत्। न च तज्जातीयज्ञानान्तरोत्पत्ति–प्रतिबन्धकत्वं द्वितीयस्य प्रमात्वे पूर्वस्य भ्रमत्वनियमेन तज्जनकदोषा भावादेव तदनुत्पत्तेः। न च द्वितीयज्ञानाभाव एव तत्र दोषाभावः तथा चापातमेव तत्र तस्य प्रतिबन्धकत्वमिति वाच्यम्।

द्वितीयज्ञानस्य दोषत्वे इतः पूर्वमपि तदनुत्पादापत्तेः कारणाभावे कार्याभावस्यावश्यकत्वात्। नापि पूर्वज्ञाननाशकत्वं पूर्वज्ञानजसंस्कारस्यापि बाधकत्वापत्तेः, प्रमाया अपि स्वोत्तरेच्छाबाध्यतापत्तेः। नापि पूर्वज्ञानस्याप्रामाण्यबोधकत्वमेव बाधः, द्वितीयज्ञानस्य बोधरूपत्वेन स्वतस्तथा सामर्थ्याभावात्। नापि पूर्वज्ञानभ्रमः तदभाववति तत्प्रकारत्वादिति, लिङ्गोत्थापकतया ततः प्राक् तस्याबाध्यतापत्तौ तस्य प्रवर्तकतापत्तेः। न चेदं ज्ञानं भ्रम इति धीर्बाधः, किन्तु ग्राह्याभाव निश्चय एव तथेति[३]। सर्व तान्त्रिकराद्धान्तः। न चैवं पूर्वधीरप्युत्तरस्य बाधिका स्यादिति वाच्यम्। ज्ञानान्तरगृहीतविषयाभावबोधस्य तथात्वादस्ति चोत्तरस्य तथात्वं न तु पूर्वस्येति न किञ्चित्। तथाचोत्तरज्ञानं चेद् विषयाभावनिश्चयात्मकं तदा बाध एव। अथ तत्र दुष्टकारणजन्यत्वनिश्चयस्तदा तद्विषयाभावनिश्चय एवेति पूर्वज्ञानमनपेक्षितप्रामाण्यं स्वविषयनिश्चयमेव। अथ तृतीये ज्ञाने अप्रामाण्यनिश्चयस्तदा द्वितीयं ज्ञानमेव स्वविषयनिश्चयरूपं पूर्वधी बाधकमिति कुत्र पञ्चमज्ञानापेक्षा तद्द्वितीयज्ञानकार्यकारितया तृतीयस्थाने एव निवेश्यम्। एवं षष्ठज्ञानमपि चतुर्थस्थानएवेति सम्ययुक्तं नाधिका मतिः प्रार्थ्यते बाधकत्त्वेनेति। नत्विह तथा पूर्वज्ञानसत्ताया उत्तरज्ञानात्मकतया अवश्यं प्रार्थ-

---

१. "परेणविरोधिविषयिणा" इत्यादर्श पुस्तके पाठः। २. श्लोकवार्त्तिकम्। सूत्रे द्वितीये–कारिका संख्या ६१।

३. सर्वत्रान्तिकेति पाठः आदर्शपुस्तके। सौत्रान्तिकेति पाठः मुद्रितपुस्तके।

**चरितार्थता, ज्ञानस्वरूपसत्त्वाङ्गीकारप्रसङ्गादिति। स्वरूपसत्तामादायापि परिहरतोऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्।**

**यथा च त्वत्पक्षे स्वरूपसत्त्वाविशेषेऽपि विज्ञानस्वरूपसत्त्वैव परं व्यवहारोपपादिका, न घटादिसत्ता; एवमेवासत्त्वाविशेषेऽपि ज्ञानमेवासद् व्यवहारोपपादकं नान्यत्।**

**असच्च उपपादकञ्चेति व्याहतमिति चेन्न, सद् उपपादकमिति कुतो न व्याहतम्? न हि सद् उपपादकम् असन्नेति क्वचिदावयोः सिद्धम्। ननु तदसत्त्वा-**

---

नीयत्वात्। यच्च रत्नतत्त्वपरीक्षावदिति व्याख्यानम्, तदपि न युक्तम्। समान विषयकज्ञानानां विसंवादाभावो ज्ञानत्रयेणापि सिद्ध्यति नतु भिन्नविषयज्ञान-चतुष्टयस्य भिथोऽस्पष्टविषयस्येति। तस्मादेवमुत्तरार्द्धं वार्त्तिककारिकायां संयोज्यम्। प्रार्थ्यते तावतैवेह कथाकार्यं प्रसिद्ध्यति। इति अप्रार्थने साम्यमुक्तम्, न्यायस्तत्र प्रार्थते हेतुरिह तु कथासिद्धिरिति विशेषः प्रार्थनाभावस्तूभयत्राप्य-विशिष्ट इति।

**अस्तु एवं तथेति**। एवं सति भवदुक्तयुक्त्युद्भावने सति तथैवास्त्वसत्त्व-मेवास्तु। हि शब्दः एवार्थे। अथवा अस्तु तथा असत्त्वं हि यस्मादेवं भवदुक्तं भूषणं तस्मात्। **अस्त्वेव हि** तथेति पाठे क्वाचित्के हि यस्माद् विचार्यमाणं सर्वासत्त्व-मेवास्त्वित्यर्थः। अस्तु इत्यपपाठः। अस्त्वेव हीति सत्पाठः। न चैतावता व्यवहार-भङ्ग इत्याह—**त्रिचतुरेति** अननुसरणेन अविचारेणैव रमणीयेन न तु वस्तुतोऽपि तथैव समयबन्धान्न कथाभङ्ग इति भावः। कथा कोटेः गवेषणं पर्यालोचनं तावन्मात्रेण विश्रान्तः पर्याप्तः। एवं हि सभयबन्धाधीना कथेति भवताप्यभ्युपेयेत्यत्र विपक्षं बाधकमाह-**अन्यथेति**। [१]वक्तव्यत्वादिति। को ब्रूते, सती सा वित्तिरसत्येव सा किन्नस्यादित्यनेन। **नान्यदिति**। ना ज्ञानं घटादिकं शशविषाणं वा।

( प्रसङ्गात् असतः कारणत्वसमर्थनम् )

**व्याहतमिति**। उपपादकत्वं कारणत्वं तच्च सत्त्वगर्भमिति भावः। **क्वचिदावयोः सिद्धमिति**। यद्यपि शशविषाणे कारणत्वाभाव उभयसिद्धस्तथापि नासत्तां पुरस्कृत्य किन्तु शशविषाणत्वादिकं पुरस्कृत्यैव। नच दण्डत्वादि पुरस्कारेण जनकत्वाभावः सिद्धः अवच्छेदको धर्म एव च कारणता न त्वनन्यथासिद्धत्वे सति नियतप्राक्सत्वं नियमस्य प्रागभावस्य च दुर्निरूपत्वात्। **सत्त्वस्याबाधितत्वापर** पर्यायस्य क्वाप्यप्रसिद्धेः कारणताघटकत्वाभावादिति भावः। ततश्च सदुपपादक-मित्यपि लोभेयसिद्धमिति। किं सकलकारणे एव कार्यमिति नियमात् कारणाभाव-

---

१. "वक्तव्यने" इति पाठः। २. न सत्तां पुरस्कृत्येति कश्मीर पुस्तके पाठः।

**विशेषात् कार्यस्य अन्यदापि जन्मप्रसङ्गः, न, कार्यस्याद्यसत्त्वक्षण इवान्यदाऽपि सामग्र्यसत्त्वाविशेषात् तदापि किं नान्यदा कार्यजन्म ?**

---

काले कथं कार्यं यदि स्यात् सर्वदा सदिति तव हृदयम् । यद्वा यावत् कारणाभाव-कालो न कार्यकालो यदि स्यात् तदा घटोत्पत्तिप्राक्कालोऽपि घटकालः स्यात् घट जन्मकालवद् घटकारणाभाववत्वादिति । तत्र नाद्यः, घटोत्पत्तिकाले घटप्राग-भाववत्यपि कार्यजन्माङ्गीकारेण व्यभिचारात् । अतएव न द्वितीयोऽपि अतएव नातिप्रसङ्गोऽपि । केवलं मयैव समाधेय इत्याशयेन परिहरति—नेति ।

कार्यस्याद्यक्षणे यथा सामग्री नास्ति तत्सत्वे तदुत्तरक्षणेऽपि कार्यापत्तिः किन्तु पूर्वक्षण एव, तथा च सामग्र्यसत्वकाल एव कार्योत्पाद इति भवतां मतं तदा घटादिप्राक्कालेऽपि कुतो न घटोत्पत्तिप्रसङ्गः ।

तच्च—"यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकस्तत्रानुयोक्तव्यः तादृगर्थविचारणे" इति वा पद्यम्—
तत्र चैकोऽनुयोज्यः स्यात् स्वस्य दोषप्रसङ्गतः ।
यदि च तव सामग्र्य[1] असत्वं न नियामकम् ॥

अतिप्रसङ्गादेव किन्तु सामग्रीसत्त्वं तदपि न निर्विशेषणं किन्तु प्राक् कालावच्छिन्नं तन्ममापि प्राक् कालविशेषावच्छिन्नं कारणसत्त्वं घटव्यहितप्राक्काले नास्तीति नातिप्रसङ्गः । यदि चावच्छेदकावच्छेदकस्य कार्यं प्रति प्रयोजकता यदा कदाचित् स्थित्यैवेति कार्योत्पादानन्तरमपि द्वितीयक्षणे घटोत्पादो दुर्वारो मम तु प्रागभावादेव नातिप्रसङ्ग इति शक्यते वक्तुं त्वया, तथापि असतः अवच्छेदका-वच्छिन्नस्यैव नियामकत्वं फलानतिप्रसङ्गायास्थेयम् । अस्तु वा प्राक्कालेऽपि नियामकः सोऽपि चासन्ने वावच्छेदकवन्नियामकः । नचाव्यवहितप्राक्कालः तत्पूर्वमप्यसत् कथं नियामकः स्यादिति वाच्यं, भवता प्रतीयमान (ण) सत्त्वस्यैवा-स्माभिरसत्त्वेनाभिमतत्त्वात् । नचासावन्यथा भवदभिमतसत्त्वम् । एतेनैव यद्यपि सामग्रीसत्त्वं पूर्वक्षणमात्रे सामग्र्यसत्त्वं तु सार्वदिकमिति महद्वैषम्यमिति निरस्तम्। भवदभिमतायाः सामग्र्या एव मया पारमार्थिकत्वाभावेन असत्त्वेनाभ्युपगमात्, तथा च भवदभिमतसामग्रीत्व व्याप्यम् असत्त्वं पूर्वक्षणमात्रवृत्त्येवेत्यदोष इत्याशयेनाह-**कालान्तरस्थमपि तदसत्त्वमिति** । घटाव्यवहितप्राक्कालावच्छिन्नमसत्त्वमित्यर्थः । यद्वा कालान्तरं घटकालादभिन्नः कालः प्रागभावानवच्छिन्नोऽपि तत्स्थं तत्स्थत्वेन प्रतीयमानं शशशृङ्गाद्यसत्त्वतो विलक्षणतत्कार्यकालत्वेनाभिमते काले यत्कार्यस्य जन्मनो नियामकमेतत्कालीनकार्यत्वं तस्य जन्यतावच्छेदकम् ।

---

१. "सामग्र्यासत्त्वमिति" आदर्शपुस्तके पाठः

**अथ न मम तदानीन्तनं सामग्र्यसत्त्वं तदानीन्तनस्य कार्यजन्मनो नियामकम्, किन्तु ततः प्राक् सामग्रीसत्त्वं तथादर्शनात् ? तर्हि ममापि कालान्तरस्थमपि तदसत्त्वं तदातनकार्यजन्मनो नियामकं तथादर्शनादेव । मम तु तदव्यवहितोत्तरत्वं तदा कार्यजन्मनो नियामकमिति चेन्न, समसमयत्वादागन्तुकत्वाच्च अविशेषेण नियम्यनियामकव्यवस्थानुपपत्तेः । तस्माद् अन्यदास्थायाः सामग्र्याः तदा कार्यजन्मनियमोऽभ्युपेयस्तथादर्शनादित्येव वाच्यम् । तथा च समः समाधिः ।**

---

अथवा अस्मिन् काले एव तेन कार्यं जन्यते, यथा घटप्रागभावोऽनादिरपि चरमकारणकाल एव घटकालोपधायकः अन्यकालेऽदर्शनात् तत्काले च दर्शनात् कल्प्यते इति भावः नतु भिन्नकालीनयोः सामग्रीसत्त्वकार्यजन्मनोर्नियम्यनियामकभावं ब्रूमः, किन्तु सामग्र्यव्यवहितोत्तरत्वकार्यजन्मनोः समानकालीनयोरेवेत्याशङ्कते—

—**ममेति** । त्वया तु नैतच्छक्यं वक्तुमसत्त्वाविशेषादिति भावः । यद्यपि त्वया तथाभ्युपगमेऽप्यस्माकं तदनुभ्युपगमान्न क्षतिः भिन्नकालयोस्तदभ्युपगमादेव स्वाभीष्टसिद्धेः तदपि[१] न । **समसमयत्वादिति** । अव्यवहितोत्तरत्वस्य कार्येण समकालत्वात् । ययोरेकमनागन्तुकं स्यात् तदा तदेव नियामकं स्यादिह तु द्वयोरप्यागन्तुकयोर्नियामकाकाङ्क्षायामविशेषान्नियामकत्वं न[२] विनिगन्तुं शक्यते । यद् वा समयो व्यवस्था, अवस्थितिनियमः, सा द्वयोरपि साध्या कार्यजन्मनोर्व्यवस्था सामग्र्युत्तरत्वमपि कुत्रचिदेवास्ति अत्र किन्नियामकम् अत्र हेतुः—आगन्तुकत्वात्—अस्वाभाविकत्वात्, यथा हि आकाशस्य शब्दाश्रयत्वं स्वाभाविकं न तथा कालस्य सामग्र्युत्तरत्वं सर्वक्षणानां[३] तथात्वापत्तेरिति भावः । **आगन्तुकत्वात्**—अन्यथासिद्धत्वात् अक्लृप्तनियामकत्वादिति वार्थ इत्येके । तच्चिन्त्यम् । यत्तु समसमययोरपि रूपरसयोरागन्तुकयोरपि च वह्निधूमयोर्नियम्यनियामकभावो दृष्ट इति केचित् । तन्न तत्रापि रूपनियामकस्य तेजोरूपकालोपाध्यवच्छेदेन जन्यरसनियामकस्य च प्रलयेऽधिककालवृत्तित्वात् आगन्तुकस्य स्वातन्त्र्येणाहेतुत्वाच्च ।

**अन्यदास्थाया[४] इति** । अन्यदा तिष्ठतीति अन्यदास्था । ननु असतः कार्यकाल

---

१. "तथापि नेति" पाठः आदर्शपुस्तके मुद्रित पुस्तके च ।

२. नियामकत्वं विनिगन्तुं शक्यते इति पाठः आदर्शपुस्तके कश्मीरपुस्तके च ।

३. "सर्वलक्षणानाम्" आदर्शपुस्तके पाठः कश्मीरपुस्तकेऽपि ।

४. अन्यस्मिन्—कार्यक्षणाद् अन्यस्मिन् आस्थास्थितिर्यस्या इति विग्रहे अषष्ठ्य तृतीयास्थास्यान्यस्य 'दुगासीराशास्थितोत्सुकोतिकारागच्छेषु' ६।३।९२ । इत्यनेन दुगागमेऽपि अन्यदास्था शब्दः सिद्धयति ।

**तथापि कार्यजन्मकालस्य को विशेषः ? कार्यजन्मैव, अन्यथा यद् विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादित्यपर्यवसानमेव पर्यवस्येत् ।**

---

एव जनकत्वं दर्शनवलादितिवदता कार्यकालस्य विशेषो निरूप्यः[१] । सद्वादिनस्तु कार्यसत्तासम्बन्ध एव विशेषः न च भवतां कार्यस्यापि सत्तास्तीत्याशयेन शङ्कते—तथापीति । सिद्धान्तीत्वाह **कार्येति** । नहि असत् कार्यजन्म कार्यजन्मने प्रभवति त्वयापि कार्यजन्मैव विशेषो वाच्यः, अन्यथा यद् विशेषान्तरं कार्यसत्तासम्बन्धादिकं त्वयोच्यते तदपि निर्विशेषस्य कालस्य चेत्तर्हि अनियमः । सविशेषस्य चेद् विशेष सम्बन्धोऽपि कालमात्रस्य चेत्तदातिप्रसङ्ग इति तस्यापि विशेषान्तरवत्येव सम्बन्ध इत्यनवस्था स्यादित्यर्थः इत्यनुभूतिस्वरूपपादाः ।

मिश्रास्तु कार्यजन्मक्षणस्य क्षणान्तरेभ्यो वैलक्षण्यमवश्यं वाच्यं तच्च न तावत्सामग्र्यसत्त्वं तस्य क्षणान्तरेऽपि सत्त्वात्[२]। तथा च तदेव नियामकमित्याशयेन पृच्छति **तथापीति** । उत्तरम्—कार्येति । विनिगमकमाह—**अन्यथेति** । सामग्र्युत्तरत्वं क्वेत्यत्रापि विशेषान्तरजिज्ञासायां विशेषान्तरेणोत्तरे पुनस्तत्राप्येवमित्यनवस्थेति व्याख्याय यद्यपि कार्यजन्मकाले सामग्र्युत्तरत्वं तत्र च तत्सामग्री तत्रापि तत् सामग्रीत्यपर्यवसानमेवेष्टं प्रामाणिकत्वात् । न च कार्यजन्मकालगता एव सर्वे विशेषा अपेक्षिताः । न च सामग्रीपरम्परायाः तथात्वमिति वाच्यम् । सामग्रीपरम्पराया अपि कार्यजन्मकालस्यैव विशेषत्वात्, अन्यथा कार्यजन्मकालस्य कार्यजन्मैव विशेष इति त्वदुक्तमपि न निर्वहेदिति तत्रापि विशेषान्तरानुसरणस्यावश्यकत्वात्, तथापि कार्यमप्यसदेवेति हृदयमिति दूषितवन्तः । तदसत् । कार्यजन्मक्षणेषु कार्यानुगतेषु सामग्र्युत्तरत्वसामग्रीत्वादीनामननुगतानामविशेषकत्वात् न्यूनवृत्तित्वात् प्रागभावेतरयावत्कादाचित्ककारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणो हि सामग्रीत्युच्यते ।

न च स यावद्घटजन्मक्षणसम्बन्धी घटप्रागभावाधारत्वेन तदनुगमे घटध्वंसक्षणेऽप्यतिव्याप्तिः । तत्तत्घटप्रागभावत्वं त्वननुगतम्[३] । किञ्च सामग्र्युत्तरत्वं घटद्वितीयक्षणविनाशक्षणादिषु अतिप्रसक्तमित्यव्यवहितोत्तरक्षणत्वं तथा वाच्यं तच्च न सामग्रीक्षणध्वंसानधिकरणक्षणत्वघटितम् असम्भवापत्तेरिति तत्तत्सामग्रीव्यक्तिघटितं वाच्यं तथाचात्यन्ताननुगतैस्तैः कथं घटजन्मक्षणो विशेषणीयः । न च जन्मक्षणोऽपि विशेषान्तरं मृग्यं जन्मन एव तथात्वात् ।

---

१. "निरस्यः" इति आदर्श पुस्तके पाठः ।

२. किन्तु सामग्र्युत्तरत्वमेव वाच्यम् ।

३. अनुगतम् इति आदर्शपुस्तके ।

**तथापि तत्कालस्यानुगतं किं रूपमिति चेन्न, रूपान्तरवतोऽपि किं तदित्यस्यापि पर्यनुयोगस्यापत्तेः। किञ्च—**

**अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।**
**नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥ ४॥**

---

ननु कः कार्यजन्मकालः इति प्रश्नस्य किमुत्तरं त्वया देयं, यत्र काले कार्यजन्मेति चेन्न। सर्वस्य कालस्य कार्यजन्मवैशिष्ट्याभावात्। कालनिष्ठं तदधिकरणतावच्छेदकमवश्यं किञ्चिदभ्युपेयं तच्च सामग्र्यव्यवहितोत्तरत्वादिकमेव, ततश्चाव्यवहितत्वमपि अव्यवहिताकारानुगतप्रतीत्या लक्ष्यं पदार्थान्तरमेवेत्याशयेन शङ्कते-**तथापीति**।

**तत्कालस्यानुगतं किं रूपमिति**। तत्कालस्य जन्मकालस्येत्यर्थः। **अनुगतमिति**। अन्यथा यच्छब्देन परामर्शायोगादिति भावः। **रूपान्तरवतः** इति। कार्यजन्मापेक्षया यद्रूपान्तरं सामग्रीरहितोत्तरत्वं तद्वत इत्यर्थः। तथा च अधिकरणतावच्छेदकस्याननुगमेऽपि न क्षतिः। न चातिप्रसङ्गः कार्यजन्मदर्शनस्यैव नियामकत्वात्, न च भवतोऽप्यन्या गतिरस्तीतिभावः। एवमसतः कारणत्वमुपपादितं सम्प्रति सतःकारणत्वं खण्डयन्नन्यथानुपपत्त्यापि[१] असतः कारणत्वमेष्टव्यं त्वया इत्याशयेनाह—किञ्चेति।

सतः कारणत्वस्य खण्डनम्

अन्तर्भाविता अन्तःप्रवेशिता सत्ता यस्मिन्। सत्ताविशिष्टं बीजं चेदङ्कुरकारणमित्यर्थः, ततस्तस्मिन् पक्षे कारणं बीजादि असदेव स्यात् सत्ताविशिष्टबीजे सत्ताया अभावादित्यर्थः। नान्तर्भावितसत्त्वं किन्तूपलक्षणीभूतसत्वमिति चेदित्यर्थः। सत्ताया उपलक्षणत्वात्तया च बीजत्वावच्छिन्नस्योपलक्षणात् वीजमङ्कुरणमिति द्वितीयपक्षः तदा असदपि असत्त्वमनन्तर्भाव्यैव कारणमस्तु तस्मिन् पक्षेऽसदपि कारणमस्त्विति द्वितीयार्द्धार्थः।

तत इत्यस्यानन्तर्भावितसत्तात्वादित्यर्थो वा। एवञ्च सत्ताविशिष्टकारणत्वं चेत्तदा सत्ताया अपि कारणत्वमित्यायातम्। न च सत्तायां सत्ता इत्यसदेव कारणं प्राप्तं, तत इति सत्ताविशिष्टे कारणत्वाभ्युपगमादित्यर्थः।

यद्वा कारणमित्यत्र भावप्रधानो निर्देशः तथा च सत्तायां कारणत्वं वर्तते न वेति प्रथमविकल्पार्थः। आद्ये असदपि कारणं सत्तया सत्ताविरहेणासत्त्वात्। द्वितीये तथाऽनुगतप्रत्ययोऽपि न जननीय इति तन्मात्रप्रमाणिकायाः सत्ताया विलोपे सर्वं

---

१. अन्यथातनुपपत्त्या इति द्वितीयपुस्तके पाठः।

**तथा हि—अन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेऽपि च स्वस्मिन् स्ववृत्तिव्यतिरेकवत् स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात्।**

**न सैव सत्ता तस्मिन्निति। अन्यस्या विशिष्टवृत्त्यभ्युपगमे तामनिवेश्य कारणत्वमभ्युपगन्तुः सर्वतैवासत्कारणं पर्यवस्यति। अपरापरसत्तानिवेशने चाऽपर्यवसानमेव।**

**न च सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिका निस्ताराय, सत्ताभेदे हि तद्बुद्धिव्यवहारानेगमसमर्थन ( बन्धन ) लंघिनः प्रथमापि सत्ता न स्यादिति**

---

कारणमसदेवेति प्राप्तम्। सत्तायाः कारणे उपलक्षणत्वे सत्तामपहायापि कारणत्वं वर्तत इति त्वयैवासत्कारणमभ्युपेतमिति मिश्रव्याख्यानमुपेक्ष्यं सत्तामात्रस्य कारणताया अप्रसक्तत्वेन भावप्रधानत्वे लक्षणापत्तेः।

**अंशतः।** विशेषणविशेष्यसम्बन्धा एव विशिष्टमिति पक्षे विशेष्यांशे तदभावेऽपि विशेषणांशे तदस्तीत्यर्थः। **स्वस्मिन्निति।** तथा च तत्सत्ताविशिष्टो न तत्सत्ताविशिष्ट इत्यसदेव कारणं स्यादिति भावः। ताम्—द्वितीयसत्ताम् अनिवेश्य—अनन्तर्भाव्य अविशेषणीकृत्य। यदि प्रथमसत्ताविशिष्टमेव कारणं स्यात्तदा असत्कारणं स्यात्तत्र वर्तमानायाः अपि द्वितीयसत्तायाः कारणकोटिनिवेशानङ्गीकारात्। नहि वह्नौ पैङ्गल्यं वर्तत इत्येतावतैव पिङ्गलो वह्निर्धूमस्य कारणमुच्यते। अथ द्वितीयां सत्तामन्तर्भाव्य तद्विशिष्टं कारणमुच्यते तत्रापि स्ववृत्तिप्रसङ्गात्। द्वितीयसत्ताविशिष्टमप्यसदेव स्यात्। यदि तृतीयया सत्तया तदपि सदित्युच्यते तत्राह—**अपरापरेति।** अपर्यवसानम्—अनवस्था। एतेन प्रथमसत्ताविशिष्टस्यैव सत्त्वमुपपादयितुं द्वितीयसत्तास्वीकारो नतु तामन्तर्भाव्य कारणत्वमिति नात्मदोष इत्यपास्तम्। द्वितीयसत्ताविशिष्टस्यापि असत्त्वे तदुपपादकत्वासम्भवात् द्वितीयसत्ताविशिष्टं प्रथमसत्तया सदित्युक्तावन्योन्याश्रयः अतः तृतीयया सत्तया तत् सदिति वाच्यम् एवं परस्परसत्तास्वीकारेऽपि तथा तथेत्यनवस्था। वस्तुतो द्वितीयादिसत्तास्वीकारे मानमेव नास्ति सदाकारलिङ्गितप्रतीत्या तस्या एकस्या एव सिद्धेः।

ननु सत्ता स्वभिन्नसत्तावती सद्व्यवहारविषयत्वात् घटवत् इत्यनुमानतस्तद्भेदोऽस्तु इत्याशङ्क्य निराकरोति—**नचेत्यादिना** प्रथमा या पक्षीकृता अनुमतबुद्धिव्यवहाराभ्यां हि सा सिध्यति न च तासां भेदे अनुगतौ[1] सम्भवतः। एतेन तावतीषु सत्ताव्यक्तिषु अनुगता सत्ताप्येका स्वीकार्येत्यपि न निस्ताराय, तस्यां सद्व्यवहारा-

---

१. तावनुगतौ इति मुद्रित पुस्तके पाठः।

भावप्रसङ्गात्। न सा सतीति चेत्तर्हि भिन्नभिन्नसत्ताव्यक्तीनामसत्त्वापत्तिः तासामसत्वे च असत्तैव तदाश्रयाणामपीत्यसदेव कारणं स्यात् अप्रयोजकश्चानुमानमिति। अत्र मिश्राः—

स्वविशिष्टे स्व वर्तत एव विरोधाभावात्। नचादर्शनम्। सर्वत्र तथैव दृष्टत्वात् नहि स्वाविशिष्टे स्ववृत्तिर्दृष्टा। यदि च स्वविशिष्टे स्वं न वर्तेत तदा स्वविशिष्टमित्येव न स्यात् स्ववृत्यैव हि तत्स्वविशिष्टम् [1]दण्डिकुण्डलिवत् अन्यथा कुण्डलवत् कुण्डलिनि दण्डयपि स्यात्। एवं तर्हि दण्डेऽपि दण्डः स्यात् इति चेन्न, आपादकाभावात्। विशिष्टवृत्तित्वमेवापादकमिति चेन्न। यद्विशिष्टवृत्तितद्विशेषणवृत्तीति नियमाभावात् दण्डे कुण्डलिविशेषणयोर्दण्डकुण्डलयोर्व्यभिचाराच्च। तत दण्डकुण्डलयोर्न विशेषणत्वं किन्तूपलक्षणत्वमिति चेत्तर्हि इहापि सत्तोपलक्षणमस्तु यथोपलक्षणेनापि दण्डेन पुरुषो दण्डी तथा सत्तायापि तादृश्या कारणं सदेवास्तु। वस्तुतस्तु विशेषणमेव। नहि विशेषगतधर्मत्वं विशेषणत्वं, किन्तु स्वप्रत्याय्य व्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यवच्छेदकत्वं तच्च विशेष्यवृत्तिधर्मविरहेऽपीति न क्षतिः। यत्र संयोगलक्षणा विशेषणस्य वृत्तिः दण्डादौ तत्र कथञ्चिद् विरोधोपसंहारेऽपि समवायलक्षणवृत्तौ स्वविशिष्टे एव स्ववृत्तिरभ्युपेया तत्र स्वविशिष्टदशाया अभावात् गोत्वाविशिष्टेऽपि महिषादौ गोत्ववृत्तित्वप्रसङ्गात्। तस्मादवश्यं तत स्वविशिष्टे स्ववृत्तिरेष्टव्या। तत्र केवले वृत्तिरिति चेन्न। केवलस्यापि स्वविशिष्टत्त्वात्। सत्ता कथं कारणमिति चेन्न। नहि सत्ता जातियोग्यैव कारणमित्यस्मन्मतम् अभावस्यापि कारणत्वात् अपि तु उपाख्याविशिष्टमेवेति प्रलपन्ति।

तत्तुच्छम्—दण्डस्य वृत्त्या पुरुषो दण्डी नतु दण्डविशिष्टे पुंसि दण्डवृत्त्येति। किञ्च दण्डविशिष्टे दण्डवर्तमानतावत् दण्डिनि दण्ड इति प्रतीतिः तदा दण्डात् पूर्वं दण्डिनोऽसत्त्वेन आधारतानुपपत्तेः, दण्डसंयोगेन हि दण्डविशिष्टो जन्यत इति मीमांसकसिद्धान्तः।

यदा तु विशिष्टोऽनतिरिक्तः तदा दण्डसंयोगो दण्डः इति न कस्यापि प्रतीतिः यदा न त्रयं विशिष्टपदार्थः तदापि त्रिषु दण्डाभावान्नैवं प्रतीतिः। यच्चोपलक्षणेनापि दण्डेन दण्डीत्यादि तदपि न नहि दण्डिनि कुण्डलमिति तत्रापि प्रतीतिः किन्तु दण्डेनोपलक्षितायां व्यक्तौ इत्येव तथा सत्तया उपलक्षिता व्यक्तिर्वीजं कारणमित्येव स्यात् नतु सत्कारणं तच्चेष्टमेव खाण्डनिकस्यापि। नह्यत्र सत्ताया उपलक्षकतावच्छेदकं वीजत्वादतिरिक्तमस्ति। नापि गोत्वं गोत्वविशिष्टे वर्तते गोत्वे गोत्ववृत्ति (त्व) प्रसङ्गात् विशेष्यान्वयिना यस्यावश्यमन्वयस्तस्यैव विशेषणत्वात्

१. मुद्रितपुस्तके नास्ति। तत्रैवं पाटः अन्यथा दण्डिनि दण्डवत् कुण्डलिनि कुण्डलवत् कुण्डलिनि दण्डोपिस्यात्:

**वृद्धिमिच्छतो मूलमपि ते नष्टमिति हा कष्टतरम् ।**

**न च स्वरूपसत्तोपगमाय स्वस्ति, भिन्नानपि अनुगतबुद्धयाधानपदेऽभिषिञ्चता त्वया हि जातिमात्राय जलाञ्जलिर्वितीर्यंत । मा भूदनुगतिः स्वरूपसत्त्वस्येति वदन् तद्गर्भिणीं कारणतां कथमनुगमयिताऽसीति ।**

---

गौरस्तीत्यादौ तथैव प्रतीतेः, अन्यथा गोत्वे अस्तित्वसंशयापत्तेः । गां पश्य दण्डिनमानय इत्यादौ च तथैवानुभवाच्च । नच गोत्वाविशिष्टे तद्वृत्तौ महिषेऽपि तत्प्रसङ्गः । महिषव्यावृत्तस्यैव तदधिकरणत्वात् । तथापि गोत्वविशिष्टमेव तत् इति चेत् । सत्यम् । किन्तु गोत्वविशिष्टत्वं नाधिकरणतावच्छेदकं तद्वदत्रापि सत्ताविशिष्टत्वं न कारणतया[1] अधिकरणतावच्छेदकमिति खाण्डनिकाशयः । नच तथापि सदेव कारणमिति सिद्धमिति वाच्यम् । सत्ताजातिश्चेत्तदा सत्तायामेव व्यभिचारः । प्रामाणिकत्वञ्चेत्तदपि न सिद्धम् । उपाख्येयत्वञ्चेत्तदा नास्माकमनिष्टमिति । अपि च कारणता सत्ता च एकस्मिन् धर्मिणि सिद्धा ननु सत्येव कारणता कारणमेवं सत्तेत्यपि आपत्तिः ।

ननुभट्टमते धर्मिणः सदभिन्नत्वं तत्रैव[2] कारणताफलोपहित एव शक्तेः स्वीकारात्, फलानुपहितस्यापि सत्त्वाच्च । किञ्च भट्टमते गोत्वविशिष्टे[3] गोत्वं नास्त्येव आधाराधेयभावस्याभेदेऽभावात् । जातिगुणकर्मादीनां व्यक्त्या सहाभेदात् तथा च न किञ्चिदेतत् । नचैवं खण्डनमपि कथमिति वाच्यम् । भेदवादिमतखण्डनात् नायं दोष इति चेत् स्यादप्येवं यदि शक्तिः पदार्थान्तरं स्यात् सा च नास्तीति वक्ष्यते । किञ्च सदात्मना कार्यकारणयोरभिन्नत्वे नात्मना तथात्वं किन्तु वीजत्वाङ्कुरत्वादिना तच्च सत्तानन्तर्भावेनैव । किञ्च सदभिन्नं कारणमिति वदन्तः प्रष्टव्याः सत् सत् न वा । नाद्यः नहि सत् सदिति प्रतिपादयितुं शक्यम् सामानाधिकरणस्य रूपभेदापेक्षताया वक्ष्यमाणत्वात् । अन्त्ये तु इष्टसिद्धिरितिदिक् । **वृद्धिमिच्छतः** इति । सत्ताया वृद्धिमिच्छतो मूलभूता प्रथमापि सत्ता नष्टेति महती विपदापन्नेत्यर्थः । न च नास्त्येव सत्ता जातिस्तस्या आकृतिव्यङ्ग्यत्वनियमात् किन्तु स्वरूपसत्तैव कारणव्यवहारे निवेश्या । नच स्वरूपबहिर्भावेनैव वीजादेः कारणत्वमित्याशङ्क्य निषेधति । **न च स्वरूप सत्तोपगमाय स्वस्तीति** । सत्त्वजं कारणं सन्तः तन्तवः कारणमित्यनुगतबुद्धिर्न स्यात् स्वरूपाणामत्यन्ताननुगतत्वात् प्रमाणयोग्यताया अपि तस्या अवच्छेदकविशेषघटितत्वेनानुगतत्वात् सदाकारचाक्षुषबुद्धयालम्बनत्वायोगाच्च । यदि चाननुगता अपि सद्बुद्धिं जनयेयुरेकया शक्त्या तदा गवादयोऽप्येकया शक्त्या गोबुद्धिं जनयन्त्विवति जातिमात्र-

---

१. कारणताया इति काश्मीर पुस्तके ।

२. सदभिन्नम् । ३. गोत्वाविशिष्टे इति मुद्रिते ।

**किञ्च स्वरूपसत्त्वं स्वरूपाद् घटाद्यात्मनो नाधिकम्, असतोऽपि स्वरूपं स्वरूपमेव। न हि असन् घटादिर्न घटादिः; तथासति 'घटादीनं' इत्यपि न स्यात्, असतोऽघटादित्वात्।**

---

मुच्छिद्येत इत्याशयेनाह–**अनुगतबुद्ध्याधानपदेऽभिषिञ्चतेति**। अनुगतबुद्ध्यादिराधीयते अनेनेति। अनुगतबुद्ध्याद्याधानं सामान्यम्। तत्पदे-तत्स्थाने। पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु[१] इत्यमरः। अभिषिञ्चता निवेशयता। जातिमात्राय मनुष्यत्वजातिरपि त्वद्गता नाशिता स्यादित्यर्थः।

वस्तुतस्तु अनुगते धर्मिणि अनुभूयमाने च न शक्त्या अन्यथासिद्धयितुं शक्यते तस्या अतीन्द्रियत्वात् इति त्वया जातिं विहाय एवंविधबौद्धमत प्रवेश एव क्रियत इति भावः। तथा च स्वरूपस्य सहृरूपत्वाभावे अन्तर्भावितसत्त्वं चेदित्यनेनैवात्रापि दोषो दत्त इत्याशयः। ननु सामान्यसत्त्वमनुगत बुद्ध्यालम्बनमस्तु स्वरूपसत्त्वं तु कारणतोपयोगाननुगतमेवास्तु इति शङ्कते—माभूदिति।

ननु नास्त्येव कारणता अनुगता कार्यभेदेन कारणताभेदात्, नहि घटकारणता पटकारणता चैकेति चेत् घटकारणताऽपि दण्डचक्रादिनिष्ठा नैका स्यात् इष्यते च सा एका अन्यथा दण्डो घटकारणं चक्रं घटकारणमित्यनुगतमतिर्न स्यात्। नच घटनिरूपितत्वेन कारणताद्वयमनुगमय्य सा प्रतीतिरिति वाच्यम्। घटनिरूपितत्वस्य तत्संयोगतज्ज्ञानादिसाधारणत्वात् तन्निरूपितकारणता तु दण्डचक्रस्वरूपपर्यवसिता नैका इति।

किञ्च घटकारणमानयेति नियुक्तः सन्दिग्धः किं घटकारणमानेयमिति सन्देहादपि कारणता सामान्यतो घटीया अभ्युपेया। किञ्च कारणताया अनुगताया अस्वीकारे कार्यं सकारणकं कादाचित्कभावत्वादित्यनुमानमपि न स्यादिति दिक्। स्वरूपशब्दस्य सच्छब्दस्य चार्थभेदे स्वरूपसत्त्वहानिः अभेदे तु असतोऽपि कारणत्वमविरुद्धमित्याह–**किञ्चेति**। घटादेरात्मा पृथुबुध्नोदेशभारत्वादि स्वरूपमुच्यते। न ततोऽधिकं स्वरूपसत्त्वमस्ति तच्चासतोऽपि। न चासतोः निःस्वरूपस्य कथं रूपमिति वाच्यम्? नहि निःस्वरूपत्वमेव असत्त्वं घटादेः स्वरूपस्य अनुभूयमानत्वात्[२] किन्तु बाध्यत्वमेव तस्यासत्त्वं ननु निःस्वरूपत्वमित्यर्थः। तदेव स्फुटयति **न ह्यसन्निति**। असन् घटादिरित्यनूद्य तत्र घटादिर्नेति निषेधो विधेयः ततश्चासतो यदि घटादित्वं नास्ति तदा अनुवादानन्तरा[३] निषेध-

---

१, कोटिषु इति काश्मीर पुस्तके।

२. अननुभूयमानत्वात् मुद्रितपुस्तके।

३. अनुवादन्तरात् इति आदर्शपुस्तके पाठः।

**अथ सदपि सत्तामनन्तर्भाव्य कारणम्, तदानीमसदपि तत्तथास्तु, सत्त्वासत्त्वयोः कारणकोट्यप्रवेशाविशेषात् ।**

**अथ सत्ता न कारणकोटिनिविष्टा, किन्तु कारणत्वं सत्त्वम्, नियतपूर्वसत्तां हि कारणतां मन्ये इति मन्यसे; तर्हि मत्पक्षेऽपि सैव कारणताऽस्तु । तर्हि कारणस्य सत्तामभ्युपगतवानसीति घट्टकुट्यां प्रभातमिति चेन्न ।**

**भावानवबोधात् । सत्तामसतीमभ्युपगच्छताऽपि सत्ताऽभ्युपगतैव । अन्यथा काऽसौ असतीति ।**

---

धीर्नस्यादधिकरणशून्यस्याभावस्य ज्ञानासम्भवात्, अतोऽस्त्यसदपि घटादिकं स्वरूपवदेवेति स्वरूपसद् (ह) गर्भं कारणत्वमसतोऽपि दुष्परिहरमित्याशयः । प्रतिषेध-प्रतियोगित्वेन घटादिरेष्टव्य इत्यर्थ इति तु विद्यासागरः ।

ननु असतो घटादेर्घटादित्वं न निषिध्यते किन्तु सतो घटादित्वं निषिध्यते घटादेर्वा असत्त्वं निषिध्यत इति चेन्न । तथाप्यधिकरणप्रतियोगित्वाभ्यामसतः स्वीकारापत्तेः । नच घटः सन्नित्येवं निषेधार्थः तथापि स्वरूपसत्तया सिद्धसाधनतापत्तेः । उपलक्षणत्वपक्षं दूषयति अथेति ।

**तत्तथास्तु इति** । यथा सत् सत्तामनन्तर्भाव्यकारणं तथा असदप्यसत्वमनन्तर्भाव्यकारणमस्त्वित्यर्थः । कारणस्यासत्त्वं नोपपद्यते कारणत्वस्यैव सत्तात्मकत्वादित्याशङ्कते--**अथेति** । इदञ्च वौद्धमतम् । कारणत्वस्य भावत्वव्याप्तत्वात् तन्निवृत्तौ तदपि निवर्तत इत्याशङ्कार्थ इति तु विद्यासागरः । तच्चिन्त्यम् । घटादेरपि भावत्वाऽङ्गीकारादिति । **घट्टकुट्यामिति** । शौल्किकभिया निशायां मार्गान्तरेण गच्छतः क्षपितमिशस्य मार्गतो भ्रष्टस्य घट्टकुट्यां=शौल्किकशालायां, कस्यचिद् वञ्चकस्य चतुरंमन्यस्य प्रभातं=प्रातःकालः, तथा तव सत्त्वाद्यापत्तिभिया बौद्धभाषया वञ्चयतः सत्वादि[2] बौद्धस्येव आपतितमिति भावः । बौद्धानामर्थक्रियाकारित्वमेव सत्त्वम् अस्माकं तु कारणतारूपा सत्तापि न सती बाध्यमानत्वादिति यो भावस्तदनवबोधादित्याह—**भावानवबोधादिति** । **अन्यथा काऽसावसतीति** । असत्येव कारणतेत्यस्मन्मतं न बौद्धमतं तदन्यदिति भावः । यदि सत्ता नाभ्युपेयते तदा किमुद्दिश्यासत्त्वं विधेयमिति गर्वनिष्कर्षः ।

ननु यदि सत्ता स्वीक्रियते तदा यत्रैव सा तत्र न तदसत्ता विरोधादिति शशशृङ्गादावेव तदसत्ता अस्तु स्वरूपसत्तात्मककारणतापक्षे तु घटादिस्वरूप-

---

१. यथा सत् सत्तामन्तर्भाव्य कारणं तथा असदपि असत्त्वमनन्तर्भाव्य कारणमिति आदर्श पुस्तके पाठः । यथा सत् सत्तामनन्तर्भाव्यकारणं तथा असदपि असत्त्वमन्तर्भाव्यकारणमिति । मुद्रितपुस्तके पाठः उभयमपि न युक्तम् ।

२. सत्त्वादौ पाठः आद० काश्मीर पुस्तके ।

**त्वमपि किं सत्तां तत्सत्तामन्तर्भाव्य कारणत्वमिच्छसि ? न त्वेवम्; पूर्ववत् क्वापि सत्तात्यागो वा अनवस्थायां वा पर्यवसानं स्यात् ।**

**असत्त्वाविशेषात् कारणनियमः कथं स्यादिति चेन्न, सत्त्वाविशेषेऽपि तुल्यत्वात् ।**

**सत्त्वेऽस्त्यन्वयव्यतिरेकानुविधानं तस्य, तज्जातीयस्य वा । त्वत्पक्षे तु असत्त्वाविशेषाद् व्यतिरेकः । परं सोऽप्यनियतः, यदा कारणाभावस्तदा कार्या-**

---

स्यानुभवसिद्धत्वात् = निःस्वरूप एव तन्निषेधो युक्त इति चेन्न । या हि सत्ता कारणता सा सत्ता जात्यात्मिका चेत्तदा स्वस्यां स्वस्या अभावात् असत्येव । अथ क्वापि स्ववृत्ति सा सती-तदाहुः-

"वस्तुत्वमपि सामान्यं व्यक्तिजात्यन्तराश्रितम्" ।

इति जात्यन्तरमेव तस्याश्रयः स्वं तु स्वत एव वस्तु वस्त्वभिन्नमिति चेन्न । अपरे तु मन्यन्त इत्येवं तस्य खण्डयिष्यमाणत्वात् । यदि स्वरूपात्मिका तदापि तस्या अबाध्यत्वरूपता न सिद्धेत्यतोऽसतीति तत्रैव सत्तानिषेधो नानुपपन्नः । स्वरूपसत्तेति निषेधो हि व्याहतः । स्वाभिप्रायं प्रकाश्य पराभिप्रायं पृच्छति त्वमपीति । पूर्वं क्षणसत्ताकारणत्वमिच्छंस्त्वमपि कारणविशेषणीभूतामन्यां तत्सत्तामन्तर्भाव्येच्छसि इत्युक्ते, पूर्ववाद्याह--न त्वेवमिति । इत्थमेवमपोष्यत इत्यर्थः । पूर्ववदिति अनुभूति-स्वरूपसंमतपाठः । स च मैवं तथा सतीति पूरणमेव संयोज्यः । किंवा नन्वेवमित्य-स्याकृत्या सिद्धान्तग्रन्थता । ननु भो एवं सति[1] पूर्ववदित्यादिना । यद्वा नत्विति सिद्धान्तवादिन एव कोमलोक्त्या परिहारोऽयं शेषो विद्यासागरस्यापि सम्मतः, तथा दाक्षिणात्यस्य गुण्डसमभट्टस्यापि । क्वाचित्कस्तु नत्वेवमितिपाठः स तु [2]कण्ठकोद्धाररूपेण व्याख्येयः ।

भ्रान्तः शङ्कते—**असत्त्वाविशेषात्** = बाध्यत्वाविशेषात् । घट एव जलाहरण-साधनं न वह्निरिति नियमः कथमित्यर्थः । स्वरूपसत्तैव कारणतोपयुक्ता सा च घट एवास्ति न वह्नाविति वस्तुगतिस्तां निगूह्य प्रतिवन्द्या परिहरति--**सत्त्वविशेषेऽपीति** । भवदभिमताबाध्यत्वाविशेषेऽपीत्यर्थः । न चैवं मतानुज्ञा स्वपक्षे दूषणस्य तर्हि समाप्तीत्यादिना परिहृतत्वात् तथापि चेदयमेवं वदति तथायं प्रतिवन्द्यैव बोधनीयः कुमतिवाङ्मनसी विषयादीत्याशयात् । किञ्च मतानुज्ञाऽपि किं प्रति-वादिनं परिहृत्योद्भावनीया अपरिहृत्यैव वा । आद्ये तवापि मतानुज्ञा अस्त्येव

---

१. सन्ति इतिमुद्रितपुस्तके पाठः ।

२. कर्तृकोद्धाररूपेण इति कश्मीरपुस्तके पाठः ।

**भावावश्यम्भावानभ्युपगमात्, नित्यासतः कारणस्यासत्त्व एव कदाचित्कार्योत्पादात्। अन्वयस्तु न क्वचिदपीति चेन्न, तुल्यत्वात्। अन्वयो नास्तीत्यभ्युपगच्छताऽप्यन्वयोपगमात्। अन्वयस्यापि सत्तान्तर्भावेन कथितदोषापत्तेः।**

एतेन—

**'आशामोदकतृप्ता ये ये चोपार्जितमोदकाः।**
**रस-वीर्य-विपाकादि तुल्यं तेषां प्रसज्यते॥'**

---

मयापि तवाज्ञानमुद्भावनीयम्। बहुधोक्तमपि त्वया न [1]बुद्धमिति। असतः कारणतामुपपाद्य तस्याग्राहकपूर्वपक्षनियम[2]पूर्वकं व्युत्पादयति—**सत्त्वे इत्यादिना कथितदोषापत्तेरित्यन्तेन**। तज्जातीयस्य वेति अजनितफलस्यान्वयरहितस्यापि संग्रहार्थम्। व्यतिरेकः परं केवलं[3] नान्वय इत्यर्थः। वेदाः प्रमाणमित्यत्रेव नपुंसकलिङ्गस्योपपत्तिः। अस्तु तर्हि व्यतिरेकादेव कारणतावगमो नेत्याह—**सोऽप्यनियत** इति।

( उक्ताशङ्कापरिहरणेन प्रतिबन्दीस्थापनम् )

**तुल्यत्वात्**—स्वरूपसत्ताया घटस्याप्यन्वयोपगमात्। दूषणान्तरमाह-अतएव[4] वदता त्वया निषेध्यत्वेनान्वयोपगमात्। अपिशब्द उपगमादित्यनन्तरं योज्यस्त्वार्थिन चासौ व्यतिरेकः परमित्यत्रोक्तव्यावर्त्यतया स्वरूपान्वय इति। अन्वयस्तु न क्वचिदपीत्युक्तमतो न युक्तम्। तथा च यादृशं ग्राह्यं ग्राहकमपि तादृशमिति यक्षानुरूपो बलिरित्याशयः। नचासावत्रेति वाच्यम् तथा च बलि प्रतियोगत्वानुपपत्तेः। एवं निरुत्तरे प्रतिवादिनि स्वमते स्वरूपसत्त्वमादाय प्रतियोगितोपपत्तेर्न पारमार्थिकत्वापेक्षायामपि तथापि पारमार्थिकोऽन्वयो हि प्रयोजकः स इह नास्तीति यदि कश्चित् ब्रूयात् तं प्रत्याह—**अन्वयस्यापीति**।

( बाधकान्तरपरिहरणम् )

आशया निर्मिता मोदका मनोराज्यनिर्मिता मोदका यै स्तेऽपि तृप्ताः स्युः, तत्रेष्टापत्तौ बाधकमाह-**रसेति**। उपार्जितमोदकानां रसवीर्यविपाकपुष्टयाद्यः स्युः। रसोऽम्लादिवेत्यपव्याख्यानं विद्यासामरस्य तस्य भोजनाजन्यत्वात्। आद्यो धातुरेव रस इति मिश्राः। रसः-शुक्रं, वीर्य-बलं विपाकः-पुरीषलोहिताद्यात्मकः

---

१. बुद्धिमिति आदर्शपुस्तके मुद्रिते च पाठः।

२. निर्वाहपूर्वकम्।

३. परं केवलान्वयः इति आदर्शपुस्तके काश्मीरपुस्तके च पाठः।

४. अन्वयोनास्तीति वदता इत्यर्थः।

**इत्यस्यापि बाधकत्वमाशामोदकायते। सत्तान्तर्भावानन्तर्भावाभ्यां प्रत्यादेशात्, आशामोदकादिनाऽपि च रसवीर्यविपाकादिजननात्। तदसत्कथं कार्यं स्यादिति चेन्न, सत्तामन्तर्भाव्य कार्यत्वोपगमे कारणवत्कार्येऽपि उक्तदोषस्य, अनन्तर्भावे वाऽविशेषस्य पूर्ववदावृत्तेः। तस्मात्—**

**पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।**
**हेतुतत्त्वबहिर्भूत-सत्त्वासत्त्वकथा वृथा॥ ५॥**

**आस्तां प्रतिबन्दिग्रहाऽऽग्रहः। कथं पुनरसतः कारणत्वमवसेयम्? प्राक्सत्त्व-**

---

परिणामः। तस्य प्रसङ्गस्य बाधकत्वमाशामोदकवदाचरतीत्यर्थः। सत्कारणत्वे[१] हि कार्यसत्त्वं वाच्यं तस्य च प्रागेवखण्डितत्वात्तत्र पर्यवसानाभावे तर्काभासत्व-मितिभावः। स्वाप्नकल्पितादेव कार्योपगमादिष्टापत्त्या चायं तर्काभास इत्याह— **आशामोदकादिनापि चेति।** नच जाग्रत्यपि तत्प्रसङ्गः यथादर्शनं कार्यकारणता-दर्शनात्। नहि स्वप्न इव जाग्रत्यपि तद्दर्शनमस्ति तस्मात् जाग्रतिस्वरूपसतः एवासतः फलमिति तथापि कारणत्वस्य कार्यनिरूप्यत्वात् असतस्तु कार्यत्वाभावात् तन्निरूपितकारणतानुपपत्तिरित्याशयेन शङ्कते—

असतः कार्यत्वम्

**तदसत्।** तत् रसवीर्यविपाकादिस्वाप्नम्। तथा च तुल्यतया उपार्जित-मोदकादपि असत्त्वे कार्योत्पादकत्वं न स्यादिति स्वीक्रियतां सत्तेति भावः। **कथ-मिति।** प्रागसतः सत्तासमवायो हि कार्यत्वं तत्कथमसति स्यादिति भावः। **सत्तामन्तर्भाव्येति।**

अन्तर्भावितसत्त्वं चेत्कार्यं स्यात् तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कार्यं स्यात् तदसत्ततः॥

इत्युक्तदोषापत्तेरित्यर्थः। अविशेषस्य सतीव सत्यपीत्यर्थः। स्वरूपसत्त्व-मेव च कार्यघटकं ननु सत्तासमवायो ध्वंसस्याकार्यतापत्तेः कारणताननुगमदोषवत् कार्यताननुगमस्यादोषत्वाच्चेति तु भावः। एवं कार्यत्वानिरूपणद्वारं कारणत्वस्या-नुपपन्नत्वं परिहृत्य पूर्वोक्तमसत्कारणमुपसंहरति—**तस्मादिति।**

( हेतुत्वे सत्त्वासत्त्वविचारस्यानर्थक्यम् )

नौ आवयोः तुल्ये इति सति सप्तमी। **हेतुतत्त्वम्**—हेतुत्वम्। ननु पूर्व-सम्बन्धिनियमहेतुत्वं यद् ग्राह्यं तदेवासति नास्तीत्यन्वयव्यतिरेकाभ्यां किं ग्राह्यं

---

१. अस्य हि सत्कारणत्वे विचार्यं रसालं वाच्यम् इति आदर्श पुस्तके पाठः।

**नियमस्य विशेषस्यानभ्युपगमाद्, असत्त्वस्य चाविशेषादिति चेन्न; 'इदमस्मान्नियत-प्राक् सद्' इति बुद्धया विशेषात् ।**

**भ्रान्तैवं बुद्धिगोचरेऽतिप्रसङ्ग इति चेन्न, यादृश्या हि धिया त्रिचतुरकक्षा-बाधाऽनवबोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः केवलं ततः परास्वपि कक्षासु बाधात् पूर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामह इति विशेषः ।**

---

या च प्रतिवन्दिर्दत्ता तावन्मात्रेण न पदार्थसिद्धिर्भवति मम तव चान्येन प्रतिक्षेप-सम्भवादित्याशयेनाशङ्कते—**आस्ताम् इति ।** प्रतिबन्दीग्रहे–प्रतिबन्द्युपन्यासे ग्रह आवेशः । ननु सतोऽपि प्राक्कालान्तर्भावेन (ण) नियमोऽस्त्येवेत्याशङ्कयाह—**असत्त्वस्य चाविशेषादिति ।** सत्ता प्राक्कालनियम्याभावात् असत्ता तु सार्वदिकी नाव्यवहितप्राक्कालमात्रवृत्तिरिति भावः । असतोऽपि बुद्धिविशेषरूपा सत्तास्ति सा प्राक्कालनियम्यैव प्राक्कालगतत्वात् तस्या इत्याशयेन परिहरति । **न इद-मस्मान्नियतप्राक्सदिति भ्रान्तैवं[1] बुद्धिगोचर इति प्रसङ्गः ।** रासभेऽपि कारणता-प्रसङ्ग इत्यर्थः ।

**यादृश्या धियेति ।** कारणताप्रमापकतया भवतोऽभिमता बुद्धिः, सैव मम कारणता इत्यर्थः । **ममापि कारणता निश्चयेति ।** कारणतेति वक्तव्ये कारणता-निश्चय इति निश्चयग्रहणं तस्याः पारमार्थिकत्वाभावज्ञापनार्थम् । यद् वा कार-णतासहितो निश्चयः तादृशबुद्धया विषयीकृतस्यैव कारणतानिश्चयश्च अन्वयव्यति-रेकाभ्यां बुद्धिविशेषः कारणतेति फलत उक्तम् । यद् वा कारणता च सा निश्चयेति निश्चयात्मिकेत्यर्थः । न च पूर्वनिपातापत्तिः विषयीकृतस्य निश्चयः, कारणताया एव विधेयत्वेन विशेषणत्वात् । ननु द्वित्रिकक्षाबाधशून्यत्वेन हेतुना [2]परकक्षाबाधाभावः कुतो नानुमीयते व्यभिचारादित्याह—**परदर्शनसिद्धस्तस्येति ।** तस्याप्यबाध्यत्वोप-गमे तदेव सर्वदर्शनसिद्धान्तः स्यादिति सिद्धान्तभेदानुपपत्तिरित्याशयेनाह—**अन्यथेति ।** न च नानादर्शनसिद्धान्तानामेव अत्यन्ताबाध्यत्वमस्त्विति शक्यं वक्तुं विरोधात् । न च विकल्पः अनुष्ठाने हि स भवति न तु वस्तुनीत्येकदर्शनपरिशेषः स्यादिति दिक् । यत्तु सर्वबाध्यत्वेऽपि दर्शनभेदः कुतः इत्याशङ्कय मैवमस्मद् दर्श-नस्याबाध्यत्वात् तथा च वक्ष्यति तत्स्वप्रकाशपरमार्थचिदेव भूत्वेति । तत्तुच्छम् । तत्राशङ्का ह्यनुपपन्ना बाध्यस्यैव भेदस्यात्यन्ताबाध्यताज्ञानाभावदशायां भेद-सम्भवात् । उत्तरमप्ययुक्तं तथापि न्यायमीमांसासांख्यादिदर्शनभेदस्यासमाहित-

---

१. ( भ्रान्तावतिप्रसङ्गाभावः )

२. हेतुत्वापरकक्षाभावः इति काश्मीरपुस्तके हेतुता परकक्षत्वाभावः इति आदर्श पुस्तके ।

परदर्शनसिद्धान्तस्य भूरिकक्षाधाविनोऽपि ततः परकक्षाबाध्यमानत्वेन अतथाभावोपगमात् । अन्यथा एकदर्शनपरिशेषः स्यात् ॥

एतेन—असत्त्वाविशेषेऽपि कथं कस्यचित्पक्षस्य त्रिचतुरकक्षाधावित्वाधावित्वमास्तामित्यपि निरस्तम् ।

अनेवंबुद्धिविषयतादशायां को विशेष इति चेत् यदा कदापि तादृशबुद्धिविषयतैव । अन्यथा कथय कथमन्यदातनतादृशबुद्धिविषयतया अन्यदा सत्त्वं स्यात् । तदा सत्त्वमन्यदास्थेन गृह्यत इति चेद्, अन्यकालिकमेव तर्हि तत् तदातनकारणत्वोपयोगीति समानम् । तदेतत् संवृतिसत्त्वमिति गीयते ।

त्वात् । किञ्च इदं हि वचनं सर्वशून्यतावादिनो न च तेन पारमार्थिकं किञ्चिदपीष्यते, न क्रमेणापि बाधो बाध्यया अबाध्यया वा धिया । आद्ये बाधस्यासत्त्वं ततश्च तत्पूर्वधिग्रामनपोदिते प्रामाण्ये ताभिर्वस्तुव्यवस्था दुर्वारा । अन्त्ये बाधो वस्तुतत्त्वाधीनसत्त्वया वाच्यः इति सिद्धं वस्तुतत्त्वेन । नच तत्राप्यबाधितबुद्धिविषयत्वमेव शरणमिति वाच्यम् । तत्राप्येतद् विकल्पावतारात् । किञ्च अन्यथात्वबोधनं बाधः तत्प्रमापणं वा । आद्ये बाधिकापि बाध्यास्यादन्त्ये तत एव वस्तुव्यवस्थितिरिति तेषामेव खण्डनोद्धरणाभासोऽप्यपास्तः । व्यवहारदशायामबाध्यमानां बुद्धिमादायैव सर्वनिर्वाहात् व्यवहारदशायामन्यथात्वबोधनमेव बाधः । सच बाधकत्वाभिमतायां नास्तीति न किञ्चिदेतत् ।

( असत्त्वाविशेषेऽपि पक्षाणां विशेषावधारणम् )

एतेनेति । परसिद्धान्ते तथा दर्शनस्यापलपितुमशक्यत्वात् । यदा बुद्धिर्नष्टा नोत्पन्ना वा तदा घटस्य वह्नेर्जलाहरणकारणात् को विशेष इत्याशङ्कते—

( नियतप्राक्सत्त्वबुद्ध्यभावस्थले तादृशबुद्धिविषयतैवशरणम् )

अनेवमिति । तदा चाकारणत्वे कथं जलाहरणार्थी तत्र प्रवर्ततेति । यदा कदाचिदिति । बुद्धिविशेषविषयता अत्यन्ताभाव एव बुद्धिविशेषयोग्यताख्याकारणता साच प्रागभावध्वंसकालेष्वस्त्येवेति भावः । अन्यदासत्त्वमिति । तादृशबुद्धिविरहदशायां नियतप्राक्सत्त्वस्य वस्तुनः कथं सिद्धिरित्यर्थः । तदा सत्त्वमिति । बुद्धिकालीनमेव कारणत्वमन्यदास्थेन यावत् [1]कारणताकालस्थायिनापि प्रमाणेनेत्यर्थः । अन्यकालीनं बुद्धिविरहकालीनं, बुद्धिविषयत्वमप्यन्यकालीनं यत्कारणत्वं तदुपयोगि तत् यदा कदाचिद् बुद्धेः सत्तैव बुद्धिविषयत्वाभावाभावाख्याया बुद्धियोग्यतारूपायाः कारणतायाः प्रयोजिकेत्यर्थः । अन्यः कालोऽस्ति अस्येत्यन्य-

१. यावत् कारणताकालमस्थायिना इति पाठः आदर्शपुस्तके ।

**असती सा न विशेषिका, सती सा नेष्टेत्यभिसन्धानेन संवृतिरपि सती**

कालिकम्। एतेन यद्यद्वस्तु केनापि न ज्ञायते तस्य कार्यं प्रति स्वरूपयोग्यता न स्यात् यथा अरण्यस्थदण्डादेरित्यपास्तम्। भवतापि तत्र तत्सिद्ध्यर्थं प्रमाणस्य अवश्यमुपन्यसनीयत्वात्। यदि कालोपधायके तद्बुद्धिरेव तत्र प्रमितिः नियतप्राक्सज्जातीयस्यैव कारणतारूपत्वात् तदा ममापि द्वैतबुद्धिः कारणता। वस्तुतस्तु अज्ञातस्य सत्त्वमेव नास्ति कुतः कारणत्वम्। यत्त्वेवं सति गृहान्निर्गतस्याज्ञानकाले पुत्रस्यासत्त्वात् क्रन्दनापत्तिः। तत्र असत्त्वनिश्चयस्यैव तद्धेतुत्वात्। अन्यथा भवतोऽपि पुत्रमरणस्य वस्तुसतोऽनिश्चयदशायां तदापत्तेः। एतेन रूपोपलब्धिनिर्णयस्य नयनस्य प्रागसतश्चाक्षुषज्ञानमपि समाहितम्। उत्तरकालीनाया उपलब्धेः प्रागभावात्मिकायाः प्राक्कालीनाया ध्वंसात्मिकाया वा योग्यतायाः स इति। नहि भवतोऽप्यननुमितस्य चक्षुषः सत्त्वं विना प्रमाणं सेद्धुमर्हति। का वा गतिः स्वाप्नचाक्षुषज्ञाने, नहि स्वाप्ने राजरथतुरगादिकं न पश्यति तत्र चक्षुषोऽभावात् मानस एव तादृशभ्रम विशेष इति चेत् तुल्य एवायं जगद्भ्रमोऽपि प्रत्यक्षसिद्धो विनैव नयनं दोषविशेषात् अन्धस्य तादृशदोषो नास्ति फलाभावात्। दोषोऽपि च ज्ञानविशेषविषयीभूतो यः कश्चित् फलोन्नेय इति न किञ्चिदेतत्। ननु बुद्धिः सत्तेति न लौकिकव्यवहारतः सिद्धमिति चेत् सिद्धमेव **बौद्धानामित्याह—तदेतदिति**। गीयते–बौद्धैरिति शेषः। तेऽपि लोका एव नहि पामरव्यवहाराच्छक्तिग्रहो न भवतीति शक्यते वक्तुं [1]पिकनेमाधिकरणविरोधात्। संवृतिस्तावत् स्वकीयेन रूपेण सती स्वकीयया सत्तया विषयस्यासत्त्वम्। संव्रियत इति संवृणोतीति वा संवृतिः लौकिकबुद्धिः। यदाहुः—"पररूपं स्वरूपेण यथा संव्रियते धिये"ति। संव्रियते पिधीयते आच्छाद्यते, विद्यमानमेवासत्त्वम् असदितिव्यवहारयोग्यं क्रियते इत्यर्थः। तया संवृत्या सत्त्वं लौकिकपदार्थानां व्यवह्रियते। तदाहुर्बौद्धाः—

> द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशनाः—
> लोके संवृतिसत्यत्वं सत्यं च परमार्थतः। इति।

तदेतत् यन्मयोक्तं बुद्धेः सत्ता तयैव व्यवहार इति तदेव तैरपि कथ्यते तथा च कृतमर्थैरिति तेषामपि भावः।

वार्तिककृदुक्तं दूषणं तर्हि कथं शक्यमुद्धर्तुं, तथाहि—

> यदा संवृतिसत्येन सर्वमेतत्प्रकल्प्यते
> ज्ञानमात्रेऽपि कस्मात्ते मृषाग्रहोऽर्थकल्पने इति।

---

१. पिकनेमाधिकरणम्—१।३।५।

नैवेति पृच्छन् प्रतिवक्तव्यः । विज्ञानं तावद् व्यवहारोपपादकतया द्वाभ्यामप्यनुमतम् । तस्यापि जिज्ञासायां त्रिचतुरकक्षाविश्रान्तगवेषणस्य यदि सत्तोपपन्ना

बौद्धमतालम्बनेन शावरभाष्यमाक्षिप्य तन्मतदूषणेनाक्षेपः परिहृतः ।

[1]संवृते र्नतु सत्यत्वं सत्यभेदः कुतोऽन्वयम्
सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥१॥
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयो- ।
विरोधान्नहि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥२॥
तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थमुपन्यासो लालावक्त्रासवादिवत् ॥३॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।
कल्पनापि ह्यभिन्नस्य नैव निर्वस्तुके भवेत् ॥४॥
तस्माद् यन्नास्ति नास्त्येव यद्वास्ति परमार्थतः ।
तत्सत्त्वमन्यत्मिथ्यैव न सत्यद्वयकल्पना ॥५॥
स्वप्नादिभोगवच्चापि योपभोगस्य कल्पना ।
तन्निवृत्यर्थमेवेह परमार्थे प्रयत्यते ॥६॥
नहि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते ।
यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥७॥
परमार्थफलप्राप्तिमिच्छद्भिस्तेन यत्नतः ।
प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुनि ॥ इति ॥८॥

श्लोकानां चायमर्थः -ज्ञानमात्रपक्षेऽपि हि बौद्धानां संवृत्या प्रमाणादिव्यवहारोपपत्तौ अर्थानां पारमार्थिकत्वकल्पनाग्रहो निश्चयो वृथा । सत्यं संवृति सत्वेन बौद्धैरिदमुपपाद्यते, नत्वेतद् युज्यते योऽयं संवृत्तिसत्यं परमार्थसत्यमिति परमार्थभेदस्तैराश्रितः स नोपपन्नो मिथ्यापर्यायत्वात् संवृतिशब्दस्य तस्य सत्यशब्दसमभिव्याहारानुपपत्तेः । नह्ययं विभीतकादिषु अक्षशब्दवत् संवृत्तिपरमार्थयोः साधारणः शब्दो नानार्थ एवेति[2] । नच सत्यत्वं सामान्यं मृषार्थपरमार्थयोः शक्यं विरोधात् । समानानां भावः सामान्यं, नच विरोधिद्वयं समानं नहि सम्भवति विरुद्धयोः धर्मत्वं च सामान्यम् अन्यमात्रयोरपि अनुगतबुद्ध्यभावे नास्ति सामान्यम् । यथा वृक्षसिंहयोर्वृक्षत्वं किं पुनरतिविरुद्धयोः तेन सत्यशब्दोऽयं न

१. श्लोकवार्तिकस्य निरालम्बनवादे कारिका सं० ६-१३ यावत् ।
२. इदमाहुस्ते शब्द एव समानो नार्थं इति काश्मीरपुस्तके अधिक : ।

**भविष्यति, तदा सता तेनेदमुपपादितं भविष्यति। अथासत्ता तस्य पर्यवसा-**

नानार्थो न राजादिशब्दवत् जातिशब्द इति भावः। तेन लोकात् वञ्चयितुमेव मिथ्यापर्यायोऽपि संवृतिशब्दो बौद्धविदग्धैरनुद्वेगकरतया मिथ्यात्वे एव विवक्षिते स्व नास्तिक्य परिहारेच्छया प्रयुक्तो लालायामिवं वक्त्रासवशब्दः संवृत्तिरिति उपन्यास इति योजना। कल्पनेति वाचोयुक्तिरपि नास्तिक्यपरिहारार्थमाश्रिता इत्याह—**कल्पनेति**[१]। कल्पनामात्रजीवातुनैव बाह्येन लौकिकः सर्वो व्यवहार इत्यपि निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य कल्पनया भेत्तुमशक्यत्वात्। दुर्भणं क्वचिद् भिन्नं हि रूपान्तरं क्वचित् कल्पनास्पदं भवति शुक्ताविव रजतरूपं यस्मात्तु न किञ्चिदभिन्नमस्ति तत्केन रूपेण कल्पनामित्येतदाह—**कल्पनापीति**। ननु त्रिविधं तत्त्वमातिष्ठामहे सत्यमसत्यं संवृताख्यमिति। संवृत्तिर्हि नात्यन्तमसद्भवति व्यवहाराविसंवादात्। नापि सदेव प्रमाणान्तरविरोधात् जात्यादिरिव अतो न संवृतिर्मानमेव नाप्यमानमेवेति विधान्तरमेवेति युक्तं तदाश्रयो व्यवहार इत्यत आह—**तस्मादिति**। यतः खलु संवृतिर्मिथ्याज्ञानं न वस्तुरूपक्लृत्यै प्रभवति। तस्माद्[२] यदि व्यवहाराङ्गतया बाह्यमस्ति तर्हि परमार्थतः एवास्ति तदेव सत्यमुच्यते अन्यत्तु सांवृतं मिथ्यैव नतु सत्यद्वयकल्पना आत्मानं लभते। तन्त्रेण तद्वृत्तस्योभयत्र सम्बन्धः परमार्थत इति च नास्तीतिपूर्वेण सम्बध्यते। किञ्च स्वप्नावगतार्थाः क्वचिच्छोकहर्षादिव्यवहारहेतवो दृश्यन्ते अतस्तेऽपि सांवृता एव तद्वच्च बाह्यार्थाभ्युपगमे स्वप्नादिभोगतुल्य एव शुभाशुभकर्मफलोपभोगो भवेदतस्तन्निवृत्त्यर्थमेव बाह्यार्थस्य परमार्थसत्यत्वे प्रयत्न इत्याह—**स्वप्नादीति**। स्वप्नतुल्यत्वे दोषमाह—**यादृच्छिकत्वादिति**। नहि स्वप्नसुखं मे भवत्विति विद्वांसः प्रयस्यन्ति। यादृच्छिकं हि सुखम् अगणितसाम्परायैहिकं निमित्तं न तत्प्रयस्यतोभवतीति बुद्ध्या विद्वद्भिरुदासीनैरेव आस्येत इति न क्वचिदपि प्रयत्येत[३]।

( प्राक्सत्त्वबुद्धिविषये सत्त्वासत्त्वानुपयोगनिरूपणम् )

तद् दूषयति—**असती सेत्यादिना**। न विशेषिका न स्वसत्तया परासत्त्वस्याच्छादिका असति सद्व्यवहारस्य प्रवर्तिका न भवति। **सती च नेष्टेति**। सर्वशून्यवादिनस्तव योगाचारनयप्रवेशापत्तेः योगाचारमतमेव वार्तिककृता दूषितमिति

१. कल्पनेति प्रतीकं न मूलग्रन्थस्य किन्तु श्लोकस्य टीकायां निर्दिष्टस्य।

२. तस्मात् यत् परमार्थतो नास्ति इति निरूप्यते न तत् संवृत्या सद्भवितुमर्हति किन्तु नास्त्येव तत्। यत्तु यावदव्यवहारमविसंवादि तदस्त्यैव। नह्यसतः कदाचिदपि व्यवहारहेतुता सम्भवति। यदेवार्थादि व्यवहारकारि तदेव परमार्थसदिति वः सिद्धान्तः। अतः कथमर्थक्रियासत्त्वेऽपि जात्यादीनामसत्यत्वं तस्मात्।

३. प्रयत्येति पाठः।

**स्यति, तदाऽसत्तैव तेनेदमुपपाद्यत इति स्वीकर्तव्यम्, भ्रमविषयेणेव भ्रमे विशिष्टताव्यवहारः ।**

**अविचार्यैव तावत्तस्य सदसत्त्वं विचार आरब्धव्यः, अन्यथा प्रथमेव मति-कर्दमे कथारम्भणमशक्यमापद्येत । स्वीकृतं च भवताऽपि भविष्यदादिविषये**

---

तेषामयमभिप्रायो न सम्भवतीत्यन्यथा व्याख्यायते। संवृतिः मिथ्याधीः न वा । यदि बाह्यस्य असतः सत्त्वं विषयीकरोति तदा मिथ्यैवेति मिथ्याविषयकत्वात् कथं ततः सांवृतं सत्त्वं सिद्धयेत् अथ सा न मिथ्या तदा असतः सत्त्वमविषयीकुर्वती एव वाच्या तथा सति विशेषिका सद् व्यवहारहेतुर्न स्यात् सत्त्वा विषयत्वात् । ततश्चा-सतीत्यस्य सत्त्वाविषयिकेत्यर्थः । सती चेत्यस्य सत्त्वविषयिका तथा सति मिथ्या-धियः सांवृतं सत्त्वं न सिद्धयेदिति । यदि अमिथ्या तदा बाह्यसिद्धयापत्तिः सा च तव नेष्टा सांवृतं सत्त्वं बाह्यस्य[१] इष्यत इति चेत् तर्हि व्यवहारविसंवादिसत्त्वेन पार-मार्थिकत्वं बाह्यस्य स्यादिति तेषां हृदयम् । ततश्च मां प्रत्यपि दूषणं तदैव सम्भवति यदि मया तद्धियो यथार्थत्वं स्वीक्रियेत । न चैवं तर्हि व्यावहारिकी सत्तापि नास्ति चेत् कथं व्यवहारसमर्थनम्, त्रिचतुरकक्षासु बाध्यमानया धियैव व्यवहारसिद्धिः— व्यवहारनिष्पत्तिः । सा च व्यवहर्तव्य ज्ञानेनैव न तु तत्तत्प्रमयैव क्वचिदप्रसिद्धेः भ्रमविषयव्यवहारे देहात्मव्यवहारे चानादौ व्यभिचारादिति निगर्वः । सत्ता-जिज्ञासायाम्—सम्यक्त्वजिज्ञासायाम् । **भ्रमविषयेणेवेति** । शुक्तौ अवर्तमानेन रजत तादात्म्येन रजतमितिविशिष्टव्यवहारः सदसत्त्वं—सम्यक्त्वासम्यक्त्वे एवमुत्तर-त्रापि । यदि च नेदं वार्तिककृतोऽभिप्रायवर्णनं किन्त्वपरस्यैव कस्यचित् तदा यथाश्रुतमेव सम्यक् । परन्तु पूर्वमेवासतोऽपि ज्ञानस्य कारणतायाः प्रतिपादित-त्वात् पुनरूक्तता स्यादिति । असती न विशेषिकेत्यत्र भ्रमस्थले व्यभिचारः प्रागुक्तः, प्रमास्थलेऽप्याह—**स्वीकृतञ्च** ।

अतीतानागतयोर्विषययोरसतोरेव ज्ञानविशेषणतया विशिष्टव्यवहारनिदा-नत्वमिति । व्यवहारपदं ज्ञानपरं वा । नचानुमित्यात्मके तत्र न विषयो हेतुस्तथा सति ज्ञानस्य कर्मशून्यतापत्तेः । नचाकारकं कर्मेति अतीतानागतयोरपि केनाप्या-त्मना सत्त्वं स्वीक्रियते एव अन्यथा अतीतत्वानगतत्वाश्रयो न स्यादित्यस्वरसा-दाह—**शक्तिरिति** । कस्य कुत्र शक्तिरित्याशयविशेषसाकाङ्क्षायाः शक्तेरसदेव कार्यं विशेषकम् अन्यथा विद्यमानस्य सिद्धत्वेन कार्यतानुपपत्तेरिति भावः । शक्तिः पदार्थान्तरमेव, कारणताख्य उपाधिरेव वा । पादच्चरश्चौरस्तेनापहृतसर्वस्वे वेश्मनि यामिकस्य यामरक्षकस्य यज्जागरणं केवलमिन्द्रियक्लेशाय यथा तद्वत् । घटादिकं स्वरूपतः पृथुबुध्नोदरत्वादिस्वभावेन विशेषणतश्च घटत्वादिना च

---

१. "बाह्यस्य इष्टतइति" आदर्शपुस्तके काश्मीरपुस्तके च पाठः ।

**विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य, कारणशक्तेश्च विशेषकमसदेव कार्यम् ।**

**न च कालान्तरसम्बन्धिनी सत्ता तस्यैकत्र, अन्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति वक्तव्यम्; विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वाविशेषात् । प्रयोजनानुपयुक्ते काले तस्य स्वरूपतोऽवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तमनुहरति ।**

**तथापि कालान्तरस्थित्या घटादिकं स्वरूपतः विशेषणतश्च व्यवच्छिन्नं तद् विज्ञानेन स्वभावबलाद् स्वविशेषणत्वेनोपादीयते, न त्वेवमत्यन्ताऽसद् भवितुमर्हति, तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतयाऽनङ्गीकारात् कुत्र स्वभावतो विज्ञानं सम्बन्धि निरूप्येत ?**

---

व्यवच्छिन्नं स्वभाववलात् । स्वभावः स्वरूपसम्बन्धो विषयविषयिभावलक्षणः सम्बन्धस्तद्बलेनेत्यर्थः । **भ्रान्तिविषयेणेति** । नच संसर्गस्य तादात्म्यस्य वा तत्रैवासत्त्वमत्यन्तासत्वमिति वाच्यम् । तस्य तदतिरिक्तदेशसत्त्वेन भ्रमः साक्षी नवाऽन्य इत्याशयात् । एतेन वाह्यार्थासत्त्वे धर्माधर्मयोः फलार्थं विद्वान् न प्रवर्तेत इति दूषणमप्यपास्तम् । यादृशं फलं यद्वशेन विशिष्टे भवद्भिरभ्युपगम्यते तादृशस्यैव भवदभिमतसत्त्वस्य प्रतीत्याख्यसत्तास्वीकारेण यादृच्छिकत्वाभावात् । यस्तु पारमार्थिकी तस्य सत्ता नास्तीति जानाति स न प्रवर्तेतेति चेन्न । तस्यापि सत्ताज्ञानसत्त्वादेव प्रवृत्त्युपपत्तेः । सत्ताज्ञानमपि तस्य कथं विरोधिदर्शने सति स्यादिति चेन्न । समानप्रकारकत्वेनैव विरोधात् । नचैवं नेदं रजतमिति ज्ञाने प्रवृत्त्यापत्तिः । सत्त्वाभावनिश्चयात् सत्त्वसामान्याभावज्ञानस्यैव विरोधित्व— स्वीकारात् । एतेन कूटस्थनित्यमोक्षवतोऽपि बन्धज्ञानात् प्रवृत्तिरुपपन्ना । नहि बन्धाभावस्य परमार्थसतो ज्ञानं प्रवृत्तिविरोधिबन्धसत्ताज्ञानस्य प्रवर्तकत्वे तेनाविरोधात् । यस्तु बन्धसामान्याभावं जानाति स न प्रवर्तत एव असत्त्वं च प्रपञ्चस्य यो यत्र यदाकारेण प्रतीयते तस्य तत्र तेनैवाकारेणात्यन्ताभावः । शशविषाणादेस्तु न प्रतीत्यधिकरणात्यन्ताभाव इति ततो वैलक्षण्यं प्रपञ्चस्येति ।

( इति शून्यवादिमतेन प्रमाणाद्यसत्त्वेऽपि व्यवहारनिरूपणम् )

अथ विज्ञानस्य सत्त्वं स्वयं प्रकाशता च

बाह्यवस्तुनः परमार्थतोऽसत्त्वे ज्ञानमप्यपरमार्थसत् समानन्यायत्वाद् विषयशून्यस्य ज्ञानतायां लोकव्यवहाराभावात् । इन्द्रियादिद्वारकमनोवृत्तिविशेषे आत्मनो विचारविशेषे वा लौकिकाः ज्ञानशब्दं प्रयुञ्जते ज्ञेयासत्त्वे तदुपरक्तरूपस्य क्षणिकविज्ञानस्यासत्त्वं स्वयमेव प्रतिपन्नमिति नास्त्येव ज्ञानमपीति । विशिष्टेन प्रकृष्टेन ज्ञानेन योगान् माध्यमिकः—सर्वशून्यवादी योगाचारं मध्यमबुद्धिमपेक्ष्य,

**न; उक्तमत्राऽसतोऽपि तदेव स्वरूपं, तस्य नियतस्वरूपस्यैव नियतविशेषणस्यैवासत्त्वात्। अन्यथाऽतिप्रसङ्गात्, भ्रान्तिविषयेण दत्तोत्तरत्वाच्च इत्यलमतिप्रपञ्चेन।**

---

विज्ञानेन वदनशीलो विज्ञानवादी। शून्यवादिमतम् अपरे न मन्यन्ते इत्यादिना अलमतिप्रसङ्गेनेत्यन्तेनोपपाद्य योगाचारस्य बाह्यार्थशून्यक्षणिकविज्ञानस्य वस्तुसतः स्वीकर्तुं मतमुपन्यस्यति—**अपरेत्विति**। चेतसोविज्ञानस्य मनः प्रत्ययोमनस्तुष्टिः अनासादयन्तः अलभमानाः। मनः प्रत्ययो विश्वासः अविश्वासे युक्तिः शून्यत्वं विश्वस्य यदि वास्तवं तदा क्व शून्यत्वं शून्यत्वस्यैव धर्मस्य सत्त्वात्। अथावास्तवं तदा पूर्णत्वमेव। तस्याश्च स्वतः सिद्धिः परतो वा। आद्ये स्वप्रकाशतया ज्ञानरूपैव शून्यता। अन्त्ये शून्यता साधकस्यैव सत्त्वात् क्व शून्यता। किञ्च किं तच्छून्यं यस्य धर्मः शून्यतामिथ्या वा अलीकं वा असद्वा। अनिर्वचनीयं वा विचारासहं वा प्रपञ्च एव वा, तच्च सर्वमनुभवात् क्रियाविरोधाच्चानुपपन्नमिति शङ्करमिश्राः। तदाहुः न्यायाचार्याः[1]—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः
तद्बाधने बलिनि वेदनये जयश्रीः।
नो चेदसत्यभिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः॥इति॥

**सर्वथेदमसदेव विश्वमिति**। अनुभूयमानमिदं विश्वं ज्ञानज्ञेयाकारं ज्ञानेन ज्ञेयेन चोभयेन शून्यं वक्तुमनुत्सहमानाः सर्वप्राणिनामबाधितसिद्धत्वात् नीलाद्याकारप्रतिभासमानस्येति भावः।

इदन्तु परीक्ष्यं किं संविदाम् अयमौपाधिके नीलिमा किं वा बाह्यस्य स्वाभाविकः। तुच्छे तु विश्वस्मिन् निर्वीजः प्रतिभासो नावकल्पते। तत्र विज्ञानमेवेदम् अनादिवासनोपहितनीलाद्याकारमात्मगोचरम् एवं प्रकाशते इत्येव युक्तं केवलज्ञानेनैवोपपत्तौ ज्ञेयान्तरकल्पनायां गौरवात्।

---

१. आत्मतत्त्वविवेके उदयनाचार्याः इति। पृ० २३० काशी।

ग्राह्यभेदं=घटादिबाह्यार्थं तिरस्कृत्य धियो=ज्ञानस्य सम्बन्धो नास्ति। बाह्यार्थबाधके ब्रह्मसाक्षात्कारे जाते तु बलिनि द्वैतवादिमतेभ्यो बलवति वेदनये=वेदान्तशास्त्रे जयश्रीः। यदि तु प्रतिबन्धकवशात् साक्षात्काराभावः तदा विश्वं प्रतीयमानं तथ्यमेव व्यावहारिकसत्यत्वाभ्युपगमात्। जगतोऽलीकत्वकल्पनायाः कोऽवकाश इत्यर्थः।

## ३. संवित्स्वप्रकाशवादः

**अपरे पुनः चेतसोऽपि शून्यताऽङ्गीकारे मनःप्रत्ययमनासादयन्तः सर्वमिदमसदेव विश्वमित्यभिधातुं सहसैवानुत्सहमाना मन्यन्ते—विज्ञानं तावत् स्वप्रकाशं स्वत एव सिद्धस्वरूपम्। न खलु विज्ञाने सति जिज्ञासोरपि कस्यचित् जानामि न वेति संशयः, न जानामीति वा विपर्ययः, व्यतिरेकप्रमा वा। तेन जिज्ञासितस्य अतत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितत्वमानयति। अन्यथा हि जिज्ञासितप्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोल्लेखि-**

---

यदि च ज्ञानं स्वप्रकाशं न स्यात्तदा नीलाद्याकारोऽननुभूयमानस्य नेत्यनुभूयमानो नीलाद्याकारो ह्यस्य घटादेरेव स्यात् स्वप्रकाशे तु ज्ञाने आत्मनैव आत्मनि ज्ञायमाने नीलाद्याकारः स्वस्यैव स्वच्छस्यापि दोषवशाद् युक्त इत्याशयेनाह—**ज्ञानं स्वप्रकाशं स्वत एव सिद्धस्वरूपमिति**। ननु[१] नीलादिवत् प्रमिति स्वरूपं स्वसत्त्वे स्वयमेव प्रमेत्यर्थः। ननु ब्रह्मवादिनामिव स्वव्यवहारे प्रकाशानपेक्षप्रकाशमिति भावः। ननु नीलादि बाह्यवत् ज्ञानान्तराधीनसिद्धत्वरूपम्। एतेन बाह्यं चेत् पारमार्थिकं स्वीकर्तव्यं तदा तस्याप्रकाशत्वात्तत्सिद्ध्यर्थं ज्ञानमपि स्वीकार्यमिति गौरवं सूचितम्। तस्य स्वविषयत्वे मानमाह—**न खल्वित्यादिना**।

वस्तुतस्तु तस्य स्वाविषयत्वे ज्ञेयान्तरकल्पनापत्तिः अनुव्यवसीयमानत्वपक्षे घटज्ञानतज्ज्ञानपरम्परैव स्यादिति विषयान्तरसञ्चारानुपपत्तिरपि दोषः। गच्छतस्तृणादौ अजिज्ञासिते विपर्ययाद्यभावोऽप्रमितेऽपीति[२] तद्व्यावृत्तये—**जिज्ञासोरपीति**। जिज्ञासोर्विचारकस्यापि ज्ञाने संशयादिर्न जायते किं पुनः लौकिकस्येत्यपि शब्दार्थः। विपर्ययो–भ्रमः ज्ञाने ज्ञानभेदज्ञानम्, व्यतिरेकप्रमा–योग्यानुपलब्धि जन्यम् अभावावगाहि ज्ञानं न जानाम्येवेत्याकारम्। यद्यप्यात्मविशेष्यकान्येतानि ज्ञानानि विशेषणज्ञानाभावादेव न जायन्ते ननु ज्ञानस्य प्रमितत्वादेव तथापि ज्ञानधर्मिकं संशयाद्यनन्तरमिदं त्रयं स्यदित्यत्र तात्पर्यम्।

अथवा स्वप्रकाशज्ञानवादिनां प्राभाकराणामिव ज्ञानविशेष्यकज्ञानानामेव[३] अयमाकारः स च विशेषणज्ञानस्य कारणत्वानङ्गीकारेणैवोपपाद्यः। **अतत्त्वज्ञानव्यतिरेकप्रमाणामिति**। अतत्त्वज्ञाने च व्यतिरेकप्रभा चेति द्वन्द्वाश्रयणान्न बहुवचनासङ्गतिः। **आनयति**=आक्षिपतीत्यर्थः। स चानुपपत्त्येति तामाह—**अन्यथेति** जिज्ञासितव्यतिरेकोल्लेखिज्ञानं संशयादित्रयं, यत्र जिज्ञासानन्तरमेव

---

१. "ननु नीलादिवत्" इति पाठः आदर्श पुस्तके नास्ति। अप्रमितेऽपि इति सर्वपुस्तके पाठः।

२. नास्तीति–ज्ञानं न जानाम्येवेत्याकारमिति काश्मीर पुस्तके पाठः।

३. ज्ञानमेवाकारः इति आदर्श पुस्तके पाठः।

**ज्ञानमविघ्नितजिज्ञासस्य स्यात् । अतः सर्वजनस्वात्मसंवेदनसिद्धमेवास्य बोधस्य स्वरूपम् ।**

**व्यवसायस्य अनुव्यवसायनियमान्न तत्र संशयादिरिति चेन्न, यत्रैवानुव्यवसाये ज्ञेयता नोपेया, तत्र जिज्ञासायामात्मधर्मिकं तत्संशयमारभ्य व्यवसायविषयपर्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात् । विषयिसङ्गावसंशये तद्विषयेऽपि संशयस्य सम्भवात् । एवं त्रिचतुरसंवेदनकक्षाज्ञानध्रौव्यनियमाभ्युपगमेऽपीति ।**

---

निद्रया प्रतिबन्धात्[१] प्रमा न जायते तत्र व्यभिचारवारणाय—**अविघ्नितजिज्ञासेति** । अविघ्निता अप्रतिबद्धा जिज्ञासा यस्य ज्ञानस्य पुंसोवेत्यर्थः । **अत** इति । यतः स्वसत्ताकाल एव[२] अप्रमितत्वव्यतिरेकः सिद्धः अत्र प्रभान्तरस्याभावात् स्वतः प्रमितत्वं सिद्धमिति भावः ।

यद्यपि च एवं सति जिज्ञासा नावतरति । सा हि ज्ञातुमिच्छा सा च ज्ञाते ज्ञाने स्यात् न च प्रकाशे निश्चिते सति ज्ञानेच्छा सम्भवति तथापि मनोऽवधानादिरूपाज्ञानकारणसम्पत्तिरेवात्र जिज्ञासाशब्देन लक्ष्यते । अनुमानमेव स्वप्रकाशत्वेऽभिमतम् । ततः ज्ञानं स्व सत्तायां प्रमितत्वाव्यतिरेकि जिज्ञासितत्वे सति संशयाद्यविषयत्वात् यद् यदा जिज्ञासितत्वे सति संशयाद्यविषयः तत्तदा प्रमितत्वाव्यतिरेकि यथा एतन्निर्णयविषयोऽयं घट इति विद्यासागराः ।

अन्यथोपपत्तिमाशङ्कते—**व्यवसायस्येति** । अनुव्यवसायो हि न स्वसत्तया ज्ञानं साधयतीत्याशयेनाह—**यत्र वेति** । अस्ति अनुव्यवसाय इति नैयायिकाः । नास्तीति बौद्धाः । तत्रैवं विप्रतिपत्तौ विचारकस्य जिज्ञासायां सत्यां संशयो भवेत् । ननु संशयो ज्ञानधर्मिको न सम्भवति अज्ञानस्य तस्य विशेष्यत्वाभावात् ज्ञाते च निश्चितत्वादेवेत्याशङ्क्याह— **आत्मधर्मिकमिति** । अनुव्यवस्यामि न वेति तत्संशयं तत्कोटिमारभ्य व्यवसायात्मको यस्तद्विषयस्तत्राप्यौचित्यावर्जितः संशयः स्यादेवेत्यर्थः । अनुव्यवसायोऽस्ति नवेति सामान्यतः प्रतिपन्नभावाभावकोटिकः संशय इति भावः । **यत्रेति** । यदि चानुव्यवसाये—अनुव्यवसायविषयेऽपि ज्ञाननियमः तदापि यत्र ज्ञानोपरमो वाच्यस्तदात्मधर्मिकसंशयमारभ्य संशयः स्यादेव इति स्वप्रकाशत्वमेवोचितं ज्ञानस्य ।

ननु स्वप्रकाशेऽपि ज्ञाने किञ्चित् प्रमाणमवश्यं वाच्यम् अन्यथा शशविषाणसाम्यापत्तेः । स्वयमेव स्वस्मिन् प्रमाणमिति तु न शक्यं वक्तुं प्रमाणप्रमेयभावस्य

---

१. प्रतिबन्धकान् इति आदर्शपुस्तके पाठः ।

२. स्वसत्ताकाले इव इति पाठः मुद्रितपुस्तके ।

**स्वप्रकाशे तु मानमेयभावव्यवस्थाया अभावादेव तदाश्रया दोषा निरवकाशाः । अन्यथा तु बोधस्वरूपमेव न सिद्ध्येत्, यदि हि विज्ञानं परतः सिद्ध्येत्,**

क्रियाकर्मभावरूपस्य भेदगर्भत्वात् । यदि च मास्तु क्रियाकर्मभावस्तथापि विषयविषयिभावस्तु स्यात् सर्वज्ञज्ञानस्य स्वविषयताया अपि स्वीकारादित्युच्यते । तदापि तस्य स्वविषयत्वे प्रमाणमनुयुक्तो यदि ज्ञानं स्वविषयकं ज्ञानत्वात् सर्वज्ञ ज्ञानवत् व्यतिरिके घटवदित्युच्यते तदा तस्मिन्नपि प्रमाणं वाच्यं पूर्ववदिति तदानवस्था, नचेत्तदा संशयः स्वप्रकाशज्ञानेऽपि संशयापत्तिरित्याशङ्क्याह--**स्वप्रकाशे तु मानमेयव्यवस्थाया अभावादेवेति ।**

मानभेदस्य व्यवस्थाया अस्वीकारादेव न स्वप्रकाशत्वे, मानं तन्मानभित्यनवस्था स्वप्रकासिद्धिर्वा दोषः अयमाशयः—नास्माकं मेयं किञ्चिदस्ति येन मानमपेक्ष्यं स्यात् । कथं तर्हि ज्ञानस्य सिद्धिरिति चेत् स्वत एवेति । नहि ज्ञाने कस्यापि विप्रतिपत्तिरस्ति । नहिं न जानामि इति कस्याप्यनुभवः । तर्हि ज्ञानमस्ति अनुमीयमानत्वादित्यनुमानमभिप्रेतं भवत इति चेन्न । असंदिग्धे अनुमानाप्रवृत्तेः । तर्हि नहि जानामि इत्यनेन किमुक्तम् । अत्र प्रमाणस्य नावसरः सन्देहाभावादित्युच्यते तर्हि कथं प्रमितता पूर्वं साधितेतिचेत् । सापि स्वस्यैव प्रमितिरूपता परिशेषादित्युक्तं तथापि स्वविषया यदि सा तदा तस्यास्तद्विषयत्वे किं मानमिति चेन्न । विषयता हि स्वाभेद एव स च स्वस्वरूपमेवेति किं पृच्छ्यते । नहि स्वस्मिन् विप्रतिपत्ति कस्याप्यस्ति । नहिं ज्ञानभिन्नस्य ज्ञानविषयतोपपद्यते । सा हि नातिरिक्ता मानाभावात् विषयता साधकस्यातिरिक्तस्य प्रमाणान्तरगवेषणायामनवस्थापातात् । तत् किं घटादयो न विषया एव तर्हि घटं जानामीत्यनुभवविरोध इति चेत् । घटादयो ज्ञानाकारा एव तर्हि घटमिति क्रियाकर्मभावानुपपत्तिरिति चेन्न । ज्ञानजन्यवासनाश्रयत्वात् तदनुपपत्तिरपि न, घटस्य कारकता, ज्ञानं प्रति न स्यादिति चेन्नास्त्येव, नह्यसतो जनकता सम्भवतीति ।

स्वस्य स्वविषयत्वे तर्कमप्याह—**अन्यथेति** । यद्यपि ज्ञानवादिनः इदं नानिष्टं तथाप्यनुभवविरोध इत्युक्तम् ।

यद् वा अनुव्यवसायतो ज्ञानसिद्धिरितिवदतः प्रत्यनिष्टापादनमिदं कथं न सिद्ध्येदित्याशङ्क्याह—**यदि हि विज्ञानं परतः सिद्ध्येदिति** । इदं तु ज्ञाततागम्यतापक्षेऽपि दूषणम् । एतेन स्वयं प्रकाशे तु इत्यस्य अविषयत्वेऽपि प्रकाशमानत्वान्न संशयाक्रान्तिः मानमेयभावाभावात् न कर्तृकर्मविरोधः इदं ब्रह्मवाद्यभिमतमेव स्वप्रकाशत्वमभिहितम् इति विद्यासागरव्याख्यानमपास्तम् । प्रागुक्तस्वप्रकाशे संशयाक्रान्त्यपरिहारापातात् । अनुभूतिस्वरूपैस्तु किमिति मानमेयभावो नेष्यते इत्याशङ्कामपनुदति—**अन्यथेति** । मेयत्वे घटादिवदबोधत्वप्रसङ्ग इत्यर्थः । तर्हि घटस्यापि मेयत्वे पदादिवदघटत्वप्रसङ्गात् मेयत्वं न स्यादिति चेन्न । अस्य विचार्या-

**तदाऽनवस्था स्यात्। न च वाच्यम्—अवश्यवेद्यता वित्तेर्नाभ्युपेयते, स्वार्थव्यवहारस्तु स्वरूपसत्तया प्रसूयते इति क्वानवस्थेति? यतस्तस्यां प्रमाणानुपन्यासे स्वरूपसत्ताऽपि कुतः, यया व्यवहारोपपत्तिः? को ब्रूते सती सा वित्तिः? असत्येव न कुतः?**

**सामान्यतो वित्तेस्तथात्वविधावपेक्षितसिद्धचा यत्र विशेषरूपायां प्रमाणाऽप्रवृत्तिः, तदा तत्र सत्त्वसाधनासत्त्वेऽपि जिज्ञासायां सत्यां पश्चाद् व्यवहारसत्तैव**

---

पर्यवसायित्वात् घटं जानामीति प्रत्यक्षविरोधात्। ननु बोधं पश्यामि इत्यनुभवोऽस्ति बोधः स्वातिरिक्तवेद्यः वस्तुत्वात् घटवदित्यनुमीयत इति चेन्न। स्वतः सिद्धस्य धर्मित्वे व्याघातात् असिद्धस्य धर्मित्वे चाश्रयासिद्धेः इति अतिरिक्तवेद्यत्वस्य च सिषाधयिषितत्वात् अतिरिक्तवेद्यत्वस्य धर्मित्वे सन्दिग्धाश्रयासिद्धिः। कथं हि स्वप्रकाशविप्रतिपन्नो बोधनीय इति चेदस्ति तावद् घटं जानामीति बोधप्रकाशः सच बोधान्तरानुपलम्भात् स्वत एवेति परेणाभ्युपेयम्। यदि पराधीनत्वं शङ्कते तदा सा शङ्का तर्केण निवारणीयेत्यभिप्रेत्याह—**यदीति व्याख्यायते**। तत्तु चिन्त्यम्। निरस्तमेव ज्ञानस्य ज्ञायमानस्य स्वरूपसत्त्वं दूषणान्तराभिधित्सया पुनराशङ्कते—**न चेत्यारभ्य कानवस्थेत्यन्तेन**।

अनवस्था ही ज्ञप्तौ वा उत्पत्तौ वा, नाद्यः–ज्ञप्त्यन्तरानभ्युपगमात्। नोत्पत्तौ विनापि ज्ञानमुत्पत्तेर्व्यभिचारादित्याशयेनाह–**क्वेति**। उत्पत्तौ ज्ञप्तौ वेत्यर्थः। **प्रमाणानुपन्यास इति**। यद्यपि स्वयं सत्ता प्रमाणमेवापक्षते न तदुपन्यासं तथापि तत्सत्ता कथमिति प्रश्ने तदुपन्यासस्त्वया कार्यः सचाशक्य एवेत्यत्र तात्पर्यम्। ननु मानमेययोरन्यत्वान्न मानाभावे मेयाभाव इत्याशङ्क्याह–**को ब्रूते** इति। मानं विना वस्तुसिद्धौ शशशृङ्गस्यापि वस्तुत्वापत्तिरित्याशयः।

ननु प्रमाणासत्त्वमसिद्धं सामान्यतो विशेषतश्च तत्र तदुभयसत्त्वादित्याशङ्कते-**सामान्यत इति**। ज्ञानवानहमिति ज्ञानेनैव वित्तेस्तथात्वस्य ज्ञानत्वस्य सिद्धौ सत्यामपेक्षितस्य व्यवहारस्य स्वरूपसत्ता घटज्ञानेन सिद्धेः यत्र विशेषरूपायां घटज्ञानत्वरूपायां तदा व्यवहारकाले प्रमाणस्याप्रवृत्तिस्तत्र विशेषरूपायां पश्चात् प्रमाणमस्त्येव व्यवहारसत्ता नहि विशिष्टव्यवहारो वित्तिविशेषं विनेति कार्यमेव मानं स्मरणमेव वेत्यर्थः। ज्ञानवान् अस्मीति सामान्यज्ञानं विशेषमसदृशं न सम्भवतीति विशेषं विशेषाकारेण च [1]यस्यावगतिरुभयाकारेण तत्र प्रमाणसद्भावान्न स्वरूपासत्त्वमिति भावः।

अपरे पुनरेवं योजयन्ति "प्रमाणानुपन्यासे सत्तासिद्धिर्माभूत् तथापि सत्यां सामग्र्यां" कार्यमुत्पद्यत इति द्वाभ्यामेव मन्यते अतः प्रथमायाः वित्तेः सत्त्वासत्त्वा-

---

१. यस्यां गतिः इति आदर्श प्र० काश्मीर प्र० पाठः।

**वा अन्यद् वा प्रमाणमस्त्येवेति चेन्न, तस्यापि कथं सत्त्वमित्यनवस्था वा स्यात्, शेषसिद्धया सर्वासिद्धिर्वा प्रसज्येतेत्यर्थाऽसिद्धिपर्यन्तस्य व्यसनस्य दुरुत्तरत्वात्। सेयम् 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्धयती'ति।**

**घटसत्तां हि व्यवहरता प्रामाणिकेन तत्र प्रमाणसद्भावो वाच्यः। यदि प्रमाणमनुपन्यस्य साऽस्तीत्यङ्गीक्रियते, तदा वैपरीत्यमेव वा किं न स्यात्। ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया। तथा च प्रमाणसत्ताऽपि तत्प्रमाणसत्तामन्तरेण प्रामाणिकस्य नाङ्गीकारार्हा, सर्वप्रमाणसत्तानिवृत्तेर्वस्तुसत्तानिवृत्तिनियतत्वात्। अन्यथा सप्तमरसादेरप्यापत्तेरिति व्यक्तमनवस्थादौस्थ्यमस्वप्रकाशवादिनः स्यात्।**

भ्याम्। अनिर्णीतायाः सकाशादर्थनिश्चयाधीनस्य व्यवहारस्य सिद्धौ व्यवहारात् प्राक् सत्त्वसिद्धिरिष्यते इति शेषः। सामान्यतः इत्यस्य च सत्त्वासत्त्वसाधारणाया इत्यर्थः। कुतस्तर्हि सत्त्वसिद्धिरित्याशङ्कयाह—**यत्रेति**। यत्र विशेषरूपायां प्रथमक्षणे प्रमाणप्रवृत्तिर्नासीत्तदा तत् क्षणे सत्त्वसाधनासत्त्वेऽपि यदा जिज्ञासा जायते तदा प्रमाणमुपन्यस्यत इत्यर्थः। यद्यपि ज्ञानाज्ञानाभ्यां ज्ञाने जिज्ञासाऽसम्भवस्तथापि विशिष्टं सत्त्वसाधकमस्ति नवेति जिज्ञासाऽस्तीत्यवोच इति तच्चिन्त्यम्। **तस्यापि**—उपन्यस्तप्रमाणस्यापीत्यर्थः।

अयं दोषः धर्मकीर्तिना बौद्धविशेषेण य उक्तः स एव मयोच्यते नत्वस्माकमुत्प्रेक्षामात्रं स्वतोऽपरोक्ष उपलम्भो येन वादिना नोच्यते तस्य "मया विदितोऽयं घट इति व्यवहारो नोपपद्येत इति भावः। अत्राप्रत्यक्षपदमतीन्द्रियपरं तथा च प्राकट्यानुमेयज्ञानवादिनं भट्टं प्रत्येव नैयायिकादीनामुपालम्भ इत्यापाततः कारिकार्थोऽप्रत्यक्षपदस्वरसात् प्रतिभाति, तथापि स्वसम्वेद्यत्वनिराकरणग्रन्थोऽयं नैयायिकमतेऽपि तेन दोष उक्त इति ध्येयम्। अन्यथा नैयायिकमतमपि पृथक् दुष्येत तच्च न कृतमिति भावः।

अनवस्थां सर्वासिद्धिं चापादितां प्रपञ्चयति—घटसत्तां हीत्यादिना वृथा प्रमाणोपन्यासायास इत्यन्तेन। **प्रामाणिकेनेति**। प्रमाणमनुपन्यस्य घटः सन्निति वत् प्रमाणे प्रमाणोपन्यासाभावस्तवोचित इत्यर्थः। **सर्वप्रमाणनिवृत्तेरिति**। यद्यपि कदाचित् सर्वप्रमाणनिवृत्तावपि न प्रमेयनिवृत्तिः, तथापि अनवस्थाभयेन[१] सर्वदा सर्वप्रमाणनिवृत्तिरशक्येति भावः। यत् प्रमाणेन केनापि नोपलभ्यते तदसद् यथा शशविषाणमितिभावः। ननु ब्रह्मणि व्यभिचार इत्याशङ्कयाह—**अन्यथेति**। असंदिग्धानधिगताविपरीता च मतिः प्रमा, सा च वेदान्तवेद्ये ब्रह्मणि अस्त्येवेति न व्यभिचार इति भाव इति विद्यासागराः।

ननु प्रमाणसत्तां विनापि कथारम्भवत् प्रमाणसत्तां विनापि प्रमाणसत्ता अस्तु इत्याशङ्कयाह—**यदि हीति**। अव्यवधानलग्नाधारा धारावाहिकवित्तिवद् विच्छे-

१. यदि सर्वदा इति पाठः आदर्श प्र०।

**यदि हि विनैव प्रमाणसत्तां परोऽङ्गीकारयेत्, तदा घटसत्तामपि तथैवाङ्गीकारयतामिति घटेऽपि वृथा प्रमाणोपन्यासः ।**

**अथ नाव्यवधानलग्नवित्तितद्वित्तिधाराऽभ्युपगम्यते किं नाम कदाचित् कुतश्चित् काचित् वित्तिः प्रमीयत इति सर्वा वित्तिः प्रमाणसिद्धं वेत्यभ्युपेयत इति चेन्न, स्यादप्येवं यदि घट इति घटं जानामीत्यतोऽधिका [ घटवित्तितद्वित्तिधारया त्रिषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा ] वित्तिरस्मदादेरुत्पद्यमानाऽनुभूयेत ।**

---

दरहिता वित्तितद्वित्त्योर्धारा च सा अव्यवधानलग्ना चेति विग्रहः । **सर्वावित्तिरिति** । यद्यपि कस्याश्चित् वित्तेर्वेदनं न सर्वासां वित्तीनां भेदात् तथापि सामान्यलक्षणया प्रत्यासत्त्या नैयायिकानां जातिव्यक्त्योरभेदेन च भट्टानां तद्वित्तिप्रमायां सर्वापि भासते इत्यभिमानः । तादृशानां विच्छिद्य जायमानानां विषयभूतानां वित्तीनां शतेनैव भारेण गौरवेण मन्थरा अलसगामिनी ।

ननु तद्विषयत्वेऽपि कथंभार इत्यतआह—**घटवित्तितद्वित्तिधारयेति** । घटवित्तीनां च या वित्तयः उत्तरोत्तरं वर्द्धमानाः तद्धारया विषयाभावेन गर्भभावेनानुप्रविष्टयेति । अयमाशयः । उत्तरोत्तरं ज्ञानं सविषयमेव ज्ञानं पूर्वं पूर्वं विषयीकरोति इति तृतीयज्ञानादौ घटस्तज्ज्ञानं पुनश्चतुर्थे घटघटज्ञानज्ञानानि एवं पञ्चमादौ चतुर्थपञ्चमादिकमादायेति । न चैवं तथैवास्तु इति वाच्यम्, यतो घट इति घटं जानामीत्येवमाकारेणैव ज्ञानशतवेदनं सम्भवति शतस्यैव घटज्ञानत्वाविशेषादित्यपास्तम् । तथापि घटज्ञानज्ञानं घटज्ञानभाने भासत इत्यत्र प्रमाणाभावः । सति घटज्ञानविषयके ज्ञानत्वे सामान्यलक्षणया तद्भानं शक्यं वक्तुम् । तच्च तद्विषयकस्य ज्ञानस्य यदि विशेषेण प्रमाणान्तरेण साध्यते तदैव निर्वहतीत्येवमेव तद्वदत्रापि इति स्यादेवानवस्था सा च एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिरितिभट्टैर्निराकृता नैयायिकैरपि स्वीकार्या । अन्यथा घटार्थिप्रवृत्तिजनकमपि ज्ञानं पञ्चमादौ प्रमाणाभावेन अस्मद्विधैर्व्यवस्थापयितुमशक्यं निष्प्रामाणिकसत्ताभावात् । अस्मदनुव्यवसायो भगवज्ज्ञानविषयतयैव प्रमाणिक इति चेन्न।[१]असत्यामस्य प्रमाणान्तरेण सत्त्वव्यवस्थायां तज्ज्ञानविषयत्वेन प्रामाणिकत्वं, प्रामाणिकत्वाधीनं च तज्ज्ञानविषयत्वमिति परस्पराश्रयः । [२]तावतीषु वित्तिषु प्रकारवैचित्र्यं नास्ति येन तदुल्लेखध्रौव्येणानुभवविरोधः स्यादित्यपि दूषणोद्धारः, सम्भवति तज्ज्ञानज्ञानपरम्परायाः तत्तत्प्रकारत्वाभावे पूर्वपूर्वज्ञानस्य प्रमाणत्वस्य त्वया साधयितुमशक्यत्वात् ।

---

१. सत्यामस्येति आदर्शपुस्तके पाठः ।

२. यद्यपि वित्तयो वित्तित्वेन ज्ञातुं शक्यन्ते इति द्वितीयपुस्तकेऽधिकम् ।

**यद्यस्मदादिविलक्षणजन्मनि सा सम्भाव्यते, तदाऽपि यस्या वित्तेस्तावद्विष-यगर्भिता धीर्विषयः साऽप्यन्यया कयाचिदुल्लेख्येत्यत्र प्रमाणाभावश्च, अनिर्मोक्षा-पत्तिश्च । न हि स्वमन्तर्भाव्य कयाचिद् धिया स प्रवाहो ग्राह्यः, तथा सति स्वप्र-काशतासिद्धेः ।**

---

**यदीति** । अस्मदादिभ्यः पृथग्जनेभ्यो विलक्षणं विशिष्टं जन्म यस्य तस्मिन् योगिनीत्यर्थ इति विद्यासागरः । अस्मदादीनामेव विशिष्टजन्मनि योगिदशाया-मित्येवार्थः । इयमाशङ्का न भट्टानां, तैः । "य एवास्यादसर्वज्ञः स सर्वज्ञं न बुध्यत" इत्येवं योगिनिराकरणात्, किन्तु नैयायिकानामेव । यद्यपि चास्माभिरपि सर्वज्ञो निराकरिष्यते अग्रे तथापि प्रत्यक्षं नातीन्द्रियविषयकं प्रत्यक्षत्वात् सम्मतवदित्यधुनैव तदभावः शक्यसाधनः तथापि अभ्युपेत्य तद् दूषयति–तथापीति । **प्रमाणाभाव** इति । तथा च तदसिद्धौ अर्थपर्यन्तमसिद्ध्यापत्तेः तथापि योगिन एव वित्त्यन्तरमस्तीति चेत्, न तदस्तित्वे प्रमाणमस्ति तत्सद्भावेऽपि तत्सिद्ध्यर्थं, तद्विषयसंवित्त्यन्तरा-पेक्षायामनवस्था तदभ्युपगमे अनिर्मोक्षस्तस्य अशेषविशेषेण गुणोच्छेद एव वा मोक्षः इत्यर्थः। अथ योगिनो वित्तिप्रवाहगोचरा वित्तिरात्मानमपि प्रवाहान्तर्भूतां गोचरयन्ती उत्तरकालं निवर्तत इति नानवस्था चरमज्ञानस्वीकारान्न वा अनिर्मोक्षोऽपीत्याशङ्क्य दूषयति-**नहि स्वमिति** । सामान्यविवक्षया नपुंसकत्वम् । **तथा सति स्वप्रकाशता-सिद्धेरिति** । सर्वस्यापि ज्ञानस्य अविशेषज्ञानस्य स्वग्रहेऽसामर्थ्यं त्वयैव निवारितं ततश्चानन्तधीधारामपेक्ष्य प्रथमज्ञानस्यैव स्वप्रकाशत्वमस्तु । न च योग्यादिज्ञानस्यैव तथा सामर्थ्ये लाघवात् ज्ञानत्वावच्छेदेनैव तत्कल्पनौचित्यात् । नच प्रत्यक्षस्य विषयजन्यतया तत्पूर्वंविषयीभूतज्ञानापेक्षायां स्वप्रकाशतानुपपत्तिरिति वाच्यम् । द्वितीयक्षणे तत्सम्भवात् । नच तर्हि विषयजन्यत्वेन तज्ज्ञानान्तरमेव स्यादिति वाच्यम् । तस्य ज्ञानान्तरत्वकल्पनायां धर्मे[1] धर्मिकल्पनापत्तेः, व्यवसायस्य स्व-विषयत्वकल्पनायामेव लाघवात् । नच पूर्वक्षणजातस्य द्वितीयक्षणे विषयजन्यतानु-पपत्तिरिति वाच्यम् । जातस्यैवास्तु जन्मकल्पना तावदुचिता ।

किञ्च न च प्रत्यक्षस्य विषयजन्यता नैयायिकैः शक्यस्वीकारा ईश्वरज्ञाने व्यभिचारात् । नापि जन्यप्रत्यक्षस्य भूतभाविप्रत्यक्षे भ्रमे च व्यभिचारात् । यत् किञ्चिद्विषयस्तत्रापि अस्तीति चेत् तर्हि ज्ञानत्वस्येहापि सत्त्वान्न विरोधः ।

किञ्च घटप्रत्यक्षादौ घटादिकमन्वयव्यतिरेकाभ्यामिन्द्रियसन्निकर्षघटक-तया अपेक्षितं सत्यपि घटे तदिन्द्रियसन्निकर्षविरहदशायां तदभावात् । नच ज्ञाने सति तत्सन्निकर्षविरहात् तत्प्रत्यक्षविरहोऽस्तीति न किञ्चिदेतदिति दिक् ।

---

१. धर्मे धर्मिकल्पनापत्तेरिति आदर्शपुस्तके पाठः ।

अत एवान्योन्यविषयता निरस्ता, स्वविषयकान्योन्यग्रहे स्वग्रहापत्तेः । न च पुरुषान्तरेण सा प्रमास्यते, न तु तदभाव इति प्रमा तेऽस्ति; तदर्थमपि प्रमाणान्तरसद्भावपरम्परापत्तेः ।

न चैवं घटसामग्री-तत्सामग्रीगवेषणेऽप्यनवस्था स्यात् ? वैषम्यात्, यदि हि घटसामग्री-तत्सामग्रीधारा कुत्रचित् विच्छिद्येत, तदा घटः सदातनः स्यादित्यर्थापत्त्यैव घटः सामग्रीपरम्पराविच्छेदरहित एव प्रमीयते । यदि तु ज्ञानेऽप्येवं स्यात्,

---

**स्वविषयकेति** । नहि ज्ञानमात्रस्य ज्ञानान्तरविषयत्वं सम्भवति तद् विशेषणस्य विषयस्यापि योगिज्ञाने भानसामग्रीसत्त्वात् ।

किञ्च तथा सति चरमज्ञानं विशिष्टमसदेव स्यात् अतः प्रथमज्ञानं चरमज्ञानं स्वविषयं विषयीकुर्वदात्मानं तद्विशेषणीभूतमपि विषयीकुर्यादित्यंशतः स्वप्रकाशतापत्तिः, एवं तत्र ज्ञानस्यापि स्वप्रकाशतापत्तिरित्यर्थः । विषयं हित्वा वित्तिमात्रग्रहणे वित्तेरग्रहणप्रसङ्गः । नहि विषयावच्छेदमन्तरेण वित्तेर्व्यावृत्तिरनुभूयते स्वरूपादपि भेदप्रसङ्गादिति तु स्वरूपश्रीपादाः ।

**पुरुषान्तरेणेति** । सा-योगिचरमबुद्धिः, पुरुषान्तरेण—योगिभिन्नेन, अन्यथा अस्वप्रकाशत्वासार्वज्ञ्ययोरन्यतरस्यापत्तेः । **प्रमा तेऽस्तीति** । नत्वस्माकं स्वप्रकाशेन स्वयं सिद्धत्वम् अस्य अभावग्रहे पुरुषान्तरस्य भ्रान्ततापत्तेः अस्ति सा प्रमास्यत इति प्रमेत्याशयः । पुरुषान्तरेण तत्सम्भव एव गृह्यत इत्यत्र प्रमान्तरमस्माभिर्वाच्यमित्याशङ्क्याह—**तदर्थमिति** । कल्पितप्रमाणगोचरवित्तिधारापत्तेरित्यर्थः ।

**यदि हीति** । सामग्रीपरम्पराया विच्छेदे यस्याः सामग्र्याः सामग्री नोपेया सा स्वोत्तरकालीनां सामग्रीमुत्पाद्य घटं जनयेदेवेति घटो नागन्तुकः स्यादित्यागन्तुकत्वादन्यथानुपत्तिलक्षणया अर्थापत्त्या, घटः सामग्रीपरम्पराविच्छेदशून्य एव प्रमीयत इति त्वया वाच्यमित्यर्थः । मया तु तस्य सामग्रीशून्यस्यापि कादाचित्कत्वं शून्यवादे उपपादितमेवेति भावः । सनातनः स्यात्-प्रागभावप्रध्वंसरहितः स्याद् । ननु सर्वकालीनसामग्रीजन्यत्वं नापादकं क्वापि व्याप्त्यग्रहात् । मैवम् । यथा एका सामग्री निःसामग्रीका तथा परा परापि स्यात् ततश्च सामग्रीणामुत्पत्तिशून्यत्वात् निःसामग्रीकभावतया घटः सदातनः स्यादित्यर्थात् । तथा च सामग्री सामग्रीमत्येवेति प्रामाणिकी अनवस्था तदनादरे घटोऽपि स्वतःसिद्धः स्यात् तथा च घटाभावोपलम्भविरोधः । नच ज्ञानान्यथानुपपत्तिलक्षणयाऽर्थापत्त्या ज्ञानमपि तज्ज्ञानपरम्पराविच्छेदरहितमेव आपत्त्या मीयत इतीयमप्यनवस्था प्रामाणिकीति वाच्यम् । स्वप्रकाशतयैव व्यवहारोपपत्तेरन्यथापत्त्यभावात् । दूषणान्तरमाह--

**यदि तु ज्ञानेऽप्येवं स्यादिति** । यदि हि सर्वज्ञानं ज्ञानपरम्पराविच्छेदरहित-

**तदा स्वस्य प्रवेशात् स्वप्रकाशापत्तिः, अप्रवेशादनवस्था, अवेदने शेषासिद्धचा सर्वासिद्धिरिति व्यसनं दुरुत्तरमेव।**

मर्थापत्त्या प्रमेयं तत् किं सर्वान्तरभूतत्वेन आत्मनोऽपि प्रमापकं किं वा तस्यान्यत् प्रमापकं, नास्त्येव वा तस्य प्रमापकमिति क्रमेण दूषणानि **स्वप्रकाशापत्ति रित्यादीनि**।

यद्यपि सर्वस्य ज्ञानपरम्पराविच्छेदत्वात् इत्यङ्गीकारे आद्यविकल्पोऽनुपपन्नः तथापि अर्थापत्तिजनितं यज्ज्ञानं ज्ञानस्य सर्वस्य ज्ञानविच्छेदराहित्यं विषयीकरोति तस्य स्वप्रकाशत्वान्यवेद्यत्वपक्षयोर्दोषादन्यथानुपपत्त्या[१] सर्वपदं स्वभिन्नविषयात् सङ्कोचनीयमितिभावः। **शेषासिद्धचा सर्वासिद्धिरिति**। अत्रापि सर्वासिद्धिप्रसज्जनमसंगतं यत्पक्षीकृत्य असिद्धिरापाद्या तत्सिद्धौ बाधः तदसिद्धौ आश्रयासिद्धिः, दोषासिद्धेरापादकत्वेनाभिमतायाश्च असिद्धिः शेषस्य चरमज्ञानस्यासिद्धौ तत्पूर्वज्ञानस्यसिद्धिरिति विशिष्टापादने त्वद्वचनादेव तयोः सिद्धौ सुतरामापाद्यापादकयोरसिद्धिरिति तथाप्यनवस्थायामेव हृदयमित्याहुः। तदसत् मदुक्तयुक्तिपरम्परां स्वयमनुसरतस्तव मद्वचनात् तत्सिद्धेरभावात् मम चानाप्तस्य वचनात् तत्सिद्धिरिति हास्यास्पदम् नवा आश्रयासिद्धिः तस्याः, स्वप्रकाशेनैव सिद्धेः। नहि तवाननुमतिमात्रेण सा निवर्तते तदयमापादनार्थः प्रथमं ज्ञानं तावत् सिद्धमेवेत्यत्र द्वयोर्न विवादः परन्तु ज्ञानान्तरेण सिद्धमाकारे नैतदुपपद्यत इति। एवं चरमज्ञानमपि स्वत एव सिध्यति नतु परतः चरमत्वहानिप्रसङ्गादित्यापादनायां नासम्भवः। तस्मात् ज्ञानं स्वप्रकाशं परतो वेद्यत्वाभावे सति वेद्यत्वादित्यनुमानमविकलमिति स्वपक्षानुरागकषाये चक्षुषी निमील्य परपक्षमपि समदृष्टचा परिभावय यदाहुर्भट्टपादाः—

> नचात्रातीव[२] कर्तव्यं दोषदृष्टिपरं मनः।
> दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते। इति।

नच चक्षुर्जन्यज्ञानेनैव तज्ज्ञानस्यग्रहे ज्ञानस्य चाक्षुषत्वापत्तौ रूपतापत्तिः चाक्षुषविशेषगुणत्वस्यैव रूपत्वात् तद्व्याप्यत्वाच्चेत्यपि परास्तम्। परेषामपि वस्तुत्वेन प्रत्यासत्त्या जातिव्यक्त्योरभेदेन वा ज्ञानस्य चाक्षुषत्वाङ्गीकारात्। अपि चास्माकं मते ज्ञानं न गुण एव तस्यैवात्मत्वात्: जानामीत्याश्रयाश्रयिभावभानमपि मिथ्येति वक्ष्यते इति न किञ्चिदेतत्। किञ्च येन प्रमाणसिद्धं ज्ञानमिष्यते

१. अनन्यथानुपपत्त्येति द्वितीयपुस्तके पाठः।
२. श्लोकवार्तिक कारिका सं० ४।

**ये च मानमेयाश्रया दोषाः कीर्तनीयाः तेऽपि प्रसज्येरन्।**

**न च तैर्दोषैर्नास्त्येव ज्ञानमित्यास्थेयम्, स्वतः सर्वसिद्धस्य दुरपह्नवत्वात्। स्वप्रकाशाङ्गीरादेव चाऽनुभवस्य सर्वदोषहानेर्वक्ष्यमाणत्वात्। प्रकाशात्मतामात्रस्यैव स्वतःसिद्धिसम्भवे जडात्मनां धर्माणां केषामपि तदन्तर्भावानुपपत्तिः।**

---

तेन प्रमाणलक्षणं प्रमालक्षणं प्रमेयलक्षणं वाच्यं तत्र च वक्ष्यमाणदोषाः स्युरिति स्वप्रकाशपक्ष एव ज्यायानित्याह––ये चेति श्रीपादाः।

विद्यासागरस्तु ज्ञानस्य ज्ञानान्तरवेद्यत्वे ज्ञानस्य ज्ञानान्तरेण कः सम्बन्धः न संयोगः अद्रव्यत्वात्, न समवायः आत्मगुणयोरन्योन्यं तदयोगात्। नापि तादात्म्यं भिन्नयोरभिन्नयोर्वा तदयोगात्। नापि विषयविषयिभावः, तस्य द्रव्याद्यन्तर्भावाभावाभ्यामसम्भवात्। न चासम्बद्धमेव ज्ञानं ज्ञानान्तरज्ञेयम् अतिप्रसङ्गादित्याह–**ये चेति**। व्याचष्ट।

नात्यापत्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः।
तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु॥[1]

इत्यादिदोषाः इति मिश्राः।

**स्वतः [2]सिद्धस्येति**। निषेधज्ञानस्य तन्न विषयः सर्वजनानुभवविरोधात्। ननु स्वप्रकाशशब्देन स्वस्य विषयत्वाभिधानात् तद्दोषतादवस्थ्यमित्यशङ्क्याह–**स्वप्रकाशाङ्गीकारादेव चेति**। न विज्ञानवादिनामिवास्माकमपि स्वस्य विषयविषयिभावः स्वप्रकाशशब्दार्थः किन्तु स्वप्रकाश एव न प्रकाश्यः स्व एव च प्रकाशो नान्य इत्यर्थः। **सर्वदोषेति**। विज्ञानस्य क्षणिकत्वजन्यत्वक्रियाकर्मभावविरोधादिरूपो यो दोषस्तद्धानेर्वक्ष्यमाणत्वात्।

तत्स्वप्रकाशपरमार्थचिदेवभूत्वा निष्पीडिताद् हृ हृ निर्वहते विचारात् इत्यत्र। तत्रैव वक्ष्यमाणेऽर्थेऽत्युत्कण्ठया एकां युक्तिमाह–**प्रकाशात्मतामात्रस्येति**। स्वतःसिद्धिः–परानपेक्ष्यसिद्धिः **जडात्मनां धर्माणामिति**। यावन्तो धर्माः ते संविदोभिन्नाः इति तेषां न सिद्धिः सिद्धिर्हि ज्ञानं न च ज्ञानभिन्नं ज्ञानमितिभावः। **तदन्तर्भाव**–तत्सम्बन्ध इत्यर्थः। ज्ञानत्वानन्दत्वादिकं तु सर्वास्वन्तःकरणस्य विलक्षणवृत्तिषु ज्ञानानन्दाकारास्वनुस्यूतं ज्ञानानन्दात्मकं परं प्रति धर्मोऽपि न

---

१. कारिकाया अयमभिप्रायः–घटादिविषयाणां प्रमामात्रात् यथार्थज्ञानमात्रात् सिद्धिश्चेदभ्युपगम्यते तदा अन्यविषयकप्रमया अन्यस्यापि सिद्धिः सम्भाव्येत, तस्माद् अत्यापत्त्या–अतिप्रसङ्गेन ते ते अर्थाः घटपटादिविषयाः न स्वीकरणीयाः। तद्धियः–घटादिज्ञानात् तदुरीकारे––तत्स्वीकारे घटादपि घटसिद्धिप्रसङ्गात् ज्ञानकोटिप्रविष्टत्वात् घटादेः तथा च आत्माश्रय इति।

२. क्वचित् स्वतः सर्वं सिद्धस्येति मूले पाठः।

**अत एव धर्मोपग्रहप्रवर्तिष्णुवाग्व्यवहाराविषयत्वम्, कालानवच्छेदमादाय च नित्यत्वोपचारः। देशानवच्छेदमादाय विभुत्वव्यपदेशः। प्रकारावच्छेदविरह-**

---

सम्प्रति। एवं सत्तापि व्याख्येया–जडात्मनो ये धर्मास्ते ज्ञाने शुक्तिरूप्यवत्कल्पितत्वान्न सन्त्येव केनापि प्रमाणेन स्वप्रकाशेन वाऽसिद्धेरिति भावः। कथं तर्हि स्वप्रकाश-इति व्यवहारः सकलधर्मातीते ब्रह्मणि स्यादित्याशङ्क्याह–

**अत एवेति।** निर्धर्मकत्वादेवेत्यर्थः धर्मस्योपग्रहः–स्वीकारः तेन प्रवर्तितुं शीलं यस्य-वाग्व्यवहारस्य तदविषयत्वम्। अत एव निर्धर्मकत्वादेवेत्यर्थः। न तस्य वाच्यतया वाग्व्यवहारविषयत्वं येन शब्दप्रवृत्तिनिमित्तज्ञानापेक्षा स्यादपि तु लक्ष्यतयेति[1] भावः।

ननु स्वप्रकाशत्वमन्तःकरणवृत्तिरनुगतो धर्मो ब्रह्मणैवेति स वाच्य एव तथा ज्ञानानन्दादिशब्दावपि ब्रह्मणो वाचकाविति चेन्न। तेन धर्मेणान्तःकरणवृत्तीनामेव ते वाचका अन्तःकरणवृत्तेः साक्षिभास्यतया जडत्वेन स्वप्रकाशशब्दवाच्यत्वाभावाच्च। वस्तुतोऽन्तःकरणवृत्तैः काल्पनिक एव सम्बन्ध इति अनुगतत्वप्रतीतिरपि भ्रमरूपा ब्रह्मणो नानुगतत्वे प्रमाणमिति। नित्यत्वधर्मसम्बन्धवच्छब्दप्रवृत्तिनिमित्तसम्बन्धोऽप्यस्तीत्याशङ्क्याह—**कालानवच्छेदमादायेति**। कालावच्छेदो हि कादाचित्कत्वमनित्यत्वापरपर्यायं तत्त्वं तदुपलक्षितं[2] स्वरूपं नित्यमित्युपचर्यते। देशभेदानवच्छिन्नं स्वरूपं विभर्ति (विभ्विति) न तु सर्वदेशसम्बन्धात् देशानामवस्तुत्वात्। प्रकारः सजातीयविजातीयेभ्यो व्यावर्तको धर्मः तद्विरहात् सर्वात्मताव्यवहारः स्वेतराद् व्यावृत्तिरवच्छेदः तद्विरहादद्वैतव्यपदेशः। आदिपदादेकं ब्रह्मेति तथा च[3] एकेनैव प्रकारेण ज्ञानत्वं नान्येनेति प्रकारावच्छेदाभावनिमित्तेन सर्वज्ञत्वोपचारः, नैकस्यैव परिमितस्य कर्तेति। सर्वकर्तृतोपचार इति बोध्यम्। नत्वेतेधर्माः पारमार्थिकाः सम्भवन्ति भेदस्य खण्डयमानत्वात् जडाजडयोरभेदस्यासम्भवात् अभेदे धर्मधर्मिभावानुपपत्तेः, मानाभावादनुपपत्तेश्चेति भावः। तर्हि ब्रह्मणि तत्तदभावस्वीकारोऽपि यदि प्रामाणिकस्तदा प्रमाणप्रमेयभेदखण्डनयुक्तिराक्षस्या उदरप्रवेशाज्जीर्ण एव स्यादिति चेन्न। तस्यापि पृथक्तत्त्वानभ्युपगमात्। तथा च श्रुतिः—नेह नानास्ति किञ्चनेति पृथगसत्तापि व्यवहारे दृष्टान्तमाह—

---

१. स्वप्रकाशस्य ज्ञानस्य धर्मा यदि न सन्ति तदा स्वप्रकाशं ज्ञानमिति व्यवहारो न स्यात् व्यवहारस्य धर्माभ्युपगममूलत्वात् इत्याशयेनाह—लक्ष्यतयेति।

२. तदभावोपलक्षितं स्वरूपमिति युक्तः पाठः।

३. तथा नेति पाठः।

**निबन्धनश्च सर्वात्मत्वाऽद्वैतादिव्यवहारः। सौगतप्राभाकरादिवद् भावे, नैयायिकवच्च अभावे अभावानतिरेकस्वीकारादेव चाद्वैताऽव्याघातः। भ्रमविषयनिषधवच्च प्रतियोगिनः सर्वथैवासिद्ध्याऽपि न काचित् क्षतिः।**

---

**सौगतेत्यादिना**। अत्रादिपदेन सांख्यपरिग्रहः। अभावे अभावः—घटात्यन्ताभावे घटात्यन्ताभावादिकं यथा हि स व्यवहारः केवलेनाधिकरणेन तथाऽस्माकमपि परमार्थसता अधिकरणेन भावेनैव अभावव्यवहारमात्रं नत्वभाववत्त्वं[1] तत्रास्तीत्यर्थः। नन्वेवं द्वैताभावो मिथ्या स्यात् ततश्च द्वैतापत्तिरिति चेन्न। यथातिरिक्तघटाभावाभावेऽपि न तत्र घटस्तद्वत् स्यात्।

अथ तत्राधिकरणस्यैव घटाभाववत्त्वं धर्मोऽङ्गीक्रियते सचातिरिक्त इति, चेन्न। भावत्वाभावत्वयोर्विरोधात्। अन्यथा तदेवाधिकरणं घटाधिकरणतादशायामपि घटाभाववत्त्वाधिकरणं स्यात्। अथ कालविशेषे एव तस्य घटाभाववत्त्वं दर्शनबलादाश्रीयते इति चेन्न। वास्तवस्य कालविशेषावच्छेद्यत्वेनौपाधिकत्वापत्तेः। तस्माद् यथा तस्य कालविशेषो घटाभावव्यवहारयोग्यता तथेहापि द्वैताभावत्वव्यवहारयोग्यतैव, द्वैताभावरूपता तु स्वाभाविकी पारमार्थिकी बाधाभावात्। भावविरोधिस्वरूपमेव अभावत्वं नातिरिक्तं तच्च यदि घटाभावादेरतिरिक्तमधिकरणे कालभेदेन च वर्तते इत्यास्थीयते तथापि नेहाधिकरणस्य सर्वदैव द्वैतविरोधिरूपत्वात्। अत एव भट्टानामभावभावयोर्भेदाभेदाभ्युपगमः।

यद्यपि अनुगताभावाकारप्रतीत्या सिध्यति तथापि नेह द्वैताभावस्य अनुगताधिकरणात्मनैवानुगत प्रतीत्युपपत्तेरिति। असिध्या—असत्त्वेनेत्यर्थः। यद्यपि भ्रमविषयरजतादितादात्म्यं तच्च अन्यत्र प्रमितमिति परेषां मतं तथापि प्रमितस्य भ्रमविषयता न सम्भवति कारणत्वादिति प्रागुक्तं तथा च यथा शुक्तिरजतं तत्रैव ज्ञातं विशेषदर्शनदशायां प्रतिषिध्यते तथा प्रपञ्चोऽपि ब्रह्मण्येवाविद्यादशायां प्रतीतः श्रुत्या युक्त्युपष्टम्भया प्रतिषिध्यत इति भावः।

ननु ज्ञानस्य स्वप्रकाशत्वे सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिबोध्यत्वं कथं स्यात् कथञ्च तद्वाक्यं तत्र प्रवर्तेत अभिधानाभिधेयभावविरहादित्यत आह—**तदेतदिति**। यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्या ज्ञानस्य मनोऽग्राह्यत्ववद् वागगोचरत्वस्याप्युक्तत्वात्। सत्यज्ञानादिवाक्यं लक्षणया तत्प्रतिपादयति। तथाच सा श्रुतिर्वाच्यत्वाभावाभिधानपरा तन्त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिविरोधात् ननु लक्ष्यत्वनिषेधपरेति। **उपलक्षणन्यायादिति**। यथा अन्यसिद्धमेव देवदत्तगृहं काकवन्तो देवदत्तगृहा इति वाक्यं परतो व्यावृत्तिमुखेन प्रतिपादयति तथा स्वतः

---

१. नत्वभावत्वं भावत्वं वा इति रव पुस्तके पाठः।

**तदेतत्तु श्रुत्या प्रमाणेनोपलक्षणन्यायात् तात्पर्यतः प्रकाश्यते। तेन परमार्थ-**

सिद्धमपि ब्रह्मअविद्या तत्कार्यव्याकीर्णं ततो व्यावृत्तिसिद्धयर्थं किञ्चिदुपलक्षणभूत-धर्मं प्रतिपादयन्ती श्रुतिः प्रमाणमिति पराभ्युपगमरीत्या कथ्यते। एतेन ज्ञानस्य अद्वैताधात्मकत्वे प्रमाणमस्ति नवा—अन्त्ये अद्वैतादि रूपसिद्धिः। आद्ये न प्रत्य-क्षादि, रूपादि विरहात्। नापि शब्दः प्रवृत्तिनिमित्ताभावादित्याशङ्का परास्ता। यद्वा शवले गृहीतसम्बन्धाः शब्दा भागत्यागलक्षणया सोऽयं देवदत्त इति वच्चैतन्यं ब्रह्म लक्षयन्ति तेन ब्रह्मणि प्रवृत्तिनिमित्ताभावेऽपि शास्त्रयोनित्वं ब्रह्मणो वेदान्त-शास्त्रोक्तं संगच्छते।

ननु ब्रह्मणि प्रमाणप्रमेयविभागाभावात् कथमुपलक्षणन्यायेनापि श्रुतेः प्रामाण्यमित्याशङ्क्य (आह)—**अविद्यादशायामिति**। प्राग्विद्योत्पत्तेः सर्वमस्त्ये-वेतिभावः। शब्दाविषयस्य ब्रह्मणः कथं श्रुतिप्रमाणकत्वमित्याशङ्क्याह—**पराभ्यु-पगमेति**। पदार्थ एव वाच्यो न वाक्यार्थस्तस्य तात्पर्यगोचरत्वात् पदाभिहितानामेव पदार्थानां योग्यतादिबलेन वाक्यार्थप्रतिपादकत्वाभ्युपगमाच्चेति विद्यासागरः तन्न—तात्पर्यस्य वृत्तिनिर्वाच्यत्वात्। नच नैयायिकानामिव विना लक्षणं वाक्यार्थे वृत्तिरितिवाच्यम्। तेषामपि पदार्थप्रतियोगिकत्वमेव संसर्गगतं स्वरूपसन्नियामकं नचाखण्डे ब्रह्मणि तदस्ति।

मितभाषिण्यां तु अभिधानाभिधेयार्थकस्य भेदस्याप्यभावात् कथं श्रुतिप्रमा-णकं ब्रह्मेत्याशङ्क्याह—**तदेतदिति**। यथा यत्र रजतम् अभात् सा शुक्तिरिति मिथ्याभूतेनापि रजतेन [१]शुक्तिरूपलक्ष्यते लिप्यक्षरैर्वा वर्णस्वरूपं तथा व्यवहार-मात्रसिद्धया श्रुत्या तात्पर्यवृत्त्या तत्प्रतिपादनमिति। तदपि न तात्पर्यस्यावृत्ति-त्वात् अन्यथा लक्षणोच्छेदापत्तेः।

मिश्रास्तु—उपनिषदां ब्रह्मणि तात्पर्यमात्रेणैव प्रामाण्यं नतु ब्रह्म पदार्थो वाक्यार्थो वा धर्मोपग्रहं विना शक्तेः योग्यतादेश्चाभावात्। नित्यं ज्ञानमानन्दं ब्रह्मेति नित्यविज्ञानानन्दपदैराविद्यक एवार्थे प्रत्येकं गृहीतशक्तिभिः सम्भूयोच्चा-रणमात्रात् तात्पर्यबलाच्चाविद्यादशायां ब्रह्म बोध्यते इति। तत्र श्रुतीनां प्रामाण्य-मित्यर्थः। उपलक्षणन्यायादित्यस्य च यथा काकादिपदैरूत्तृणत्वादिकम् अनभिधेय-मपि बोध्यते तात्पर्यबलात् यथा वा—

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥ इत्यत्र

गमननिषेधः पदार्थवाक्यार्थभिन्न एव प्रतीयते तद्वदित्यर्थः।

---

१. शुक्तिरूपं लक्ष्यते। इति ख पुस्तके।

**तोऽभिधानाभिधेयभावविरहे तात्पर्यतः श्रुतिस्तस्मिन्नविद्यादशायां पराभ्युपगमरीत्या प्रमाणमित्युच्यते । वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम् ।**

---

ननु सर्वथैवावाच्यो तात्पर्यमपि दुर्घटमित्याशङ्क्य पारमार्थिकमेव वाच्यत्वं न मन्यामहे ननु काल्पनिकमपीति व्याचक्षते । तदसत् । तात्पर्यमात्रेण प्रामाण्यासम्भवात् । वस्तुतस्तु उपलक्षणेन यथा उत्तृणत्वं बोध्यते लक्षणया तथा सत्यादिपदैरपि ब्रह्मस्वरूपं तथा च स्वरूपलक्षणया तत्र तद् वाक्यं प्रमाणं प्रकाश्यत इत्यस्य अज्ञानात्मकारणहीनं क्रियत इत्यर्थः । ननु श्रुतिरपि अविद्यमाना कथं प्रमाणमित्याशङ्क्याह—**अविद्यादशायामिति** । व्यावहारिकीसतीत्यर्थः । ननु श्रुतिर्वेदकर्तुर्भगवतो जन्या कथं भगवति प्रमाणं भवतु, प्रमाणतः पूर्वं तस्यासत्त्वापत्तेः । पौरुषेयतया श्रुतेः तन्मूलातीन्द्रियवाक्यार्थीभूतब्रह्मज्ञानविरहिकर्तृतया[१] अप्रामाण्यापत्तेश्चेत्याशङ्क्याह—**पराभ्युपगमेति** । यदा कदाचित् प्रमाणसत्वमेव प्रमेयसत्त्वौपयिकम् अन्यथा चक्षुरादेरपि रूपोपलब्धिपूर्वम्[२] असत्त्वापत्तौ चाक्षुषज्ञानाभावप्रसङ्गात् । न वा वेदः पौरुषेयः परमतसिद्धस्य मीमांसकमतसिद्धस्य आनुपूर्व्यां भगवतोऽस्वातन्त्र्याभ्युपगमेन स्वतन्त्रपुरुषाप्रणीतत्वलक्षणस्यापौरुषेयत्वस्य स्वीकारात् । एवं व्यावहारिकप्रमाणसिद्धत्वेन तस्यालीकत्वं निरस्य अन्यदथोविदितादन्यदथोअविदितात् इति श्रुतिविरोधं परिहरति—**वस्तुतः[३] स्वतः सिद्धमेव चिद्रूपमिति** । तथा च ज्ञानकर्मत्वमपि[४] न तस्य वास्तवं श्रुतेरविद्यायाश्चाभावात् । परं तस्य परप्रतिबोधनायैव उच्यते स चेदत्रापि दोषं पश्यति तदा यावद् वेति परित्यज्य मुहूर्तमात्रं तिष्ठतु तदा मयोपरतस्यापि निष्कलङ्कं चिद्रूपं स्वतः एव प्रकटं भविष्यति ।

ननु चिद्रूपस्य आत्मसिद्धत्वमपि त्वया दुरुपपादं नहि प्रमाणमन्तरेण तदुपपादयितुं शक्यमन्यथा वैपरीत्यमेव तथा सति किन्न स्यात् । परिशेषादिप्रमाणाभिधानं च द्वैतापादकमिति दूषणं मैथिलानामल्पज्ञानतः, आत्मसिद्धत्वस्य भवदभिमतप्रमाणासिद्धत्वात् । नच तावतैव द्वैतापत्तिः अपारमार्थिकेनैव तत्सिद्धेः । नचापारमर्थिकेन वैपरीत्यमेव सिध्यतु इति वाच्यम् । कीदृशं तदपारमार्थिकं तदिति त्वया अद्याप्यनुपन्यासात् समयबन्धसिद्धपारमार्थिकत्वोदा[५]सीनेनापारमार्थिकेनैव व्यवहारसिद्धेः । किञ्चात्मसिद्धत्वं धर्म एव प्रमाणाभावान्न सिध्यति

---

१. ब्रह्मज्ञानविरहे कर्तृतया इति क पुस्तके पाठः ।
२. रूपोपलब्धिगम्यमिति क ख पुस्तके पाठः ।
३. वस्तुतः स्वात्मसिद्धमेव चिद्रूपमिति मूले पाठः ।
४. ज्ञानकर्मत्वाज्ञानकर्मत्वमपि इति क ख पुस्तके पाठः ।
५. समयबन्धसिद्धपारमार्थिकत्वोदासीने पारमार्थिकेनैव इति ग पुस्तके ।

**ननु च स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदम्, क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्तेः। कार्या क्रिया हि कर्मणो भवति, कर्म च कारणं क्रियायाः। न च स्वेनैव स्वनिष्पादनं शक्यम्, पूर्वापरभावविशेषस्य हेतुहेतुमद्भावरूपत्वात्। न च तस्मादेव तदेव पूर्वमपरं च सम्भवति, तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात्। तदा च तस्य सद्भावस्वीकारे स एव कालस्तदवच्छिन्नः, तदनवच्छिन्नश्चेति विरोधात्।**

**मैवम्, क्रियायाः कर्मजन्यतानियमानङ्गीकारात्। सर्वथैव अनागतविषय-**

---

चिद्रूपं तु दुरपह्नमेवेति न किञ्चिदेतत्। ननु तत्प्रकाशाजनकत्वे कथं वेदान्तानां तत्र प्रामाण्यं नहि घटमप्रकाशयतश्चक्षुषो घटे प्रामाण्यमिति चेन्न। ब्रह्मणः स्वप्रकाशतया तत्प्रकाशस्याजन्यत्वेऽपि तदावारकाज्ञाननिवर्तकान्तःकरणवृत्तिविशेषजनकतया वेदान्तानां प्रामाण्याभ्युपगमात्। न केवलं वेदान्तानामेवेयं रीतिः किन्तु सर्वेषामेव शब्दानामखण्डार्थानाम्।

ननु ज्ञानं न स्वप्रकाशं शास्त्रगम्यत्वात् धर्मवत् विपक्षे तु अनुपपद्यमान क्रियाकर्मभावो बाधक इत्यभिप्रेत्य पूर्वपक्षयति--**नन्विति**। प्रकाशक्रियाप्रकाशकर्मणोर्भेदव्याप्तत्वात् तदभावेऽनुपपत्तिमाह—**कार्याहीति**। कार्याजन्या। ननु क्रियायाः कार्यत्वेऽपि कर्तृकार्यत्वं स्यात् कर्मकार्यं कथमित्याशङ्क्याह—**कर्म च कारकमिति**। कारकत्वादेव कर्मक्रियायाः कारणमित्यर्थः। ननु प्रकाशक्रियायाः कार्यकारणभावः स्वतः एव अन्यथा जन्यसर्वविषयज्ञानस्य सकर्मकतानुपपत्तिरित्याशङ्क्याह—**स्वेनैवेति**। तथा च जन्यज्ञानस्य सर्वस्यैव नास्त्येव सकर्मकत्वं विषयत्वञ्चेति भावः। विशेषस्य अनन्यथासिद्धत्वघटितत्वस्येत्यर्थः[1]। एकस्यापि अनेककालसम्बन्धो भवतीत्यत आह—**नच तस्मादेवेति**। द्रव्याद्याकारेणाभेदेऽपि मृद्घटयोः पूर्वापरभावोऽस्तीत्यत आह—**तदेवेति**। **कर्मणा**[2] इति। सकर्मिका क्रियाकर्मविना कथं स्यादिति भावः **तदाचेति** कारणत्वप्रयुक्तं तत्कालावच्छिन्नत्वं कार्यत्वप्रयुक्तस्तदभाव इति भावाभावयोर्विरोध इत्यर्थः।

(ज्ञानस्य स्वप्रकाशत्वे क्रियाकर्मविरोधं परिहरति)

**मैवमिति**। यद्यपि स्वरूपसिद्धो वेदान्तिमते हेतुः तथापि क्रियायाः कर्मभावस्य

---

१. **तथाचेति**। कारणत्वप्रयुक्तं तत्कालावच्छिन्नत्वं कार्यत्वप्रयुक्तस्तद्भाव इति भावाभावयोर्विरोधइत्यर्थः मैवमिति। यद्यपि स्वरूपसिद्धो वेदान्तिमते हेतुस्तथापि क्रियाकर्मभावस्य विरोधमेव परिहरति इति अत्रैव पाठः क ख पुस्तके।

२. वर्तमानमुद्रितपुस्तकेषु कर्मणीत्यानुपूर्वीघटितः पाठो मूले नोपलभ्यते।

**विज्ञाने तदसम्भवात्। क्वचिज्जनकतामादाय च कर्मणि कारकत्वव्यपदेशात्। करणव्यापारविषयत्वाद् वा परसमवेतक्रियाफलभागित्वाद्वा कर्मलक्षणाद् विनापि क्रियाजनकत्वेन कर्मव्यवहारोपपत्तेः।**

---

विरोधमेव परिहरति। क्रियामात्रस्य न कर्मजन्यता अकर्मकक्रियायां व्यभिचारात्। नापि सकर्मकक्रियाया उत्पाद्यकर्मणः क्रियाजन्यत्वात्।

ननु तत्र घटस्य कपालात्मना विद्यमानस्यैव घटकृतिकर्मत्वमित्याशङ्क्याह—**सर्वथैवानागतविषयज्ञान**[१] इति। अतीतविषयकज्ञानस्य नातीतविषयजन्यता सम्भवति ध्वस्तस्याजनकत्वादेव। यदि च संस्कारात्मना स्थितस्य तस्य स्मृतिजनकत्वं सम्भाव्येतापि नत्वनागतस्य अनागतत्वादेव। अनागते संस्कारस्याप्यभावात्। यद्यप्यनागतस्यापि जात्यात्मना तथाभावोऽस्ति तथापि यत्रैकैव व्यक्तिः न जात्यात्मनाऽपि तस्याः सत्त्वं भावित्वेनैव तस्याविषयत्वादित्याशयेनाह—**सर्वथैवानागतेति**। क्रियाकर्मभावे सत्यपि जन्यजनकभावानभ्युपगमात् तत्प्रयुक्तो विरोधो नास्तीत्यर्थः। कथं तर्हि कर्मणः कारकत्वव्यवहारः इत्याशयेनाह—**क्वचित्जनकतामादायेति**। क्वचित्—प्रत्यक्षे। तत्र हि संप्रयोगस्य विषयव्यापारत्वाद् विषयस्य कर्मणोऽस्ति कारकत्वम्। नच प्रत्यक्षं वृत्तिरूपमिति न क्वचिदपि संवेदनं जन्यमिति वाच्यम् किं तर्हि क्रियाजनकाजनकयोरनुगतकर्मव्यवहारनिमित्तं, वैयाकरणानां हि शक्तिविशेषः कर्मता सा अनागते न सम्भवतीतित्वयोक्तमित्यत आह—**करणेति**। तथाच पराभिमतं लक्षणद्वयमेव निमित्तम्। "अनागतादिकर्मणि अपि करणस्य चक्षुरादेर्लिङ्गादेर्वा प्रत्यासत्तिलिङ्गपरामर्शादिरूपव्यापारविषयत्वसत्त्वात् व्यवहार इत्यर्थ इति शङ्करमिश्राः। यद्यपि अनागते चक्षुरादिव्यापारो लौकिको नास्ति तथाप्यलौकिकोऽस्त्येवेत्यर्थः। वस्तुतस्त्वेतल्लक्षणवत् जातीयत्वेनैव तत्र कर्मव्यवहारः जातिश्च क्वचित् सामान्यं क्वचिच्चोपाधिरिति। कर्मणि कारकत्वव्यपदेशादित्यनन्तरं "करणव्यापारविषयत्वात् कर्मलक्षणाद् विनापि क्रियाजनकत्वात् कर्मव्यवहारोपपत्तेरिति पाठस्तु किञ्चेत्यतः प्राक्तनः शङ्करमिश्र सम्मतः। करणव्यापारविषयत्वात् परसमवेतक्रियाफलभागित्वाद् वा कर्मलक्षणादित्यादिपाठस्तु मैथिलपुस्तकस्थो भट्टस्यापि सम्मतः। विद्यासागरास्त्विमं पाठं पूर्वं च न स्पृष्टवानेव। क्रियास्वरूपपर्यालोचनया क्रियाकर्मणोरभेदे दोषं परिहृत्य कर्मस्वरूपपर्यालोचनयापि परिहरति—**किञ्चेति**। परसमवेतत्व विशेषणं विना गन्तर्यपि ग्रामगमनकर्मतापत्तिरत इदम्।

---

१. मूले विज्ञान इति पाठः।

२. क्रियाजनकयोरिति क ग पुस्तके पाठः।

## ४. क्रियाकर्मभावखण्डनम्

किञ्च तत्कर्मत्वं यत् स्वं प्रति विरुद्धयते ? परसमवेतक्रियाफलभागित्वमिति चेन्न, अपादानस्यापि व्याप्तेः। अपादानं कर्मापीति चेन्न, 'वृक्षात्पतति पर्णमि'तिवत् 'वृक्षं पर्णं पतती'त्यपि स्यात्।

विवक्षातः कारकाणि भवन्तीति तदविवक्षया नैवमिति चेन्न, वस्तुतः सतस्ताद्रूप्यय यदि विवक्षा स्यात्तदा तदपि स्यात्। अपादानस्य कर्मत्वं न विवक्ष्यत इति शाब्दिकसम्प्रदायोऽयमिति चेत्, तर्हि तत्र निवृत्तसर्वकर्मव्यवहारेऽपि स्वकृत-कर्मलक्षणानुरोधेन कर्मत्वमभ्युगच्छता वस्तुमात्रं कर्मेत्यपि लक्षणं सावकाशितं स्यात्। कथञ्च लोकोत्तरप्रज्ञेन निवृत्तसर्वकर्मव्यवहारेऽपि स्वकृतकर्मत्वमस्तीत्य-धिगतम् ?

अपादानेतरद् ईदृशं कर्मेति चेन्न, तत्रापि 'नदी वर्धते' इत्यादौ तद्वृद्धेर-

---

ननु ज्ञानस्य कर्मत्वं विरुद्धं तस्य त्वया परसमवेतत्वानभ्युपगमात्। ज्ञानस्य गुणत्वाभावेन तस्यैवात्मत्वादित्याशयेन शङ्कते—**परसमवेतेत्यादि**। परपदं कर्म-त्वाभिमतभिन्नपरम्। पितृकृतपुण्यफलोपभोक्तरि पुत्रेऽतिव्याप्तिरिति क्रियापदम्। यद्यपि तदपि यागक्रियायाः फल भवत्येव तथापि साक्षात् फलविवक्षितं तत्तु अपूर्वत्वमेव कथमिति घटोभवतीत्यत्र कपालसंयोगफलं घटस्योत्पत्तिः तच्छालिनि घटे अतिव्याप्तिरपि क्रियापदादेव निरस्ता। **अपादानस्यापीति**। पर्णपतनक्रियायाः फलस्य विभागस्य वृक्षे सत्त्वाद् वृक्षात् पर्णं पततीत्यत वृक्षेऽतिव्याप्तिः स्यादित्यर्थः। तदितिः। पर्णमित्यर्थः। **विवक्षातः इति**। यदस्ति तदुच्यत एवेति नियमो नास्ति विवक्षामूलकत्वात् पौरुषेय वाक्यानामिति भावः। ताद्रूप्यस्य—कर्मत्वस्येत्यर्थः। अविवक्षानियामकाभावाद् यदि कदाचिद् विवक्षा स्यात् तदा तदापि स्यात्—वृक्षं पर्णं पततीत्यापि द्वितीयान्तं पदमपि स्यादित्यर्थः। **निवृत्तेति**। निवृत्तः सर्वेषां कर्म व्यवहारो यत्रेत्यर्थः। **सावकाशितं स्यादिति**। तथाच परसमवेतपदोपादानप्रयासो व्यर्थः इति भावः। स्यादित्यतोऽनन्तरं कथं च लोकोत्तरप्रज्ञेन निवृत्तसर्वकर्म-व्यवहारेऽपि कर्मत्वमस्तीत्यधिगतमिति पाठो विद्यासागरेण भट्टेन च धृतः। लोको-त्तरप्रज्ञेनेत्युपहासः। लोकादुत्तरा उद्गता प्रज्ञा यस्य सः। तथाचाधिगमोऽयं निर्मूल एवेति भावः। **तद्वृद्धेरिति**। वृघ्नोति वर्द्धकिर्वृक्षमिति वृक्षकर्मकवृद्धिव्यव-च्छेदाय। तस्या नद्या वृद्धेरित्यर्थः। **सकर्मकत्वापत्तेरिति**। ततश्च तीरभागं वर्द्धत इति प्रयोगः स्यात्।

सत्तालज्जास्थितिजागरणवृद्धिक्षयभय जीवितमरणम्।
शयनक्रीडारुचिदीप्त्यर्थाः कर्मणि नैते धातव उक्ताः॥

इति वृद्धिक्षयभयजीवितमरणार्थका धातवोऽकर्मका इति परिगणिता कर्मकत्वाववोघश्चेत्याशयः। अत्रापि इत्यपिकारः आपत्तेरित्यनन्तरमनुक्त-

**प्राप्ततीरभागादिप्राप्तिफलायाः सकर्मकत्वापत्तेः । अपादानेतरदिति स्थाने क्रियानाशकेति करणेऽप्यस्य दोषस्य तादवस्थ्यात् । विनाशलक्षणायां 'वृद्धौ' तदसम्भवाच्च । वृक्षं त्यजती'त्यादौ अकर्मत्वप्रसङ्गाच्च ।**

---

समुच्चयार्थे योज्यः । इतरत्वस्यभेदस्य लक्षणा धीनत्वाल्लक्षणसिद्धवितरत्वस्य सिद्धिस्तत्सिद्धौ च लक्षणस्येत्यन्योन्याश्रयो युक्तः । अपादानेतरदित्यस्य स्थाने प्रसङ्गे, नत्वपादानेतरत्वं यथा फलशालिनो[१] विशेषणं तथा क्रियानाशकत्वमपि तस्य विशेषणं क्रियाफलस्यैव क्रियानाशकत्वेन विशेषणात् । विभागस्य पतनक्रियाफलस्य न पतननाशकत्वमिति न वृक्षेऽतिव्याप्तिरित्यभिमानिनो लक्षणं दूषयति—**अस्येति** । तीरभागे कर्मत्वप्रसङ्गेनेत्यर्थः[२] । क्रियापदवैयर्थ्यश्च अनावश्यकत्वात् । अपि–इत्येवंयोजितेन अपि–इत्येवं[३]योजितेन बोध्यम् । अधः संयोगाख्यक्रियानाशफलवत्या भूमेः कर्मत्वमिष्यत एवेति मिश्राः । अस्य दोषस्य सत्त्वादित्यनन्तरं विनाशलक्षणायां वृद्धौ तदसम्भवाच्चेति विद्यासागर धृतः पाठः । तस्य च बृक्षं वर्धते वर्धकिरित्यत्र नाशलक्षणवृद्धेर्नाशाभावेन वृक्षमित्यत्र अव्याप्तिरित्यर्थ इति तद्व्याख्यानम् । विनाशो लक्षणंचिह्नं यस्याः क्रियायाः सा छिदिक्रिया तस्यां कियायां कर्मणो वृक्षस्याकर्मकत्वप्रसङ्ग इति भावः ।

केचित्तु न तीरभागे अतिव्याप्तिः यतो वृद्धिः न परिष्पन्दात्मिका क्रिया किन्तु महता जलावयविना स्वल्पस्य जलावयविनो विनाशो महाजलारम्भानुकूलः स्वल्पजलविनाश एव वा अतः कथं तीरभागऽतिव्याप्तिरित्याशङ्क्य यदि वृद्धिर्नाशरूपा तदा तया प्राप्तेः संयोगस्य नोत्पत्तिः संयोगजसंयोगभिन्नस्य क्रियाजन्यत्वनियमात् अतः क्रियान्तरमवश्यमभ्युपगन्तव्यम् । तथा च तत्कर्मत्वं तीरभागस्य स्यादेवेत्यतिव्याप्ति तादवस्थ्यमिति फक्किकार्थ इति प्राहुः ।

ननु विनाशः क्रियाविशेषः नाशानुकूलो व्यापारः एव सा च क्रियात्वादेव नाश्या तत्फलं ध्वंस एव न नाश्यः । नचानवस्था दृष्टत्वादेवेति नातिव्याप्तिरित्यस्वरसादाह—**वृक्षं त्यजतीति** । क्रियानाशकत्वाभावादव्याप्तिं विवक्षिते लक्षणे कथयित्वा अविवक्षिते प्राचीने लक्षणे विवक्षिते चैव लक्षणद्वये परपदप्रयुक्ताम व्याप्तिमाह—आत्मानं जानामीत्यादाविति ।

---

१. फलाशालिनः इति द्वितीय पुस्तके पाठः ।

२. कर्मत्वप्रसङ्गस्य क्रियापद वैयर्थ्यञ्चापि नाशकत्वात् इत्यादर्श पुस्तके पाठः । ख पुस्तके तु "तीरभागकर्मत्वप्रसङ्गस्य क्रियापदवैयर्थ्यञ्चापि नाशकत्वादपीत्येवं योजितेन बोध्यम् ।

३. इत्येव इतिपाठः

**'आत्मानं जानामी'त्यत्र परत्वाभावादव्याप्तेः। तत्राप्युपाधिभेदात्परत्वम्, कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमादिति चेन्न, यतोऽस्तु तावद् यथा कथंचिदेवम्, तथाप्यध्यात्मविदो निरुपाधिमात्मानं जानतो ज्ञानं नात्मकर्मकं स्यात्। 'पच्यते फलं स्वयमेवेत्यादौ कर्मकर्तरि का गतिः स्यात्?**

**सर्वज्ञमीश्वरं मन्यमानेन च नित्यज्ञाने तस्मिन् भगवति फलनाशकत्वस्यानभ्युपगमात् तं प्रत्येतल्लक्षणाऽसिद्धेः। तस्माद् व्याकरणकारैः शब्दसिद्धयर्थं नदीवृद्धयादिवत् कर्मापि परिभाषितमित्यलं तदनुगतलक्षणगवेषणया।**

**करणव्यापारविषयः कर्म इति चेन्न, 'हस्तेन रामेण शरेण' इत्यादावतिप्रस-**

---

अथवा अव्यवहितलक्षण एवाव्याप्तिद्वयमिदं प्राचीनयोः लक्षणयोः दूषितत्वादेव दूषणान्तराभिधानानर्हत्वादप्रकृतत्वाच्चेति। **उपाधिभेदादिति**। शरीरेन्द्रियादिविशिष्टो ज्ञाता। आदिपदात् क्षणिकयावद्गुणपरिग्रहः। यदाहुर्न्यायाचार्याः—क्षणिकगुणोपहितो ह्यात्मा गृह्यत इत्यस्य स्वभावः इति।

**अस्तु तावदेवमिति**। उपाधीनां भेदेऽपि विशेष्यस्याभेदादित्यस्वरसः अस्तु तावदित्यनेन सूचितः। पर्वतो वह्निमान् धूमादित्यत्र धूमवतो वह्निमतो भेदे धूमस्य वह्निव्यधिकरणस्य व्याप्यत्वाभावापत्तेरिति भावः। अध्यात्मविदः—सर्वोपाधिप्रहाणेन ब्रह्मैवाहमिति जानतो यद्विज्ञानं तदाश्रयस्य परत्वाभावान् नात्मकर्मकं ज्ञानं स्यादित्यर्थः। क्रियानाशकत्वाभावप्रयुक्तं दूषणान्तरमाह—**सर्वज्ञमिति**। सर्वं जानातीति सर्वज्ञः तस्मिन्भगवति यन्नित्यंज्ञानं तस्मिन् फलनाशकत्वस्य फलं नाशकं यस्येति बहुब्रीहिणा फलनाश्यत्वस्य सर्वज्ञं मन्यमानेन अनभ्युपगमान्नैयायिकेनेति शेषः। तं प्रति नैयायिकं प्रतीत्यर्थः। क्षणिकसर्वज्ञं प्रति नाव्याप्तिरित्यभिघातुं **तमिति**। **असिद्धेः**—सर्वस्मिन् ज्ञानकर्मणि अव्याप्तेरित्यर्थः। यस्माद् दुष्टमिदं लक्षणं तस्माद् व्याकरणकारैः शब्दव्युत्पादनार्थं कर्तुरीप्सिततमं कर्मेति[२] सूत्रेण कर्मपरिभाषितं नतु कर्मलक्षणं विवक्षितमित्यर्थः। यथा "यूस्त्र्याख्यौ[3] नदीति केषाञ्चिच्छब्दानां नदीति संज्ञा "वृद्धिरादैच्"[४] अदेङ् गुण[५] इति केषाञ्चिद् वर्णानां वृद्धिगुणसंज्ञा। **अलं तदनुगतलक्षणगवेषणयेत्यनन्तरं** "करणव्यापारविषयः कर्मेति चेन्न हस्तेन रामेण शरेण विद्ध इत्यादावतिप्रसङ्गात् क्रियाजनकत्वे सति व्यापारोद्देश्यं कर्मेति व्यवहारोपपत्तेरिति" क्वाचित्कः[६] पाठः। अस्तु तर्हि करण-

---

१. एतन्मताश्रयणे विनाशलक्षणायां वृद्धाविति पूर्वान्वयि तदसम्भवाच्चेति उत्तरान्वयि।

२. अष्टाध्यायीं १।४।४८। ३. १।४।३। ४. १।१।१। अष्टाध्यायी।

५. १।१।२। अष्टाध्यायी।

६. "इत्यलं तदनु गतलक्षणगवेषणया" इत्युपसंहारवाक्यानन्तरं "करण व्यापार विषयः कर्म" त्यादिना लक्षणान्तर मुत्थाप्य कृतस्य तद्विचारस्यायुक्तत्वापत्तेरयं पाठः क्वाचित्क इत्युक्तम्।

ङ्गात् । लक्षणं विनापि क्रियाजनकत्वे सति व्यापारोद्देश्यत्वेन कर्मव्यवहारोपपत्तेः । शेषश्च ईश्वराभिसन्धौ स्वप्रकाशवादे निर्वक्ष्यामः ।

## ५. विषयविषयिभावखण्डनम्

**नन्वु चाऽभेदे विषयविषयिभावस्यैवासंगतत्वम्, विषयित्वं हि विषयसम्बन्धिता, सम्बन्धश्च भेदमन्तरेणासम्भवदवस्थितिः, सम्बन्धमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके वैपरीत्यावधारणात् ।**

---

व्यापारविषयत्वं कर्मत्वमिति चेन्न । हस्ताख्य करणव्यापारविषयत्वाच्छरस्यापि कर्मतापत्तेः । कर्मव्यवहारानुपपत्त्या कर्मपदार्थः तल्लक्षणं च वाच्यमित्याशङ्क्य उपपत्तिमाह—**क्रियेति** । क्रियाजनकत्वे सति व्यापारोद्देश्यं कर्मेति सङ्केतमात्राद् व्यवहारोपपत्तेरलं लक्षणगवेषणायेत्येवं विद्यासागरेण व्याख्यातः । कथं तर्हि कर्मलक्षणमनभिधाय स्वप्रकाशवादिना ज्ञानस्य स कर्मत्वं वक्तुं शक्यम् । अथ धात्वर्थतावच्छेदकपरसमवेतक्रिया फलशालित्वं कर्मत्वं गमेरूत्तरसंयोगो धात्वर्थतावच्छेदकः तेन तद्भागी ग्रामः कर्म । पतेरप्यधःसंयोगः फलं धात्वर्थतावच्छेदको न विभागः तेन नापादानेऽतिव्याप्तिः । वृद्धेरवयोपचयस्यापि नावच्छेदकं तादृशं फलम् । त्यजेस्तु पूर्वदेशविभागोऽवच्छेदकोऽतो वृक्षस्य कर्मत्वमिति मिश्राः । तन्न । धात्वर्थतावच्छेदकाभावात् जानातेरकर्मकतापत्तेः । ज्ञातता संस्कारो वा तत्राप्यवच्छेदक इति चेन्न । तस्या निराकरिष्यमाणत्वात् । संस्कारस्य चोपेक्षा ज्ञानाव्यापकत्वात् इति प्रश्ने आह—**शेषञ्चेति** । **शेषमिति** । ईश्वराभिसन्धिः मदीय एव ग्रन्थः तत्र स्वप्रकाशवादे ज्ञानकर्मत्वमेव प्रकृतोपयोगि निष्कृष्य वक्ष्यामः इत्यर्थः । तच्च ज्ञानस्य विषयत्वमेव ज्ञानकर्मत्वं ज्ञानाधीनव्यवहारविषयत्वम् । इदं च स्वप्रकाशवादिमते ज्ञानस्य स्वव्यवहारहेतुप्रकाशत्वादुपपद्यत इति भावः ।

( स्वप्रकाशे विषयविषयिभावानुपपत्तिशङ्का )

नन्विति शङ्का भाट्टानाम् । विषयसम्बन्धिता सम्बन्धः कृत्तद्धितसमासेभ्यः त्वतल्भ्यां सम्बन्धाभिधानमिति कात्यायनस्मरणादत आह–**सम्बन्धश्चेति** । द्विष्ठो हि सः । तथा च आश्रयाभावे कथं तिष्ठतु संयोग इव विना संयोगिनमिति । किञ्च सम्बन्धप्रमायां सम्बन्धिभेदप्रमा कारणम् । तथा च तदभावे सम्बन्धप्रमैव नास्ति । नच प्रमां विना प्रमेयं सम्भवति । यद्वा । ननु स्वरूपसम्बन्धो विनापि सम्बन्धिभेदं तिष्ठतु सम्बन्धिजन्ये हि सम्बन्धे तथा नियम इत्याशङ्कयाह—**सम्बन्धमितेरिति** । तथा च प्रमाणाभावात् तादृशे सम्बन्धत्वमेव नास्ति अन्यथा देवदत्तः स्वस्मिन्नपि वर्तेतेति भावः ।

मैवम्; विषयविषयिभावसम्बन्धो हि न सम्बन्धिस्वरूपाद्भिन्नः, तथाभूतत्वेऽपि चान्ततः तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युपगम्यम्, अनवस्थाभयात्। तथा सति च सैव तथा सम्बन्धमितिः सम्बन्धस्वरूपात् सम्बन्धिनोर्भेदमनादायैव पर्यवस्यतीत्यभ्युपगन्तव्यं स्वभावसम्बन्धस्य इतरसम्बन्धमर्यादातिशायित्वात्। तथा विनाऽपि सम्बन्धिभेदं विषयविषयिभावात्माऽयं सम्बन्धः पर्यवसास्यति, तदवगमोऽपि तथावगमव्यतिरेकेणैव भविष्यति को विरोधः ?

न चैवं घट-तज्ज्ञानयोर्यादृग्विषयविषयिभावः ततो मात्रयाऽपि स्वप्रकाशे विषयविषयिभावान्यत्वे बाध्यतैकत्र स्यात्। अस्त्येव ह्यविद्याविद्यमाने घट-तज्ज्ञाने बाध्यत्वम्, परमार्थसति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेऽपि न दोषः।

अथवा स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव, यथा तु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था [सत्ता

---

**मैवमिति**। सम्बन्धिस्वरूपातिरिक्तसम्बन्धस्यैव द्विष्ठत्वादिकं न सम्बन्धमात्रस्येत्यर्थः। **तथाभूतत्वेऽपि**—सम्बन्धस्य तथाभूतस्वरूपातिरिक्तत्वेऽपि। **तत्सम्बन्धस्यापि**—विषयतायाः सम्बन्धस्यापि। ननु घटतज्ज्ञानयोर्भिन्नयोरस्तु विषयविषयिभावः संवेदने त्वेकस्मिन्नेव त्वया स्वीक्रियते इत्यत आह—**तथाचेति**। मात्रया—लेशेनापि वैलक्षण्ये उभयोर्विरुद्धयोः पारमार्थिकत्वायोगादेकत्र बाध्यता स्यात् सा च न घटतद्ज्ञानयो विषयविषयीभावस्य सर्वलोकसिद्धस्येति भावः। परिहरति—**अस्त्येवेति**। आविद्यिकस्य[1] बाध्यत्वं क्लृप्तमेव शुक्तिरजतादौ। **पारमार्थिकत्वमिति**। अविद्याकल्पितत्वाभावादिति भावः। किञ्च विषयविषयिभावस्य विरुद्धस्यापि[2] बाध्यत्वरूपाननुगमेऽपि को दोषः।

( वेदान्तिमतेन स्वप्रकाशतानिरूपणम् )

ननु स्वरूपसम्बन्धमात्रस्य विशेषतश्च विषयविषयिभावात्मनः तस्य त्वयैव खण्डयिष्यमाणत्वात्। किमिदमुच्यते इत्यस्वरसादाह—**अथवेति**। भवतां भाट्टानाम्। यदाहुः—"वस्तुत्वमपि सामान्यं व्यक्ति जात्यन्तराश्रयम्।" इति।

सत्तासम्बन्धो भेदाभेदापराख्यं तादात्म्यम्। **सत्ता तु स्वयमेव**—अभेदेनैव। नहि सत्ताश्रयत्वं सत्त्वं किन्तु सदित्यनुगततद्विषयाभेदः। स च क्वचिद् भिन्नेऽपि यथा तथा सुतरामभिन्नेऽपीति भावः।

---

१. आविद्यकस्य इति पाठः आदर्श पुस्तके।

२. "विरूद्धत्वस्यापि बाध्यत्वरूपाननुगमे" इति ख पुस्तके पाठः।

**तु स्वयमेव सद्रूपा, न चैतावता स्वात्माश्रयता तस्याः], तथा ज्ञानमपि स्वत एव सिद्धस्वरूपम् ।**

**अथवा यथा बहुव्रीहिसमासे तद्गुणसंविज्ञाने गुणमादायैव प्रधानस्यान्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता, तथा विज्ञानस्याऽविषयमपि स्वात्मानमादायैव स्वविषयव्यवहारप्रवर्तनं समर्थ्यताम् (सोऽयं गुरूणां सविषयकस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशतापक्षः, तत्र विषयाभावात् । एतावन्मात्रेण तु स्यात्, यथा स्ववि-**

---

एतेन सत्ता न सद्व्यवहारहेतुः किन्तु तत्समवायः सच घटादाविव सत्तायामपि तस्य सम्बन्धतत्वेन द्विष्ठत्वात् । सामान्यविशेषसमवायेष्वेकार्थसमवायात् तदेकार्थसमवायोऽपि तत्समवाय एव । सत्ता स्वतःसद्रूपेति चानुपपन्नं स्वत इति पञ्चम्या[1] सिद्धिं प्रति स्वस्य हेतुत्वमभिधीयते । तच्च तज्ज्ञापकत्वं तदुपादकत्वं वा । सत्ता तु न सत्तया उपपाद्यते ज्ञाप्यते वा किन्तु विधिमुखप्रत्ययवेद्यत्वात् सदन्तरगुणात् सत्ता सतीति गौणोऽयं व्यवहार इति मिश्रस्य अनुशयकथनमपास्तम् । भट्टमतदूषणपरत्वादस्य ग्रन्थस्येति । **तथा ज्ञानमपि स्वत एव सिद्धस्वरूपमिति ।** ज्ञानं सजातीयपरानपेक्षत्वे सति व्यवहारगोचरः परत्र व्यवहार हेतुत्वात् सत्तावदित्यर्थः । सजातीयपदानुपादाने सत्ताया अपि ज्ञानसापेक्षत्वात् दृष्टान्तस्य साध्यवैकल्यं स्यात् ।

परपदाभावे व्यवहारहेतुत्वस्य । (सजातीयपदानुपादाने[2] सत्ताया अपि ज्ञानसापेक्षत्वात् ) । स्वस्मिन् साधयिष्यमाणत्वेनासिद्ध्यापत्तिरिति । यद्यप्येवमपीच्छायां व्यभिचारस्तथापि तस्यापि विषयत्वेन सजातीयेन ज्ञानेन स्वोत्पत्तावपेक्षणीयेन जन्मत्वात् न साध्याभावः । न चैवं ज्ञान इव तस्या अपि स्वप्रकाशतापत्तिः । इष्टापत्तेः । अत एव नास्त्येव ज्ञानातिरिक्ता इच्छा । बौद्धानां सुखत्वस्येव इच्छात्वस्यापि ज्ञानद्वारा आन्तरधर्मत्वात् । अतएव सुखमिच्छामीति सुखोपधानेन तद्बुद्धिरप्युपपद्यते स्वस्या एव सुखविशेषणकबुद्धित्वादिति दिक् ।

यथा सत्तानाश्रयत्वेऽपि सत्ता स्वसत्तयैव सती तथा ज्ञानमपि स्वतःसिद्धस्वरूपं ज्ञानविषयत्वमन्तरेणैव अपरोक्षव्यवहारयोग्यरूपम् । ननु तथापि सत्ताया स्वव्यवहारे ज्ञानमिव ज्ञानस्यापि स्वव्यवहारे स्वज्ञानमपेक्ष्यं स्यादेवेत्याशङ्क्य जड़त्वमन्तोपाधिरित्याशयेन स्वविषयकज्ञानान्वयव्यतिरेकानुविधायिन एव व्यवहारस्य तथात्त्वमित्याशयेन सत्ताया दृष्टान्तान्तरमाह—**यथावेति** । द्विविधो बहुव्रीहिरतद्गुणसंविज्ञानो यथादृष्टसागरमानयेति । तद्गुदुणसंविज्ञानश्च यथा

---

१. व्यवहारागोचर; इति आदर्शपुस्तके द्वितीयपुस्तके च पाठः ।

२. कोष्ठान्तर्गतः पाठोऽधिकः प्रतिभाति । यथा वा इति खण्डनभूषणमणि धृतः पाठः ।

**षयेऽपि कुटादौ बहुव्रीहिवाक्यं व्यवहारं प्रवर्तयतीति तथा ज्ञानमविषयेऽप्यात्मनि अविद्यादशायामिति ।**

**तदेवं यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति, तत्सर्वमन्यथानुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति । तद्यथा—अन्यो ज्ञाताऽन्यश्च**

---

वक्ष्यति कुटादाविति । समस्यमानपदस्यार्थो गुणतया विशेषणतया ज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानः । अन्यपदार्थे एव बहुव्रीहिः "अनेकमन्यपदार्थे"[1] इति पाणिना व्युत्पादनात् बहुव्रीहिप्रतिपाद्यता । तथापि तु समासविषयोऽपि[2] कुटधातुः तत्पदादवगम्यते यथा तथेत्यर्थः ।

ननु तत्र घटपदस्य प्रतिपादकस्य सत्त्वात् । तत्र प्रतिपत्तिर्नत्विह ज्ञानस्योपस्थापकं किञ्चिदस्ति । सत्तायां सत्यं नास्ति पदं तथापि श्याममनुभवामीत्यनुभवोऽनुभवितारमाश्रयतया श्यामं च विषयतया व्यवहारयन् स्वात्मनोऽगोचरमपि स्वात्मानमादाय स्वतःस्फुरणेन स्वात्मनि सुषुप्तिव्यावृत्तिमापाद्य विदितः श्याम इति व्यवहारमापादयति इति पदस्येव अनुभवकरणस्यापि तादृशः स्वभावः कल्प्यत इति नानुपपत्तिः ।

नन्वेवं सति स्वाविषयं स्वात्मानमादाय विशिष्टव्यवहारप्रवर्तनयोग्यता स्वप्रकाशतेत्युक्तं भवति । ततश्च सुषुप्तौ मोक्षे च स्वप्रकाशता न स्यात् । योग्यतायाश्च निर्वक्तुमशक्यत्वादित्याशङ्क्य निष्कर्षयति—**सोऽयमित्यादिना** । सविषयकं प्राभाकराणां ज्ञानं नास्माकं ब्रह्मवादिनां ततश्च तेषां सविषयकज्ञानस्यैवं स्वप्रकाशता, ब्रह्म तु न स्वप्रकाशं सुषुप्तयादौ विषयाभावेऽपि तत्सत्त्वात् । कथमन्यथा सुखमहमस्वाप्समिति स्मृतिः अनुभवं विना स्मृतेरयोगादिति चेत्तथापि वृत्तिरूपस्यैव[3] सविषयता न ब्रह्मणः तर्हि प्राभाकराभिमतस्वप्रकाशताया ब्रह्मस्वप्रकाशतायाश्च[4] साम्यं नास्त्येव किं बौद्ध एव प्रकाशताया इव नेत्याह—**एतावन्मात्रेण त्विति** । कुटो घटः "घटः कुटनिपावस्त्री"ति कोषादिति मिश्रः । गाङ्कुटादिभ्य इत्यत्र यत् कुटपदं धातु परं स एव दृष्टान्तः । **अविषयेप्यात्मनीति** । ज्ञातो घट इत्याकारो व्यवहारः स्वेन यथा घटे जन्यते तद्विषये तथा स्वाविषये आत्मन्यपीत्यर्थः ।

---

१. २।२।२३ अष्टाध्यायी ।

२. समासविषयोऽपि इति पाठः क ख पुस्तके । अन्यपदार्थे बहुव्रीहेर्विधानात् कुटादिघटकः कुटधातुः समासाविषयोन्भवति इति भावः ।

३. वृत्तित्रयस्यैव इति क ख पुस्तके ।

४. ब्रह्मस्वरूपप्रकाशतयोश्चेतिपाठः क ख पुस्तके ।

**ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यम्। तथा अन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यम् सर्वतो बलवती ह्यन्यथानुपपत्तिस्तथादृष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते। तदिद-**

ननु ब्रह्मणो निर्धर्मकस्य व्यवहारागोचरत् स्वप्रकाशतासिद्धिरेव[1] न स्यादित्याशङ्क्याह–**अविद्यादशायामिति**। स्वप्रकाशत्वमपि तत्र काल्पनिकमस्वरूपत्वात् परं त्वविद्यादशायामेव कथ्यते इति भावः।

ननु विज्ञानप्रयुक्तव्यवहारगोचरस्य ज्ञानादन्यत्वं घटादौ दृष्टं तद्विरूद्धमिदं स्वावेद्यत्वे सति स्वस्वव्यवहारहेतुप्रकाशत्वं कथं साधनीयमित्याशङ्क्याह— **तदेवमिति**। नानुमानतः स्वप्रकाशता सिध्यति येन दृष्टिविरोधो दृष्टान्ताभावश्च दोषः स्यात् अपित्वर्थापत्तिः प्रागुक्ता प्रमाणं सा च मायां विना नोपपद्यते तामेवाक्षिपति। नन्वर्थापत्तिरपि दर्शनमूला न दृष्टविरुद्धं भावयितुमर्हतीति चेन्न। व्यवहारान्यथानुपपत्त्या क्वचिद् भवद्भिरपि त्यागस्य स्वीकारात् इत्याह—**तद्यथेति**। तथा चानन्यथासिद्धदर्शनमूलिकार्थापत्तिरन्यथासिद्धं दर्शनं बाधत इति भावः। **अन्यत् ज्ञानमन्यत्ज्ञेयमिति**। यद्यपि ब्रह्मवादिनां ज्ञानं ज्ञेयं न भवति तथापि स्वप्रकाशत्रयस्योपन्यासे बौद्धमतोपन्यासोऽयम्। तेषां हि ज्ञानभेदे विषयस्य ग्राह्यतैव न स्यादिति मतम्।

यद्वा ज्ञानाभेदो विषयस्याप्यनिर्वचनीयः स्वीक्रियते "संविदाभेदो ह्यपरोक्षतेति" ग्रन्थात् तथा च ज्ञेयं ज्ञानादभिन्नं नतु ज्ञानं ज्ञेयभिन्नं ज्ञानस्य मिथ्यात्वापत्तेरिति। ननु ज्ञानस्य अननुभाव्यत्वे शशविषाणवदननुभूतित्वं स्यात् स्वयं स्वप्रकाशत्वसाधकप्रमाणस्य विषयत्वे वेद्यत्वमविषयत्वे तदसिद्ध्यापत्तिरिति तर्कविरोधान्नार्थापत्तिरूदेतुमलमित्याशङ्क्याह—**सर्वतोवलवतीहीति**। अर्थापत्तेस्त्रयो दोषाः अन्यथोपपत्तिरन्यथैवोपपत्तिरसम्भवश्च। नचैषामन्यतमोऽप्यत्र दृश्यते तर्कश्च न स्वतोनिश्चायकः किन्तु विपर्ययपर्यवसानाल्लोकप्रमाणस्यानुग्राहको न चेह विपर्ययपर्यवसानमस्ति संवितिरनुभाव्या सत्त्वात् घटवदिति दृष्टान्तपक्षयोः सत्वस्य भेदो नह्यबाध्यत्वं पक्षनिष्ठम्। घटादौ सच्छब्दवाच्यत्वमपि तथा ब्रह्मणि तदभावात्। सत्पदप्रतिपाद्यत्वादित्वमपि न तथा। अन्यथा गौः विषाणी गोपदप्रतिपाद्यत्वादित्यपि हेतुः स्यात्। किञ्च अनुभूतित्वं साक्षात्वं यदि तदा परोक्षोऽर्थस्तवासत्स्यात्। अनुभूति ज्ञानविषयः सत्त्वादित्यत्र सिद्धसाधनम्। प्रपञ्चविशिष्टस्य सत्त्वादेव शुद्धस्य ज्ञानविषयत्वम्। तदा न करणस्य सर्वस्य धर्मवद्विषयकत्वात् तत्फलस्यानुपपत्तिरेवानुपपन्ना। आविद्यिकवृत्तिविषयत्वं तु न सत्त्वस्य साधकं शुक्तिरजतादौ व्यभिचारात्। स्वप्रकाशत्वमपि तन्न नास्त्येवेति वक्ष्यत एव। अर्थापत्तिस्तु-

१. स्वप्रकाशनासिद्धयैव स्यात् इतिषाठः क ख पुस्तके।

माहुः—'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।'—इति। तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्टि दृष्टवैषम्यं सैव सर्वबलाधिका॥ ६॥

वाच्याऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः।
न ह्येकत्र समावेशः, छायातपवदेतयोः॥ ७॥ इति।

तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधैर्विचारैः स्वप्रकाशता भवता सुप्रतिपदा, अस्माभिस्तु स्वसंवेदनबलादेव स्वतःसिद्धरूपं विज्ञानमास्थीयत इति।

## ६. सौगतब्रह्मवादिनोर्भेदः

एवं च सति सौगतब्रह्मवादिनोरयं विशेषः—यदादिमः सर्वमेवानिर्वचनीयं

---

प्रमाणरूपत्वात् तर्कात् सुतरां वलवतीत्याशयः आहुरिति। भट्टाचार्याः इति शेषः।

अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः इति श्लोकस्योत्तरार्द्धम्। विरूद्धत्वेन सम्मतं विमतं तस्य भावस्तत्त्वं दृष्टाद् वैमत्यं दृष्टवैमत्यं पिनष्टि चूर्णयति बाधते कुतो यतः सर्ववलाधिकतां सर्वेभ्यो मानेभ्यो वलेन अधिकेत्यर्थः। दृष्टताग्रहो दृष्टानुसरणायाग्रहो वान्यदृष्टः। नचोभयानुग्रह एवास्तु स्वतःसिद्धत्व परतः सिद्धत्वयोरेकस्मिन् वस्तुनि समावेशो न यथा छायातपयोः क्रमेणैकस्मिन् देशे स समावेश इति व्यतिरेक दृष्टान्तः।

ननु लक्षणमात्रस्यैव त्वया खण्डयिष्यमाणत्वात् स च सल्लक्षणयोगित्वाभावेन अस्माद् विचारात् कथं स्वप्रकाशतासिद्धिरित्यत आह—**तदित्थमिति**। **आस्थीयत** इति। आस्थाविषयः क्रियते। परेण सह विचारमन्तरेणैव स्वानुभवसिद्धा स्वप्रकाशता निश्चितिरस्माकं दृढेत्यर्थः।

(सौगतमताद् ब्रह्मवादिमते विशेषः)

विचारासत्त्वं स्वप्रकाशत्वं चेदतः तव बौद्धसमता स्यादित्याशङ्क्याह—**एवं सतीति**। भगवता बुद्धेन।

समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः इत्यमरः। लङ्कावतारस्तत्कृतो ग्रन्थः यत्र कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां तु लोकः इति श्लोकः। स्वस्य क्षत्रियस्य सतः पुरस्कृत्य प्रतिग्रहादीन्[1] दोषस्वीकारात्। सर्वमेव

---

१. प्रतिग्रहाधीनस्य दोषस्य स्वीकाराय इति पाठः क ख पुस्तके।

**वर्णयति । तदुक्तं भगवता लङ्कावतारे—**

**'बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।**
**अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥' इति ।**

**विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगि-**

---

ज्ञानं ज्ञेयञ्चेत्यर्थः । विज्ञानस्य यत् स्वप्रकाशत्वमुक्तं तच्छिष्यबुद्धिरक्षार्थमेव च न स्वरहस्यमिति भावः ।

ननु तेषामेवं रहस्यमिति कुतो ज्ञातमिति चेत्तद्वचनेनैव—आदावन्ते च यन्नास्ति वर्तमानकालेऽपि तन्नास्ति शुक्तिरजतवत् । यद् यतो भेदेन अस्ति तत्ततो भेदेनाप्युपलभ्यते । यथा अश्वान् महिषः संवेदनं तु संवेद्यमन्तरेणानोपलभ्यते ततो न स्वतन्त्रमस्तीति यौक्तिकबुद्ध्या विविच्यमानानां ज्ञानानां ज्ञेयानां च स्वरूपं नावगम्यते ज्ञेयेन ज्ञानस्य निरूपणात् ज्ञानेन च ज्ञेयस्य निरूपणात् तन्नैकमपि पारमार्थिकमतः तज्ज्ञानज्ञेयात्मकाः पदार्था निरभिलप्या न निर्वचनार्हाः सर्वप्रकार सत्त्वहीनाश्चेति देशिता उपदेष्टृभिरुपदिष्टा इति तु वाक्यार्थः ।

यद्वा ज्ञानं ज्ञेयात्मकं विश्वं सत्स्वभावमुतासत्स्वभावमुत सदसत्स्वभाव-मुतानुभयस्वभावमित्येवं रूपेण बुद्ध्या विविच्यमानानां स्वभावो न निश्चीयते यतः सत्स्वभावं चेत् कथं कदाचित् असत्वभावं स्यात् स्वभावस्य त्यागायोगात् । सद-सत्स्वभावत्वं तदुभयभिन्नस्वभावत्वं च विरोधादेवासम्भवि । अतः स्वभावशून्या उपदिष्टा इत्यर्थः । **विज्ञानव्यतिरिक्तं पुनरिति** । ब्रह्मवादिनः पुनरित्यन्वयः । विश्वं सङ्गिरन्ते कथयन्ति अथ च न निर्वचनीयमिति व्याहतमित्याशङ्क्याह—**तथा-हीति** । युक्त्या निश्चित्य सदसत्वादिरूपेण निर्वचनायोग्यत्वमित्यनिर्वचनीत्वार्थः । सद्भवितुमर्हतीत्यधिकमपि लोकोक्तिमनुरुध्योक्तमिति मिश्राः ।

वस्तुतस्तु सत्त्वं न साध्यं निश्चितेनापि हेतुना सहासहत्वस्य व्याप्तेरनिश्च-यात् । नच दृष्टान्ते तन्निश्चयः, 'सर्वत्र शङ्कया भाव्यं नियामकमपश्यताम्' इति न्यायात् । अतो हेतुदर्शनात् सर्वत्र साध्यस्य सम्भावनैव भवतीति सम्भावनाबोधना-यैव प्रयोज्यमिति शिक्षयति । बौद्धोक्तं दूषणं परित्यज्य अपरहेतुमाह—**वक्ष्यमाण-दूषणगणेति** ।

मानाधीनामेयसिद्धिर्मानसिद्धिश्च लक्षणात्
लक्षणानि च दुष्टानि सर्वाण्येवाविशेषतः ॥

तथा द्वैतश्रुतेश्चापि नेहनानेति च श्रुतेः
भेदखण्डनयुक्तेश्च निरर्गलतयेति च ॥ इति ।

**रन्ते। तथा हि—नेदं सद् भवितुमर्हति, वक्ष्यमाणदूषणग्रस्तत्वात्। नाप्यसदेव, तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः।**

**यद्यपि 'निर्वक्तुमसामर्थ्ये गुरव उपास्यन्ताम्, येभ्यो निरुक्तयः शिक्ष्यन्ते' इत्युपालम्भवचनं; तत्तदा शोभेत, यदि मेयस्वभावानुगामिनीयनिर्वचनीयतेति न**

---

वक्ष्यमाणो दोषगणः तमेव कथयत्युत्तरेण ग्रन्थेन—

ज्ञानं ब्रह्म स्वरक्षार्थं न तु बौद्धमते स्पृहा।
कृता हि शून्यतात्यन्तं विश्वदृश्यं यथा तथा॥
नह्यसद् दृश्यमित्यस्ति शून्याधिष्ठानरञ्जिता
मतिः कस्यापि सर्वाहि सत्त्वज्ञानात् प्रवर्तते॥

अतः सद् ब्रह्म विश्वस्य दोषदृष्टया निरुध्यते। अधिष्ठानदोषो न कश्चनेत्याह—**नाप्यसदेवेति**। सदसत्पक्षस्तु अनुभवविरोधादेव नोपन्यस्तः। सर्वव्यवहार इति अपरोक्षप्रतिभासः तज्जपुरोर्वातिव्यवहारजन्मनाशादिव्यवहारः सर्वोऽप्युत्सीदेदित्यर्थः। अतः श्रौतबाधापरोक्षप्रतिभासोपपत्तये सदसद्विलक्षणमेवानिर्वचनीयत्वमेष्टमित्युक्ते वक्तुंरसामर्थ्यकृतमेवतदिति मन्वानो य आक्षिपति तस्य उपालम्भवचनं तदस्मत्सिद्धान्ताबोधकृतमित्याह—**तत्तदेति**।

### अनिर्वचनीयत्ववादः

केनचिन्निरूप्यमाणस्य केनचिदनिर्वचनीयत्वं तदसामर्थ्यकृतं स्यादिति तु केनापि निपुणमतिना युक्त्या सत्त्वेन साधितम्। नच निरूपणायोग्यत्वमेव वस्तुनः स्वभाव इत्यर्थः। भेदप्रपञ्चस्य स्वतः परतो वा सिद्धभावाद् अद्वैतागमेन च प्रतिपन्नोपाधौ बाध्यमानत्वादित्यादिवक्तव्यदोषादित्यर्थः। अन्यथा अनिर्वचनीयत्ववादो मध्यमदृष्टिमपेक्ष्योक्तः। वस्तुतस्तु भेदः प्रपञ्चासत्त्वमेवाश्रितं कस्यचिदसतोऽपरोक्षत्वमपि सम्भवति दर्शनस्य दुरपह्नवत्वात्। नच घटः सन् प्रतीयमानत्वादिति शक्यते प्रमोत्पत्तिपक्षस्य साध्यस्याबाधितस्य प्रमीयमाणत्वस्य हेतो दृष्टान्तस्य च लौकिकस्य च साध्यवैकल्यात्। अलौकिकस्य च ब्रह्मणः प्रमाकर्मत्वानुपपत्तेः। तस्य उत्पत्त्याप्तिविकृतिसंस्कृतिहीनत्वात्। नच तर्हि त्वयाऽपि कथं[1] बोध्यं श्रुत्या तद्बोधे बाधकविरहस्य वक्ष्यमाणत्वात्।

अत्र मिश्राः—यत्स्वयं प्रकाशं ज्ञानमभ्युपेयते तस्य सर्वोऽयं प्रपञ्चो विषय इत्यस्तु तथा च तद्विषयतया प्रपञ्चो न मिथ्या। नाप्यद्वैतं प्रपञ्चस्य सत्त्वात्। नापि तादृशे तत्र प्रमाणान्तरापेक्षा स्वतः सिद्धत्वात्।

नापि नैयायिकानामपसिद्धान्तः ईश्वरज्ञानस्य तैरभ्युपगमात्। नापि ज्ञानस्य

---

१. समत्वं बोध्यम् इति खं पुस्तके।

**ब्रूयुः, वक्तृदोषादिति च वदेयुः। यस्तु वादी निरुक्त्यभिमानं धत्ते, स निर्वक्तुं न तु शक्ष्यति वक्तव्यदोषात्।**

**न च ते दोषाः स्वकमपि घ्नन्तः जातयः कथं न स्युरिति वाच्यम्; यतो**

---

ज्ञानान्तरवेद्यतापक्षोक्ता दोषाः तेनैव सर्वविषयकेण सर्वदोषनिरासात्। तस्मात् स्वबधाय कृत्योत्थापनमेतत् स्वप्रकाशज्ञानसाधनम्। तस्य प्रपञ्चो विषयः इत्यत्र किं प्रमाणमिति चेन्न। प्रपञ्चविषयतामपि तस्यैव ज्ञानस्य प्रमाणत्वात्। त्वन्मते स्वप्रकाशतायामिव अस्माकं तु तद्भिन्नं धर्मग्राहकं प्रमाणमस्ति। नच तद्विषयीकृतं प्रपञ्चखण्डनयुक्तयोऽप्यपनेतुमीशते। तस्य सत्त्वात् प्रमाणसिद्धत्वात्। तस्मात्—

त्वया निर्भयदत्तेऽस्मिन् स्वप्रकाशैकमन्दिरे
न्यासीकृतः प्रपञ्चोऽयं नापह्नोतुं तवार्हति॥

प्रकाशपाशबद्धानां प्रपञ्चानां विमोचने।
प्रभवन्तु स्वयं बाध्याः कथं खण्डनयुक्तयः॥ इति

तदत्यन्ताज्ञानतः तत्प्रभायाः संप्रलापवत्। तथाहि ब्रह्मात्मकज्ञानस्य प्रपञ्चविषयत्वे ममापि सर्वप्रपञ्चज्ञानापत्तिः। अकल्पितस्य भेदस्य मिथ्याभूतस्य अभावः सद्रूप एव अभावाभावस्य भावत्वात्। यथा वह्नौ सर्वात्मना कल्पिते सर्पाभावः विशेषदर्शनदशायां प्रतीतो न पृथक् यदि स्यात् तदा सर्पोऽपि सप्रामाणिकः स्यादिति भावप्रमाविषयत्वात्। नचासौ सर्पोऽन्यत्रास्ति प्रमाणाभावात् तत्प्रत्यक्षकारणाभावाच्च। एवमात्मनि मुक्तदशायां दुःखाभावोऽपि व्याख्यात इति चेत्तर्हि तादृशजीवस्य स्वरूपज्ञानाद्यात्मकं सत्यज्ञानादिवाक्यप्रतिपाद्यं त्वंपदार्थलक्ष्यं तत्पदार्थलक्षणं सर्वज्ञसर्वकर्तृत्वाद्युपलक्ष्यं ब्रह्मतयोरभेदः कथं वाक्यार्थः स्यात् पदार्थातिरिक्तस्य तस्याभावात्। अस्तु तथा तथापि च ताभ्यां पदाभ्यां लक्ष्यमेकं प्रतिपाद्यत इत्यखण्ड एव वाक्यार्थः। एतादृशी धीरेव साक्षात्काररूपा शब्दाभ्याम् अज्ञाननिवर्तिका। नचाकाङ्क्षायोग्यतापि संसर्गघटिता। किन्तु येन पदेन विना यत् पदं न प्रतिपाद्यानुभावकं तत्पदं तेन साकाङ्क्षम्। तथा आसत्तिरपि अव्यवधानेन, पदद्वयप्रतिपाद्यस्य स्मृतिः। योग्यतापि पदद्वयप्रतिपाद्यानुभाव्यस्य बाधविरहः। सच लौकिके संस्पृष्टरूपस्य, वेदे त्वखण्डरूपस्येति शाब्दबोधसामग्रचविकलेति।

अथ तत्र सत्यपि तदेकत्वे अविद्यादोषान्न प्रपञ्चभानम्। तर्हि ब्रह्मणोऽप्यसङ्गस्य तद्विषयत्वं न पारमार्थिकं सम्भवतीत्याविधिकमेव तत्ततः कुतः प्रपञ्चस्य सत्त्वम्। किञ्च ब्रह्मणः प्रपञ्चविषयत्वे मानम्। नहि तत्र तथा। प्रपञ्चाभावविषयत्वे एव तन्मानमिति वदतः तद् वैपरीत्यस्यैव सुवचत्वात्। नवा ब्रह्म मानं निष्प्रकारकत्वात्। सिद्धे हि तस्य सप्रकारकत्वे मानम्। तस्याञ्च सत्यां प्रमात्वमितरेतरा-

निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वमप्यनिर्वचनीयैरेव। अनिर्वचनीयैरेव च तैर्व्यवह्रियत एवेति कुतोऽस्मान् प्रति व्याघातः स्यात्? तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात्।

ननु सदसत्पक्षयोर्दोषदर्शनाद् अनिर्वचनीयतेति ब्रुवाणस्य किं सदसत्त्वसंशयः? किं वा सदसत्त्वपक्षबहिर्भावाभ्युपगमः? आद्ये भवितव्यं तावत्सदसत्त्वयोरन्यतरेणेति एकपक्षदोषस्याभासत्वम्, तच्च सत्त्वपक्षदोषस्यैवाभ्युपेयमावश्यकत्वात्। यदि

---

श्रेयोपपत्तेः। ईश्वरज्ञानस्यापि सत्यमेव विषयो नच प्रपञ्चस्य सत्यत्वं सिद्धमद्यापि, खण्डनयुक्तयस्तु भवद्रीत्या खण्डनीया अबाध्याश्च। नच तर्हि[1] तत्रत्यं बाधकमुद्भावयन् मध्यस्थदृष्ट्या त्वं जयी स्या इति दिक्।

अथ वक्तव्यदोषा अपि वक्तव्यदोषे दुष्टतया स्वव्याघातकत्वेनाभासा इति न तैर्निरुक्तिः शक्या वारयितुमित्याशङ्क्य परिहरति - स्वोक्तं दोषं घ्नन्तः दूषयन्तः दोषाणां स्वव्याघातकत्वं निर्वचनीयताघातित्वं यदि तदा इष्टापत्तिरित्याह—**स्वयमप्यनिर्वचनीयैरेवेति**। अनिर्वचनीयैः कथं व्यवहारः स्यादित्याशङ्क्याह — **व्यवह्रियत एवेति**। तथा च त्वत्पक्षसिद्धौ व्यवहारोऽशक्यापलापः। साधितं च निर्वचनीयानिर्वचनीयोदासीनैः सत्त्वासत्त्वौदासीनैरिव कथा प्रवर्तयितुं शक्येतिभावः।

ननु स्वव्याघातकं दोषं ब्रुवाणस्त्वं जातिवादी निरनुयोज्यानुयोगेन निगृहीत इति जितमस्माभिरित्यत आह—**तज्जातित्वस्येति**। जातित्वमङ्गीकृत्येदमुक्तम्। वस्तुतो जातित्वमपि वक्ष्यमाणदोषेण निर्वक्तुमशक्यमिति तदव्युत्पाद्य नाहं निग्रहीतुं[2] शक्य इत्यर्थः। वस्तुतो युक्तिभिर्व्यवहर्तव्यं ताश्च निर्वक्तुमशक्या इति स्थिते तस्या जात्युत्तरत्वनिरासाय जातिलक्षणे स्वाननुमतत्वे सतीति विशेषणं प्रक्षेप्यम्। नहि उत्तरस्य जातित्वभिया दोषस्य निर्वचनीयताभावो निवर्तते वह्नेरौष्ण्यमिव, स्वाभाविकं हि तत्तस्य। अन्यथा तस्य स्वभावतैव निरसनीया नान्या गतिरस्ति। न वा निग्रहभिया दोषाणां दोषा अपि निवर्तन्ते भवदभिमतप्रमया[4] सिद्धा हि ते इति दिक्।

सामान्यतो निश्चितम् आभासत्वं विशेषे उपसंहरति—**तच्चेति**। चस्त्वर्थः। आवश्यकत्वमेव विवृणोति—**यदीत्यादिना**। असत्त्वपक्षेऽपि सत्त्वपक्षस्याभासत्वं

---

१. तत्रात्यन्ताबाधकम् इति ग पुस्तके।

२. न शक्य इति पाठः आदर्शपुस्तके।

३. सत्त्वपक्षेऽपि इत्यादर्शपुस्तके पाठः।

४. भवदभिमतप्रमाणसिद्धा इति पाठः ख पुस्तके।

**तावत्सत्त्वपक्षस्तदा सत्त्वपक्षदोषः कथं संगच्छेत ? अथाऽसत्त्वपक्षस्तदा सर्वासत्त्वे तद्दोषः कथं सद्भाववान् भवितुं प्रभवेत् ? द्वितीयस्तु व्याघातादेवासम्भवी, 'परस्परविरोधे हि न प्रकारान्तरस्थितिरि'ति।**

**तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम्, यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते, स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत ? साऽपि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव।**

**परस्यैव व्यवस्थयैवं पर्यवस्यति–निर्वचनप्रतिक्षेपादनिर्वचनीयत्वम्, विधिनिषेधयोरेकतरनिरासस्य इतरपर्यवसायितायास्तेनाभ्युपगमात्। ततः परकीयरीत्येदमुच्यते–अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति।**

**वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतःसिद्धे**

व्युत्पादयति—**अथापीति**। तद्दोषः-सत्त्वपक्षदोषः। तत्पक्षदोषस्यासत्त्वे च सत्त्वपक्षोऽपि स्यादिति न सर्वासत्त्वम्। तस्मात् सत्त्वपक्षदोषस्यासत्त्वे तुल्यकक्षत्वाभावात् संशयपक्षो नोपपद्यते इति।

अथ सत्त्वासत्त्वपक्षयोर्दोषदर्शनादपरः पक्ष एवाश्रयणीय इत्याशङ्क्याह—**द्वितीयस्तु** इति। न प्रकारान्तरस्थितिः—यथा नित्यत्वानित्यत्वयोः विरोधिनित्यत्वानित्यत्वातिरिक्तो न कोऽपि वेति। किमनया दूषणपरम्परया अनिर्वचनीयस्य सत्त्वमपलप्यते उत तस्य स्वरूपमेव। नान्त्यः। अप्रमितस्य निषेधायोगात्। प्रथमे त्विष्टापत्तिरित्याह–**यो हीति**। अनिर्वचनीयतायामपि अनिर्वचनीयताया एव मयाभ्युपगमात् इत्यर्थः। अनिर्वचनीये निर्वचनानर्हे सदसत्त्वे यस्य सोऽनिर्वचनीयस्तस्य भावोऽनिर्वचनीयता।

नन्वेवं यथा प्रपञ्चस्यासत्त्वेन निर्वक्तुमशक्यस्य न सत्यत्वसिद्धिः तथा अनिर्वचनीयत्वस्यापि तथात्वेऽसिद्ध्यापत्तिरित्यत[2] आह–**परस्यैवेति**। एवं शब्दार्थमाह–**निर्वचनेति**। अनिर्वचनीयत्वमित्यतोनन्तरमितीति शेषः। ननु सत्त्वनिर्वचनप्रतिक्षेपादनिर्वचनीयत्वमिति नैवं परस्य व्यवस्थेत्यत आह—**विधीति**। सामान्यतः परेण स्वीकृतया व्यवस्थया विशेषव्यवस्थाप्यङ्गीकार्येत्यर्थः। अस्तु एवमनिर्वचनीयताख्यस्य धर्मस्यानिर्वाच्यत्वं धर्मिणस्तु कथमित्यत आह—**तत इति**। तयेत्यर्थे सार्वविभक्तिकस्तसिः। तर्हि किमनिर्वचनीयत्वं त्वया न साधनीयं तदा च कथं तत्सिद्धिरित्यत आह—**वस्तुतस्तु**।

( पररीत्या परमतखण्डनम् )

नहि मयाऽनिर्वचनीयत्वं साध्यते परं तु प्रपञ्चसत्त्वासत्त्वयोः प्रमाणाभाव

१. अतिरिक्ता इति सर्वत्र पाठः।
२. सिद्धापत्तेरिति पाठः क ख पुस्तके।

**चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति, तान् प्रति ब्रूमः—'न साध्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वात्' ।**

**अत एवास्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्यनुयोगा निरवकाशाः; त्वद्व्यवस्थयैव त्वद्व्यवस्थाया व्याहत्युपन्यासात् । न चोपन्यास एव निर्बन्धकारणम्, विचारोपन्यासस्य सदसत्त्वोपगमाद्युदासीनैर्विचार्यमित्युपेत्यैव परं विचारप्रवर्तनायाः शक्यत्वमित्यावेदितत्वात् ।**

**यदि तु विचारस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यमित्युच्यते; तदा प्रमाणमव्यापार्य न तदीयसत्त्वाभ्युपगमोऽपि शक्यते, अतिप्रसङ्गादिति विचारस्य विचार्यग्रहणेऽनवस्थया विचारारम्भ एवाशक्यः स्यात् ।**

**न च पूर्वपूर्वसिद्धत्वाद् विचारे विचारान्तरमिदानीमगवेषणीयम् । विचारस्य पूर्वसिद्धत्वे विचार्यरूपस्वविषयव्यवस्थितत्वात् तस्य, विचार्यमपि पूर्वमेव**

---

मुपन्यस्य तस्य सत्त्वासत्त्वव्यवस्थायामुदासीनाश्चरितार्थाः परिशेषसिद्धा निर्वचनीयव्यवहारा सुखं = निरूपणक्लेशविधुरमास्महे । ननु तद्व्यवस्थायामौदासीन्ये शून्यवाद एव कथं न स्यादित्याशङ्क्याह—**ब्रह्मतत्त्वे इति** । भरं—तात्पर्यं तन्निरूपणम् । भरम् अध्यवसायमिति मिश्राः । ननु ब्रह्मण्यपि प्रमाणाभावे तदसिद्धापत्तिः सद्भावे च वक्ष्यमाणदूषणग्रस्ततेत्याह—**स्वतः सिद्ध इति** । तत्र हेतुमाह—**चिदात्मनीति** । चितोऽपि गुणत्वाद् ब्रह्मत्वमसिद्धमित्यत आह—**केवले इति** । गुणगुणिभावशून्ये, नहि नित्यायाश्चित आश्रयं विना काचिदनुपपत्तिः । स्थितिरनुपपन्नेति चेन्न । तदाश्रयस्येव विनाश्रयतयैवोपपत्तेः । ननु [२]सदसद्द्वयोरसिद्धौ लोकप्रसिद्धभावाभावविभागप्रसिद्धिविरोध इति चेन्न, तस्यैव खण्ड्यमानत्वेन तस्य वस्तुतोऽभावात् । ननु तर्हि सदसत्त्वविचारे कथं ते प्रवृत्तिरिष्टस्य साध्यस्य अभावादित्यत आह—**ये त्विति** । ब्रह्मभिन्नं तत्त्वमस्तीत्ययं पक्षोऽस्माकं द्वेष्यः स मा प्रसर्पत्वित्यनिष्टाभावार्थं प्रवर्तामहे इत्याशयः ।

ननु दूषणोपन्यासस्यावश्यं सत्यत्वमभ्युपेतव्यमस्मद्रीत्या अत आह—**नचेति** । निर्बन्धकरणं सत्त्वाभ्युपगमाय अनिर्वचनीयत्वनिरासप्रयासकरणमित्यर्थः । प्रमाणमव्यापार्य—अप्रवर्त्य अनुपन्यस्येति यावत् । कुत्रेयमनवस्था—न तावदुत्पत्तौ, विचारणायाः[३] स्वकारणेभ्य एव तदुत्पत्तेः । नापि विज्ञप्तौ अनादि

---

१. ब्रह्मतत्त्वे भवं तात्पर्यं तन्निपुणमिति आदर्शपुस्तके पाठः ।

२. धियः इति द्वितीयपुस्तके पाठः ।

३. विचारकारणम् इति क, ख, पुस्तके ।

**विचारितमित्यनारम्भ एव विचारस्य। अथ विचारविशेषस्य पूर्वमसिद्धत्वात्तदर्थं विचारारम्भः; तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथा शुष्कचर्वणम्।**

**यदि च त्वद्दर्शनरीत्या अभिधीयमानमस्माभिर्बाधं बाधसे, तदा स्वाभ्युपगमरीतिबाधाऽभिधायितैव ते स्यात्। अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधेऽस्माकमेव जेतृता, 'खण्डनयुक्तयो बाधिकाः, निर्वाह्यपक्षश्च बाध्यः' इत्यस्यास्मदुक्तपक्षस्य त्वयैव निर्वाहात्। तस्मात् त्वया निर्वाह्यमस्माभिश्च खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेति। तदेवं भेदप्रपञ्चोऽनिर्वचनीयः ब्रह्मैव तु परमार्थसदद्वितीयमिति स्थितम्।**

---

विचारपरम्परया उत्तरोत्तरविचारस्य सत्त्वासिद्धेरित्याशङ्क्य परिहरति—**नन्वे-त्यादि**। स्वस्य—विचारस्य। विचार्यश्चासौ स्वविषयश्चेति विग्रहः। विचारस्य पूर्वं पूर्वं सिद्धत्वेन स्वविचार्यत्वरूपेण स्वविषयेण नित्यं सद्घटितत्वाद् विचार्यमपि पूर्वं सिद्धमिति व्यर्थं एवेदानीं विचारारम्भ इत्यर्थः। इदानींतनविचारस्य आरम्भं समर्थयति—**अथेति**।

यद्यपि परेण तस्यां कथायां त्वदुपन्यस्तखण्डनयुक्त्या बाधने परस्यैव जयः, स्तदुपन्यस्तदोषस्य त्वयाऽनिर्वाहात् तथापि परेण खण्डनयुक्तीनां बलवत्त्वमस्मदुक्तमङ्गीकृतमिति ममैव जेतृतेति भावः। कथं जेतृतेत्यत आह—**खण्डनयुक्तयो बाधिका इति**।

अत्र मिश्राः—ब्रह्माद्वैतं त्वया स्थापनीयं मया खण्डनीयमितीदृश्यामेव कथायां मया वक्तव्यं नान्यत्रेति परेणापि यद्यपि सुवचम्। नचैवं कथैव न स्यादिति वाच्यम्। इष्टापत्तेः। ब्रह्म स्वतःसिद्धमेवेति न तत्र साधनापेक्षेति चेत्। प्रपञ्चोऽपि सर्वजनसिद्ध एवेति न तत्र साधनापेक्षेति तुल्यम्। सर्वजनसिद्धत्वमपि त्वयोपपादनीयमिति यदि तदा स्वतःसिद्धत्वमपि त्वयोपपादनीयमिति तुल्यम्। तर्हि वितण्डाकथैव न स्यात् द्वयोरपि स्थापनाप्रसङ्गादिति चेन्न। शक्तिजिज्ञासया प्रपञ्चसत्यत्ववादिनोरप्यन्योन्यं तत्सम्भवात्, तथापि खण्डनयुक्तयो बलवत्य इत्यत्रैव हृदयमित्याहुः। तन्न, नहीदृशव्यवस्थयैव कथेति ग्रन्थार्थः, परन्त्वेतादृश्यां कथायां निर्वाह्यनिर्वाह एव तव जयः अन्यादृशकथायां खण्डनयुक्तीरपि परोक्ताः खण्डनयुक्तिभिरेव बाधित्वा अस्माभिः स्वोक्तनिर्वाहः कार्य एव। नहि खण्डनयुक्तयः पारमार्थिकं बाधितुमीशते इत्यव्यवहितमेव वक्ष्यामः इत्यत्र तात्पर्यात्। अत एव, तथैवोपसंहरति—**तदेवमिति**। प्रपञ्चोऽनिर्वचनीयः काल्पनिकः। कल्पनायाश्च निरधिष्ठानाया अनुपपत्तेराह—**ब्रह्मैव परमार्थ सदिति**। एवकारेण शून्याधिष्ठानता निवार्यते। अधिष्ठानतौपयिकरूपमाह—**परमार्थसदिति**।

## ७. अद्वैते प्रमाणविचारः

**ननु अद्वैते किंप्रमाणम् ? प्रश्न एव तावत् अद्वैतमनङ्गीकुर्वतो नोपपद्यते। प्रमाणं यत्राद्वैते पृच्छयते तस्याऽप्रतीतौ कथमेवंभूतः प्रश्नः संगच्छते ? न हि प्रमा-**

---

ननु नित्यत्वादिधर्माणामपि सत्त्वात् ब्रह्मैवेत्यनुपपन्नमत आह—**अद्वितीयमिति**। नित्यत्वादयोऽपि तस्मिन् कल्पिता एवेति भावः।

ननु प्रपञ्चस्यावस्तुत्वात् मास्तु प्रमाणापेक्षा अद्वितीयस्य तु वस्तुत्वात् प्रमाणमपेक्ष्यं[1] तथा च यदि प्रमाणमङ्गीकुरुषे तदा प्रमाणप्रमेयविभागादद्वैतस्य व्याघातोऽनङ्गीकारेण साधकाभावादसिद्धिः। नहि परमार्थसदिति प्रतिज्ञामात्रात् किञ्चित्सिध्यतीति दुरभिसन्धिः पृच्छति—**ननु अद्वैते किं प्रमाणमिति**। उत्तरं प्रश्न एवेति। प्रश्न एव तावत् प्रमाणमिति विच्छिद्य योजयति अयं प्रश्नः। तथा चाद्वैतोल्लेखी प्रश्नः द्वैतसत्यत्ववादिनो नोपपद्यते, तथाच प्रश्न एव अनुपपद्यमानः तत्र प्रमाणम्। प्रश्नान्यथानुपपत्तिरेव अद्वैतसाधिकेत्यर्थः। तामेवाह—प्रमाणमिति मिश्राः तन्न। तथासति श्रुतिरद्वैते प्रमाणमिति ब्रूम इति प्रश्नाक्षेप उपसंहारश्च नोपपद्यते परं तु प्रश्नः श्रुतिरपीत्येवावक्ष्यते। तस्मात् किं शब्दोऽयमाक्षेपे, नास्त्येवाद्वैते प्रमाणमिति।

अथवा प्रश्ने तत्राक्षेप्तुरतिभ्रमस्य प्रमाणोपन्यासेनापि बोधनमतिदुष्करमिति मत्वा प्रश्नखण्डनेन पराजितोऽयं प्रमाणं जिज्ञासमानः खण्डं बोधनीयो भविष्यतीत्याशयेन एकमेव वाक्यमिदं प्रश्नखण्डनार्थमुक्तमित्येव योज्यम्। नचैवमाक्षेपनिरासपरत्वे तथैव वाच्यमयमाक्षेपो नोपपद्यते इति ननु प्रश्न इति तन्निरासश्च। अविद्यासिद्धव्यवहारमुपपादयता कार्यः इति स एवोपन्यासार्ह इति ग्रन्थासङ्गतितादवस्थ्यमिति। यद्वा आक्षिप्तमपि पृष्टं मत्वा प्रश्नं खण्डयतीति विद्यासागरव्याख्यानं तत्परिहर्तुः पराभिप्रायाज्ञानमापादयतीति हेयमेव। तस्मात् जिज्ञासून् प्रति प्रमाणमग्रे विवक्षिष्यन्नेव अहं यूनां[2] प्रश्नखण्डनेन अहङ्कारं खण्डयतीत्येव युक्तम्। नचैवमहङ्कारं खण्डयतोऽपि प्रमाणमुपन्यस्तमेवेति वाच्यम्। पाक्षिकसिद्धमादायापि प्रमाणप्रश्नः सम्भवतीति वक्ष्यमाणत्वात्। तथा च एवं विकल्पनीयं किमयमाक्षेपे प्रश्ने वा। आद्ये हेतुर्वाच्यः, प्रतिज्ञामात्रेण साध्यासिद्धेः, तथा च न्यूनाङ्गता।

यदि च मया प्रश्नार्थत्वे दूष्यमाणे ममाज्ञानं तेनोद्भाव्यते तदा मम[3]

---

१. अपेक्षम् इति पाठः क ख पुस्तके।

२. अहङ्कारशालिनाम् इतिभावः।

३. मया इति क ख पुस्तके। २. नोत्तरमिति पाठः क पुस्तके

**णमात्रं भवता पृच्छ्यते, किन्नाम विषयविशेषनियतम्। तच्च तदोपपद्यते, यदि तादृशं ते प्रतीतिमारोहेत्। प्रश्नस्य वाग्व्यवहारविशेषत्वात् व्यवहारस्य च स्वज-**

---

न्यूनतयैव दोषेण पराजयः, अतो हेतूदाहरणयोरनुपन्यासादेव विप्रश्नपर इति निर्णीयैव, तत्र उत्तरं देयं खण्डनरीत्यैव नतु प्रमाणोपन्यासरीत्येति नोत्तरग्रन्थविरोधः।

मिश्रास्तु एतद्ग्रन्थस्य प्रमाणपरत्वे दूषणमुद्भाव्य श्रुतिरद्वैते प्रमाणमिति ग्रन्थमवतारयिष्यन्तीति तत्र वक्ष्यामः इति।

अद्वैतं प्रतीतमप्रतीतं वेति। आद्यं दूषयति-**प्रमाणमिति**। नन्वद्वैताप्रतीतौ अद्वैतप्रमा मास्तु प्रमाणप्रश्नस्य का अनुपपत्तिरित्यत आह—**नहीति**। प्रमाणमात्रस्य पटादौ सिद्धत्वात् प्रश्नानर्हत्वात् घटादौ तदसिद्धावपि अस्य प्रश्नस्य स विषयो न अद्वैतपदवैयर्थ्यापत्तेरिति भावः।

ननु न मयाऽद्वैतं प्रमाणं चोभयं पृच्छ्यते इत्यतः आह—**किं नामेति**। किन्त्वित्यर्थः। यद्यपि नोभयं प्रश्ने प्रधानं तथापि अद्वैतविषयविशिष्टं प्रमाणं पृच्छ्यते न केवलम्। अस्तु विशिष्टस्य पृच्छ्यमाण (न) त्वं तथापि विशेषणस्य किमायातमित्याशङ्क्याह—**तच्चेति**। विशेषणत्वेन अद्वैतस्यापि पृच्छ्यमानत्वं घटते यदि तादृशविषयविशिष्टं प्रमाणं प्रतीतं भवेत्। अत्र प्रमाणप्रतीत्या प्रश्नोपपत्तौ किं प्रमाविषयाद्वैतप्रतीत्या इत्याशङ्क्याह—**तच्च तदोपपद्यते**। तत्रहेतुमाह—**प्रश्नस्येति**। इदं प्रश्नवाक्यं स्वविषयविशिष्टतयैव प्रतीयते, प्रमाणव्यवहारत्वात् घटप्रमाणवत्। नच भविष्यदनुमानादौ व्यभिचारः तस्यासद्विलक्षणविषयविशिष्टतयैव प्रतीतेः, अन्यथा अयथार्थत्वेन प्रतीतेः भ्रान्तत्वापत्तेः। प्रमाणविषयकं प्रतीयते इत्येतावता प्रश्नस्य तत्प्रतीतिपूर्वकत्वं कुत इत्यत आह—**व्यवहारस्येति**। स्वव्यवहारस्य जनकं ज्ञानं स्वजनकज्ञानं तस्य विषयो यस्तेन नियतत्वात् नियमेन तद्गोचरत्वात्।

प्रश्नः स्वजनकज्ञानविषय नियतः व्यवहारत्वात् गामानयेति व्यवहारवत्। नच भ्रान्तव्यवहारे व्यभिचारः, तत्राप्युक्तसाध्यसत्त्वात्[२] अन्यथा मध्यमवृद्ध—व्यवहारात् क्षणिकस्य संगतिधीर्न स्यात्। स्वजनकं ज्ञानञ्चाद्वैतविशिष्टप्रमाणगोचरम् अतो विशेषणाद्वैताप्रतीतौ विशिष्टप्रमाणगोचरमेव ज्ञानं न स्यादिति। अत्र विपक्षबाधकमाह—**अन्यथेति**। अस्य=वाग्व्यवहारस्य। अयमर्थः इत्येतस्य

---

१. नोभयप्रश्ने प्रधानम् एतत्वं प्रभवति वियतः।
प्रमाणमविषयकं प्रतीयते इति ख पुस्तके।

२. तवापि इति ख पुस्तके।

नकज्ञानविषयनियतत्वाद्, अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्य ज्ञानस्यासम्भवेन व्यवहारविषयपारिप्लवापत्तेः ।

यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते, तदा तत्प्रतीतिस्ते प्रमा वा स्यात् ? अप्रमा वा ! आद्ये यदेव तस्याः प्रमायाः करणम्, तदेवाद्वैते प्रमाणं तवापि सम्प्रतिपन्नमिति वृथा तस्य प्रश्नः ।

न च वाच्यम्—सामान्यतोऽद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणप्रश्नः, यतः सामान्यसिद्धावेव अद्वैतसिद्धौ विशेषविचारः काकदन्तविचारवत्

---

नियमस्य व्यवस्थापकमन्यन्न सम्भवति विपक्षादेरपि ज्ञानपूर्वकत्वात्, अतो विषयपरिपूरस्य अव्यवस्थाया आपत्तिर्बाधिकेत्यर्थ इति विद्यासागरः ।

तन्न । प्रमाणमिति शब्दस्य विनापि प्रमाणविषयविशिष्टप्रतीतिं प्रतीतेः तस्माद् प्रतीतमेव पृच्छयतामित्याशङ्क्याह **प्रश्नस्य चेति** । अत्र विवादपदं ( विशेषपदं ) प्रश्नात्मको व्यवहारः व्यवहारजनकज्ञानविषयविषयकः तद् वाग्व्यवहारत्वात् दण्डेन गामानयेति वाग्व्यवहारवदिति न्यायप्रयोगं कर्तुं प्रश्नस्येत्यादिना आह त्वादित्यन्तम् । हेतोः पक्षधर्मतायुक्त्या व्यवहारस्य चेत्यादिना व्याप्तिमाह । विपक्षे बाधकं तु घटादिज्ञानजन्य व्यवहारस्यापि घटादि विषयतानियमव्यवहारो न स्यात् इत्येवमेव ।

यद्वा अन्यत् जानाति अन्यद् वदतीति व्यवहारविषयस्याव्यवस्थितत्वापत्तिरेव ।

**अद्वैतं प्रश्नविषयः** । प्रमाणविषयतयेति शेषः ।

तस्याः प्रमायाः करणमित्यनीश्वरप्रमाणत्वेन तस्या जन्यत्वेन करणं यत्वनियमादिति ।

**तवापि** । अपिकारान्ममापीत्यर्थः । मम तु सुतरामिति भावः । प्रमाण विशेषप्रश्नस्य प्रयोजनं किमद्वैतसिद्धिरुत प्रमाणविशेषसिद्धिरेव । नाद्यः । इत्याह—**यतः** । अद्वैतस्य विशेषविनिर्मुक्तं मत्वा प्रमाणमात्रत एव परिपूर्णसिद्धिर्न विशेषसिद्धये प्रमाणविशेषापेक्षेति नान्य इत्याह—**बोधान्तरादिति**[२] । प्रमाणविशेषा सिद्धिः स्वतोऽपुरुषार्थः स्यादित्याशयः । अथ सामान्यसिद्धिः[३] विशेषसिद्धिव्याप्या तदभावे न स्यादिति विशेषसिद्धिः सामान्यसिद्धि ( द्धि ) स्वनिर्वाहाय अपेक्षत इत्याशङ्क्याह—**सामान्य सिद्धिरेवेति** । विशेषस्य अप्रतीतौ

---

१. प्रमाणविषयविशिष्य प्रतीतिप्रतीतेः इति पाठः

२. वोधान्तरादिति पाठो मूले नास्ति ।

३. सामान्यसिद्धिविशेषसिद्धिर्व्याप्या इति पाठः । पृ० ४३ पं० १४

**स्यात्। सामान्यसिद्धिरेव च विशेषमप्याक्षिप्यानयन्ती विशेषमपि ते कथितवती किमत्र प्रश्नेन? परिगणितेषु हि प्रमाणप्रकारेषु मध्ये यत्रैव दोषं न प्रमिणोषि, तत्रैव विशेषे सामान्यस्य विश्रान्तेः। यदि च परिचितचरेषु प्रमाणप्रकारेषु सर्वेष्वेव दोषं प्रमिणोषि, तदा प्रमाणान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव।**

**यदि च का प्रमाणव्यक्तिरसौ इति प्रश्नार्थः परिशिष्यते, तदा न सर्वा व्यक्तिर्विशेषतो निर्देष्टुं शक्यते इति तदनिर्देशेऽपि न नः किञ्चिदपचीयते।**

---

तत्प्रश्नस्यानुपपत्तिरित्यपि द्रष्टव्यम्। निर्विशेषं न सामान्यमिति ज्ञातासामान्यधीरेव विशेषमाक्षेप्स्यतीत्यर्थः। यस्य प्रमाणस्य अद्वैतविषयत्वे दोषो नास्ति तादृशं प्रमाणं पृच्छामीति चेत्तत्रापि-**परिगणितेषु**[१] **प्रकारेषु** इति प्रत्यक्षादिष्वित्यर्थः। परिचितचरेषु—दृष्टपूर्वेषु। **दोषं प्रमिणोषीति**। प्रत्यक्षस्य योग्येन्द्रियसन्निकर्षापेक्षत्वादतीन्द्रिये[२] ब्रह्मणि रूपादिरहिते न प्रामाण्यम् अनुमानस्य व्याप्यादिसापेक्षस्य तदभावेऽभावात्। शब्दस्य च प्रवृत्तिनिमित्त सापेक्षस्य सम्बन्धगुणादिशून्ये अप्रवृत्तेः। उपमानसादृश्यविषयस्य अनिर्द्धर्मकेऽसम्भवात्। अर्थापत्तेरपि व्यतिरेकव्याप्तिमूलिकाया व्यतिरेकाभावेन अप्रमाणत्वात्। अभावस्य च भावरूपे प्रमेये अनासज्जनीयत्वमेवेति दोषं प्रमिणोषीत्यर्थः। विशेषाभावविशेषिनिर्णयेऽपि सप्तमं प्रमाणं कल्पतां नतु प्रमितसामान्यपरित्याग इत्याशयेनाह—**प्रकारान्तर-पक्षे इति**।

विद्यासागरस्तु लक्षणया **खण्डवोधकतत्त्वावेदकं** प्रमाणमाक्षिपतीत्यर्थः।

ननु प्रमाणविशेषत्वेन ज्ञातेऽपि सा प्रमाणव्यक्तिः शृङ्गग्राहिकया अभिधानाय प्रश्नं (विषय) इत्याशङ्क्य दूषयति।

**यदि चेति**—पर्वतोऽग्निमान् इति प्रमितौ द्विहस्ता सा अग्निव्यक्तिरेकहस्तावेत्यादि विशेषात्मना निर्देष्टुमशक्यापि[१] प्रमेया यथा तथा प्रमाणव्यक्तिः विशेषतो निर्देष्टुमशक्यापि प्रमेया भविष्यतीत्यर्थः। असौ परिचितचरेभ्योऽन्या प्रमाणव्यक्तिः केत्यन्वयः **सर्वाव्यक्तिरिति**। अशेषैः सुविशेषैः सह एकापि व्यक्तिः असर्वज्ञेन केनापि वक्तुं न शक्यत इत्यर्थः जगत्कारणे परमाणौ किं प्रमाणमित्यत्र अनुमानं प्रमाणमिति वोधने तु इयमनुमानव्यक्तिरिति प्रतिपुरुषमनुमानव्यक्तीनामानन्त्येन तद्विशेषस्य असर्वज्ञेन निर्देष्टुमशक्यत्वात्तथा ममापीत्यर्थः इति विद्यासागरः।

---

१. निर्देष्टुमशक्यता इति क पुस्तके।

२. प्रमाणाप्रकारेषु इतिमूलपाठः।

३. अपेक्षत्वादित्यारभ्य प्रमाणिकर्वाभावैः इति यावद् ग्रन्थः ख पुस्तके नास्ति।

**यदि च द्वितीयः, तदानीमद्वैतप्रतीतिमप्रमां मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणम्' इति कथं न प्रश्नो व्याहन्यते ?**

**अथ अप्रमा सा मम मते, त्वन्मते तु प्रमैवेति तत्करणं प्रमाणं पृच्छ्यते इति ब्रूषे; नैतदप्युपपद्यते, तवाऽद्वैते ज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममाऽनियमात् । यदि नाम मया सदाऽद्वैतमभ्युपेयते, तावता किं तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् ? वस्तुतो वह्निमत्यपि पर्वते यदि**

---

**तदानीमिति** । अप्रमाविषयस्य प्रामाणिकत्वाभावो निश्चितो नवा । अन्त्ये मदीया प्रमितिः प्रमेति व्याहतिः । आद्ये किमत्र प्रमाणमिति प्रश्न एव व्याहतः । भावाभावयोरेकत्रासम्भवात् । एतेनाप्रमाविषये किं प्रमाणमित्याकारेण न प्रश्नः येन व्याघातः स्यात् नवा तथा प्रश्नेऽपि व्याघातो नहि योऽप्रमाविषयः स कदापि न प्रमाणविषय इति मिश्रदूषणमपास्तम् ।

एवं हि प्रष्टव्यं—किमि(म) यं प्रतीतिः प्रमा अप्रमा वा । आद्ये दोष उक्त एव । अन्त्ये त्विदं तथाच अप्रमाविषये प्रमाणं किमित्याकारता दुर्वारा । नच द्वितीयोऽपि दोषः तेन रूपेण अप्रमाविषये तेन रूपेण प्रमाणविषयत्वस्य कदाप्यभावात् । **ममानियमादिति** । अद्वैते प्रमाणं वक्तव्यमित्येव मम नियमो नतु तवाद्वैतज्ञानस्य कारणं वाच्यमिति । ननु मम ( या ) अद्वैतप्रतीतेः करणं यदि त्वया प्रमाणरूपं न वाच्यं तदा सा मदद्वैतप्रतीतिः तवापि मते भ्रम एव स्यात् प्रमाणाजन्यत्वात् ।

मैवम्—मया त्वत्प्रतीतेः करणस्य प्रमाणस्य अनुपन्यासेऽपि विषयाबाधेन त्वत्प्रतीतेः प्रमात्वात् तत्करणस्यापि प्रमाणस्य त्वया अनुपन्यस्यमानस्यापि सत्त्वात् । नहि मदुपन्यासः प्रमाणस्य प्रयोजकः द्वैतप्रतीतेः करणं त्वया प्रमाणत्वेनाङ्गीकार्यम् अबाधितानुभवकरणत्वात् भवदभिमताद्वैतप्रमाणवदिति कथं ममानियमादित्याशङ्क्याह—**यदि नामेति** । यद्यपि त्वत्प्रतीतेः करणं मया वक्तव्यमित्यत्रा[२] नियमान्नायं दोषः सम्भवी तथापि अभ्युपेत्य परिहरति । ममाद्वैतप्रमायाः करणस्य प्रमाणत्वेपि तावकीनस्य ज्ञानस्य अबाधितविषयस्यापि कारणं न प्रमाणं भवितुमर्हति स्मृतेर्याथार्थ्येऽपि तत्करणमेव[३] । नाप्यर्थस्य वस्तुसत्वेऽपि तदनुभवकरणस्य तथात्वे व्यभिचारादित्याह—**वस्तुतः इति** । **एष्टव्यमिति** अयमाशयः–प्रमा यथार्थपरामर्शजन्या अतः तदभावे सन्नपि वह्निर्न भासते किन्तु वन्ह्यन्तरमेवेति

---

१. योऽप्रमाविषयमम कदापि न इति क ख पुस्तके

२. इत्यत्रापि नियमात् इति क पुस्तके ।

३. तत्करणस्यैव इति ख पुस्तके ।

**कश्चिद् बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोत्येतावता किं बाष्पविषयं धूमज्ञानं करणं प्रमाणमेष्टव्यमिति ?**

---

परस्य मतम्। ननु यथार्थपरामर्शः प्रमाणत्वेन इष्यते यथा तथा अद्वैतप्रतीतेः प्रमायाः करणं प्रमाणं चेदिष्यते तदा अस्मदभिमतसिद्धिः स्यादित्यद्वैतप्रमाया मदभिमताया भ्रमत्वसिद्धये त्वया दुष्टकरणजन्यत्वमेवेष्टव्यं ननु प्रमाणजन्यत्वमेवेष्टव्यमिति।

ननु वन्ह्यन्तरविषयत्वे, न तत्र सम्भवति भ्रमत्वम् अद्वैते एकस्मिन् विषये कथमेवं भवत्विति चेत् तर्हि न तस्या उभयरूपत्वं तथा च यदि अद्वैतप्रतीतिः भ्रमरूपैव तदोक्तदोष एव अद्वैतभ्रमस्य करणं मया न वक्तव्यमेवेति। अथ प्रमैव सा तदोक्तमेव यत् तस्याः सामान्यतो विशेषतश्चावगतं तदेवेति।

ननु द्वैतप्रतीतिरस्त्येव मम, अद्वैतं न जानामीति विशिष्टाज्ञानविषया प्रमाभ्रमाभ्यां भिन्ना साक्षिरूपा अतो नाज्ञातत्वात् प्रश्नासम्भवः। प्रमाणस्याद्यापि अनिर्णीतत्वाच्च न प्रमाणप्रश्नानवसरोऽपि ज्ञातस्यापि प्रमाणाभावो मिथ्यात्वादज्ञानस्य साक्षिसिद्धस्यैवेति। एतेन कति ते पुत्रा इति प्रश्नमात्रप्रत्याशया (प्रत्यश्रया पुत्रा न) पुत्रान् सम्भावयतो दार-परिग्रहेऽप्युदासीनस्य सर्वजनप्रसिद्धप्रपञ्चापलापिनः शशशृङ्गकूर्मरोमगगनारविन्दादिप्रमाणप्रश्नवलायातमनन्तं प्रपञ्चं साधयतः कस्ते प्रतिमल्लः (प्रतिपन्नः)। कथञ्च ब्रह्म नास्तीति वदति अत्र किं प्रमाणमित्यनेन प्रश्नेन ब्रह्मनास्तितैव न सिद्धचेत्। कथायां (याः) यस्य यस्य पदार्थस्याभावस्त्वया साध्यः तस्य तस्य प्रमाणप्रश्नवलात् सत्ता तदानीमेव वाद्यन्तरेण साधनीयेति दुरुत्तरं व्यसनम्। वस्तुतो ब्रह्माद्वैतं घटादिवृत्ति नवेति मध्यस्थविप्रतिपत्तौ ब्रह्माद्वैतं घटादिवृत्तीति विधिकोटिपरिग्रहे त्वया कृते तत्र प्रमाणप्रश्ने प्रमाणवचनमेवोचितं कथासम्प्रदायस्य त्वयापीष्टत्वात् इत्यनुशयेनाह—**अस्तुवेति** शङ्करमिश्रप्रलापोऽपास्तः। प्रतिवन्दिमात्रस्य अदूषणत्वात् प्रश्नमिषेण प्रमाणस्यैवोपन्यासाच्च न कथकसम्प्रदायविरोधः। मिथिलायां च गमनमकृतवतोऽस्य महापुरुषस्य कुतो दारपरिग्रहं विना पुत्रसम्भावनया अवस्थानम्। नच कति ते पुत्रा इति प्रश्नः संख्याविषयकः पुत्रसम्भावनया विना नोपपन्नः पुत्रेषु प्रमाणम्। तव पुत्राः सन्ति नवा यदि सन्ति तदा कतीत्यस्य पुत्र[४] कोटिज्ञाना

---

१. निर्णीतत्वाच्चेति पाठः क पुस्तके।

२. क ख पुस्तके एकस्यैव यस्य निर्देशः।

३. क पुस्तके घटवृत्तीति पाठो विप्रतिपत्त्यननुगुणतया नोचितः। किन्तु घटादि वृत्तीति पाठो युक्तः।

४. पुत्रकोथिज्ञानादिवोपपत्तेः आदर्शपुस्तके पाठः।

**अस्तु वा प्रश्नोऽयं यथा तथा, श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः । श्रूयते खलु**

देवोपपत्तेः । नहि पुत्रसम्भवनापि तादृशमहापुरुषात् पश्यतः[१] कस्य विज्ञायते । यदि ज्ञायते तदा तद्वाक्यादेव निवर्तते इति नाज्ञातविषयकप्रश्नासम्भवेन अद्वैतसिद्धिः । अतः सिद्धिः कूर्मरोमादि प्रश्नस्यापि, योवाऽन्येन[२] कूर्मश्रुतवान् रोम च स्वदेहे दृष्टवान् तस्यैव जायते इति नाज्ञातविषयता प्रश्नस्य[३] । नापि ब्रह्म नास्तीति प्रमाणप्रश्नात् तत्प्रतियोगिकाभावसिद्धिः प्रतियोगिनिरपेक्षाया अभावसिद्धेरभावात् । अविद्योपस्थित एव प्रतियोगी चेत् कीदृशी सा यदि ब्रह्म न जानामीत्याकारा तदाऽज्ञानविषयतायाः,[४] सिद्धे ब्रह्मणि पारमार्थिके सदाकारे प्रपञ्चाधिष्ठाने ब्रह्माभावसाधकं प्रमाणं दृष्टवा निरसनीयम् । यदि नास्ति ब्रह्म कथं तर्हि त्वमसि सन् अहमपि, असन्नवेति चेत्तर्हि कथमभावस्य ज्ञाता[५] । असद् विशेषो जानात्येव इति चेन्न । मम प्रतिवादिनः सत्त्वेन स्फूर्तिः तवापि प्रति (+) वादितादशायाम् तथात्वादेववादितादशायाम् अहमिव त्वमपि असदेवेतिचेत् सत्यम् । त्वमेव तत्र वशिष्ठै[६] न संभाष्यसेपि तथापि सत्त्वासत्त्वयोः सत्त्वकल्पनैव लधीयसीति । अत एव शब्दनित्यत्वसाधनदशायां[७] शब्दनित्यत्वमेव सिध्यति । शब्दानित्यत्वप्रमाणप्रश्नात् शब्दात् शब्दानित्यमपि सिध्यति चेत् न । अनित्यसाधकं प्रमाणं शब्दं विषयीकरोति नत्रेति प्रश्नवाक्यार्थविवरणात् । अत्रापि ब्रह्माद्वैतस्य घटादिवृत्तित्वे किं प्रमाणमित्येवं पुनरितिचेदस्त्वेवं, तथापि ब्रह्माद्वैतं प्रतीतं नवेत्याक्षेपः सम्भवत्येव । ब्रह्माद्वैतं—ब्रह्मभेदविरहः स ब्रह्मणि प्रतिपन्न एव चेत् । केन प्रमाणेन लौकिकप्रमाणानां तदविषयत्वात् । अलौकिकस्य च प्रश्नानुपपत्त्यैव सिद्धत्वात् । प्रमाप्रमाबहिर्भूते न साक्षिणि बाधात् विशेषणतया तत्सिद्धिरित्येवानुशयः । तथा च नाहमद्वैतं प्रमितं ब्रवीमि[८] नाप्यप्रमाविषयीभूतं नाप्यभावप्रमाविषयीकृतं किन्तु प्रतीतमात्रमतस्तत्र प्रमाणं पृच्छामि । तदभावे अविद्यावन्मिथ्यास्यादिति जिज्ञासोः प्रश्नमभ्युपेत्याह—**अस्तु** वेत्यादि । श्रुति रेवेत्येवकारः क्वाचित्कः पाठः । स च एवकारः प्रत्यक्षादेः निवृत्त्यर्थः । कर्मकाण्डश्रुतिस्तत्र न प्रमाणमित्यत आह—**श्रुतय**[९]**इति** ।

---

१. नश्यतः । २. अन्ये ३. प्रश्न ४. अज्ञानविषयतायाः सिद्धे इति क पुस्तके ।

५. ज्ञातता क पुस्तके ।

६, क पुस्तके अस्पष्टोऽयं पाठः ।

७. प्रश्नदशायामित्यधिकः ख पुस्तके ।

८. ब्रवीति पाठः क ख पुस्तके ।

९. प्रमाणमित्यत आह—श्रुतय इति क पुस्तके पाठः ।

**'एकमेवाद्वितीयम्', 'नेह नानास्ति किंचन' इत्यादि । श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यं चेश्वराभिसन्धौ साधयिष्यते ।**

अत्र श्रुतिरप्रमाणम् अनाप्तवाक्यत्वात् [१]तन्मतवाक्यवत् । नच हेत्वसिद्धिः गावो वा सत्रमासतेत्यस्य अन्येन वक्तुमशक्यत्वात् । तत्र तत्सद्धौ तदेकवक्तृतया तत्-सामान्यादितरेषु तथात्वमिति न्यायेन विधिवाक्योपनिषदोरपि तत्साधनात् । प्रामाण्येऽपि श्रुतीनां न सिद्धेऽर्थे किन्तु कार्यमात्रे प्रवृत्तिनिवृत्तिप्रयोजकत्वाद् वेदस्य इति प्रभाकराः तत्कथं श्रुतिरद्वैते प्रमाणमिति सिद्धवदुपदिश्यते तत्राह—श्रुति-प्रामाण्यमित्यादिना साधयिष्यत इत्यन्तेन । अप्रामाण्यं प्रमाऽकरणत्वं[२] चेन्नेदमस्ति समधिगतसंगतिकानां वेदवाक्यादर्थावगमात् । नच जनयतु ज्ञानं तथापि सन्न, ईहात्मकत्वमेव तदिति वाच्यम् । अग्निहोत्रं जुहुयादित्यतो वाक्यार्थे[३] लघुज्ञानस्या नुभवात् । नवा सामग्रयपि[४] तस्यास्ति नवेत्यंशबोधकस्य शब्दस्यासत्त्वात् । नापि तज्ज्ञानस्य मिथ्याविषयत्वं विषयाभावग्राहकस्यानुपलम्भात्[५] । नचोपन्यस्तमनु-मानमेव बाधकमितरेतराश्रयात् । इदं प्रमाणम् अनधिगताविपरीतनिश्चिति-करणत्वात् चक्षुर्वत् इति सत्प्रतिपक्षसम्भवाच्च अन्यथा बुद्धावगमोऽप्रमाणम् उभय संप्रतिपन्नेतरप्रतीतवाक्यत्वात् उन्मत्तवाक्यवदित्यपि स्यात् ।

किञ्च यत्र क्वचित् अनाप्तत्वं हेतुघटकं चेत्तर्हि युधिष्ठिरवाक्ये संवादिनि व्यभिचारः । सर्वत्र अनाप्तत्वं तु कथं लोकोत्तरप्रज्ञेन ज्ञातं प्रकृतार्थानाप्तत्वन्तु प्रकृतार्थाप्रतीतौ अप्रत्ययात् । नवा तत्र प्रमाणम् अस्ति । गावो वेत्यादि वाक्यन्तु गोसत्रविधायकवाक्यशेषभूततया प्रमाणं तथा जैमिनितन्त्रे व्यक्तम् । नच कृत्स्नो वेदः कार्यपरः, प्रमाणत्वात् चक्षुर्वत् । नच वेदानांम् अद्वैतवादिमते असतां कथं प्रामाण्यमिति वाच्यम् । चक्षुर्वदुपपत्तेः । यथा हि अद्वैतसाक्षात्कारात् प्राक् तेषां प्रामाण्यं तथास्यापीत्यदोषः ।

यद्वा वेदानामप्यात्मरूपत्वान्नासत्त्वं स्वरूपसत्ता तेषां नाप्रमाणता । मिथ्या-र्थत्वं तु कल्पितभेदरूपतया प्रपञ्चमात्रस्य एवं स्वरूपं ब्रह्मैव अन्यथा प्रमेयता न स्यात् अज्ञातताया जडेषु असत्त्वात् । किञ्च घटस्य स्वरूपं पदस्य स्वरूपं रुपस्यस्वरूपमित्य-नुगताकारप्रतीतेः सदिति प्रतीतेश्च सदाकारब्रह्मरूपता दुर्वारेति न किञ्चिदेतत् ।

ननु उदाहृता श्रुति विधिशेषभूता भवितुमर्हति सिद्धार्थवाक्यत्वात् सोरोदी-

१. उन्मत्तवाक्यवदिति युक्तः पाठः ।

२. प्रमाण्यं करणत्वचेन्नेदम् इति आदर्शपुस्तके पाठः ।

३. वाकारार्थौ लघु ज्ञानस्यानुभावाभावात् इति पाठः ।

४. नचासामग्रचपि इति ख पुस्तके ।

५. विषयाभावग्राहकस्य बाधस्य अनुपलम्भात् इत्यर्थः ।

**सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात्तथापि पदसमन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनात्, धियां स्वतःप्रामाण्यस्य बाधकैकापोद्यत्वात् ।**

दिति वाक्यवत् इति । मैवम् । स्वार्थप्रयोजनशून्यत्वस्योपाधित्वात् । अद्वैतप्रतिपत्तेः पुनः स्वत एव प्रयोजनत्वम् अशेषानर्थनिवृत्तेः परमानन्दावाप्तेश्चेति ।

अङ्गीकृत्यापि ज्ञानविधिशेषत्वं दूषयति—**सिद्धार्थानामिति** । पदानां समन्वय एकार्थबोधनसामर्थ्यम् । **अन्यपरिभवनादिति**[1] । आसां श्रुतीनां स्वार्थपरत्वस्यानभिभवात् अन्यपरत्वमकिञ्चित्करमितिभावः । मानान्तरप्राप्तिविरोधौ हि तदभिभावकौ नचेह तौस्तः इति वादरायणीयदेवताधिकरणन्यायेन देवताविग्रहादिव तत्सिद्धिः । यदि च पदानां विधिशेषत्वे स्थिते तावतैवाध्ययनविधिवाक्यावगतप्रयोजनलाभेन अवान्तरवाक्यार्थबोधोऽतएव देवताविग्रहदीनामपि न सिद्धिः किन्तु सर्वाणि पदानि संभूय विधेयं निषेध्यञ्च स्तुवन्ति निन्दन्ति वा कोऽर्थः वलवदनिष्टाननुवन्धित्वं तदभावं लक्षयति तदा तस्यावश्यकत्वेन तद्विरोधेन मुख्यार्थता । ऐन्द्रया गार्हपत्यमुपतिष्ठते इत्यनेन विनियुक्तया ऐन्द्रया मुख्यत्वे इन्द्र इव अर्थवादपदानामपि अध्ययनविधिनियुक्तानां मुख्यप्रयोजनाभावे सत्येव स्तुतौ निन्दायां च विनियुक्तानां पुनः प्रयोजनाकाङ्क्षाविरहेण तत्कल्पनाया वाक्यार्थ भेदेन भेदापत्तेः प्रमाणाभावाच्च । तथापि शाब्दसामग्रीसत्त्वात् तत्प्रतीतिर्दुर्वारेति चेन्न । ग्रहं संमार्ष्टि इत्यादावेकत्वस्येव तद्वाक्यस्य तदसामर्थ्यनिर्णयेन तद्वोधस्य प्रतिभासरूपत्वावधारणादित्युच्यते । तदपि न । स्तुतिरिव[2] उपासनाविधेः प्रयोजनस्याप्याकाङ्क्षितत्वाद[3]द्वैतस्यापि प्रयोजनत्वात् । यदि चैवं वाक्यभेदः स्यात् तदापि रात्रिसत्रन्यायेन एकस्य आर्थिकत्वमस्तु तत्रापि प्रयोजनपरत्वे मुख्यार्थात्यागः । अवगतयोः पुंप्रयोजनवत्यामुपासनायां दार्वीहोमन्यायेन विधेरेव द्वे शक्ती कल्पयित्वा स्तावकत्वमस्तु प्रवर्तनैव च विधिरिति । अत एव ज्ञानं न विधेयं यागरूप कर्मण इव तस्य पुरुषतन्त्रत्वाभावात् । न च तत्रापि चक्षुःसंयोगोत्पत्ति द्वारा पुरुषतन्त्रता,[4] विनापि पुरुषव्यापारमन्यतरकर्मकचक्षुःसंयोगोत्पत्तिस्तस्यातद्व्यापारत्वात् ।

ननु अप्रामाण्यस्येव प्रमाणस्यापि परतस्त्वात् कथं ज्ञानमात्रेण अर्थसिद्धिरित्यत आह—**धियामिति** । औत्सर्गिकं बाधकैकापोद्यं ज्ञानं हि जायमानं

१. अन्यपरिभावादिति पाठः ।

२. स्तुतेरेव क पुस्तके पाठः।

३. अकैतस्यापि इति पाठः ।

४. पुरुषतन्त्रतां इति पाठः क ख पुस्तके ।

**ननु नाद्वैतश्रुतीनामृजावर्थे प्रामाण्यं सम्भवति, प्रत्यक्षादिबाधात् । ततश्चान्यत्रैव क्वचित्तात्पर्यं कल्प्यम् ।**

**मैवम्; यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि मन्यते तदाऽऽत्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्यते, न तु प्रत्यक्षादिकं भूतभाविवर्तमानसकलव्यक्तिभेदग्राहि जाय-**

---

रजतमिदमिति प्रकारांशे संशयविरोधिज्ञानरूपमेव जायते तस्य च प्रकारस्य नेदं रजतमितिधिया बाधे पूर्वज्ञानं मिथ्येति निश्चीयते ।

अत्र विद्यासागरः—प्रमाया उत्पत्ति र्न ज्ञानसामग्रीतोऽतिरिक्तं हेतुमपेक्षते मानाभावात् । नच प्रमाज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावदिति उदयनाचार्योक्तं प्रमाणं दृष्टान्तस्य साधनविकलत्वात् । नहि वेदान्तमते अप्रमाया ज्ञानविशेषत्वं सा हि अविद्यायाः परिणामः ज्ञानस्य अन्तःकरण परिणामत्वात् । अत एव ज्ञानहेत्वरिक्तहेत्वजन्यत्वे अप्रमाज्ञानविशेषवत् प्रमैव विशेषाय स्यात् ज्ञानसामग्रीजन्यत्वादिति विपक्षबाधकमप्यपास्तम् । अप्रमायां प्रमाहेत्वन्तःकरणजन्यत्वाभावादिति । प्रामाण्योत्पत्तिपरतया इमं ग्रन्थं व्याख्यातवान् ।

( श्रुतौ प्रत्यक्षादिबाधोपन्यासः )

**अन्यत्रेति** । ब्रह्म, परमात्मा एक एव न[१] नाना । परमात्मानः सन्ति इत्येव इत्येके[२] तन्नाद्वितीयपदवैयर्थ्यापत्तेः । किन्तु ब्रह्मैकमेव न सजातीय भेदवत् न ब्रह्मनिष्ठभेदप्रतियोगीत्यनूद्य अद्वितीयत्वेन विजातीयभेदशून्यत्वेन उपासनीयम् अन्नं ब्रह्मेत्यादिवत् इति । अद्वितीयमित्यस्य द्वितीयत्वावच्छिन्नाभावोऽर्थः । शङ्का—तदप्यप्रमितश्चेत्तर्हि कथमुपासनायामपि प्रकारः स्यादिति दोषे सत्येव आह—**यदद्वैतेत्यादि** ।

**बाधपरिहारः**

प्रत्यक्षादिबाधोऽसिद्ध एव तथाहि—किं, भूतभाविवर्तमानयावद्वस्तुविषयको भेदग्रहो विरोधी यत्किञ्चिद् विषयको वा । आद्यं दूषयति—तदात्मीये विषये–नातीन्द्रिये, योग्येऽपि सन्निकृष्टे एव नच सर्वसन्निकृष्टम् । अथालौकिकः सन्निकर्षः सर्वस्मिन्नेव योग्येऽयोग्येचास्ति तथापि विशेषरूपेण उपस्थिते एव भेदग्रहो घटः पटाद्भिन्नः पटघटौ भिन्नावित्येवं तदाकारानुभवात् । नच अनन्तविशेषप्रकारेण प्रतियोग्यधिकरणयोरुपस्थितिः सामान्यलक्षणया, तथासति

---

१. साराय इति ।
२. नना । इत्यत्र । पाठः क पुस्तके ।

**मानमावयोः सम्प्रतिपन्नमस्ति, तादृशेन ज्ञानेन चोत्पद्यमानेन सर्वज्ञतां तदा तव श्रद्दध्यां, यदि जानासि मम चेतसि किं वर्तते इति।**

**यदि च प्रत्यक्षादि किञ्चिन्मात्रविषयम्, तदा तद्विषयादन्यत्रापि प्रवर्तमाना अद्वतश्रुतिस्तेन ना बाधितुं शक्यते, स्वविषयमात्रे प्रमया विपरीतविषयज्ञानबाधनात्। अन्यथाऽतिप्रसङ्गात्। मा हि भूदग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यम्।**

**यदा चैवं तदा बाधिकायाः प्रत्यक्षधियो बाध्यायाश्चाऽद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बोधयतीति तत्प्रत्यक्षादि कथं स्वात्मानमेव बाधेत। घटेन पटेन तद्भेदेन च स्वविषयेण सह तस्या एव धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात्। न हि तस्या धियः**

---

सर्वसार्वज्ञापत्तेः। नापि योगजधर्मेण तस्य सर्वप्रकारता[१] ग्राहकप्रमाणानुपन्यासे तदसिद्धेः, उपन्यासे च उपन्यासकर्तुरपि सार्वज्ञ्यापत्तेः। अतएव ईश्वरज्ञानस्य सर्वभेदविषयतया तदेव बाधकमित्यपि परास्तम्। तत्रापि प्रमाणोपन्यासे तद्दोषतादवस्थ्यात् अनुपन्यासे तदसिद्ध्यापत्तेः।

अपि च प्रमाणान्तरसिद्धमेव ईश्वरज्ञानस्य विषयो नतु खपुष्पमपि ततश्च परस्पराश्रयो दुर्वार इति हृदि निधाय आह—**आवयोः सम्प्रतिपन्नमिति**। तथा च प्रसाध्याङ्गं केनेत्यर्थः। बाधकञ्चाह—**तादृशेन चेति**। (नैवाथ्यं) अर्थो वाक्यार्थस्तच्छून्यत्वं बाधितत्वमिति यावत्। बाधिकायाः प्रत्यक्षधियः बाध्याया अद्वैतधियः तयोरैक्यं-बाध्यबाधकयोरभेदः ततश्चाभेदे बाध्यबाधकभावाभाव इति भावः। स्वात्मानं-स्वाभिन्नामद्वैतबुद्धिं भेदबुद्धिः स्वविषयात् स्वस्य भेदं न वोधयति तयोरद्वैतश्रुत्या अभेदे वोधिते विषयाभावादित्याह-**घटेनेत्यादिना**। यद्वा तथापि सर्वाभेदो न सिद्ध इत्याशङ्क्य प्रत्यक्षेणाबाधितमद्वैतबुद्धेः विषयान्तरमाह— **घटेन पटेन तद्भेदेन चेति**। सर्वस्य अद्वैतं गोचरयन्त्या श्रुत्या घटपटौ भिन्नौ इति बुद्धेः स्वविषयैर्घटपटतद्भेदैः सहाभेदे प्रामाण्यं कथं नासादयितव्यम्। घटपटभेदग्राहिणः प्रत्यक्षस्य सत्त्वात् कथमेवं भविष्यतीत्याशङ्क्याह—**तत्रेति**। विषयिणो विषयेण सहायभेदांशः इत्यर्थः।

अत्रेदमवधेयम्—त्रयाणां ज्ञानाभेदं बोधयति नतु ज्ञानस्य हि तया भेदं घटादिरूपत्वम् तथा सति साधकाभावात् त्रितयासिद्ध्यापत्तेः। सिद्धः स्वविषयादात्मनो देहाग्रहणम्। प्रत्यक्षविषयविरचनेन उपपादयति **नहीति**। स्वात्मा स्वाग्रहणे स्वनिष्ठतया भेदग्रहाभावः। स्वात्मना वा स्वविशिष्टभेदग्रहः पटादौ पटा-

---

१. योग्यरहितः पाठः।

**स्वात्मा वा स्वात्मना सह घटपटादेर्भेदोऽपि वा विषयः। 'घटपटौ भिन्नौ' इत्येवमाकारा हि सा जायते, न तु 'अहं घटात् पटाच्च भिन्ना, मत्तो वा तौ भिन्नौ' इति।**

**स्वप्रकाशताऽपि स्वमात्रे साक्षिणी, न तु यतो यतः प्रकाशो भिद्यते ततस्ततस्तस्य भेदेऽपि। अन्यथा तत्तदपि स्वप्रकाशकुक्षौ निक्षिपन्ती न कथमद्वैते एव पर्यवस्यति ?**

**न च तया धिया स्वस्य स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशित एव स्यादिति वाच्यम्; 'पुरोवर्ति रजतम्' इति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च प्रकाशे भेदग्रहापत्तेः।**

**धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोऽपि तथा स्यादिति सैव धीर्न**

---

दिकं ज्ञानभिन्नमित्याकारः प्रतियोगिनः स्वस्यानुपस्थितेरितिभावः। अहमिति ज्ञानस्यैव आत्मत्वादित्याशयः। बुद्धेः स्वप्रकाशत्वपक्षे भेदग्राहकत्वं स्यादित्याशङ्क्याह—स्वप्रकाशने बौद्धमते स्वमात्रे साक्षिणि नतु घटपटभेदविशिष्टे। प्रभाकरमते स्वमात्रे व्यवहारप्रवर्तिका नतु यतोयतो भेदस्तस्य प्रतियोगित्वेन भेदस्य व्यवहारे कारणं प्रमाणाभावात्। विमताभेदः प्रतियोगिधर्मिगोचरज्ञानतद्भिन्नज्ञानगोचरः पटघटयोः परस्परभेदवदिति विरोध्यनुमानाच्च। अत्र विपक्षबाधकमाह— **अन्यथेति**। संविदन्तरमन्तरेण सिद्धत्वं संविद एवेति नियमात्। प्रतियोग्यादिघटितभेदस्य संविद्विषयत्वमन्तरेण[1] सिद्धौ संविदद्वैतमेव स्यात्। नचात्मनि व्यभिचारस्तत्रापि उक्तहेतुना साध्यस्यापत्तेः सुकरत्वात्।

ननु बुद्धिः स्वं विषयञ्च प्रकाशयतीत्युभयस्वरूपग्रहणमेव भेदग्रह इत्याशङ्क्याह—**नच तयेति**।

( ज्ञानेन स्वरूपलक्षणो भेदो न प्रकाशनार्हः )

**भेदग्रहापत्तेरिति**। तथा च भेदाग्रहत्वं तव मते भ्रान्तित्वं तन्न स्यात्। **धर्मविशेषमिति**। प्रतियोगितावच्छेदकविरुद्धो यो धर्मः शुक्तित्वादिः तद्विशिष्टस्वरूपमित्यर्थः। **धियोऽपि तथास्यादिति**। बुद्धेरप्यसाधारणत्वे न गृह्यमाणो यो धर्मः तद्विशिष्टस्वरूपमेव भेदः। नच घटज्ञानकाले ज्ञानस्य घटव्यावृत्तधर्मवत्त्वेन ग्रहोऽस्ति ज्ञानस्य घटव्यावृत्तत्वेनाज्ञानादिति भावः। प्रदीपधर्मस्य प्रदीपत्वस्य प्रदीपेनेव बुद्धिनिष्ठो धर्मोऽपि बुद्ध्यैव गृह्यतां प्रकाशत्वाविशेषादित्याशङ्क्याह— **तस्मिन्निति**। धर्मेण सह इन्द्रियसन्निकर्षस्यादौ बुद्धेः प्रागवक्तव्यतापत्तेः तस्य धर्मप्रत्यक्षहेतुत्वात्। नचैवं सम्भवति बुद्ध्यभावे तत्सम्बद्धधर्मेण सन्निकर्षासम्भवात्।

---

१. अन्तरेणासिद्धौ इति ख पुस्तके पाठः।

**तत्प्रकाशः तस्मिन् सन्निकर्षाद्यपेक्षायां धियः प्राक् तदसंभवात्। आत्मवदात्मधर्मेऽपि सन्निकर्षानपेक्षा सा इति चेन्न, ग्रहणत्व-स्मृतित्व-प्रमात्वादावपि तथैव स्यादिति।**

**तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्थाप्यमाना कथमात्मनः स्वस्मादेव भेदे प्रमाणीभवितुं प्रभवतीति बाधिकायां बुद्धौ घटपटयोर्भेदे प्रमात्वाभावमा-**

---

आदावपेक्षाद्यपेक्षा नचैवं घटं जानामीत्याकाराधीः कथं स्यादिति वाच्यम्। येन विना यन्न[1] भासते तद्धीहेतोस्तद्बोधकत्वनियमेन तत्र तदपेक्षायास्तैरनङ्गीकारात्। अथ बुद्धिप्रकाशने यथा बुद्धेः नः सन्निकर्षपेक्षा तथा बुद्धेः स्वधर्मग्रहेऽपि तथा च बुद्धितद्धर्मातिरिक्तत्वमेव सन्निकर्षसापेक्षबुद्धिग्राह्यतावच्छेदकमित्याशयेन शङ्कते [2]**स्वात्मवदिति**। स्ववत् स्वधर्मग्रहेपीत्यर्थः। **ग्रहणत्वेति**। तथा च तद्गृहे संयुक्तसमवेतसमवायस्यापेक्षणात्रोक्तरूपं प्रयोजकमिति भावः। ग्रहणत्वमनुभवत्वं, स्मृतित्वं संस्कारासाधारणकारणकज्ञानगतम्।[3] उभयग्रहे सति इदं रजतमिति ज्ञानद्वयमप्रवर्तकं स्यात् स्वरूपतो गृहीतभेदत्वात्। तथा च शुक्तिरजताद्यवभासानां ग्रहणत्वस्मरणत्वयोः विप्रतिपत्तिर्न[4] स्यात् इति विद्यासागरः।

प्रमात्वग्रहे तु रजतप्रमायामिदं प्रमा नवेति संशयो न स्यादगृहीतभेदज्ञानद्वयं नवेति हि तद्विधो विषयः इति भावः। यस्मात् घटपटौ भिन्नौ इति बुद्धिः स्वयंप्रकाशत्वेऽपि स्वस्य स्वविषयाद् भेदं न बोधयति। तस्मादित्युपसंहरति—**तदेवमिति**।

(भेदबुद्धिः स्वविषयात् स्वभेदन्न बोधयति)

श्रुतिः क्वचिदपि न प्रतिहतप्रसरा सती सर्वाद्वैतप्रमापिकेति योजना। ननु प्रत्यक्षबुद्ध्यैव प्रतिघातात् कथमेवमित्यत आह—**बाधिकायामिति**। बाधकत्वेनाभिमतायामित्यर्थः। ग्राह्यस्य अद्वैतस्य अभावग्राहिकायामित्यर्थो वा। **प्रमात्वाभावमिति**। अगृहीताप्रामाण्या हि ग्राह्या भावधीर्बाधिका न चेयं तथा। ननु घटपटभेदबुद्धेः प्रमात्वाभाव इत्यत्राह—**सा बुद्धिरिति**। घटपटौ भिन्नाविति वुद्धिः घटपटतद्भेदरूपतया व्यवस्थाप्यमाना तयोः स्वात्मना ऐक्यात् भेदग्रहणे स्वस्य भेदग्रहणे प्रमाणीभवितु कथं प्रभवति। इति शब्दो यस्मादर्थे। अनुग्राहकतर्कोपेता बलीयसी श्रुतिरेव प्रत्यक्षबुद्धिं बाधते इत्यभिप्रेत्याह—**तत्रेति**।

---

१. येन विना भासते इति क पुस्तके।

२. मूले आत्मवदिति पाठः उपलभ्यते।

३. ज्ञानं गतम् इति पाठः।

४. ग्रहणत्वस्मृतिद्वारप्रतिपत्तिः इति पाठः।

१२

**सादयन्त्यां श्रुतिस्तत्र तत्राऽप्रतिद्वन्द्वित्वाऽसङ्कुचितस्वतःप्रमाण्यबललब्धतत्तदर्थैक्यान्यथानुपपत्तिसहायसम्पदजय्या तयोरप्यभेदं बोधयन्तो न प्रतिहन्तुं शक्येति न क्वचिदपि प्रतिहतप्रसरा सती सर्वाद्वैतप्रमापिकेति ।**

**भेदप्रमान्यथानुपपत्या च वैपरीत्यमशक्यम्, तत्राद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः, भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाप्युपपत्तेः ।**

**'एकम्' इत्युपादाय यद् एवकारमप्युपादत्ते श्रुतिः 'एकमेवेदम्' इतिरूपा, तदै-**

---

बाध्यबाधकबुद्धया बाधकबुद्धिश्च स्वविषया एव भेदबोधनेऽप्रतिबन्धित्वात् असङ्कुचितत्वात् स्वतः प्रामाण्यं तस्य तद्वलं सामर्थ्येन लब्धम् अप्रतिद्वन्दित्वासङ्कुचितत्वादि स्वतः प्रामाण्यवललब्धं यत् तस्य तस्यार्थस्यैक्यं तस्य या अनुपपत्तिः सैव सहायः तस्य संपदा अजेया—क्वचिदपि प्रतिहन्तुं न शक्येति हेतोः सर्वाद्वैत प्रमापिकेत्यर्थः ।

ननु भेदः पारमार्थिकोऽपरोक्षत्वादात्मवत् इत्यपरोक्षानुपपत्तिरेव श्रुतेर्बाधिकेत्याशङ्क्याह–**भेदप्रमेति**। श्रुतिप्रामाण्यमुभयसिद्धम् निर्दोषा हि सा, प्रत्यक्षप्रामाण्यन्तु सन्दिग्धं सदोषस्यापि तस्य सम्भवात् तथा च सन्दिह्यमानस्य श्रुत्या बाधात् प्रामाण्यस्यासिद्धेरित्याह—[1]**तत्राद्वैतश्रुत्येति** ।

अस्य सन्दिह्यमानस्येत्यनेनान्वयः असिद्धेः—श्रुतेः सन्देहहेतुत्वाभावात् तस्याः वलवत्त्वात् । नचापरोक्षानुपपत्तिः वस्तुत एकत्वेऽपि अविद्यया द्विचन्द्रप्रतीतिवद् भेदप्रतीतेरुपपत्तिरित्याशयेनाह—**भेदज्ञानमात्रस्येति** ।

अथागमः परमात्मन एव एकतामाह प्रत्यक्षादीनि तु पटादिभेदमिति विषयभेदादविरोध इत्याशङ्क्याह—**एकमित्युपादायेति**[2] । एवकारोऽनेकता व्यावर्तनाय । तेन सजातीयभेदे व्यावर्तिते अद्वितीयपदं विजातीयभेदव्यावृत्यर्थमिति व्याख्यान भेदो[3] भेदेनाप्यशक्यसमर्थनमित्युत्तरग्रन्थविरूद्धः । तथाहि एवकारोपादानं भेदव्यावृत्तये तच्च ब्रह्मणो नानात्वाभावादेवोपपन्नम् । अद्वितीयपदोपात्तभेदशून्यतयैव अनुपपन्नेति सैव वाच्या इत्येवकारोपादनस्य न कापि सङ्गतिः स्यात् । तस्माद् भेदाभेदवादिनो भास्करस्य त्रिदण्डिनो निरासाय इदम् । स हि एवमाह— प्रपञ्चः सत् ब्रह्मत्त्वसदात्मना तस्मादभिन्नं नतु घटपटाद्यात्मनोऽपि, तेन रूपेण भेद प्रतीतिः अन्यथा तस्यात्यन्ताभेदे ब्रह्म जडमेव स्यात् । नच अद्वितीयमित्यस्य वैयर्थ्यं ब्रह्मत्वेन सजातीयं द्वितीयं ब्रह्म नास्तीत्यर्थः । तेन ब्रह्मभिन्नं जगत् ब्रह्मा-

---

१. तथाद्वैतश्रुत्येति मूले क्वचित्पुस्तके पाठः ।

२. उपादेयमिति पाठः क ख पुस्तके ।

३. व्याख्यानभेदा भेदेनापि इति ख पुस्तके ।

**कान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्यशक्यसमर्थनं घटपटादिभेदग्राहि प्रत्यक्षादि-प्रामाण्यमिति ।**

---

भिन्नञ्चेत्यर्थः । श्रुतेः नेह नानास्ति किञ्चनेत्यस्या अपि सर्वपृथक्त्वनिराकरण परत्वम् अस्ति हि मतिः[१] घटो घटात् स्वस्मात् अपि पृथक् स हि न भिन्ने वर्तते भेदस्तस्य भेदाश्रयतावच्छेदकस्य आधेयभेदाद् अभेदे आधेयस्य आत्माश्रयताया अधि-करणतावच्छेदकस्य स्वज्ञानात् पूर्वंनिरूपणानुपपत्त्या अभिन्नेऽप्यापत्तेः । भेदान्तर-स्वीकारे चानवस्थेत्यतो न भिन्नेऽतोऽन्यथानुपपत्त्या घटभेदो घट एकस्मिन्नस्तीति तन्निषेधाय नेह तु गतिः । किञ्चिदपि वस्तु स्वरूपेण स्वापेक्षया नायं घटः एतस्मात् घटात् पृथगित्युन्मत्तेनापि प्रतीतेरिति तन्मतनिराकरणाय आह—**एकमित्युपादा-येति** । तथा च एवकाराद्वितीयपादाभ्यां ब्रह्मणो भेदमात्रं निराकृतमित्यर्थः । न च प्रपंञ्चभेदाभावब्रह्मणः प्रपञ्चात्मकतापत्तिः । प्रपञ्चाधिष्ठाने ब्रह्मणि आरोपित स्याभेदस्य पारमार्थिकब्रह्मणो भिन्नत्वाभावात् । प्रपञ्चो हि न सन् अतस्तस्याभावो भाव एव न्याय्यः शुक्तौ रजताभेदस्य अध्यस्यमानस्य[२] मिथ्याभूतस्य यथा भेदो नान्योऽस्ति शुक्तिस्वरूपात् । नहि विशेषदर्शिनो रजतभिन्नत्वेन शुक्तिस्वरूपान्नहि विशेषदर्शिनो रजतभिन्नत्वेन शुक्तिस्वरूपादन्यद् भासते तथेह प्रपञ्चस्य भेदेनाध्य-स्तस्य अभेदोऽपि नान्यो भासत इति स्वत एव जीवब्रह्मणोः कल्पितभेदस्याभावो-ऽभेदोऽपि सद्रूप एवेत्यखण्डार्थतापि नानुपपन्ना । नहि घटाभेदस्य घटरूपत्वे घटवतो भूतलस्य घटाभेदाश्रयतापत्तौ भूतलं घट इति प्रतीत्यापत्तिरिव जीवो ब्रह्म इत्यभेद प्रतीतिरस्माकमनिष्टा । तथा च श्रुतिवलेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणीति । श्रुतौ च नेहपदस्य व्यर्थतापत्त्या न सर्व पृथक्त्वनिराकरणे तात्पर्यं किन्तु प्रतिपन्नोपाधिनिषेधप्रतियोगित्वे । अत्र चैकमितिपदमुद्दिश्य ब्रह्मपद मुपादेयसमर्पकम् । तत्रैकमित्युक्तौ विशेष्यसांकाङ्क्षमिति इदं पदं सर्वं खल्विदं ब्रह्मेत्यत्र श्रुतमध्याहरति । प्रतिभासमानं सर्वं यत् तदेकत्वेन निर्व्यूढम् । अन्यथा स्फूर्त्यनुपपत्तेः । नहि जडं प्रतिभानमर्हति । न च स्फूर्तिस्वरूपमेकमेव जडांशस्यैव घटः स्फुरतीति भेदभानात्[३] अत एव अद्वितीयमपि द्वितीयस्य निष्कृष्यमाणस्य[४] प्रतिभानुपपत्तिः[५] अनिष्कृष्टस्य स्वरूपतो भेदभानेऽपि भेदांशस्य तिरोहितस्यैव भानाद् भानस्यान्यस्याभावेन सा.........[६] अप्रमात्वात्.........सदा न सिध्यति ।

एतेन अग्नीषोमीयपश्वालम्भनश्रुतिः सर्वभूतहिंसाश्रुतेः सङ्कोचिकैव नतु

---

१. अस्ति हि मती क ख पुस्तके ।

२. अध्यस्य क ख पुस्तके ।

३. भेदम् । ४. निकृष्टमानस्य ।

५. प्रतिमा । ६. अर्थदश्च ।

बाधिका प्रत्यक्षं तु [१]श्रुतेर्बाधकमेवातो नास्याः क्वापि प्रसरः[२]। नहि घटपटौ भिन्तौ[३] एकमेवाद्वितीयं ब्रह्मेति ज्ञाने सम्भवतो विरोधात्। सर्वं भूतम् अहिंस्यं दैक्षः पशुर्हिंस्यः इत्यपि नोपपद्यते इति चेत् न। तत्र दैक्षपशुभिन्नं, सर्वमहिंस्य मिति वाक्ययोः सामञ्जस्यात्। नचेहापि घटपटभिन्तं सर्वमेकमिति समञ्जसं भवति त्वदभ्युगताद्वैतभङ्गापत्तेः[४]। नच क्रमेण तयोरप्यभेदोऽर्थापत्त्या पर्यवासास्यतीति वाच्यम्। तथासति श्रुतिर्नाद्वैते प्रमाणं बाध विषये कुण्ठत्वात् स्यात्। किञ्च तत्तत्प्रत्यक्षशार्दूलमुखकुहरप्रविष्टमभेदमालोक्य पलायमाना श्रुतिरियमवला[५] प्रतीयमानं स्वार्थजातं संत्यजन्ती ब्रह्मानुचिन्तनपरैव स्यात्। किञ्च बाधव्याधभयो-द्विग्नतमाऽद्वैत[६]श्रुति मृगी ब्रह्मारण्येऽपि विश्वासं कथमासादयिष्यति, सर्वमभिन्नमिति श्रुत्यर्थः स्वस्मात् सर्वमभिन्नमित्येतावताप्युपपद्यते। नेह नाना किञ्चनेत्यपि स्वा-पेक्षया उपपद्यते एव सर्वस्य स्वापेक्षया एकत्वेन नानात्वाभावात्। किञ्च यदि ब्रह्म-मात्रावशेषं जगदिति विवक्षितं स्यात् तदा ब्रह्मैकमित्येव स्यात्। किञ्च एक एवं नरपतिरत्र न नानेति वाक्यं यथा द्वितीयं नरपतिमेव निषेधति नतु पुरुषान्तरं तथात्रापि। किं च तात्पर्याधीनं प्रामाण्यं श्रुतेरतः कुत्रार्थे तात्पर्यमित्यनिश्चयाद् दुर्वलायाः श्रुतेरेव प्रत्यक्षेण वलवता बाधः। किं च चैत्रस्य घटपटभेदज्ञानं देवदत्तस्य तु घटविटभेदज्ञानं तत्तदर्थभेदाभावविषयत्वे [७]श्रुतेर्वाक्यभेदः। [८]किञ्चाभेद-ज्ञानस्य तानेव शालीन् तानेव च तित्तिरीन् इतिवदेकधर्मोपग्रहेणाभ्युपपत्तिरस्ति नतु भेदभानस्य ( तथोपपादनं शक्यम् ) इति तदेव[९] वलवत्। किञ्च सर्वमभिन्नं, घटपटौ भिन्नाविति बुध्योः प्रामाण्ये सति क्व बाध्यबाधकभावकल्पना। नहि प्रमेय-त्वादिनापि सर्वमभिन्नं मन्यामहे इति शङ्करमिश्राणामद्वैतखण्डनं श्रुत्वा अस्मत् परमगुरुभिः सार्वभौमभट्टाचार्यैरुक्तं वाचस्पतिशङ्करयोः [१०]गौतमकृतबुद्धशास्त्र गर्भितायाः निर्वापयामि गर्वम् "एकं ब्रह्मास्त्रमादाये"ति।

तत्र बाधविषये कुण्ठत्वादित्यन्तमयुक्तम् अर्थापत्तिरिह श्रुतिप्रभवत्वेन तत्प्रतिपादनमुखेनैव श्रुत्वैव प्रामाण्यात् तदाहुः—

शब्दैकदेशभावस्तु स्वार्थेष्वागम एव नः।

यथाचाहापरः[११]—प्रतिपक्षिपत्तिहेतुस्तथैव सामर्थ्यमपिश्रुतीनामित्यनुमेयं-श्रुतेरेतदधीनत्वाच्च। यच्च दैक्षपशुभिन्नं सर्वमहिंस्यमितिवाक्ययोः सामञ्जस्यं-

---

१. श्रुतिः। २. अनवसरः। ३. भिन्नामेकभेवा।

४. अवच्छेदकावच्छेदे इष्टस्याद्वैतस्यभङ्गापत्तेरित्यर्थः।

५. श्रुतिरिवमवला। ६. उद्विग्नामा क ख पुस्तके। ७. श्रुति.।

८. भेदज्ञानस्य। ९. प्रत्यक्षमेव। १०. गौतमकृतबुद्धशास्त्र।

११. यथैव पाठः इति क पुस्तके। ख पुस्तके तु यथैव पाठः प्रतिपत्तिपत्ति हेतुः इति।

**बुद्धेर्विरम्य व्यापाराभावात् कथमित्थमिति चेन्न। श्रुतितो प्रागेव जातायाः सर्वविषयाया अद्वैतधियोऽस्मद्बुद्धय एवंविधविचारसोपानपरम्परामारोहन्त्यो नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परिनितिष्ठन्तीत्युच्यमानत्वात्।**

मिति तदप्यज्ञानतः विधिनिषेधशास्त्रयोराख्यातभेदेन वाक्यभेदात्। एकार्थत्वं हि ऐकवाक्यतायां नियामकम्। तस्मात् पुरुषार्थहिंसानिषेधशास्त्रसामान्यं क्रत्वर्थहिंसा विधिना विशेषेण स्वविषये बाध्यते यथा, तथा इह भेदग्राहिणा प्रत्यक्षेण स्वविषये अद्वैतश्रुतिर्बाध्यते। साहि द्वैतसामान्यमपवदति प्रत्यक्षं तु घटपटद्वैतविषयमुत्पन्नं न शक्नोति अपवदितुम्। सामान्यज्ञानं हि सामान्यबोधचरितार्थं सद्विशेषेण लक्षणया यावद् विशेषेण बाध्यते पदहोमेन इव आहवनीय इति जैमिनीयमीमांसा निपुणाः। नवा घटपटौ भिन्नौ ब्रह्म द्वितीयशून्यमितिज्ञानयोः परस्परं विरोधो भिन्न विशेष्यकत्वात्। यच्च अवलाः स्वार्थजातं त्यजन्ति इत्युक्तं तद् बलाबलाज्ञानेनैव। नहि प्रत्यक्षं वेदाद् बलवत् तथासति अतिरिक्तः परलोकभागी जीवोऽपि "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इति वेदतो न सिद्धयेदिति जितं चार्वाकैः। तस्मात् तेन वाक्येन देहातिरिक्तआत्मा यथा सत्यपि गौरोऽहं मैथिलोऽहमित्यभेदाभिमाने सिद्धयति तथा अद्वितीयं ब्रह्म इत्यपि श्रुतेर्निदोषत्वेन अतिवलवत्त्वात्। तच्च कुत्रार्थे तात्पर्यमित्यनिश्चयः। सोऽपि न। मुख्यार्थे तात्पर्यस्यौत्सर्गिकत्वात् तदसम्भवे एवं लाक्षणिकाद्युपासनेति गौणमुख्याधिकरणे व्यवस्थापितत्वात्। नच वाक्यभेदः अद्वितीयत्वेनैव सर्वोपादानात् धर्मोपग्रहेणाभेदभानम् (न) अन्य गतिकतया क्वचिदेवं अन्यथा क्षणभङ्गनिरासानुपपत्तेः। यच्च बुद्धयोः प्रमाणत्वेन समावेशसम्भवः इत्युक्तं तदद्वैतश्रुतिवैयर्थ्यापत्तिमनालोच्यैव। तथैव न चाध्ययनविधिपरिगृहीतस्य एकमप्यक्षरं निष्प्रयोजनमिति वैदिकदर्शनाश्रवणनिबन्धनमिव तदिति। यच्च प्रपञ्चस्यं मिथ्यात्वमेव शङ्कराचार्यमतं ननु प्रपञ्च ब्रह्मणोरभेद इति तथा श्रुति व्याख्यानेऽपसिद्धान्तः घटपदाद्यभेदे ब्रह्मणो जडत्वापत्तौ स्वप्रकाशानन्दत्वविरोधः। नहि एकमित्यस्य प्रपञ्चेनाभेदोऽर्थः किन्तु भेदशून्यत्वमेव यदि च त्वयोच्यत एकमित्यभेदो भेदविरहमात्रं तदा एवकारो व्यर्थः स्यादिति। अत एव व्याचष्टे भेदाभेदेनापीति।

भेदस्य निरास[३] एवार्थो नतु पाक्षिकोऽपि भेद इति तात्पर्यम्। त्रिदण्डिमते तु श्रुतिरियं व्यर्थैव स्यात् भेदाभेदस्य लोकसिद्धत्वात् भेदाभेदचिन्तनपराचेत् तदापि तादृशशब्दाभाव इति। **कथमित्थमिति।** भेदप्रत्यक्षविषयं परिहृत्य अन्यत्राभेद

१. अनालोच्यतयैव।

२. अभेदबोधकतया इत्यर्थः।

३. भेदस्य निरासाये वाधः।

ननु यदि नाम प्रत्यक्षवित्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घटपटयोर्भेदो न गोचरीक्रियते, तावता कथं तस्याः स्वविषयेण सहाऽद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे, बुद्ध्यन्तरेण तया सार्धं घटपटयोरपि भेदमुल्लिखता तत्राद्वैतश्रुतेर्बाधादेव।

मैवम्; तर्हि तस्या अपि विषयमापाततः परित्यज्य ययैवाऽपरया बुद्ध्या घटपटभेदबुद्धेर्घटाच्च पटाच्च भेदो विषयीक्रियते, तस्याः स्वविषयेण सहाद्वैते श्रुतिः

---

प्रथमतो बोधयति क्रमेण तु बाधकप्रत्ययविषयेऽपीति। कथमित्यमिति। क्रमेणेति कथमित्यर्थः।

कोदोषक्रम इत्याशङ्क्याह–शब्देत्यादि-असामर्थ्यमेव दोष इत्यर्थः अयमर्थः। शब्दः एकं बोधं जनयित्वा विरतव्यापारो न शाब्दबोधान्तरं जनयति तस्य हि यो व्यापारोऽभिधाख्यः[१] स मुख्यमर्थं वोधयित्वा विरतो, नतु लाक्षणिकमर्थमपि बोधयति तस्य मुख्यार्थप्रतिपत्त्यनुकूलतयैव प्रमितेः। लाक्षणिकबोधस्तु पदार्थज्ञानादेवेति एवं बुद्धिरप्येकस्मिन्नर्थे ज्ञाततां संस्कारं वा जनयित्वा, विरत व्यापारा। तस्याहि जन्मैव व्यापारः कर्मण इव विभागजनने। तदाहुर्भट्टचरणाःतेन जन्मैव विषये बुद्धेर्व्यापार[२] इष्येत। इति जन्म च एकमेव न पुनः संस्कारान्तराय विभागान्तराय वा प्रभवतीति सर्वसिद्धम्। अत एकत्र भेदं बोधयित्वा पर्यवसितः श्रुतेर्व्यापारः कथं क्रमेण बाधकविषयेऽप्यभेदं बोधयेदित्याक्षेपः। प्रागेव झटित्येव युगपदेव नतु क्रमेण, श्रुति वाक्याद् युगपदेव सर्वत्रैव उत्पद्यमानस्याद्वैतज्ञानस्य परिपन्थिबाधबुद्धिसमुत्थाने तन्निरासफलानि अस्मादृशां ज्ञानानि अद्वैतज्ञानप्रामाण्यरक्षकाणि क्रमेण जायन्ते नतु[३] अद्वैतश्रुतिः क्रमेण व्याक्रियत[४]इत्युच्यमानत्वात्। ननु बाधकबुद्धिविषये कथं श्रुतिः प्रवर्तताम्। यदि चात्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति इत्युच्यत तदा तद्विषयादन्यत्रेति प्रागुक्त विरोधइति चेत् न। यस्य वाधिका धीः न जाता तस्य पुरुषान्तरबाधे सत्यपि बुद्ध्युत्पादस्य दुर्वारत्वात्। अथवा सत्यपि भेदज्ञाने सर्वविषया धीर्जायते परन्तु तावता ज्ञानस्य प्रमाणलाभो न भवति मिथ्यात्वनिश्चयादिति। यत्र मिथ्यात्वनिश्चयो नास्ति तत्र प्रामाण्यमपि प्रथमतो लभते अन्यत्र तु क्रमेणेति न विरोधः। वस्तुतस्तु प्रथमतो बाधितविषयं परित्यज्य बोधयन्त्याः तादृशव्यापारोपरमेऽपि अर्थापत्त्युत्थापनद्वारा अन्यत्रापि प्रामाण्यम्। यद्यपि नासौ प्रत्यक्षश्रुतिजनितो बोधस्तथाप्यानुमानिकश्रुतिजनितोऽपि प्रमाणं भवत्येव। लिङ्गापेक्षान्यतरे

---

१. भिदाख्यः। २. तदेव च प्रभारूपं तद्वती करणं च धीः। इत्युत्तरार्द्धम्। श्लोक सं० ५६।
३. द्वैतश्रुतिः। ४. इत्युच्यमाणत्वात्।

प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह या द्वितीया बुद्धेरभेदे पर्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति ।

एवं च सति यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसंचारोच्छेदभयाद् अनवस्थाभयाच्चाभ्युपेयः, तस्यामेव बुद्धौ पदमारोप्याद्वैतश्रुतिः सर्वं तद्विषयविषयिप्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि बाधितुं शक्या । तस्मात्—

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
विनिवृत्ताऽद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥८॥ इति

---

नियोजकश्रुति जनित इव । मा वा कल्पतां श्रुतिः, अर्थापत्त्यैव प्रतीयतां तत्राद्वैतम् । साहि निर्दोषश्रुतिजन्यज्ञानप्रामाण्यरक्षकतया निर्दोषैवेति दिक् ।

अथ बाधकबुद्धिविषयतया सा नानुभूयत इति चेन्न । सामान्याकारेणानुभवादेव प्रामाण्यमालम्ब्यबाधानाक्रान्तप्रामाण्यं प्राप्य लब्धपदा लब्धस्थाना भेदबुद्धेर्विरोधिन्या अभावात् । स्थिरा-अभेद[1] (स्मदादि) पर्यवसानं-बोधनम् विश्रामः स्वजनितसकलाद्वैतधी प्रामाण्याबाधः[2] । ननुभवेदेवं यदि तत्रापि भेदधी र्नस्या दित्याशङ्क्याह–एवं च सतीति । विषयान्तरसञ्चारदर्शनेन अनवस्थायामनिर्मोक्षप्रसङ्गेन क्वचिद् विच्छेदोऽभ्युपेयः । सचासौ विषयविषयिप्रवाहश्चेति विग्रहः उक्तमर्थमपेक्षिपदपूर्वकं बुद्धिसौकर्याय श्लोकेन संगृह्णाति–तस्मादिति ।

विषयान्तर सञ्चारोच्छेदभयानवस्था मयी (भया) बाधबुद्धिपरम्परा अनवस्थाभयात् कस्याञ्चित् कक्षायां निवृत्तौ निवृत्तिसमये तदनाक्रान्तविषयस्थितेः पार्ष्णिग्राहैः पार्ष्णिग्राहस्थानीयैः पश्चादागच्छद्भिः त्वरया आगमैः पराजीयते । निवृत्तिहेतुमाह–सुदूरेति । भूतिकक्षानुसरणेन श्रोता इदमाह तम्–

अरिर्मित्रमरेर्मित्रं मित्रमित्रं ततः परम् ।
तथारिमित्रभिन्नञ्च विजिगीषोः पुरस्सराः ॥
पार्ष्णीग्राहैस्ततः पश्चादाक्रन्दस्तदनन्तरम् ।
आसाराचनयोश्चैव[3] विजिगीषोस्तु मण्डलम्[4] ॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहृतानां व्यस्तानां च बधे प्रभुः ॥
मण्डलाद् वहिरेतेषांम् उदासीनो व्यवस्थितः ।

---

१. स्थिरास्मदा । २. शाङ्करी पङ्क्तिः८७ पृ० । मया ।
३. आसारायानयोः । ४. पृष्ठतः क्वचित्पाठः । तथा ।

**न च यत्र तस्य प्रतिपत्तुर्बुद्धिधाराविश्रान्तिस्तत्र पुरुषान्तरबुद्धिभेदे प्रमाणं स्यात् । तथा हि--पुरुषान्तरेण भिन्नतया सा प्रतीयते इत्यत्र प्रमाणं त्वया वाच्यम्, नहि तदपि पुरुषान्तरेणैव, न च संभाव्यमानम्, श्रौतेन निश्चयेन तन्निवर्तनात्; तथाप्यनवस्थानादिति ।**

---

इति विजिगीषो राज्ञो द्वादश राजमण्डलं तत्र यथा लौकिकः कश्चित् विजिगीषुर्दूरे प्रस्थितः परवाहिनीं विजित्य निवृत्तौ पार्ष्णिग्राहैर्विजीयते तथा अद्वैतबुद्धिपरम्परा अद्वैतबुद्धिपरम्पराजयाय दूरे प्रस्थिता अनवस्थानात् क्वचिन्निवृत्ता त्वरया आम्नायाख्यैर्जीयते ।

अत्र मिश्राः—चरमबुद्धेरुपस्थितौ चरमत्वव्याघातः अनुपस्थितौ च कुत्र श्रुतेः पादारोपणम् । तदर्थं त्वयैव तदुपस्थपाने च चरमत्वव्याघातः तदेवं तयापि समं भेदग्रह इति शक्यं वदितुम् ( अनुपस्थापने च श्रुतिप्रवृत्त्यव्युत्पादनम् तथा[१] च–

सुदूरधावनाऽश्रान्ता बाधबुद्धिपरम्परा ।
जेतुं न शक्या जात्वेषाऽद्वैताम्नायैः कदाचन । इत्याहुस्तन्न—

तत्पुरूषीयबाधबुद्धिमपेक्ष्य तस्याश्चरमत्वात् मया तदुपस्थापने त्वया तदेव भेदो ग्राह्य इत्यपि न मया अभेदं गृहीत्वैव तदुपस्थापनात् । यथा तव भेदग्रहः तद्विरोधी तथा ममाद्वैतग्रहस्यापि भेदग्रह विरोधित्वात् । इत्यलं काव्यरचनामात्र कुशलानाम् । तेनैव स्वशिष्यान् आमोदयतां खण्डनकथया त···१·······सति अतएव शङ्कते—

**नच यत्र तथा प्रतिपत्तुरिति** । पुरुषान्तरयोगी यद्यपि अत्राप्यनवस्थादोषो योगजबुद्धौ इत्यस्त्येव तथापि दोषान्तरमाह—**सा इति** । सा अन्तिमबुद्धिः पुरूषेण तेन स्वविषयाभेदेन प्रतीयत इत्यत्र त्वया प्रमाणं न शक्यं वक्तुं न हि सा भेदविषयत्वेन प्रत्यक्षतो ज्ञायते परबुद्धेरप्रत्यक्षत्वात् । नापि अनुमानमर्थापत्तिर्वा तदनुपन्यासात् । वस्तुतो योगिज्ञानं, स्वाभिन्नमात्रविषयकम् अभ्रान्तित्वात् स्ववदित्यनुमानतोऽस्माभिः श्रुतिसहायतया अद्वैतविषयता शक्यते अनुमातुम् । अतएव इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते ।

"योग्यवस्थागतानान्तु न विद्मः किं भविष्यति" इति भट्टाचार्योक्तमपि न शक्यसञ्चारं श्रुतेः सहायीभूतायाः सत्त्वात् । अतएव सम्भावनापि दूषयिष्यते । **श्रौतेननिश्चयेनेति–अभ्युपेत्यापि दूषयति—तथापीति** । तथाचानिर्मोक्षापत्तिरिति । नचान्तिमबुद्धिमनुपस्थापयतस्तवापि श्रुतिविषयानुपन्यासापत्तेरियमप्यनवस्था

---

१. पाठोभ्रष्टः क ख पुस्तके ।

अथ ब्रूषे—'यदा कियद्दूरं बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुतिस्तदा तन्न्यायाद् याऽपि बुद्धिः शेषं गत्वा नाऽनुव्यवसीयते, तत्रापि तद्बाधोऽवगम्यते; यत्र सा बाध्यते, तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति ।

मैवम्; किं कियतीषु बुद्धिषु व्याप्यव्यापकौ कावप्यवलम्ब्य व्याप्तिग्रहरूपयैव धिया शेषबुद्धौ बाधं व्युत्पादयसीत्थमद्वैतश्रुतेः? किं वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्षधर्महेतुमुल्लिखन्त्या बुद्ध्याऽन्तिमबुद्धिविषयया ?

नाद्यः, व्याप्तिबुद्धिर्यदि विषयविशेषेऽपि स्वातन्त्र्येण बाधात्मिकोपेयते, तदा सैव विशेषबुद्धिरपि स्यादिति गतमनुमानकथया । अथानुमितिमभ्युपैषि, तदा सा नाऽऽत्मानमपि धर्मीकृत्य प्रवर्तते इति तत्रैव दत्तपदा सर्वामद्वैतश्रुतिः परम्परामालम्बते इत्युक्तमावर्तते ।

अथ 'सर्वा विवादाध्यासिता बुद्धयः स्वविषयेभ्यो भिन्नाः,बुद्धित्वात्, घटपटबुद्धिवद्' इति सामान्याकारेणाऽऽत्मानमपि धर्मीकृत्य आत्मनोऽपि स्वविषयाद्भेदं साधयिष्यत्यनुमेति मन्यसे । मैवम्, एवमपि विषयिणो विषयस्याऽभेदं बोधयन्ती श्रुतिरनुमानमप्यनवकाशयति ।

---

तुल्येति वाच्यम् । योगिचरमबुद्धित्वेनविचारदशायामुपन्यासेऽपि ततः प्राक् तत्राम्नायप्रवृत्तौ बाधकाभावात् न अद्वैतबुद्धावपि तद्भेदबुद्धाविव प्रमाणव्यक्तिभेदोऽस्ति । योगिबुद्धिः स्वविषयकस्वभेदग्राहकबुद्ध्यन्तरवती बुद्धित्वात् प्रथमबुद्धिवदित्यनुमानं शङ्कते—**तथा ब्रूष इति**। कियतीषु उपान्त्यादि प्रथमबुद्धिपर्यन्तासु । ·······व्याप्यव्यापकौ बुद्धित्वं स्वविषयाद् भेदस्येति द्वौ धर्मौ सहचरितौ गृहीत्वा या बुद्धि;[३] =स्वविषयव्याप्यमिति धीः व्याप्तिग्रहरूपा तया अन्तिमबुद्धिः स्वविषयाद्भिन्ना बुद्धित्वात् अन्तिमबुद्धिवदिति । ( पक्षाधर्माभूतव्याप्यास्वातन्त्र्येणबाधात्मिकेति ) यद्यपि सा धी व्यापकं भेदं विषयीकरोति तथापि लिङ्गस्य गुणीभूततया नतु स्वातन्त्र्येण, पक्षे भेदसंशयविरोधिरूपेण (इति) गतमनुमानकथया ।

धूमवह्निव्याप्तिग्रह एव पर्वतवह्निसंशय विरोधीति न व्याप्तपक्षधर्मताज्ञानजन्यं ज्ञानमनुमित्यात्मकं स्यात् प्रत्यक्षेण तदर्थसिद्धेरिति भावः । परम्पराविषयविषयिप्रवाहः उक्तं सर्वाद्वैतपर्यवसानम् । **अथ सर्वा** इति । यत्तु अत्रैक्यं व्यापकत्वावच्छेदकमस्ति । स्वपदत्यागे तु आत्मनोऽपि आत्मप्रतियोगिको भेदः सिद्ध्येदिति दोषे सत्यपि दोषान्तरमाह—**एवमपीति**। विषयभेदस्य विषयिणि सिद्धावपि

---

१. ब्रूम इति पाठः ।

२. कियती मुपांत्यादि पाठः ।

३. बुद्धित्वं ।

**विषयिविषययोर्मिथो भेदेऽपि साध्ये अस्तु हेत्वनुयोगः। परबुद्धिस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्या बुद्धेर्विषयादपरामपरस्याश्च विषयात् पराभभेद-बोधाय धावन्ती सर्वाद्वैते एव पर्यवस्यतीति।**

**न च शक्यमनुमातुं सर्वस्या बुद्धेर्विषयात् सर्वा बुद्धिर्भिन्नेति, मा भूदन्यबुद्धि-विषयादात्मनोऽपि बुद्धिर्भिन्नेति। न चाऽऽत्मव्यतिरिक्तादित्युक्ते निस्तारः स्याद्, अद्वैतवादिना सर्वभेदमिच्छता क्वचिदपि तद्सिद्ध्या विशेषणाप्रसिद्धेरिति।**

---

विषये विषयिप्रतियोगिको भेदो न सिद्ध इति विषये विषय्यभेदं बोधयन्ती **अनुमान-मपि इति**। विषयस्य बुद्ध्यभेदे बुद्धेः[१] ततो भेदासम्भवादित्यर्थः इति विद्यासागर स्तन्न—घटस्य सत्तया पटाभेदेऽपि घटत्वेन पटभेदवत् सम्भवात्। किन्तु अनुमान-जन्या बुद्धिर्घटाभिन्नेति सा अद्वैतबुद्धेर्न बाधिका स्यात् बुद्धिविषयजन्यत्वाद् यथा हि घटो न बुद्धेर्विरोधी घटो [२]विषय्यभिन्नेत्यद्वैतबुद्धौ तस्य विशेष्यतया अनुगुणत्वात् तथाचानुमितिरपि तदाभिन्नेति न विरोधिनी ततः विरोधाभावे बाध्यबाधकभावः सुदूरापास्तः। यद् वा अनुमितिर्न घटभिन्ना अनुमित्यभिन्नघटाभिन्नत्वादघटवदिति पूर्वानुमितौ अप्रामाण्यं श्रुतिर्बोधयित्वा विषयिणोऽपि विषयभेदो मिथ्येति बोधन-मेवानुमानस्य अनवकाशमिति। **अस्तु हेत्वनुयोग इति**। घटबुद्धिघटौ मिथो भिन्ना-विति साध्येन बुद्धित्वहेतुविषयांशेऽसिद्धेः। नापि विषयत्वं बुद्ध्यंशेऽसत्त्वात्। नापि तदन्यतरत्वं विषये विषयभेदाभावेन व्यभिचारात्। अत एव विषयविषयित्वमेकत्र द्वयाभावेन स्वरूपासिद्धेः। नापि प्रमेयत्वं व्यभिचारादितिभावः। बाधमप्याह—

**परबुद्धिरिति**। पटबुद्धिपटयोर्भेदमियमनुमितिर्गोचरयति नतु घटबुद्धिपट-बुद्ध्योर्भेदंनवा घटपटयोः। अतो घटबुद्धिपटबुद्ध्योरभेदं घटपटयोश्चाभेदं गोचरयन्ती श्रुतिः पटबुद्धिकुसूलबुद्ध्योः पटकुसूलयोश्चाभेदमिति सर्वबुद्धेः सर्वविषयाणाञ्चाभेदं बोधयेदित्यर्थः। पराएकस्याः बुद्धेः सकाशात् भिन्ना बुद्धिः। नतु[३] मिथो भेदे सापेक्ष[४] इति। अस्य-विषयी विषयभिन्नः विषयित्वात् विषयो विषयिभिन्नो विषयत्वात् इति समूहालम्बनानुमितौ तात्पर्यमित्याशङ्क्य दूषयति—**न च शक्यमिति**। **माभूदिति**। एवमनुमाने पटज्ञानस्य पटज्ञानानुव्यवसायविषयस्यापि पटज्ञानाद् भेदः स्यात् तथा च बाध इति भावः। **आत्मव्यतिरिक्तादिति**। पटज्ञानभिन्नादितिविषयस्य विशे-

---

१. बुद्धिः।

२. घटो विषय्यभिन्ना अनुमित्यभिन्नघटाभिन्नत्वात्। अथवेति। पूर्वानुमितावप्रामाण्यं श्रुति-र्वोधयित्वा विषयिणोऽपि विषयभेदो मिथ्येति बोधनमेव अनुमानस्य अनवकाशमिति। इति ख पुस्तके पाठः।

३. ननु। ४. साप इ। साध्य इति पाठः।

**एतेन 'सर्वं भिन्नम्' इति वाक्येन विना बाधं स्वतःप्रमाणेन सत्प्रतिशब्दा सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यम्। यस्मात् कस्मादपि भेदे**

षणं देयम् इत्यर्थः। एतेनैव द्वितीयपक्षोऽप्यपास्तः। विषयमध्ये ज्ञानस्यापि प्रवेशेन बाधात्। ज्ञानातिरिक्तविषयादित्युक्ते अद्वैतवादिनोऽसिद्धेः।

अयमाशयः, इदं हि अनुमानं न परार्थं परस्य अद्वैतवादिनः क्वचिदपि भेदानङ्गीकारात्। स्वव्यतिरिक्तेति विशेषणा[१] प्रसिद्ध्या पक्षस्य अप्रसिद्धविशेषणता दृष्टान्तस्य च साध्यवैकल्यम्। नापि स्वार्थं स्वपक्षे भेदस्य प्रत्यक्षतया अनुमान-वैयर्थ्यात् कथायां स्वार्थानुमानस्याभावाच्च।

**सर्वं भिन्नमिति**। तथा च साध्याप्रसिद्ध्यादिदोषो नास्ति भिन्नपदस्य लोके गृहीतसंगतिकत्वात्। सच भेदः पारमार्थिकोऽनाद्यविद्याकल्पितो वेत्यद्यापि न निर्णीतमिति अद्वैतश्रुतिः सत्प्रतिशब्दा[२]। तथा च सत्प्रतिपक्षानुमानवत् अद्वैतश्रुतिः न प्रमाणमित्यर्थः। अस्य वाक्यस्य कोऽर्थः—किं यत् किञ्चित् यतः कुतश्चित् भिन्न-मिति वा वस्तुमात्रात्। वस्तुमात्रं भिन्नमिति वा किं वा, स्वव्यतिरिक्तात् सर्वस्माद् भिन्न इति। नाद्यः इत्याह—**यस्मात्कस्मादिति**। अयमाशयः। पारमार्थिकभेदपर-त्वेऽबोधकत्वापत्तिः क्वचिदपि संगतिग्रहाभावादतो भेदमात्रं व्यावहारिको भेदो वा बोध्यः। तत्र अधिष्ठानस्य ब्रह्मणः सत्यस्य प्रपञ्चात् मिथ्याभूताद् भेदोपगमात्[३]। नच स भेदो ब्रह्मस्वरूपमेवं सति भेदस्य पारमार्थिकत्वापत्तिरिति वाच्यम्। भेद-(त्व)स्य काल्पनिकत्वात्। न च सर्वं खल्विदं ब्रह्मेति ब्रह्माभेदबोधकश्रुतिविरोधः स्यात् अपि। अधिष्ठानादतिरिक्तमिदं मिथ्या इत्येवार्थात्। नहि सत्ता ब्रह्मणोऽति-रिक्तेति यावत् नतु इदं पदार्थस्य सत्यब्रह्मणोऽभेदः ब्रह्मणोऽसत्यतापत्तेरिति ध्येयम्।

सिद्धस्य साधनमिष्टापत्तिरिति विद्यासागरः। तन्न—तस्याः तर्कदोषत्वात्। किन्तु शब्दोऽयं कृती तथा हेतुत्वादनुवादः तथा च श्रुतेः प्रमाणभूतायाः नायं प्रतिपक्षो-ऽनुवादस्य अप्रमाणत्वात् विरोध्यविषयत्वाच्च। [४]अव्यवच्छेदकमव्यावर्तकं स्वाति-रिक्तपदार्थमात्रानङ्गीकारात् इत्याशयः।

अत्र मिश्राः—ब्रह्मणो यतः कुतश्चित् अभेदसाधने स्वस्मादेव तत्सिद्धौ सिद्धसाधनं सर्वस्मादद्वैतसाधने मिथ्यातोऽपि अद्वैतसिद्धिप्रसङ्ग इति यद्यपि तथापि स्वसाक्षिकमेव[५] ब्रह्मेति हृदयम् इति वदन्ति। तदसत्—ब्रह्माद्वितीयं भेदशून्य-

१. विद्यासागरी पङ्क्तिः विशेषणाप्रसिद्ध्या इत्यारभ्य वैयर्थ्यादित्यन्तं यावत्।

२. सन्सर्वं भिन्नमिति प्रतिद्वन्दिशब्दो यस्याः सा इत्यर्थः। सप्रतिशब्द इति पाठः।

३. भेदापगमात् इति क ख पुस्तके।

४. अतः आरभ्यानङ्गीकारात् इत्यन्तं विद्यासागरी।

५. स्वतःसिद्धं मानान्तरानपेक्षमिति यावत्।

**मिथ्यातः सत्यभेदोपगमेन सिद्धसाधनात्, सर्वस्मादिति स्वतोऽप्यापत्तेः; स्वव्यतिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकम् । तदेवम्—**

**हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षयताऽऽस्थिते ।**
**किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः ॥९॥**

**अत एव च—**

**आद्यधीवेद्यभेदीयाऽप्यन्यथानुपपन्नता ।**
**स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम् ॥१०॥**

---

मित्यस्य भेदसामान्याभावार्थकत्वात् । नचैव मिथ्यातो भेदाभावे ग्रन्थविरोध इति वाच्यम् । मिथ्याप्रतियोगिकभेदस्यापि मिथ्यात्वादेव । तर्हि मिथ्याऽभेदापत्तिरिति चेन्न अभेदस्यापि मिथ्यात्वादेव नहि ब्रह्म मिथ्येति धीरानुमानिकी आश्रयासिद्धयापत्तेः । असन्नेव स भवति असद् ब्रह्मेति वेद चेदिति श्रुतिबाधाच्च । नहि शशशृङ्गभेदो गोशृङ्गे शशशृङ्गस्याप्रामाणिकत्वात् शशशृङ्गभिन्नं गोशृङ्गमिति प्रमित्या शशशृङ्गस्यापि प्रमेयत्वापत्तेः । नापि शशशृङ्गाभिन्नं तदित्यादिविकल्पे तत्रापि का गतिः तस्माद् भेदसामान्यशून्यमितिश्रुतिर्वास्तवम् अद्वैतमाह प्रपञ्चभेदं तु अनुमितिः तत्रानुमितेः व्यावहारिको भेदो विषयः श्रुतेः तु [१]भेदसामान्याभावो ब्रह्मस्वरूपमेव पारमार्थिकस्तदिति समानसत्ताकयोरेव विरोधः । नच पारमार्थिको भेदः सम्भवति पारमार्थिकाभेदविरोधात् इत्याविद्यिक एव भेदः तस्य च आविद्यिकाभेदेनैव विरोध इति नायं दोष इति ।

ननु सर्वं भिन्नं प्रमेयत्वात् ज्ञेयत्वाद् वेत्यनुमानाद्भेदसिद्धिरस्तु । नच श्रुतिविरोधः द्वयोरपि प्रमाणत्वाविशेषेण उभाभ्यामपि ज्ञानजननात् । नचानुमानेऽनुकूलतर्काभावो निरुपाधिसत्त्वसहायस्य सत्त्वात् । पृथिवीतरेभ्यो भिद्यते इत्यादि विशेषभेदानुमानानां च सहायत्वात् । तस्मादद्वैतश्रुतिश्चिन्तापरैवास्त्विवति आशङ्क्याह—**तदेवमिति** । आस्थिते = स्वीकृते स्यातां पक्षातिरिक्तहेतुसाध्यदृष्टान्ताभावात् । सर्वस्य पक्षत्वे पक्षज्ञानदशायां सार्वज्ञं स्यात् । अथ हेत्वादिसिद्धयर्थं किञ्चित् पृथक्कृत्य पक्षः क्रियते तत्राह—**किञ्चित्त्विति** । यस्य पक्षतो निष्कर्षान् नानुमानेन भेदः साध्यते तदभेदबोधनद्वारा सर्वाद्वैतश्रुतेः पर्यवसानात् सैवद्वाः= द्वारं दत्ता स्यात् अद्वैतबोधनाय श्रुतेरित्यर्थः । भेदप्रमान्यथानुपपत्त्यावा वैपरीत्यमशक्यमित्येवं परिहृतायां भेदान्यथानुपपत्तौ अनन्तरोक्तं दूषणमतिदिशति—**अतएव चेति** । चकारः पूर्वोक्तदूषण समुच्चये । अतएव सर्वज्ञत्वद्वारप्रदानयोरन्यतर-

---

१. अभेदसामान्याभावः ।
२. सत्त्वचारस्य क ख पुस्तके ।
३. सैव दुर्वारं दत्तास्या ।

प्रसङ्गादेवेत्यर्थः। घटपटौ भिन्नौ इति धीः[1] आद्या धी, तया वेद्यो यो भेदः तदीया तत्सम्बन्धिनी[२] अन्यथानुपपन्नता (अपि अनुमानवद् द्वयश्रुतिं न बाधते) अन्ते स्वज्ञानापेक्षणादित्यस्यायमर्थः प्रतीयमानतैव अनुपपन्नता भेदस्य साधिका अनुपपद्यमानदर्शनाद् उपपादके बुद्धिरर्थापत्तिरिति स्वीकारात्। तथा च अगोचरज्ञानादात्मनो भेदं विना घटपटभेदानुपपत्त्यभावाद् आत्मज्ञानादात्मनोभेदं न साधयेत्। ततश्च तज्ज्ञानात् तस्या अभेदबोधनद्वारा सर्वाद्वैते पर्यवस्यति इति विद्यासागरः तच्चिन्त्यम्—स्वगोचरज्ञानादात्मनो भेदाभावे सर्वाद्वैतापत्तेः घटपटभेदानुपपत्तिरेव अन्ते इति च पदं व्यर्थं स्यात्। घटादीनां तद्बुद्धीनाञ्च[3] वेद्यवेदकभावानुपपत्त्या अद्वैतश्रुतिबाध इत्यपि अतएव उक्तन्यायेन निरस्यमिति श्लोकेन आह—आद्यधियः =घटादिबुद्धयः तद्वेद्याद् घटादेः भेदेभवा=आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता नाद्वयश्रुतिं बाधते इति सम्बन्धः। अन्ते गत्वा अन्यथानुपपत्त्या स्वज्ञानस्यापेक्षणात् सा अन्यथानुपपन्नता स्वज्ञानात् स्वस्य भेदं साधयति न वा। अन्ते नहि तयोरभेदं श्रुतिरवलम्बिष्यते तथाच अन्यत्रापि भेदसाधकाभावात् सर्वाभेदः पर्यवसास्यति। यदि स्वज्ञानात् स्वस्य भेदं साधयेत् तदा स्वात्मनि वेद्यवेदकभावात् भेदो न प्रसज्येत्। अथ वेद्यवेदकभावानुपपत्तिः स्वव्यतिरिक्तस्य सर्वस्य भेदं बोधयति तर्हि विशेषणप्रसिद्धिरित्यर्थं इत्यनुभूतिस्वरूपश्रीपादानां व्याख्यानं यत्। तदपि "अन्ते" पदव्यर्थतापत्तेरनुपपन्नः। घटपटौ भिन्नाविति प्रथमसंविद्ग्राह्यस्य घटपटभेदस्य अन्यथानुपपत्त्या जन्यस्य घटपटभेद तद्भेद तद्बुद्धिभेदतद्बुद्धिभेदविषयकज्ञानस्य स्वविषयेण सह भेदसिद्धये अवश्यं ज्ञानान्तरमपेक्षणीयम्। एवं [४]तत्तुल्यज्ञानापेक्षायामनवस्थानादनिर्मोक्षः तत्परिहाराय क्वचिद् विश्रान्तौ अन्तिमज्ञाने लब्धावकाशा श्रुतिः सर्वाद्वैते पर्यवस्यति इत्यर्थापत्तिरपि न श्रुतिं बाधत इत्यर्थस्तु ज्यायान्।

तदेवं श्रुतेर्बोधकत्वेऽपि प्रत्यक्षादिविरोधे मिथ्यालक्षणमप्रामाण्यं प्रसक्तं निरस्तम्। इदानीमबोधकत्वलक्षणमप्रामाण्यमाशङ्क्य निराकरोति न चेत्यादिना। वृद्धव्यवहारेण गृहीतः पुनः पुनः प्रयोगवशात् संस्कारारूढोऽतएव दृढोऽन्वयः संगतिर्येषामद्वैतश्रुतिगतपदानां तैर्व्यतिरेकस्य भेदस्य योऽन्वयः सत्त्वं तस्य व्यतिरेकोऽभावो भेदाभावोऽभेदाख्यः तस्यान्वयस्य संसर्गस्य या प्रतिपत्तिः तस्या उपपत्तेः प्रतिबन्धः शक्यशङ्को नेत्यर्थं इत्येके। अन्वयः सत्त्वं व्यतिरेकोऽसत्त्वं, तयोरन्वयः सत्त्वं सम्बन्धः तस्य व्यतिरेकोऽभावः तस्यान्वयो विशेषणत्वं तस्य या प्रतिपत्तिः तया संस्कारारूढदृढतया अद्वैतप्रतिपत्तेः प्रतिबन्धः शक्यशङ्को नेत्यर्थः। रूप-

१. विति धीवाद्या धीः क ख पुस्तके।
२. सम्बन्धिन्यन्यथा।
३. तद्बुद्धीनाञ्च वेदकभावानुपपत्त्या' इति क पुस्तके।
४. तत्तु ज्ञानोपेक्षायाम् इति क ख पुस्तके।

**न च संस्काराख्ढदृढान्वयव्यतिरेकान्वयव्यतिरेकान्वयप्रतिपत्युत्पत्तिप्रतिबन्धः शक्यशङ्कः । यतः—**

सत्त्वाभाववान् वायुः रूपसत्त्वाभाववान् घट इति रूपसत्त्वासत्त्वयोः परस्पर-विरुद्धयोर्विशेषणयोः विशेष्यभेदनिपतयोः प्रतिपत्तिरद्वैतप्रतिपत्तिं प्रतिबध्नाति इति शङ्कार्थः१। अत्र विशिष्टान्वयप्रतिपत्त्या अद्वैतप्रतिपत्तेरुत्पत्ति प्रतिबन्ध इति वक्तव्यम् । तच्च प्रतिपत्तिपदस्यावृत्त्येत्यन्ये । अन्वयव्यतिरेकपदत्रिरावृत्तिपाठे तु अन्वयव्यतिरेकौ पदानामारोपोद्वायौ ताभ्यामन्वयव्यतिरेकौ पदार्थानां ग्रहणाग्रहणे ताभ्यामुपस्थापितोन्वयस्य ऐक्यस्य व्यतिरेको भेदः संस्काराख्ढेन दृढेन तेन भेदेन अन्वयस्य अद्वैतवाक्यार्थात्मकसंसर्गस्य प्रतिपत्त्युत्पत्तिप्रतिबन्ध इति योजनेति भट्टाः । वस्तुतस्तु संस्काराख्ढो दृढोऽन्वयः सत्त्वं यस्य एवंभूतो यो व्यतिरेको भेदः तस्यान्वयव्यतिरेकौ अन्वयस्यासत्त्वं भेदासत्त्वं तदन्वयस्य व्यतिरेकेण भेदस्य सत्त्वेन प्रतिपत्त्युत्पत्तिः श्रौताद्वैतधीः बुद्धिजन्मप्रतिबन्धः[२] शक्यशङ्कः । अयमाशयः दृढतर-भेदसत्त्वगोचरसंस्कारे सति भेदासत्त्वं कथं श्रुतिर्बोधयेत् बोधनिश्चयवत् भेद-संस्कारस्यापि विरोधात् विरोधिविषयत्वाविशेषात् । अन्यथा श्रौतबुद्धिमतोऽपि द्वैतसंस्कारः तव मते तिष्ठेत् मम तु तादृशसंस्कारे सति श्रौतीबुद्धिर्नोत्पद्यते इति मैथिलेषु प्रसिद्धः । अन्वयपदत्रयवतिव्यतिरेकपदद्वयवति पाठे संस्काराख्ढोऽन्वयो यस्य व्यतिरेकस्य तस्यान्वयव्यतिरेकप्रतिपत्तिभेदस्य सत्त्वप्रतिपत्तेः श्रौत्याः प्रतिपत्तेर्जन्मप्रतिबन्धो न शक्यशङ्कः भेदसत्त्वज्ञानं स्मरणरूपं प्रतिबन्धकमस्तीति न शक्यं वक्तुम् इत्यर्थः । अत्र हेतुमाह—**यत** इति ।

दाक्षिणात्यपाठः—"अन्यत्र तु करोति हि" । इति हि शब्द एव हेतुबोधकः अस्य शब्दस्यायमर्थो भवति अयन्तु नेत्यन्वयव्यतिरेकौ दृढौ संस्कारख्ढौ यस्य पुंसः संस्काराख्ढदृढान्वयव्यतिरेकस्तस्यान्वयव्यतिरेकाभ्यां विधिमुखेन चान्वयप्रति-पत्तेः उत्पत्तिबन्धशक्तिः तमपि न शक्यते हुं फटादिशब्देभ्यः प्रतिपत्ति विरहात् ( अतः परमपि अक्षराणि विलुलितानि ) प्रमितिर्न जायते । सत्वज्ञानादि-पदानां, नेह नानास्ति किञ्चनेत्यादिपदानां तु लोक एव गृहीतशक्तितः श्रवणे-किमिति बोधो न जायेतेत्यर्थः । यद्वा संस्काराख्ढः[३] ······ख्ढो यो विशेषण-विशेष्यभावादिरूपो ख्ढोऽन्वयः तस्य व्यतिरेकोऽभावस्तेनान्वयो येषाम् । अन्वया-योग्यपदार्थानाम् अङ्गुल्यग्रे करिशतमित्यादिशब्दानां तेभ्यो व्यतिरेको येषा मन्वययोग्यपदार्थानां तेषामन्वयप्रतिपत्तिरुत्पत्तिप्रतिबन्धः शङ्कितुमशङ्क्य-

१. प्रति पदस्यावृत्त्या इति क पुस्तके ।

२. प्रतिबन्ध शक्यशङ्कः ।

३. पृत्या ।

**अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।**
**अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम् ॥११॥**

मित्यत्र युक्तिमप्याह—**अत्यन्तासत्यपीति**— स्वतःप्रामाण्यनिश्चलाम्प्रमामबधातु-मवक्षेप्तुम् ।

अयमर्थः = शब्दोऽत्यन्तासत्यप्यर्थे ज्ञानं करोति अन्यथा किमाक्षिप्येत। शशविषाणां शब्दजं ज्ञानं न प्रमेति किं पुनर्वक्तव्यं सत्यादिशब्दात् ज्ञानं जायते इत्यत्र ।

यद्वा अत्यन्तासत्यप्यर्थे कार्यरूपे शब्दः ज्ञानं करोतीति यो मन्यते स वेदान्तानामसद्विलक्षणरूपे ब्रह्मणि कथं[1] न बोधं कर्तुं शक्नोतीति ।

अबाधितपाठे अत्यन्तासत्यपि शब्दो ज्ञानमात्रं करोति ब्रह्मणि पुनरबाधात् प्रमामिति योजनेत्यनुभूतिस्वरूपकृतिव्याख्यानम् ।

विद्यासागरस्तु अद्वैतादिपदं गृहीतसङ्गतिकं स्वार्थं प्रत्यायति[2] अगृहीतसङ्गतिकं वा नाद्यः। प्रमाणान्तरागोचरे अद्वैतसंगतिग्रहासम्भवात्। नापि द्वितीयः । अतिप्रसङ्गादित्याशङ्क्याह— **यत इति** । शब्दोऽत्यन्तासत्यपि नृशृङ्गादौ विज्ञानं जनयति अन्यथा नृशृङ्गादन्यो घट इति व्यवहाराभावप्रसङ्गात्। न च तत्रास्ति संगतिग्रहणं तस्य सकलप्रमाणातीतत्वात् अतोऽद्वैतपदस्यापि तथैव संज्ञाग्रहः । अयन्तु प्रौढिवादः । वस्तुतस्तु पदार्थत्वं नेष्यते ब्रह्मणः किन्तु वाक्यार्थत्वं, वाक्यन्तु[3] अगृहीतसङ्गतिकमेव बोधयति। न च पदार्थानामेव वाक्यार्थत्वाद् ब्रह्मपदार्थाप्रतीतौ वाक्यार्थाप्रतीतिरिति वाच्यम्। योग्यतावशात् प्रसिद्धपदान्तर समभिव्याहारेण अप्रसिद्धपदार्थप्रतीत्या वाक्यार्थप्रतीतेः । तदाहुः—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक् श्रुतैः ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥इति

हि शब्दार्थः। नन्वद्वैतज्ञानमप्रमा, सामान्यविशेषविनिर्मुक्तविषयत्वात् नृशृङ्गादि ज्ञानवत्।[4] विशेषज्ञाने व्यभिचारात् इति भावः। संवादाधीनं ज्ञान-प्रामाण्यं नचाद्वैते तदस्तीत्याशङ्क्याह—**स्वतः प्रामाण्यनिश्चयामिति**। प्रामाण्यस्य

१. कथने वा कर्तुंशक्नोति ।
२. प्रत्ययो यस्य क ख पुस्तके ।
३. वाक्यन्तु गृहीतसङ्गतिकमिति पाठः ।
४. इत्याशङ्क्याह—**अबाधादिति** । अत्राद्वैतशब्दः प्रमां करोति अत्र हेतुः अबाधादिति अबाध्यान्यत्वान्यागोचरादन्यत्वमप्रामाण्याप्रयोजकं ननु सामान्यविशेषविनिर्मुक्तविषयत्वम् इति ख पुस्तके पाठः ।

असंसर्गाग्रहस्यापि मन्ता शंसत्यबाधिते ।
अत्यन्ताऽसदसंसर्गाग्रहं संसर्गलग्नकम् ।। १२ ।।

स्वतस्त्वमेवाभ्युपेयम् अन्यथाऽनवस्थापातादिति व्याचष्टे । तदत्यशुद्धम् : पूर्वोक्त-साध्ये हेतुपरतयैव ग्रन्थसङ्गतेः आशङ्कान्तरनिराकरणपरतायामध्याहारापत्तेः । वस्तुतस्तु शाब्दबोधे[१] अयोग्यता निश्चयरूपो भेदनिश्चयः किं साक्षाद् विरोधी, योग्यताधीविघटन द्वारा वा । तत्र नाद्यः । भट्टाचार्यैरेव "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" इत्युक्तेः । तेषामयं भावः । योग्यताज्ञानमेव शाब्दधीहेतुः स तु असत्यपि योग्यतानिश्चये सत्यपि शुक्लत्वव्याप्य शङ्खत्वव्याप्य निश्चये दोषवशात् पीतशंखभ्रमवदुपपद्यते । तत्र पित्तवदत्रापि अयोग्यार्थकपदसन्निधानस्यैव दोष-त्वात् । अयोग्यार्थकत्वं तथा[२] निश्चयविषयत्वमभिमतमतो न प्रमाणशब्देऽपि योग्यताधीविषयार्थकत्वं नानुपपन्नम् । इदञ्चावश्यमभ्युपेयम् अन्यथा प्रतिवादिनो वादिवाक्यार्थाज्ञाने तद्दूषणाभिधानं वादिनश्च तत्प्रतिपत्तिर्न स्यात् । एवञ्च योग्यता-ज्ञाने अयोग्यतानिश्चयोऽकिञ्चित्करः तस्य साक्षात् प्रतिबन्धकतायां वादिप्रतिवा-दिनोः परस्परवाक्यार्थानभिज्ञयोः कथानुपपत्तेः । अतएव वाक्यस्य लिङ्गकल्पत्वं मीमांसासिद्धान्तोऽपि संगच्छते इति । नचैवं तर्हि श्रुतिवाक्यमपि तादृशबोधजनकं सत् निश्चायकं स्यादिति संशायकत्वेन पुनरप्रामाण्यापत्तिः । तदाहुर्भट्टाचार्याः अप्रमाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।

इत्याशङ्क्याह—**अबाधात्त्विति** । अत्राद्वैते प्रमासंशयविरोधिनीं धियं जनयति कोटिद्वयप्रतिपादकशब्दाभावात् । ननु वादिवाक्यतुल्यतया ततः परं मानसः[३] संशयोऽस्तु यथाहि तत्र आप्तोक्तत्वाख्य गुणाभावात् संशयस्तथेहापीत्याशङ्क्याह—स्वतः प्रामाण्येन निश्चलां संशयानाक्रान्ताम् ।

अयमाशयः—प्रामाण्यं ज्ञानसामग्रीत एवोत्पद्यते अप्रमाया ज्ञानाभासत्वेन ज्ञान-सामग्रीजन्यत्वाभावात् न प्रामाण्यं ज्ञानाभासे तु दोषो हेतुः । शाब्दे तु दोषो अनाप्तोक्तत्वम् । नच श्रुतिस्तथा उभयमते तस्या निर्दोषत्वात् इति । नच बाधा-भावोऽसिद्धः भेदग्रहस्य सत्त्वादिति वाच्यम् । तस्य अविद्याविद्यमानविषयत्वेनाप्यु-पपत्तौ प्रमात्वाभावात् श्रुतिः तु निर्दोषा न अप्रमाजननाय अलमित्युक्तत्वादिति । एवं भट्टोक्तया सम्भावितं दोषमुद्धृत्य प्रभाकरमतं दूषयति—**असंसर्गा ग्रहस्येति** ।

१. शब्दबोधेन ।

२. तथानिश्चयत्वमभिमतम् इति क पुस्तके ।

३. अव्यक्तान्यक्षराणि ।

४. असन्नासाच संसर्गश्च ।

अनौचित्याऽपि तर्केण दुर्बाधैवाऽद्वयश्रुतिः ।
अनारोपितमूलत्वाद् बलवत्त्वातदादृशा ॥ १३ ॥
प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते ।
तत्राऽनौचित्यसाम्राज्यं वैपरीत्यात्तुनात्र तत् ॥ १४ ॥

---

अत्यन्तमसंश्चासावसंसर्गः तस्याग्रहो यत्र तत्र संसर्गलग्नकं शंसति । संसर्गग्रहाविनाभूतमित्यर्थः ।[१] संसर्गग्रहशीर्षकं शिरस्कमितिपदार्थः प्रतिभुवमिति तु पदार्थः निर्वाहे वा इति यावत् शंसति कथयति । तथा च तन्मते संसर्गज्ञानस्यैवाभावेन कस्य प्रमात्वमिति तदाशयः ।

अयमाशयः प्रभाकरोऽपि सदसंसर्गग्रहस्थले चासंसर्गाग्रहमाह अन्यथाख्यात्यापत्तिभिया नतु सत्यसंसर्गग्रहस्थलेऽपि वेदप्रामाण्योच्छेदापत्तेः न चेह सदसंसर्गो बाधस्य निरस्तत्वादिति ।

नन्वनौचित्याविनिगमककल्पनालाघवकल्पनागौरवाणां तर्काणां तर्कप्रतिरूपकाणां वा, प्रमाणसहकारित्वमुभयसिद्धम् । तथाच अनौचित्यस्य सर्वलोकसिद्ध[२] भेदस्य तिरस्कारानर्हत्वलक्षणस्य प्रकृते सत्त्वाद् भेदग्राहि प्रत्यक्षमेव वलीयो नत्वभेदविषया श्रुतिरित्यत आह—**अनौचित्येति**। तर्कस्य आहार्यारोपतया[३] तदपेक्षया श्रुतेरनानारोपितरूपाया वलवत्वमिति तर्को[४] पष्टब्धप्रमाणापेक्षयापि तथेत्यर्थः । अतादृशा = आरोपितमूलेनेत्यर्थ इति शङ्कर मिश्राः ।

केचित्तूद्भावितनिग्रहस्थानेनैव निग्रहोद्भावनम् अनौचिती तर्कः श्रुतेर्बाधकः स्यात् इत्याशङ्कामाह । तच्चिन्त्यम् । नन्वेवमनौचित्यं तर्को नास्त्येव चेत्तदा "दोषं व्यक्तिविवेकेऽलङ्कारलोकविलोचने" इत्यग्रे यद् वदिष्यति तदनुपपन्नं स्यादित्याशङ्क्य सदसदनौचित्योर्विषयं विरेचयति । **प्रवृत्तेनापीति** । अनौचित्यमूलं हि भेदस्य सर्वलोकसिद्धत्वं तच्च श्रुत्या पारमार्थिकमभेदं बोधयन्त्या व्यावहारिकभेदपरं कृतं तथाच अपारमार्थिकभेदमादाय सर्वलोकव्यवहारोपपत्तौ नानौचित्यमिति भावः । अनौचित्यमूलं व्याप्यव्यापकभावखण्डनमित्यपव्याख्यानम् । अनौचित्यस्य व्याप्यव्यापकभावमादाय अप्रवृत्तेः । तथा प्रवृत्तौ वा सर्वानौचित्य खण्डने

---

१. अस्फुटाक्षरः ।
२. लोकसिद्धत्व भेदस्य ।
३. तंक्रोपिष्ट ।
४. उद्भावितनिग्रहस्थानपरिहारोऽनौचिती तर्कः श्रुतेर्बाधकः स्याद् इति शाङ्करीपाठः । आदर्श पुस्तके तु तर्कतः श्रुति राधिकास्यात् ।

विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् इत्यग्रिमखण्डनकारग्रन्थानुपपत्तौ उद्भावितनिग्रहस्थानेनेत्यादि स्वग्रन्थविरोधाच्च ।

विद्यासागरस्तु—अद्वैतश्रुतिवाक्यं सदसद् वा तदुभयविलक्षणं वा । नाद्यः द्वैतापत्तेः । न द्वितीयः यस्य हि परमार्थेन[1] नास्तिता तस्य कथमस्तित्वम् असतश्च कथं साधनत्वम् । तदाहुः—

योऽधुना परमार्थेन नास्तीत्येवं प्रतीयते ।
कथं पूर्वमसावासीत्[2] असंश्चेत् साधनं कथम् ।।

साधनञ्चेदवश्यञ्च परमार्थास्तितां भजेत्[3] नचानिर्वचनीयेन परमार्थसिद्धिः शुक्तिरजतज्ञानादिगोचरस्यापि सत्यत्वप्रसङ्गात् । आह च—

सिद्धिर्ना परमार्थेन परमार्थस्य युज्यते[4] ।
न दृष्टा शशश्रृङ्गादेः सम्यग् ज्ञानादिहेतुता ।। इति

कल्पितागमस्य प्रामाण्यमनुचितम् इति । उचितस्य भावः औचिती न औचिती अनौचिती [5]तद्विरोधादागमस्य कथमबाधितत्वम् । अनारोपितमूलत्वात् यथार्थवस्तुविषयत्वात् वलाद् अहंयुर्वलवत्वाभिमानिनी । अहंयुः स्यादहङ्कारीत्यभिधानकोषदर्शनात् । तर्कस्तु आरोपितमूलोऽपि यदीदं रजतमसत् स्यात् तदा प्रत्यक्षे न स्यादित्यादेरारोपितसत्त्वमूलत्वाभ्युपगमात् । वाक्यप्रामाण्यस्य तर्कानापोद्यत्वे यागादिस्वर्गसाधनमिति वाक्यादेव निश्चयोपपत्तौ नापूर्वसाधनविचारारम्भः स्यादित्याशङ्क्याह—**प्रवृत्तेनापीति** । बाध्यत्वेनाभिमतेन वाक्येन स्वार्थबोधनायप्रवृत्तेनापि येन अनौचित्यमूलमापादकनिष्ठा आपाद्यस्य व्याप्तिर्न लूयते इह तु अद्वैतश्रुत्या आपाद्यापादकभेदखण्डनेन व्याप्तेरपि खण्डितत्वात् तत् साम्राज्यं नास्तीत्यर्थः । कल्पितप्रतिविम्बादेरिव सत्यविम्बादिगमकत्वं वेदस्यापि अपाकर्तुमशक्यमिति व्याचष्टे । तच्चिन्त्यम् । असतोऽनिर्वचनीयस्य च गमकताया व्यवस्थापितत्वेनाशङ्कोदयासम्भवात् । वस्तुतस्तु नत्वसञ्जातविरोधिप्राथमिकनिरवकाश प्रत्यक्षादि प्रमाणषट्कविरोधे सति अद्वैत श्रुतेः [6]तद्विपरीतायायथाश्रुतार्थे न प्रामाण्यम् अप्रामाण्यमेव वा सर्वागमानां प्रामाण्यमनुचितमित्यनौचितीलक्षणतर्केण

---

१. परमार्थे तन्नास्तिता ।

२. असारासीद् ।

३. वदेत् इति पाठः क्वचित् श्लोकवार्तिके निरालम्बनवादे १५६ तथा १५७ कारिका ।

४. १५७ तथा १५८ कारिका श्लो० वा० ।

५. तद्विधादागमस्य नाबाधितत्वम् ।

६. तद्विपरीतार्थाय ।

**ननु यद्यदेवोदाह्रियते त्वया—'नेत इतोऽस्य भेदो गृहीतः' इति ततोऽस्याद्वैताम्नायैरभेदबोधने तद्द्वारा सर्वाऽभेदे पर्य्यवसातव्यमिति, ततस्ततस्तस्य भेदस्तदैव गृह्यते मया। तस्मादुदाह्रियमाणतायामनुदाह्रियमाणतायां च कस्यचिदेतत् प्रत्यवस्थानमस्थाने इति। मैवम्, अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्यादितो भेदो न त्वया**

---

बाधात् अबाधासिद्धिरित्याशङ्का। अनारोपितमूलत्वम् अपौरुषेयत्वात् अतादृशतर्कस्तु पौरुषेयत्वेन सम्भावितभ्रान्त्यादिमूलः। अप्रवृत्तेनेव प्रवृत्तेनापि विरोधिना येनाऽनौचित्यमूलं व्याप्यव्यापकभेदादि न छिद्यते तत्र प्रमाणे अनौचित्यस्य निरंकुशत्वेन च अत्रापि तर्हि तथास्त्विवति आशङ्कयाह—**वैपरीत्यात्तु इति**। अत्र सर्वाद्वैतश्रुत्या अनौचितीमूलस्य भेदस्य उच्छेदान्न तथात्वमित्यर्थः।

ननु अद्वैतचिन्तनपरैव श्रुतिरस्तु नतु भेदबाधिकेति चेत् न। तथापि मुख्यार्थत्यागापत्तेः अप्रामाण्यान्न विशेषः[१] प्रत्यक्षादेस्तु क्वचिदपि अप्रामाण्यमपि स्वप्नादिज्ञानदृष्टमिति तदेव न्याय्यम्। नचादित्यो वै यूप इत्यत्रागमस्यापि तद् दृष्टमिति वाच्यम्। तत्र प्रयोजनवदर्थलाभाय गौणताश्रयणं तात्पर्यविषये च शब्दस्य प्रामाण्यं लौकिकस्थले क्लृप्तमिह तु अध्ययनविधिवशात् प्रयोजनवदर्थेपीति विशेषः। तात्पर्यमुपक्रमोपसंहारादिषट्केन अद्वैतेब्रह्मण्येव अवधृतमिति वार्तिकामृतादावतिविस्तर इत्युपरम्यते।

श्रीपादास्तु—ननु श्रुतेर्योग्यपदार्थे संसर्गबोधकत्वमेवौचित्यं शब्दमात्रे तथात्वात्। तच्च भिन्नार्थे संसर्गबोधकत्वे सति सम्भवति इयं श्रुतिरभिन्नवस्तु बोधयितुं प्रवृत्ता अतः औचित्यशून्या अनुमानेन बाध्यते विमता श्रुतिः नाद्वैते प्रमाणं श्रुतित्वात् कर्मश्रुतिवत् इत्याशङ्कार्थः। अपौरुषेयत्वेन सिद्धप्रामाण्येनागमेन अनुमानं बाधितमित्याशयः सिद्धान्तिनः। तर्हि गौणस्थलेप्यबाधितत्वं स्यादित्यांशङ्कय चतुर्थेन श्लोकेनोक्तम्। येन वाक्येन स्वार्थबोधनाय प्रवृत्तेनाप्यनौचित्यस्य अयोग्यार्थस्य मूलं विपरीतप्रमाणं न लूयते विरोधप्रमाणं न निरस्यते। तत्रानौचित्यस्य साम्राज्यं न निवर्तते। अत्राद्वैतश्रुतौ वैपरीत्यात् विरोधिप्रमाणाभावान् न तत्रानौचित्य साम्राज्यम्। नहि सर्वाद्वयवादिनामस्माकं व्याप्तिः सिद्धाभेददर्शनभ्रमश्चाद्वैतश्रुति विरोधादेव निवर्तते इत्यर्थः इति चाचक्षते।

पूर्वोक्त एव किञ्चिदधिकं वक्तुं सिंहावलोकितेन[२] न्यायेन शङ्कते—**नन्विति**। अनुभवविरोधेन शङ्क्येयमिति श्रीपादाः। **एतत्प्रत्यवस्थानमिति**[३]। सर्वा

---

१. न विशेषनः क पुस्तके।

२. सिंहावलोकितो नन्विति।

३. प्रत्यवस्थानं = खण्डनम् इति शब्दोहेतौ।

**प्रमित इति मयोच्यमाने यस्तदीयस्ततो भेदः प्रमातव्यः, स न तावत् प्रत्यक्षेण, तत्कालमण्तिमबुद्धेरनुपस्थितेः ।**

**यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात्, तदानीमद्वैतवादिनं प्रति हेतोः साध्याविशिष्टतया अनुपपत्तेश्च, येन विना सा तदविशिष्टतया, ततः कथमाभासात् प्रमीदयः स्यात् । न च वाच्यं स्वयं मया स भेदो ज्ञायते इति**

भेदे पर्यवसातग्यमिति प्रत्यवस्थानेऽयोग्यमित्यर्थः । बाधपरम्पराविश्रामभूमिः बुद्धिरन्तिमबुद्धिः । सा च इदानीमतीता वर्तमाना उत्पत्स्यमाना, बुद्धयादितः अद्वैतवाक्यजज्ञानात् स्वविषयाविषयिविषयप्रवाहाच्चेत्यर्थः । आद्यन्ते च सा न प्रत्यक्षा अवर्तमानत्वात् । तथा च तत्प्रतियोगिकस्तद्धर्मिको भेदः प्रत्यक्षतो न शक्यग्रहः । न द्वितीयः । तस्य भेदप्रत्यक्षस्य चैकदा अनुत्पत्तेः । नन्वविद्यमानामेव[१] प्रतीतिमवगत्य ततो भेदः प्रत्यक्षेण गृह्यते इति चेन्न । भेदबुद्धेः प्रतियोगिविशिष्टगोचरतानियमेन प्रतियोगिन्या[२] अन्तिमबुद्धेः स्मरणायोगात् । प्रतीत्यन्तरस्य च कारणाभावात् असम्भवाच्च । एतेन अन्तिमबुद्धेरुदाहरणे अन्तिमत्वव्याघातः अनुदाहरणे न भेतग्रहस्थानं तथा मानसप्रत्यक्षेण ततो भेदग्रहोऽस्तु त्वदुदाहरणवाक्यजज्ञानसहकृतस्य मनसो बहिरपि प्रवृत्तेरिति निरस्तं तस्य प्रमाणान्तरतापत्तेः । नवा तादृशमानसप्रत्यक्षे प्रमाणं मानसप्रत्यक्षेण सह भेदाग्रहात् तत्रैव च श्रुतिप्रवृत्तेश्च । केनचिद्धेतुना अन्तिमबुद्धिः श्रुतिजन्यबुद्धयादितोभिन्ना, भिन्नसामग्रीकत्वात् अपुनरुक्तशब्दवाच्यत्वात् जन्मनाशादिविरुद्धधर्मत्वाद् वा यदेवं[३] तदेवं यथा घटाद् आत्मनः । अर्थापत्तिः बुद्धयोर्भेदाभावे श्रुतिसंस्कारहीनानामद्वैतबुद्धयनुपपत्तिरूपा । असिद्धत्वेनाभासात् कथं प्रमोदय इत्यन्वयः । साध्याविशिष्टत्वेन हेतोरसिद्धत्वं विवक्षितं नतु साध्यसमानत्वमेव विशेषणभेदात् । अयमाशयोऽस्माकं सर्वाभेदवादिनां सामग्रीभेदानङ्गीकारात् हेत्वसिद्धिः साध्यविकलश्च दृष्टान्तः । अन्तिम बुद्धिकारणस्य आगमस्य चाभेदे शास्त्रसंस्कारविरहिणाम् अद्वैतज्ञानासिद्धिः तदनुपपत्त्या च भेदसिद्धिरितरेतराश्रयाच्चक्रकाद् वा अर्थापत्तेरनुदयः इति विद्यासागरः ।

**येन विनेति** । येन उपपादकेन विना सा अनुपपत्तिस्तदभिन्नतया अर्थापत्तेस्तरसम्भव इत्यर्थः ।

ननु स्वार्थानुमाने नायं दोष इत्याशङ्क्य दूषयति नचेत्यादिना । अयमाशयः—मम तावद्दृश्यस्य भेदस्य स्वीकारात् नासिद्धिः । यदि हि आविद्यिकभेदत्वेन पारमार्थिकभेदत्वेन वा हेतुघटकता स्यात् तदा तादृशहेतोरुपन्यासे स्याद-

१. अविद्यमानमेव ।

२. अननुभूततया इति शेषः ।

३. यदेवं ।

**नास्ति पाक्षिकोऽपि मां प्रत्यसिद्ध्यादिरिति, यतोऽस्य त्वद्वचनस्य वैयर्थ्यापत्तिः, वचनस्य परार्थत्वात् । मौनमवलम्ब्यानतिष्ठमानश्च भवान प्रतिभातो न मुच्यते ।**

**न च स्वयं मया प्रमितो भेदः परं प्रति वचसा केवलं बोध्यते इति वाच्यम्, त्वद्वचसि परस्याप्रत्ययात् । विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तथार्थे**

---

न्यतरासिद्धिः पाक्षिकीः ममाविद्यिकस्य तव पारमार्थिकस्य असिद्धेः । यदा तु भेदत्वेन प्रवेश्य प्रतिसंहितो हेतुस्तदा स्वार्थानुमाने नास्त्येव दोषः, कदापि मया तस्य अविद्यिकत्वेन अनङ्गीकारात् । अस्य वचनस्य स्वयं मयेत्यादिनः सिद्ध्यादिरित्यन्तस्य स्वार्थानुमानस्य कथायां नोपयोग इति दूषणं स्पष्टत्वान्नोक्तम् । ननु वचनं व्यर्थं ममैव प्रत्यायकत्वात् इत्याशङ्क्याह—**वचनस्य परार्थत्वादिति** । यद्यपि स्वयूथ्यान् अपरान् प्रति सार्थकमेव तत् तथापि त्वमिव तेऽपि जानन्त्येवेति व्यर्थता अस्त्येव ।

अत्र मिश्राः--यया अद्वैतवादिनं प्रति अनुमानमनवकाशं तथा द्वैतवादिनं प्रति शतशः पठ्यमाना अद्वैतश्रुतयोऽपीति वदन्ति । तदसत् । संसर्गग्रहस्योपपादितत्वात् । अथ मया गृहीते भेदे इत्यपि नोच्यते परन्तु स्वयं ज्ञायते एवेत्याशङ्क्याह—**मौनमिति** । कथायां तुष्णीम् अद्वैतवादिनं प्रति परस्यैवाभावादितिभाव इति मिश्रस्यापव्याख्याद्वैतवादिनामपरस्य सत्त्वात् । वा च स्थाने अप्रतिभा सा हि उत्तरस्य अप्रतिपत्तिरूपा । अथ मया अनुमानार्थापत्तिभ्यां प्रमितो भेद इति त्वां प्रति नोच्यते केवलमस्ति भेद इत्येवोच्यते तव तु वाक्यार्थधीसामग्री सत्त्वात् भद्रवाक्यार्थस्य प्रतीतिरिति प्रतिभेत्याशङ्क्य निषेधति—**नेति** । यद्यपि अनाश्वासेऽपि वाक्यार्थधीः भवत्येव तथाप्युत्तरकालं पुरुषदोषाशङ्कया अप्रामाण्यशङ्कोदयस्य दुरुच्छेदात् । दोषवत् पुरुषाप्रणीतत्वं हि प्रामाण्ये लोकवेदसाधारणं तन्त्रं, दोषेण प्रमाजननसामर्थ्यतिरोधानात् ।

नचैवं ज्ञानसामग्रीतो भिन्ना प्रमासामग्री स्यात् ज्ञानसामग्रीमात्ररूपत्वे ज्ञानमपि प्रतिबन्धान्नोत्पद्येतेति वाच्यम् । इष्टापत्त्योत्तरत्वात् ज्ञानाभासं हि तत् । ततः कथं ज्ञानकार्यं व्यवहारादिकमिति चेत् । फलबलेन तस्यापि तत्कार्यकारितैक शक्तिमत्वात् तत्प्रतिफलितचैतन्यादेव वा [१]व्यवहारः प्रमास्थल इवेति । किञ्च स्मृत्यादि साधारणी ज्ञानसामग्री, प्रमासामग्री तु ततोभिन्ना अनुवादमिथ्याज्ञानसामग्रीतो विलक्षणात् सामर्थ्यं दोषेण प्रतिवध्यते इत्युक्तावपि न गुणजन्यता, जन्यप्रमात्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयो हि पराभिमतो गुणः । नच प्रमाचतुष्टयसाधारणः कश्चिद् गुणोऽस्ति वैदिकप्रमायां व्यभिचारात् । अस्म-

---

१. वाच्यव्यवहार इति ख पुस्तके ।

**तज्जिज्ञासोत्पादनद्वारेण तस्य स्वतस्तदर्थप्रमित्युत्पादनपर्यवसायितयोपयुक्तम्। न चाद्वैतवादिनं प्रति कथा कर्तुं शक्यते, तं प्रत्यन्यतरासिद्धे रुक्तत्वात्।**

**न च वाच्यं मम वचनात्संदेहेनापि श्रुत्या तत्र संदिग्धबाधितभावया नाभेद-प्रतिपादनं ते घटते इति, यस्मादद्वैतं मन्यमानेन भेदाऽसिद्ध्या सर्वत्र साध्याविशेषा-दिदोषप्रतिसंधायिना संशयस्याप्यनवकाशीकरणमेव स्यात्। तस्मात्—**

---

न्मते वेदस्यापौरुषेयत्वेन [1]आप्तोक्तत्वाभावात्। परमतेऽपि चतुष्टयसाधारण्या-भावात्। विशेष्यवृत्ति विशेषणज्ञानं गुण इति चेत् न। निर्विकल्पके व्यभिचारात्। तन्न प्रमेति च सत्यम् परन्तु न परमते [2]इन्द्रियार्थसन्निकर्षोत्पन्नम् इति सूत्रे अव्यपदेश्य-पदेन तस्यापि संगृह्य विभक्तत्वात्। स्वमते तर्हि का गतिरिति चेत्। तस्य कारणत्वे प्रमाणत्वाभाव एव। नवा प्रमात्वं निर्विकल्पक साधारणं कार्यतावच्छेदकं वेदान्तिमते भगवद्रूपत्वात्। नवा भट्टानां शब्दज्ञानाभावादेव ज्ञानसामान्यसामग्रीतस्तदुपपत्तेः कारणान्तरकल्पनायां मानाभावात् इति दिक्।

ननु नित्यः शब्दः इति विजिगीषुवचनमप्युदासीनमाप्तोक्तत्वेन मन्यमानं प्रति साक्षादेव प्रमाणमित्याशङ्क्य विजिगीषुं परं प्रति इत्युक्तः हि शब्दः प्रति···र्थे विजि-गीषुवाक्यं न्यायात्मकं अवयवं द्व्यवयवं वा वादिभेदेन यद्यथा ततस्तद्वचनं जनयत्येव सामग्रीसत्त्वात् तथापि दोषशङ्कया प्रामाण्यसंशयो जन्यत इति भावः प्रमाणोत्था-पनत्व···विजिगीषु वचनमयुक्तमिति उपयुक्तमित्यन्तस्यार्थः। तथाकर्तुं=प्रमा-णोत्थापनद्वारा प्रमित्युत्पादनं कर्तुम्। **यद्वचनात् सन्देहेनापीति**[3]। मद्वचनप्रयुक्तेन मद्वचने दोषसन्देहाधीनेन आह [4]**अपीति**। [5]अभेदप्रतिपादनं=भेदाभावनिश्चयः।

यद्यपि निर्दोषत्वाद् वैदिकेऽर्थे संशयो[6] न सम्भवतीति बहुधोक्तम्। नच संशये सति धीरेव न जायते इति शक्यं वदितुं योग्यतासंशयस्य शाब्दज्ञानेऽनुगुणत्वात् तथापि दूषणान्तरमप्याह—यस्मादित्यादिना। संशयस्यापि क्वचिन्निश्चयमन्तरेणानुपपत्ते-र्भेदस्य तत्प्रमाणस्य वा क्वचिदप्यनिश्चयात्[7] त्वद्वचनं संशयस्यापि नोक्तरीत्या प्रयोजकमित्यर्थः।

अयमाशयः—श्रुतिस्तावदद्वैतं बोधयत्येव यदि कदाचित् प्रमाणाभासेनाऽपि द्वैतमुपस्थाप्येत तदा स्यादपि जातु संशयः तच्च नास्त्येव प्रत्यक्षस्य निरस्तत्वात् अनुमानादेः साध्याविशेषादिदोषगुणस्तत्वात्। अन्ततो भेदनिर्णये तद्घटेत[8]। विरो-धानिर्णये विरुद्धनानाकोटिकः संशयोऽपि कथमिति दिक्।

---

१. अप्रोक्तत्वाभावात्। २. न्यायसूत्रम् अ० १ आ० १ से ४। इन्द्रियार्थसन्निकर्षोत्पन्न-ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।

३. सन्देहेनापीति। ४. नापीति। ५. नाभेदप्रतिपादनं भेदाभावनिश्चयः। ६. संशयो सम्भवति। ७ अंतरायात्। ८. तद्घटत।

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥१५॥

**अपि च—प्रतीयते तावदिदं सामान्यतो यन्नाम किञ्चित्परश्चेतसा चिन्तयन्नस्तीति, किञ्चिद्वा विवक्षरित्यादि। तत्र परस्य बुद्धिविषयो विवक्षाविषयो वा विशेषतो विनिगमनं विना नैव प्रतीयते। ततोऽन्तिमबुद्ध्यादिभेदौ न भवता शक्यप्रमः, परेण तच्चिन्तनादेरपि संभवात्। स्वस्मात्स्वस्य भेदस्याभावात्।**

---

यस्माद्भेदग्राहिप्रत्यक्षादिविरोधाशङ्कया अद्वैतश्रुतेः त्रिविधमप्रामाण्यं नास्ति तस्मादित्युक्तार्थसंग्राहकश्लोके अपेक्षितमशं पूरयति—

ब्रह्मैव अस्त्रं स्वपरिपन्थिद्वैतनिवर्तकम् एकं=मुख्यं केवलं वा अन्यनिरपेक्षमितियावत्। क्वचिदपि वादे जल्पे वितण्डायां वा अन्यं (अ)[१]गणयन् [२]तदुक्त प्रमाणजातस्यासिद्ध्यादिदोषाद्। धीर एव वीरः धैर्य=वस्तुतत्वावधारणसामर्थ्यम्। वीर्यम्=यथाकालं प्रयोगसामर्थ्यम्। संगरकेलिषु युद्धक्रीडासु भङ्गो नास्ति। रूपकालङ्कारः। पक्षे—यथालोके अर्जुनादेर्वीरस्य ब्रह्मास्त्रमादाय अन्यं योद्धारमगणयतः संगरकेलिषु युद्धादपि भङ्गः पराजयो नास्ति तद्वत्। एवं तावत् प्रत्यक्षादितो यत्र स्पष्टं भेदो भासते तत्राद्वैतश्रुतेः प्रसक्तिमुक्त्वा[३] प्रमाणान्तरविरोधासम्भव स्थलमाह-**अपिचेति**।

तथा चेह प्रत्यक्षादिना भेदस्य दुर्ग्रहत्वात् श्रुतिर्निरावाधा प्रवर्तिष्यत इति भावः। सामान्यतः प्रतीयते नतु विशेषतः तल्लिङ्गाभावात्। चिन्तालिङ्गं हि मुखवैरस्यं क्वचिद्भगवच्चिन्तनादौ मुखप्रसादोऽपि। **विवक्षुरित्यादि**। विवक्षा ज्ञानसामान्यस्य लिङ्गम् आदिपदग्राह्यस्तु लिखित्वा रहःस्थापितादि। ननु तर्हि सामान्यप्रतीतिरेव अवशेषमपि वलादाक्षिप्य बोधयिष्यतीति इत्याशङ्क्याह—**तत्रेति**। तथापि विशेषंविशिष्यबोधयितुं[४] न शक्नोति अन्यथा क्वापि संशयविपर्यासौ न स्यातामिति भावः। अन्तिमबुद्ध्यादेर्विशेषतो निश्चयात् तद्धर्मिकस्तत्प्रतियोगिको वा [५]भेदोऽध्यक्षादिभिरध्यवसीयतामित्याशङ्क्याह—**परेणेति**। अयमस्माद् भिन्न इत्येवं भेदधियो[६] धर्मिप्रतियोगिधीसापेक्षत्वादितिभावः।

अस्तु तर्हि परचिन्तनादिगोचरादन्तिमबुद्ध्यादि, भिन्नमित्येवधीरित्यत आह—**स्वस्मादिति**। भेदप्रतीतिमन्तरेण धर्मिप्रतियोगिभाव एव न सम्भवति स्वात्मनोऽपि स्वस्माद् भेदप्रसङ्गात्। नच तस्य सम्भवः, एकाभावेऽनेकाभावादितिभावः।

---

१. गणयन् क ख पुस्तके। २. तदुक्ताप्रमाणजातस्येति क ख पुस्तके। ३. प्रसवं। ४. धयितु।
५. अध्यक्षादिभिः अध्यक्षादिभिः इतिवारद्वयं पाठः। ६. भेदधीयो।

**ततस्तत्र लब्धपदा कथमद्वैतश्रुतिर्विश्वाभेदे पर्यवस्यन्ती त्वया शक्यबाधा स्यात्। तस्मात्—**

**कथं सामान्यतो ज्ञाते नैव ज्ञाते विशेषतः।**
**पदरोधस्त्वया कर्तुं शक्यः स्यादद्वयश्रुतेः॥१६॥**

**ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदार्थवैचित्रीव्यवहारो न व्याहन्यते? कथं व्याहन्यते? प्रतिवक्ष्यते हि तत्। किं च योऽयं त्वया व्याधात आपादनीयः,**

---

श्रीपादास्तु तच्चिन्तनादित्यन्तिमबुद्धिभेदाभावादेरपि चिन्तनसम्भवात् तथाचानुभवविरोध इति व्याचक्षते। तत्तु तच्छद्वात् प्रकृताभिधायिनो न शक्यते प्रत्येतुमित्युपेक्षणीयम्। विस्तरेणोक्तमर्थं संक्षिप्य श्लोकेन संगृह्णाति उपसंहार व्याजेन–**तस्मादिति**[१]।

सामान्यतो ज्ञाते=वदनविकारादिलिङ्गेन अर्थे अनुमिते, परचिन्तादि गोचरे विशेषतो विनिगमनाहेत्वभावादज्ञाते, सामान्यज्ञानेऽपि विशेषज्ञान-स्यापि सम्भवात् विरोधज्ञाने सामान्यज्ञानस्य च सम्भवात् उभयमुपात्तम्। पदरोधः[२] अवकाशप्रतिबन्धः।

अत्र प्रश्नाः—तदानीं भेदाग्रहेऽपि क्रमेण [३]तत्र भेदं गृहीत्वा श्रुतिरपसार-णीया। नहि यदेकदा न गृह्यते तन्न कदापि गृह्यते, प्रवृत्तं वा प्रमाणं पश्चात् प्रवृत्तेन बलवता प्रमाणेन नापसार्यते—परिचिन्त्यमानत्वावच्छेदेनभेदग्रहस्तदापि सम्भवति वस्तुतस्तस्यान्तिमबुद्धित्वादिति दूषयति। तदसत्। सामान्यतः सत्त्वगुणत्व बुद्धित्वेन चिन्तनस्य अन्तिमत्वाविरोधात्। अन्यथा सामान्यलक्षणाप्रत्यासत्तिर्भवता त्याज्या स्यात्। तथेश्वरीयज्ञानस्य विशेषतस्तद्विषयत्वमपि नान्तिमत्वविरोधि किन्तु तत्पुरुषीयज्ञानस्य तत्पुरुषीयतादृशविशेषबुद्धिविषयत्वम् अतएव परेणे-त्युक्तम्। किञ्च अन्तिमत्वचिन्त्यमानत्वयोर्विरोधोऽपि भेदधीसाध्यनिश्चय इति। न च [४]सोऽद्याऽपि सिद्धः तथा चान्योन्याश्रयादि चापीति दिक्।

भेदमनङ्गीकुर्वतः तव श्रुतिरेव अद्वैते प्रमाणमिति वचनं व्याहतमिति शङ्कते नन्विति।

विद्यासागरस्तु–पदपदार्थादिव्यवहाराङ्गीकारात् तद् व्याघातमाशङ्कते—**नन्विति**। वैचित्री वैधर्म्यम् इदं पदम् अयं, पदार्थः इति वैधर्म्यज्ञानात् वाच्य-वाचकभावधीः ततः पदसमूहरूपाद् वाक्याद् वाक्यार्थधीः वेदे कथं स्यादिति भावः। वैचित्र्याद् व्यवहारः तदधीनो व्यवहार इत्यर्थः **प्रतिवक्ष्यते हीति**। व्याघात-

---

१. नत्वस्मादिति। विनिगमन इति पाठः क्वचित्। २. पदबोधः।
३. तन्नाभेदं गृहीत्वा इति क पुस्तके। ४. नचासोंत्यापिसिद्धः।

**सोऽपि कस्माच्चिदापादकात्। न च अपाद्यापादकमभिद्यमानमापत्त्यै प्रभवेदिति। तस्मात्—**

**नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि।**
**असिद्धभेदाद्व्याघातः पतेदापादकात् कुतः ॥१७॥**

## **८. चतुर्विधभेदखण्डनम्**

**इदमपि च विचारमर्हति –यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि, तदपि कीदृश्यर्थे पर्यवस्यति ? तथा हि प्रत्यक्षेण योऽसौ भेदो**

---

पदार्थखण्डनग्रन्थे इत्यर्थः। न भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः इत्युत्तरग्रन्थेन व्यावहारिकेण भेदेन व्यवहारोपपत्तेर्वक्ष्यमाणत्वात् इत्यर्थः इत्यपरे।

आपादकादित्यत्र आपादनीय इत्यस्यानुषङ्गः। [१]आपत्त्यै=आपादनाय [२]प्रभवति=आपादयितुं न शक्नोतीत्यर्थः। नानात्वं पदपदार्थानां भेदं व्यावहारिकमालम्ब्य वदत्यपि=व्यवहरत्यपि असिद्धो, न गृहीतो भेदो यस्य अर्थादापाद्यात् तस्मात् आपादकात् नाना आत्मा यस्य तत् नानात्मा[३] तद्भावो नानात्म्यमिति विद्यासागरधृतः[४] पाठः।

पूर्वं भेदप्रामाण्यपर्यालोचनया श्रुतेः प्रत्यक्षादिविरोधः परिहृत इदानीं प्रमेयपर्यालोचनयाऽपि विरोधपरिहाराय उपक्रमते **इदमपीति**। यद्वा पूर्वं प्रत्यक्षादेः भेदविषयत्वमभ्युपगम्य परिहृतमिदानीं भेदविषयत्वमेव नास्ति प्रत्युत अभेदविषयत्वमेव तस्येति कथं प्रत्यक्षादेः श्रुतिबाधकत्वमित्युपपादयितुमाह–-**इदमिति**।

विचारस्वरूपमभिनीय दर्शयति–**यदिति**। घटपटभेदग्राहिप्रत्यक्षादि, यद् अद्वैतश्रुतीनां बाधकमित्यन्वयः। ननु भेदग्राहिणः प्रत्यक्षादेः भेद एव पर्यवसानात् किं विचारेणेत्याशङ्क्याह–**कीदृशो भेद इति**। भेदशब्दस्य स्वरूपवैधर्म्यान्योन्याभावात्मकानेकार्थत्वाद् विचार आवश्यक इत्याशयेनाह–**तथा हि[५] चेति**। बाधकं=बाधकत्वेनाभिमतमुपन्यस्यति[६] क्रियाविशेषणमिति। तथाहीति[७]। अनुमानार्था-

---

१. आपद्यै।
२. प्रभवेत् मूलपाठः।
३. नानात्मं तद्वा नानात्म्यम् इति।
४. पाठोऽयं नेदानीन्तन पुस्तकेषु दृश्यते।
५. तथाहि चेति पाठः इदानीं मूले नोपलभ्यते।
६. बाधकत्वेन उपन्यस्यव्यतिक्रिया विशेषणम्।
७. तथाकेति।

**गृह्यते स किं स्वरूपभेदः ? किमन्योन्याभावः ? किं वैधर्म्यम् ? किमन्यदेव वा ?**

**(१) यदि तावत् स्वरूपभेदः, स नाम घटपटयोर्हि स्वरूपं यत् परस्परस्माद् भेदः, तत्परस्परमनन्तर्भाव्य न सम्भवति। भेदो हि भवन् कस्मादपि भवति, अन्यथा स्वरूपं भेद इति पारिभाषिकं नाम स्यात्। यदा च 'घटाद् भेदः पटस्य**

पत्याः निराकरिष्यमाणत्वात् प्रथमतोऽत्यैष्ठच[१]प्रत्यक्षमात्रग्रहणं स भेदः स्वरूपभेदः इत्यत्र भेदपदमनुवादः स्वरूपमित्येव विवक्षितम्। **अन्यदेव** वेति। पृथक्त्वं गुणो वेत्यर्थः।

ननु स्वरूपभेद इत्यत्र भेद एव प्रतियोगिनः स्वरूपं नातिरिक्तमित्यपि पक्षः सम्भवी, कुतो न दूषित इतिचेन्न। स्वतन्त्रस्य भेदस्य अप्रतीतिपराहतत्वेन अप्रामाणिकत्वेन भेदवादिभिर्नैयायिकादिभिरनभ्युपगमात्। भेदादतिरिक्तस्य प्रतियोगिनः प्रमाणसिद्धत्वाच्च। तस्मादधिकरणस्वरूपमेव भेद इति प्रभाकरमतं तन्निरुक्ति सम्भवो भवति। अतिरिक्तभेदवादिनो हि प्रतियोगिनमधिकरणञ्च अतिरिक्तञ्च भेदमाहुः। तद्वत्वं क्लृप्तस्य पटस्य घटभेदाधिकरणस्यैव घटभेदत्वमस्तु एवं पटभेदोऽपि घटाधिकरणको घट एव अधिकरणातिरिक्तस्य भेदस्य निष्कृष्याप्रतीतेरिति तन्मतं दूषयति—**स नेति**।

सामान्यतः प्रतिज्ञायां प्रतिज्ञार्थं[२]सहेतुकथनायाह—**घटपटयोर्हि इति। यच्च परस्परेति**=यत् परस्परं यस्मात् परस्परस्माद् भेदः भेदत्वेन व्यवह्रियमाणः तत्परस्परमनन्तर्भाव्य स भेदत्वेन न सम्भाव्यते आत्मनि भेदप्रतियोगिनं प्रवेश्यैव आत्माभिन्नं कृत्वैव भेदात्मको भवति। अयमाशयः—भेदश्चेदधिकरणात्मकः तदा तद्विशेषणीभूतः प्रतियोग्यपि तदात्मक एव स्यात् नहि विशेषणातिरिक्तमिह विशिष्टमस्ति दण्डी पुरुष इत्यादौ हि यथा केवले पुरुषे दण्डसंयोगानन्तरं दण्डी पुरुषो नासीदधुना दण्डी जात इति प्रतीतेः विनष्टे च दण्डसंयोगे दण्डी नष्ट इति प्रतीतेर्विशिष्टोऽतिरिक्तः स्वीक्रियत न तथा पटादतिरिक्तो भेदोऽस्ति। तथा च पटात्मा भेदो घटविशिष्टश्चेत्तदा विशेषणस्य[३] घटस्य पटे संयोगाद्यात्मकसम्बन्धाभावाद् अभेद इति। ननु कुतो न सम्भवतीत्याशङ्कयाह—**भेदो हीति**। नित्यं प्रतियोगिघटितमूर्तिक एव भेदः प्रतीयत इति भावः।

विद्यासागरस्तु प्रतियोगी भेदे विशेषणम् उपलक्षणं वा। आद्ये स्यादयं दोषः उपलक्षणपक्षे तु नायं दोषः काकस्य गृहभेदवतोऽप्युपलक्षणत्वादित्याशङ्कावारणा-

१. अप्रत्यक्षमात्रग्रहणम् इति क ख पुस्तके।
२. हेतुकतायाह।
३. विशेषस्य।

इत्येतावानेवार्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते, तदा घटोऽपि पटात्मन्येव प्रविष्ट इति पटघटयोरैक्यात्म्यमेव भेदग्राहिणा प्रत्यक्षेणाऽवगाहितमिति विपरीतमापद्यते।

ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते, तथा भेदोल्लेखित्वेऽपि दीयतामस्यां दृष्टिः। अभेदे हि 'घटः' इत्येव 'पटः' इत्येव वा बुद्धिः स्यात्, न तु 'घटाद्भिन्नः पटः' इति चेत्।

स्यादप्येष पर्यनुयोगो यद्यविद्याविद्यमानभावं भेदं पारमार्थिकमभेदमिच्छन्तोपि प्रत्यादिशामः। तस्मात्—

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥१८॥

---

यैव—भेदो हीति। यदि भेदस्य[1] प्रतियोगी उपलक्षणं स्यात् तदा तत्प्रतीतिं विनाऽपि भेदः प्रतीयेत काकनिगम इव देवदत्तगृहम्। नचैतदस्तीति तस्यार्थः इत्यनर्गलतया व्याचष्टे। अग्रेतनेन अथेत्येतावन्मात्रमित्यन्तेन पुनरुक्तञ्च। नचोपलक्षणज्ञानं विना देवदत्तीयत्वेन तद्गृहं ज्ञायते उपदेशवैयर्थ्यात्। विपरीतमिति। भेदग्राहितया अभिमतं प्रत्यक्षमभेदे पर्यवसितमित्यर्थः। व्याख्यायते=व्युत्पाद्यते। घटइत्येवेति। घटस्य प्रतियोगिरूपत्वे पटो घट इत्येव स्यात् अभिन्नप्रथमान्तप्रयोगस्य तत्र साधुत्वात्। पट एव स्यान्नतु घटपदस्य पटपदसमभिव्याहारः स्यात् पर्यायतापत्तेरिति-भट्टस्थापव्याख्यानं प्रवृत्तिनिमित्तभेदात्। अतएव प्रमाव्यतिरेकमेव दर्शयिष्यति नतु घटाद् भिन्नः पट इति। पट एवेति। पटस्य प्रतियोगिपक्षे घट इत्येव वा स्यादिति। अपादानाख्यः पर्यनुयोगोऽस्मान् प्रति तदा स्यात् यद्यविद्यया विद्यमानो भावः सत्वं यस्य भेदस्य तमपि प्रत्यादिशामः निराकुर्मः [2]आपादकासिद्धेर्नैतदापादनं युक्तमित्याशयः। इच्छन्तोऽपि शब्दात् आपाद्यापादकयोर्भेदश्चास्मान् [3]प्रति इत्यपि बोध्यम्।

ननु यथा दूरस्थवनस्पत्योरभेदावगमो[4] मिथ्या, भेदस्तु सत्यस्तथेहापि भेदः पारमार्थिकोऽस्त्वित्याशङ्कामुपसंहारव्याजेन श्लोकेनैव परिहरति—तस्मात् [5]अभेदं नोल्लिखन्तीधीरिति। घटपटस्वरूपमनुल्लिख्य तदुभयभेदोल्लेखो न सम्भवति

---

१. भेदस्य प्रमाणाभ्युपलक्षणम्।
२. आपादकासिद्धेः।
३. प्रतीत्यभिबोध्यः।
४. दूरस्थ वनपत्योः।
५. अभेदोल्लिखंति धीः।

**अथ भेदः इत्येतावन्मात्रं पटस्य स्वरूपं घटादिति च तद्घटेन प्रतियोगिना अन्येनैव निरूप्यते; तदपि नोपपद्यते, निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात्।**

---

तदुभयभेदमनुल्लिख्यापि तदुभयस्वरूपोल्लेखः सम्भवीत्यभेदग्रह उपजीव्ये भेदग्रहस्येति अभेद एव पारमार्थिक इत्यर्थः। आद्ये = अभेदे सा = धीः प्रमाणम् अन्ते स्वस्य = भेदग्रहस्य अपेक्ष्य उपजीव्योऽभेदग्रहस्तद् विरोधात्। यद्यपि भेदाभेदशब्दाभ्यामुपस्थितौ विपरीत एव उपजीव्योपजीवकभावः स्वरूपस्य भेदत्वे सर्वधियो भेदोल्लेखस्य आवश्यकत्वमिति वैपरीत्यमेवेति ग्रन्थव्याख्यानं दूषणोद्धारश्च द्वयमपि मिश्रविद्यासागरयोरत्यज्ञानकृतम्।

निर्विकल्पकधर्मे प्रतियोगिज्ञानाभावे इदमस्माद्भिन्नमिति न भेदोल्लेखिज्ञानस्य सविकल्पकस्य सम्भव इत्युपजीव्यत्वेन प्रावल्यात् निर्विकल्पकं प्रमाणभेद ज्ञानम् उपजीवकभेदप्रतीतेः व्यत्वेन दुर्वलत्वादित्यर्थः। एकस्यापि भेदाभेदोल्लेखित्वाभावात् ज्ञानभेदे स्थिते[1] ज्ञानैकत्वोक्तिः ज्ञानत्वजातिविवक्षया। विशसति बाधत इति विशसः तस्य भावो वैशसं बाधनमिति भट्टव्याख्यानं तु युक्तमेव किन्तु ज्ञानत्वैकत्वोक्तिर्न समञ्जसेति।

श्रीपादास्तु अभेदं नोल्लिखन्ती = अभेदं नावभासयन्ती धीर्भेदोल्लेखनक्षमा न भवति। भेदविशेषणस्य घटस्य पटात्मनाभानं विना घटविशिष्टस्य भेदस्य पटस्वरूपत्वेन न भासनानुपपत्तिः नागृहीत [2]विशेषणान्यायादित्यर्थः। तथा च आद्ये घटपटाभेदे सा प्रत्यक्षबुद्धिः प्रमाणभेदस्योत्पत्यर्थंमपेक्षो यो घटपटाभेदः तस्य हिंसाप्रसङ्गात्। तस्मात् यथोपजीव्यविरोधे वह्निरनुष्ण इति बुद्धेरनुत्पन्नतया अनुष्णत्वे, न प्रामाण्यं तथा प्रत्यक्षस्यापीत्यर्थः। यद्वा घटविशिष्टभेदस्य[3] पटस्वरूपत्वेन ऐक्ये प्राप्ते तयोर्यदिभेद उच्यते तदा घटस्यैव स्वरूपापेक्षया स्फुटतरमापद्येत। तदा च घटो घटाद् भिन्न इति घटस्वरूपं न सिद्ध्येदित्यर्थः। इति

**अभेदमिति**। अत्र वदन्ति–तत्र नाद्यः। प्रमा अनुष्णत्वस्य ज्ञानं यदि नोत्पद्यते तदा अनुत्पत्तिलक्षणमेवाप्रामाण्यम् इह तु भेदाभेदयोर्ज्ञानमुत्पद्यत[4] इति वैषम्यम्। यदि चक्षुषा गृहीते एव वह्नौ त्वगिन्द्रिया[5] सम्बन्धे वाधास्फुर्तिदशायां कृतकत्वेन हेतुना ज्ञातायां बन्ह्यनुष्णत्वानुमितौ त्वचा अनुष्णत्वाभावनिश्चयात् तस्या अप्रामाण्य-

---

१. स्थितो।

२. पटानां भानं। नागृहीतविशेषणाबुद्धिर्विशेष्यमुपजायते इति न्यायस्वरूपम्।

३. घटविशिष्टे वा भेदस्य क पुस्तके।

४. उत्पाद्यते।

५. त्वगिन्द्रियादिसम्बन्धे इति क पुस्तके।

निश्चयः स तु युक्त एव एकस्योष्णानुष्णरूपताया विरोधात् नचेह तथा सम्भवति भेदाभेदयोर्विरोधाभावस्य गुणगुणि जातिव्यक्ति अवयवावयविस्थले प्रमाणतः सिद्धत्वात्। नचाभेदग्राहि न प्रमाणमिति शक्यं वक्तुं तथा सति भेदधियोऽनुत्पत्त्यापत्तेः। नच भेदधीरप्रमा तस्या एव अभेदसाधकतया प्रकृते अभिमतत्वात्।

नापि द्वितीयः। घटस्य पटाभेदिनोऽपि घटोघटाद्भिन्न इति प्रतीतेरसत्वात् किन्तु पटात्मनैव घटस्य पटरूपस्य भेदधीः। घटः[1] पटाद्भिन्न इति वस्तुगत्या घटाद्भिन्नो यः पटः ततोऽभिन्नः[2] पटः इति धीरिति यावत्। नच परेषां तथा बुद्धिरप्रमा द्रव्यत्वेन घटाभिन्नस्यैव पटस्य घटे भेदस्वीकारादिति। तस्मादेवं व्याख्येयं भेदोल्लेखनमित्यस्य भेदावगाहिज्ञानमित्यर्थः। तस्य क्षमा जननी तथाच [3]अभेदोल्लेखिनि अव्यावृत्तस्वरूपोल्लेखि निर्विकल्पकं यज्ज्ञानं भवति प्रतियोगितावच्छेदकधर्मितावच्छेदकांशे निष्प्रकारकं घट इति पट इत्याकारकं यज्ज्ञानं न भवतीति वा भेदोल्लेखिज्ञानस्य जनकं भवति। तथा चाद्ये भेदे निष्प्रकारकं यद् ज्ञानं तदेव प्रमा अन्त्ये भेदे या धीर्निर्विकल्पकजन्यभेदधीः सा न प्रमा स्वोपजीव्यनिर्विकल्पकस्य हिंसनप्रसङ्गादित्यर्थः।

यद् वा प्रतियोगिनि भेदे विशेषणतया धर्मिणः प्रतियोगिविशिष्टभेदाभेदे प्रतियोगिनोऽभेदमपि भावबुद्धिरवगाहमाना आद्येऽभेदे प्रमाणम् अस्मादयं भिन्न इत्याकारापि सा नान्ते भेदे प्रमा स्वापेक्षा भेदसापेक्षं यद् भेदाभावबोधकं श्रुतिवाक्यं तेनैव भेदस्य हिंसनात्। भेदस्य प्रतियोगिनोऽभावज्ञानेन श्रौतेन वाधनात्[4]। उत्तरज्ञानस्य पूर्वज्ञानापेक्षया वलवत्त्वात्। यदाह—जैमिनिः। पौर्वापर्ये पूर्वदौर्वल्यं प्रकृतिवत्।······तदुपपादयद्भिः भट्टाचार्यैरपि वाध्यवाधकभावे विनिगमक उक्तः। पूर्वं परमजातत्वादबाधित्वैव जायते पूर्वावाधेन चोत्पत्तिरुत्तरस्य न लभ्यत इति। नचोपजीव्यत्ववोधः भेदज्ञानस्यैव भ्रमप्रमासाधारणस्य तथात्वात्। ननु प्रमाया एव तथात्वं शुक्तिरजतभ्रमोत्तरमपि नेदं रजतमिति ज्ञानोत्पत्तेः। नच भेदस्य सत्त्वमपेक्षितं सत्यपि प्रतियोगिनि तदज्ञाने तदभावाज्ञानात्। भेदाभेदसमुच्चयोस्तु नत्वेकेनापरस्य बाधः भेदज्ञानकरणे दोषस्यापि सम्भवात्। अभेदः पारमार्थिकः।

अस्तु वा व्यवस्था, अभेदः[5] पारमार्थिको निर्दोषज्ञानकारणश्रुतिजन्यज्ञानस्य विषयः, भेदस्तु आविद्यिकः प्रत्यक्षादिसदोषकरणजज्ञानस्य ( विषयः ) यक्षानुरूपो

१. घटपटात्।
२. ततोभिन्नः पटः इति क ख पुस्तके।
३. अभेदोल्लेखिनि इति क पुस्तके।
४. बोधनात् इति क पुस्तके।
५. अभेदः

**नित्यं प्रतियोगिघटित एव तस्मिन् प्रमाणप्रसरात्। का चेयं वाचो युक्तिर्यदन्याऽऽकाङ्क्षं पटस्य स्वरूपमन्येन प्रतियोगिना निरूप्यमाणं ततो भेदो भवतीति। न हि यत् स्वरूपेणैव नीलं तत्पीतेन निरूप्यमाणं नीलं भवति।**

वलिरितिन्यायात्। नच सदोषत्वमसिद्धं क्वचित् सदोषस्यापि सदोषत्वादेव प्रकृतेऽपि तत्संदेहेपि दौर्बल्यं निरपवादमिति दिक्।

अस्तु तर्हि भेदस्य प्रतियोग्युपलक्षणमिति शङ्कते—एतावन्मात्रं नतु घटविशिष्टभेद इत्यर्थः। घटस्याविशेषणत्वे घटप्रतीतपूर्वकप्रतीतिनियमः कथमित्याशङ्क्याह—**घटादिति**। अन्येनेत्यस्य पटस्वरूपादिति शेषः। विशेषणस्येव उपलक्षणस्यापि प्रतीयमानस्यैव व्यावर्तकत्वात् तत्प्रतीतिपूर्वकत्वनियम इति भावः। **निष्प्रतियोगिकस्येति**। यथा देवदत्तगृह[२] काकशून्यमपि प्रतीयते तथा घटशून्यो घटभेदः प्रतीयेत नत्वेवमित्याह—**नित्यं प्रतियोगिघटित इति**। नहि पर इति प्रतीतिरेव घटभेदप्रतीतिः तथा सति घटेन निरूप्यते इत्येव न स्यात्। यदि च भेदत्वाकाराप्रतीतिः पटस्वरूपेणैव निर्वहेत् तदा पटाकारा प्रतीतिः कुटीस्वरूपेणापि निर्वहेदिति। यदि च भेदत्त्वाख्योधर्मः पटवृत्तिरित्युच्यते तदा स्वरूपभेद इति पक्षः त्यक्तः स्यादिति भावः।

ननु न भेदत्वमतिरिक्तं किन्तु प्रतियोगिना धर्मसमानविभक्तिकपदोपस्थापितेन निरूप्यमाणमेव भेदत्वमपि चेन्न प्रत्यक्षज्ञानकाले पदोपस्थापितत्वाभावात् योग्यता तु अवच्छेदकापरिचयात् तु[३] अग्रहा, स्याच्च भेदत्वं ज्ञानगर्भतया चाक्षुषम्।

विद्यासागरस्तु—भेदः प्रतियोगिप्रतीतिमन्तरेणापि प्रतीयते[४] तदुपलक्षितत्वात् गेहादिवदिति सामान्यतो दृष्टानुमानं प्रत्यक्षविरुद्धतया दूषयति—**नित्यं प्रतियोगिघटित इति**। एवमुपलक्षणत्वे भेदप्रतीतेः प्रतियोगिधीपूर्वत्वनियमो न स्यात्। घटसंयोगे तु न घट उपलक्षणं किन्तु विशेषणमेव। न चैवं संयोगस्य घटाभेदापत्तिरिष्टत्वात्। गुणगुणिनोर्भेदाभेदयोः परैरङ्गीकारात् अस्माकमपि तद्भेदाभावे अपसिद्धान्ताभावात्। भेदप्रत्ययस्तु अत्रैव आधिक्यभेदावलम्बीत्येव स्वीकार्यत्वादिति दिक्।

विशेषणोपलक्षणापक्षयोः साधारणं दोषमाह—**काचेयमिति**। वाचोयुक्तिः वाक्यं का कुत्सिताच्चाह केत्यर्थः। व्याघातमेव दृष्टान्तेन व्यनक्ति—**न हीति**।

१. तत्प्रतिपूर्वकत्वाद्।

२. गृहे।

३. परिचयात्वग्रहा न स्यात्।

४. प्रतीयते इति पदरहितः पाठः।

**यद्यपि चोक्तम्—'प्रतियोगिना घटेन निरूप्यमाणं पटस्यस्वरूपं भेदः' इति। तत्रापि पटं प्रति प्रतियोगित्वं घटस्य किं स्वरूपं किं वा धर्मः कश्चित् ?**

**यदि प्रथमः, तदा पटं प्रति प्रतियोगित्वमित्येतावानेवार्थो घटस्य स्वरूपं भवद् आत्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतमेव पर्यवस्यति ?**

---

यदन्यानपेक्षं[१] यन्नीलं स्वभावतो यन्नीलं तत् पीतापेक्षया हि यस्मात् नीलं न भवति। अयमर्थः पीतस्य स्वरूपत्वे प्रतियोग्यपेक्षाया तथात्वे प्रतितिरनुपपन्ना। नहि नीलं नीलत्वप्रतीतौ पीतज्ञानमपेक्षते यथा तद्वत्। अथ तादात्म्येनाप्रतीतस्य प्रतीयमानत्वं स्वरूपभेदः तथाच [२]घटत्वेनाप्रतीयमानत्वस्य प्रतीतिः घटज्ञानापेक्षेति चेत्तर्हि तादृशधर्मत्वं न चाक्षुषं ज्ञानघटितत्वात्। नापि मानसं पटस्य अमानसत्वात्। अभावस्य मनसा ग्रहणाभावाच्च नोपनयसम्भव इति न स्वरूपभेदः प्रत्यक्षः स्यात्। तत् किं नीलपीतयोर्भावः अविलक्षण एव तथा शीतोष्णयोः सुखदुःखयोश्चेति चेत् वैधर्म्यस्य स्वीकारात् आविद्यिकस्य नीलत्वपीतत्वादेर्विरुद्धत्वेनैव प्रतीतेः आजानिकत्वात् वस्तु तावता तदुभयं भेदात्मकं भवति परन्तु विरुद्धात्मकमेव। न च विरोधोऽपि शक्यनिर्वचन इति विशेषखण्डने वक्ष्यामः। स्वप्ने तादृशानामेवाविरोधिप्रतीतेः। किं विरोधाविरोधयोः प्रामाणिकमिति निश्चेतुमशक्यत्वात्। स्वमपि खादति स्वशिरोऽपि छिनत्ति[३] इति यत् किञ्चित्[४]।

घटत्वेनाप्रतीयमानत्वदशायां निर्विकल्पकाले घटोऽपि घटभिन्नः स्यात् भगवतस्तादात्म्येनप्रतीतिरस्तीति चेन्न। प्रमाणाभावात्। वस्तुमात्रं तत्प्रतीतिविषयमितिचेत् सिद्धवस्तुत्वे तयात्वमित्यन्योन्याश्रयापत्तेः।

अत्र मिश्राः—पटः स्वरूपतः पटः प्रतियोगिना निरूप्यमाणे भेद इति न दोषः, नीलमपि स्वरूपतो नीलं पीतेन निरूप्यमाणं भेद एव, भेदत्वेन निरूप्यमाणेऽपि तत्र घटत्वमेव प्रकारयोस्तु भेद एव। इति चेन्न। ४ स्वरूपाभेदे निरूपकभेदः एव न स्यात्। किञ्च स्वरूपत्वे भेदस्य प्रतियोगिनिरूप्यत्वं[५] न स्यात् नीलवत् प्रतियोगिनिरूप्यत्वे वा वस्तुस्वरूपं न स्यादित्यपेक्षालक्षणविरुद्धधर्मस्यैकत्वसम्भवात्। धर्मिस्वरूपे प्रतियोगितादात्म्यमुक्त्वा प्रतियोगिस्वरूपे धर्मितादात्म्यमुपपादयितुमाह—**यदपीति**।

प्रतियोगित्वं घटपटात्मकभेदं प्रति यत् तत् किं घटस्य स्वरूपमित्यर्थः। पटं प्रति प्रतियोगित्वमित्यत्र पटात्मको भेदः प्रतियोगित्वस्य विशेषणं चेत् तदा पटविशिष्टप्रतियोगित्वस्य पटाभेदापत्तिः पटस्य प्राग-

---

१. यस्मात् नीलं भवति इति क पुस्तके।
२. घटत्वेनाप्रतीयमानत्वस्य इति ख पुस्तके।
३. छिदंति। ४. यत्किञ्च। ५. निरूपत्वं।

**तत्रापि यदि प्रतियोगित्वमात्रं घटस्याऽऽत्मा, 'पटं प्रति' इति च पटापेक्षित्वमन्यदेव। तदप्यनुपपन्नम्, अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाविषयत्वात्। 'पटं प्रति' इत्यत्रापि च स्वरूपतदन्यविकल्पे दोष एव।**

**नापि द्वितीयः, योऽसौ धर्मः पटं प्रति प्रतियोगित्वं तस्याऽऽत्मनि पटोऽपि प्रविशतीति तेन सह पटस्याद्वैतं स्यात्। यदा च पटो घटस्य धर्मतामापन्नस्तदा घटोऽपि पटस्य धर्मतामनेनैव न्यायेन गच्छेत्। न हि पटप्रतियोगित्वस्य घटेन प्रतियोगिना निरूप्यमाणत्वे घटस्याऽन्या गतिरस्तीति परस्परमाश्रितत्वमाश्रयत्वं च**

---

वदुपलक्षणपक्षं परिगृह्णाति—**तत्रापीति**। **अनुपपन्नमिति**। धर्म्यात्मक[१]भेदप्रतीतिं विना प्रतियोगित्वस्य कदाचिदप्यप्रतीतेर्धर्मी न तत्रोपलक्षणमित्यर्थः। अकिंचिद् न पेक्षस्य स्वतन्त्रस्येत्यर्थः। पटं प्रति प्रतियोगित्वं घटस्येत्यनया उक्त्या घटस्य पटाभेदं प्रतिपाद्य तदेकदेशेनापि तद्भेदसिद्धिरित्याह—**पटं प्रति इत्यत्रापि** चेति। पटं प्रतीत्ययमंशो घटस्य स्वरूपमुतधर्मः आद्ये अद्वैत[२]पर्यवसानम्। धर्मिपक्षेऽपि धर्मिधर्मयोरपि स्वभावसम्बन्धस्य वक्ष्यमाणत्वात् अभेदो दुर्वार इति।

नापि द्वितीय इति—किं वा धर्म इति पक्षे इत्यर्थः **तेन सहेति**। प्रतियोगित्वेन सह पटस्यैक्यं स्यात्। प्रतियोगित्वधर्मपटयोरैक्येऽपि घटेन सहाभेदो नास्तीति कथमद्वैते पर्यवसानमित्यत आह—**यदा चेति**। **अनेनैव न्यायेनेति**। निष्प्रतियोगिकप्रतियोगित्वधर्मपटयोरैक्येऽपि घटेन सहाभेदो नास्तीति कथमद्वैतपर्यवासानमित्यत आह—**यदा चेति**। **अनेन न्यायेनेति**। निष्प्रतियोगिकप्रतियोगित्वस्य प्रमाणाविषयत्वेन उक्तेन न्यायेनेत्यर्थः। शुक्लस्य पटधर्मत्वेऽपि पटस्य शुक्लधर्मत्वाभाववत् पटस्य घटधर्मत्वेऽपि[३] घटस्य धर्मत्वं विना नान्या गतिरस्तीत्यर्थः। वाच्यत्वप्रमेयत्वयोरिव पटघटयोरपि किं न स्यादित्यत आह—न चेति। प्रमाणाभावात् प्रमाणविरोधाच्चेति भावः। प्रमेयत्ववाच्यत्वयोरपि प्रमाव्यक्तिवाच्यत्वव्यक्त्योरस्त्येव भेद इति निगर्वः। अभ्युपेत्य [४]धर्मधर्मिभावं दोष उक्तः वस्तुनो धर्मधर्मिभाव एव नास्ति इत्याह—**किञ्चेति**। अतिप्रसङ्गः सर्वं सर्वस्य धर्मः स्याद् असम्बन्धत्वाविशेषादित्यर्थः। अथास्ति सम्बन्धः तदा सोऽपि सम्बन्धो नासम्बन्धः सम्बन्धो भवतीति सम्बन्धानन्त्यम्। अथ सम्बन्धान्तरनिरपेक्षः कश्चित्

---

१. धर्म्यात्मकमभेदप्रतीतिं।

२. द्वैतपर्यवसानम् इति पुस्तके।

३. घटधर्मत्वेऽपीत्यनन्तरं ख पुस्तके न घटः पटवृत्तिः स्यादित्याशङ्क्याह—**न हीति**। घटविशिष्टस्य प्रतियोगित्वस्य पटधर्मत्वे घटस्य पटधर्मत्वम् इति अधिकः।

४. धर्मिधर्मिभावः।

**स्यात्। न च कस्यचित् प्रमाणस्य विषयो घटारूढः पटस्तत्पटारूढश्च स एव घट इति।**

**किञ्च धर्मस्य तस्य धर्मिणा सममसंबन्धेऽतिप्रसङ्गः, सम्बन्धानन्त्येऽनवस्था, प्रथमतोऽन्ततो गत्वा वा स्वभावसम्बन्धाभ्युपगमे सम्बन्ध्यन्तरस्यापि तत्स्वभाव-प्रवेशादभेद एव पर्यवसानं स्यादिति। एवमन्यस्मिन्नपि धर्मविकल्प इति। तस्मात् स्वरूपभेदे प्रमाणं भवत् प्रत्यक्षमद्वैत एव प्रमाणं भवति।**

**ननु घटादिकमेव यदाऽन्यानपेक्षं वीक्ष्यते, तदा घटादिकमित्येव प्रतीयते। यदा पुनः घटादिना निरूप्यते, तदा ततो भेद इति प्रतीयते। मैवम् घटादिकमित्ये वंभूतप्रतीतेस्तावद्भेदप्रतीतिर्विलक्षणा, सा च न घटादिमात्रेण स्वविषयेण अन्य-थाकारा भवितुमर्हति।**

**न च पटादिकमधिकं तदा प्रकाशत इति विशेषः स्यात्, घटपटविषयप्रतीति-तोऽपि वैलक्षण्यात्। न हि 'घटः पटश्च' इति 'घटात् पटो भिन्नः' इति प्रतीत्योरेका-र्थकत्वं कश्चित् प्रत्येति। तत् कस्य हेतोः ? पञ्चम्या प्रथमया च वैकल्पिकं निर्देशम-**

---

सम्बन्धः स्वीकार्यस्तत्राह—**प्रथमत इति**। तथा गुणस्य समवायः समवायस्य तु स्वयमेवेति भवति स्वभावसम्बन्धोपगमः सम्बन्ध्यभेदोपगमाः। **सम्बन्ध्यन्तर-स्यापीति**। सम्बन्ध्यन्तरस्यापि गुणादेः सम्बन्धविशेषणतया सम्बन्ध्यन्तरस्वभावात् न प्रवेशाद् अद्वैतापत्तिरित्यर्थः। नन्वेवं घटत्वादेरपिधर्मता न स्यादित्याशङ्कामश्रत्य-दूषणेनैव परिहरति—**एवमिति**।

अद्वैतवादिनां नेदमनिष्टमिति भावः। यत्स्वरूपस्य सापेक्षत्वनिरपेक्षत्वलक्षणो विरुद्धधर्माध्यासः स न प्रतीत्योरेव तथात्वं न स्वरूपस्येत्याशङ्कते—**ननु घटादिकमेवेति**।

पटादिमात्रेण = भेदनिरपेक्षेणेत्यर्थः। विशेषो विषयाधिक्यमेव वैलक्षण्य-मित्यर्थः। घटपटौ इति प्रतीतौ द्वयोः प्राधान्यं घटभिन्नः पट इत्यत्र पटस्यैवेति विशेषं निराकर्तुमाह—**घटः पटश्चेति**। पटः समुच्चित इत्यत्र घटस्यापि समुच्चयनिरूपकत्वेन विशेषणत्वमिति भावः। अर्थो विषयः नानुभवमात्रेण प्रतिपन्नो बोधयितुं शक्यते। वक्ष्यति चेत् मया प्रतीत्योरेकविषयत्वमनुभूयत इति तदा किं वाच्यम् इत्याशङ्क्य एकार्थत्वानुभवो नास्ति इति प्रतिज्ञाय तत्कस्य हेतो रिति हेतुं पृष्ट्वा शब्दप्रयोगं प्रमाणयति। **पञ्चम्या प्रथमयाचेति**। प्रतीतिकलहस्य पञ्चम्या प्रथमया घटादिप्रतीतितो भेदप्रतीतेर्वैलक्षण्यानुभवविप्रतिपत्तेर्निरासात्। विकल्पसम्बन्धिवैकल्पिकं विकल्पश्चेह व्यवस्थितः प्रतियोगित्वविवक्षायां पञ्चम्येव

---

१. स्व एका।

**सहमानयैव प्रतीतिकलहनिरासात्। न हि घटः पटश्चेति प्रत्येतव्ये कश्चिद् घटात् पटो भिन्न इति प्रत्येति। तस्माद् घटस्य न स्वरूपनिरूपणे पटप्रतीत्यपेक्षा।**

**न च यत्प्रतीतिर्यत्प्रतीतेः कारणं स्यात्, तत्र तस्याः कारणभूतायाः प्रतीतेर्योऽर्थः 'तस्माद् अयम्' इति कृत्वा कार्यभूतायाः प्रतीतेरर्थः प्रतीयते। मा भून्निर्विकल्पकार्थादेवं सविकल्पकार्थस्थ प्रतीतिः। मा च सादृश्यादेरेवं स्मर्यमाणादेः स्यात्। 'पटो घटाद्भिन्नः' इत्याद्याकारेण घटादेर्भेद एव भेदावधिभूतघटादिसंघटितः स्फुटं सर्वलोकसाक्षिकः प्रतीयमानो नैकप्रतीतेरन्यप्रतीत्यपेक्षामात्रेण समर्थयितुं शक्योऽतिप्रसङ्गादिति।**

---

प्रयोज्या न प्रथमा धर्मित्वविवक्षायां प्रथमैव न पञ्चमी। तथाच यदि प्रतीत्योरेकविषयत्वं स्यात्तदा निर्दोषयोर्विकल्पो न स्यात् ज्ञानानुसारित्वाद् व्यवहारस्येति। व्यवहारवैलक्षण्यञ्च वृद्धव्यवहारे प्रयोक्तृप्रतिपत्त्रोर्नियतप्रयोगप्रतिपत्तिदर्शनात्रापलपितुं शक्यमतिप्रसङ्गादित्याह **नहि घटः पटश्चेति**। प्रत्येति इति इति विद्यासागरः। असत मानत्वमेव दर्शयति—**नहीति**। घटः पटश्चेति प्रत्येतव्येऽर्थे घटात् पटश्चेति प्रयोगं न कश्चित् प्रत्येतीत्यर्थः इति तस्य भावं भट्टो व्याचष्टे। वस्तुतस्तु प्रतीत्योस्तुल्यविषयत्वे प्रतीतिविषयबोधकशब्दयोरपि पञ्चमीप्रथमयोः विकल्पेन प्रयोगः स्यात् न व्यवस्थया। प्रयोग इत्युक्ते मास्तुप्रयोग असाधुत्वात् प्रत्ययस्तु भावप्रतीत्याशङ्क्यते—**नहीति**। घटाद्भिन्नः पटः इति प्रतीतेः कारणस्य पटनिरूपितभेदस्य प्रागप्रतीतौ तद्विशिष्टमानाभावात्। भेदज्ञाने च पूर्वं प्रतियोगिज्ञानापेक्षा[1] अतो घटपटप्रत्ययकारणतः कथमन्यादृशं कार्यं स्यादित्यर्थः। तस्माद् यथा घटनिरूपणं न प्रतियोगिनः पटस्य निरूपणमपेक्षते तथा भेदस्यापि प्रतियोगिनिरपेक्षैव प्रतीतिरेष्टव्या स्वरूपत्वाविशेषादित्युपसंहरति—**तस्माद् घटस्य न स्वरूपनिरूपणे इति**—घटस्वरूपं भेद इति पक्षमालम्व्य इदं इति पक्षे तु घटपदपटपदयो विपरीतो निर्देशो बोध्यः। ननु विषयवैलक्षण्याभावेऽपि साक्षात्कारत्वानुमितित्वादिवत् प्रतीत्योर्वैलक्षण्यमस्त्वित्याशङ्क्य परिहरति—**नचेति**।

यस्त्वर्थे। कार्यभूतायाः प्रमितेः अर्थस्तस्मादयमिति कृत्वा न प्रतीयते इत्यन्वयः। तत्र तयोर्मध्ये सादृश्यापदेरित्यादि शब्देन पूर्वानुभवस्य संस्कारद्वारा प्रत्यभिज्ञाकारणस्य लिङ्गज्ञानस्य लिङ्गिज्ञानकारणस्य ग्रहणम्। एतेन प्रतीत्योर्वैलक्षण्यं प्रत्येतव्ये उपचरितं भवेत् ननु द्वयोर्भेद इत्यद्वैतमेव पर्यवस्यति। इदं च प्रतीत्योः कार्यकारणभावमभ्युपेत्योक्तम्। वस्तुतो घट प्रतीतेः पदप्रतीति कारणमेव न व्यभिचारात्, भेदत्वेन तज्ज्ञाने यदि कारणतोच्यते तदा स्वीकार्याऽतिरिक्तो भेद इति स्वरूपभेदपक्षोऽशुद्ध एवेत्युपसंहरति—**अतिप्रसङ्गादिति**।

---

१. ज्ञानोपेक्षा क पुस्तके।

**(२) अत एवान्योऽन्याभावं भेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम् । अन्योन्याभावोऽपि यस्माद् भेद एष्टव्यस्तमात्मन्येवान्तर्भावयेदुक्त-युक्तिभिः ।**

माभूदित्यादिदोषादित्यर्थः । अन्योन्याभावस्य धर्मस्वरूपातिरिक्तत्वाभ्युपगमात् स्वरूपभेदोक्तदोषातिदेशो न युक्त इत्याशङ्क्य स्वरूपभेदोक्तसर्वदोषाभावेऽपि[१]प्रति-योग्युपलक्षितो भेदः तद्विशिष्टो वा । नाद्यः । प्रतियोग्यनपेक्षस्य तस्य प्रमाण गोचरत्वात् । द्वितीये विश्वस्यैव अन्योन्याभावप्रतियोगित्वेन विश्वप्रतियोगिकान्यो-न्याभावस्य घटधर्मत्वे जगतोऽपि घटधर्मत्वापत्तौ धर्मधर्मिणोरभेदस्य स्वरूपप्रस्तावे[२] कथितत्वात् विश्वाद्वैतं स्यादित्यर्थः । उक्तयुक्तिभिरिति बहुवचनार्थस्तु यस्माद् भेद इत्यस्य यत् प्रतियोगिकः सोऽन्योन्याभावः तत् प्रतियोगिनमन्योन्याभावेऽन्त-र्भावयति विशेषणविशेष्योरभेदात् तदा चान्योन्याभावस्याभिकरणस्य च स्वरूपत्वे घटपटयोरैक्यप्रसङ्गो धर्मत्वे चान्योन्यधर्मत्वप्रसङ्गः ।

किञ्च घटे पटत्वादीनां योऽन्योन्याभावः स चेत् पटत्वादिविशिष्टोऽस्ति तदा घटः पटाद्यात्मकोऽपीति विश्वाभिन्नोऽपि स्यात् । एवं पटोपीति विश्वाभिन्नमेव स्यात् । यदि च प्रतियोगी न विशेषणं किन्तु उपलक्षणं तदा तस्यान्योन्याभावे वृत्तिरपि स्वीकार्या काकस्येव गृहे । सा च यदि तादात्म्यं तदा प्राच्य एव दोषः । आधाराधेयभावश्चेदनुभवविरोधः । नहि पटत्वान्योन्याभावः पट इति कस्यापि प्रतीतिः प्रतियोगित्वञ्चेत् । किं तत् प्रतियोग्येवेति चेत्तर्हि घटत्वं घटान्योन्याभाव-स्यापि प्रतियोगिस्यात् नहि तं प्रति पटत्वं न स्वरूपं पटत्वस्य अन्योन्याभाव इति जातिविशिष्टधीस्तान् जनकत्वं तत् । न च घटान्योन्याभावविशिष्टधी जन-कत्वमस्ति पटत्वस्येतिचेन्न । घटान्योन्याभावः पटत्वान्योन्याभाव भिन्न इति भ्रान्तिमादायातिप्रसङ्गात् । प्रमाघटितलक्षणमिति चेत् । सति सम्बन्धे विशिष्टधीः प्रमा तयाच सम्बन्धसत्त्वमित्यन्योन्याश्रयापत्तेः जनकत्वं फलो-पधानं चेत्तदा तदभावदशायामन्योन्याभावो निष्प्रतियोगिकः स्यात् । स्वरूपयोग्यता च अवच्छेदकपरिचेया न च तदस्ति । पटत्वमिति चेत्तर्हि तदेव प्रतियोगित्वमस्तु । ओमिति चेन्न । प्रतियोगितायाः सम्बन्धात्मकत्वात् । न च तदपि सम्बन्ध इति वाच्यम् । घटपटयोः संयोग इतिवत् पटत्वान्योन्याभावयोः पटत्वमित्यप्रतीतेः । किञ्चैवं सम्बन्धत्वं केवलान्वयि स्यात् । तदा सम्बन्धव्यवहारो[३] लौकिको मिथ्यैव स्यात् । अस्तु तर्हि प्रतियोगित्वं पदार्थान्तरमितिचेत् तथापि तत् कुत्र कस्येत्यत्र निया-

१. सर्वदोषोभावेऽपि ।

२. स्वरूपभेद प्रस्तावे इति ख पुस्तके ।

३. व्यवहारौ ।

**किञ्च घटपटयोस्तद्वदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यम्। तद्यदि सर्वथा नेष्यते, तदा तद्विशिष्टस्तदुपलक्षितो वाऽन्योन्याभावोऽपि न प्रमाणेन प्रत्येतुं शक्यः। न हि शशविषाणविशिष्टस्तदुपलक्षितो वा कश्चित् प्रामाणिको भवितुमर्हति। तत् कस्य हेतोः? तस्मिँस्तद्विशिष्टरूपेऽर्थे तादृशि चोपलक्षणव्यवच्छिद्यमानात्मनि प्रमाणं निविशमानं विशेषणमिति तदीयं तदुपलक्षणमपि वा नानुल्लिखद्भवितुं प्रभवति। तस्मिँश्च अत्यन्तमसत्येवालम्बने न तत्प्रामाण्यं शक्यलमर्थनम्।**

---

मकाभावः प्रतीतिमात्रं न तथा प्रमा तु अद्यापि न शक्यनिर्वचना बाधाबाधयोः तात्कालिकयोरतिप्रसंञ्जकत्वात्। सार्वकालिकसर्वपुरुषीयबाधाभावस्य सन्दिग्धत्वादेवत्युक्तत्वात्। एतेन प्रतियोगी न विशेषणं न चोपलक्षणम् अपि तु अवच्छेदकं कारणतायां दण्डत्ववदित्यपि परास्तम्। दण्डत्वस्य कारणतानतिरिक्तत्ववत्[१] प्रतियोगिनोऽन्योन्याभावावृत्तेरन्योन्याभावावच्छेदकत्वाभावात्। अन्योन्याभावाधिकरणवृत्तितयाऽवच्छेदकं तुं अधिकरणतावच्छेदकेऽपीति दिक्। घटपटयोरिवान्योन्याभाव इतिभ्रमापनोदाय।

**तद्वदन्योरिति**—घटपटयोरिव कु[२]ड्यकुसूलयोरन्योन्याभावः तस्य प्रतियोगि तादात्म्यं तयोरन्योन्याभाव इष्यते तयोरभेद इत्यर्थः। तद्वदन्ययोरित्यस्य घटवत् पटवदन्ययोश्चेत्यर्थः। तेन घटः पटो नेति घटवान् न घटवद् भिन्नः पटवान् न पटवदन्यः घटवदन्यो न घटवान् पटवदन्यो न पटवान् इत्येवं प्रतीयमानयोर्घटवत् पटवदन्योन्याभावयोरित्यर्थः। घटपटयोर्भेदेऽपि घटवत्पटवतोर्भेदो न सिध्यतीत्याशयेन तद्वदन्ययोरापादनम्। अन्योन्याभावस्य संसर्गाभाववद् एकमात्रप्रतियोगिकत्वे अन्योन्याभावव्यवहारो न स्यादिन्यन्योन्याभाव समाख्योपलब्धम् उभयप्रतियोगिकत्वम् तच्च घटपटौ नस्तः इति प्रतीयमानेप्यस्तीति। अन्योन्यपदं तादात्म्यापन्नान्योन्यपरिचायकं[३] तथा च समाख्या अन्योन्यतादात्म्याप्रतियोगिसत्वे अनुपपन्ना तादात्म्येऽपि अन्योन्यपदार्थस्य विशेषणतया प्रवेशात्। एवञ्च तादात्म्यापन्नम् उभयं वा प्रतियोगि उभयोस्तादात्म्यं वा प्रतियोगीत्यत्र विनिगमकाभावः। समाख्याया [४]उभयथाप्युपपत्तेरितिभावः। तादात्म्यपक्षदूषणेनैव इतरपक्षस्यापि दुष्टत्वात् न तद्दूषणं पृथक् कृतमित्याशयवान् आह **तद्यदि नेष्यते** इत्यादिना **शक्यसमर्थनाभित्यन्तेन**।

---

१. अनतिरिक्तवत् क पुस्तके।

२. कुडयकुशूलयोऽन्योन्याभाव इति क ख पुस्तके।

३. परिचाच्यम।

४. उभयान्यथा।

**न च वाच्यं पटप्रतियोगिको घटमाश्रितोऽसौ अभावोऽभ्युपगम्यमानो नात्यन्तासत्प्रतियोगिकतादोषमावक्ष्यतीति। तथा सति संसर्गाभावादन्योन्याभावस्य को विशेषः स्यात् ? न हि यथा घटाभावः पटसंसर्गेति घटसंसर्गाभावं पटे समर्थयसे, तथा घटाभावः पटात्मक इति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि। तस्मात्ता-**

तथा च तादात्म्यं चेत् प्रमितं [1]प्रसिद्धोविश्वाद्वैतसिद्धान्तः। ननु तादात्म्यमारोपितमेव प्रतियोगि अस्तु विश्वमिव भवतामित्याशङ्क्य—यद्वा। यथा शशविषाणं गोविषाणं नेति, गोविषाणवत् शशविषाणं नेति प्रतियोगिनोऽप्रमाणकत्वेऽन्योन्याभावः प्रमीयते तद्वदित्याशङ्क्याह—**नहीति**। तथा चास्माकं विश्वमिव विश्वाभावः आविद्यिकः, एवं शशविषाणान्योन्याभावोऽपि मिथ्या। अन्योन्याभावमात्रस्यैव मिथ्यात्वे, सिद्धं प्रमाणाभावेन अद्वैतम्[2]। भवता प्रमितस्यैव प्रतियोगित्वाङ्गीकारात्। तादात्म्यप्रमाणात् अद्वैतसिद्धिः भेदस्तु उपजीव्यविरोधादाविद्यिक इति उभयतः पाशारज्जुरितिभावः। [3]आवक्ष्यति=वह् प्रापणे आप्स्यतीत्यर्थः। अन्योन्याभावसमाख्या तु उभयस्य निरूपकत्वेनेति भावः। को विशेषः स्यात् संसर्गाभावस्यापि प्रतियोग्यधिकरणाभ्यां निरूप्यमाणत्वादिति भावः। अन्योन्याभावसंसर्गाभावयोः प्रतियोगिकृतभेदाभावेऽपि धर्मितादात्म्यधर्मिसंसर्गित्वाभ्यां विशेषोऽस्त्विति आशङ्क्य अन्योन्याभावस्य धर्मितादात्म्ये नैयायिकानामपसिद्धान्तः भावान्तरमभावो हि कदाचित्तु व्यपेक्षया इति भेदाभेदवादिभट्टानामेव नहि स्वीकरिष्यति अपसिद्धान्तायापातादिति शेषः।

प्रथमपक्षमेव परिविशिनष्टि—**तस्मादिति**। तत्र च दूषणमुक्तमिति। स्मारयति—**तथासतिचेति**। भट्टस्तु यस्मादुक्तं पक्षद्वयं दुष्टं तस्मात् पटात्मना प्राप्नुवन् घटोऽन्योन्याभावस्य प्रतियोगी पटसंसर्गितया प्राप्नुवत् संसर्गाभावस्येति तादात्म्य संसर्गं च प्रतियोगिकोटौ विशेषणत्वेन निवेश्य तयोर्वैलक्षण्यमिति पक्षान्तरमाशङ्क्य परिहरति। तथा सत्यपीति[4]। प्रतियोगिविशेषणस्य तादात्म्यस्य अत्यन्तासत्वात् तद्दोषतादवस्थ्यम्। यद्वाऽत्मतया प्राप्नुवत्त्वस्व घटेऽभवादिति व्याख्यातवान्। तत्तु तादात्म्यं संसर्गश्चेत्यनेन विरुद्धं प्राप्नुवत्वस्य तादात्म्यस्याधिकस्य प्रवेशादारोपिततादात्म्यवत् घटत्वमित्येव ब्रूयात्। तस्मात् पटाभिन्नघटप्रतियोगिकत्वे पटसंसर्गिकघटत्वे वा तात्पर्यम्। नचारोपिततादात्म्यो घटः पटसंसर्गी वा अन्योन्याभावात्यन्ताभाव प्रतियोगी क्वाप्यस्ति।

एतेन तादात्म्यारोपजन्यप्रतीतिविषयत्वं तादात्म्यावच्छिन्नप्रतियोगिकाभावात्वम् अन्योन्याभावत्वमित्यपास्तम्।[5] आद्ये अचाक्षुषतापत्तेः। अन्त्ये संसर्गाभावे-

१. चेत् प्रसिद्धः क पुस्तके। २. द्वैतम् क ख पुस्तले।

३. आवाहृति क पुस्तके।

४. तथा सतीतियुक्तः पाठः तथैव पूर्वंधृतत्वात्।

५. अन्योन्याभावम् इति क पुस्तके।

**दात्म्यं संसर्गं च प्रतियोगिकोटावन्तर्भाव्य अन्योन्याभावसंसर्गाभावयोर्वैलक्षण्यमभ्युपेयम् । तथा सति चात्यन्तासत्प्रतियोगिता दुर्वारा ।**

**न च वाच्यं 'घटे पटत्वं नास्ति, पटे च घटत्वं नास्ती' त्येतावन्मात्रपर्यवसितैव अन्योन्याभावस्य व्यवस्था मन्तव्येति, यतस्तथा सति घटत्वे पटत्वे च न कश्चित्तादृशो धर्मोऽभ्युपगम्यते, योऽन्योन्यस्मिन्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं पटे घटत्वं च निषेधत् प्रमाणं घटत्वपटत्वशून्यं द्वयमप्यावेदयतीति वैधर्म्यस्य स्वरूपभेदस्य चासंभवेन किंप्रतियोगिनं किं वाऽऽलम्बनं विधाय घटपटान्योन्याभावः प्रमाणपथमवतरेदिति ।**

---

ऽतिव्याप्तेः । संयोगित्वस्य संयोग्यात्मकप्रतियोगिवृत्तेः तत्प्रतियोगितावच्छेदकत्वात् । किञ्च घटात्यन्ताभावेऽप्यतिव्याप्तिः घटत्वस्यापि घटाभावत्वादिति दिक् ।

अथ धर्मिणो धर्म्यन्तरे निषेधः संसर्गाभावः अन्योन्यस्मिन् अन्योन्यधर्मनिषेधोऽन्योन्याभाव इति नासत् प्रतियोगिकता अन्योन्याभावसमाख्यायां च अन्योन्यपदमन्योन्यधर्मपरं तथा वैधर्म्यादस्य को विशेषः । न च तद्भावरूपमिदन्तु निषेधात्मकमिति वाच्यम् । घटत्वाभावस्य पटवैधर्म्यत्वे वाधकाभावादितिचेदुभयम् अन्योन्याभावं व्यवहारहेतुः प्रत्येकं तु वैधर्म्यमित्याशयात् । घटत्वादौ घटत्वं तावन्नेष्यते आत्माश्रयात् घटधर्मिलोपापत्तेः एवं सत्याह—**यतः इति** । तथा सति तयोस्तादात्म्यापत्तौ सत्यां घटपटत्वनिषेधाप्रामाण्यं घटपटत्वशून्यं द्वयमपि=घटं पटं चेत्यन्वयः । तथा च घटपटयोर्धर्मिणोरप्यभावः स्यादितिभावः । अस्त्येव सामान्यत्ववाच्यत्वादिकं तयोरपीत्याशङ्क्याह—**यो निषेद्धुं शक्यते इति** । घटत्वपटत्वयोरैक्येऽपि घटपटयोर्व्यावृत्तिरस्त्विति इत्याशङ्क्याह घटपटत्वशून्यमेव द्वयोरन्योभावः पटत्वघटत्वयोरैक्येऽधर्मिणि परस्परपरिहारेण घटत्वपटत्वाभावो नास्ति तथा च द्वयत्वेनाभिमतं यत् पटघटाद्यात्मकं तदप्यन्योन्याभावात्मकनानाप्रतियोगिकात्यन्ताभावद्वयाभावेऽभिन्नमेव स्यात् ननुधर्मिद्वय शून्यत्वेऽपि धर्मिद्वयं कथमपलप्येत अन्योन्याभावोऽतिरिक्त एवास्तु प्रमाणगोचरत्वादित्याशङ्क्याह—**इतीति** । वैधर्म्यमन्योन्याभावस्य व्यापकं तदभावोऽपि किं प्रतियोगिकः किं धर्मिकः प्रमाणगोचरः स्यादित्याशयः । स्वरूपभेदेन भिन्नमेव घटपटान्योन्याभावप्रतियोगिधर्मिरूपमस्त्वित्याशङ्क्याह—**स्वरूपभेदस्यासम्भवेन**=वैधर्म्यं विना स्वरूपभेदोऽपि न सम्भवति स्वस्मिन्नपि तदापत्तेरितिभावः । **प्रमाणपथमित्युक्त्या** प्रतीतिपथं तु विद्यात्मकदोषादवतरन्नानुभवविरोधमावहतीति भावः । **अतएवेति** ।

---

१. घटं पटं चमित्यन्वय : क ख पुस्तके ।
२. योऽन्योन्यस्मिन् निषेद्धुं योग्य इति पाठः मूले ।

(३) अत एव न वैधर्म्यमपि भेदमावेदयत् प्रत्यक्षमद्वैतश्रुतिबाधकमुपपद्यते। वैधर्म्येऽपि हि घटत्वपटत्वादौ वैधर्म्यमन्यदस्तीत्यभ्युपगमे वैधर्म्ये वैधर्म्यविश्रान्त्य-

वैधर्म्ये वैधर्म्यान्तराभावादेव [1]विश्रान्त्यनवस्थयोरेकं (कथं) प्रत्युत्तरणीयम् इति सम्बन्धः। स्यादिति शेषो वा अथ वैधर्म्यविश्रान्तौ तदभेदद्वारा सर्वभेदः स्यादिति तामुपेक्ष्य अनवस्था स्वीकार्या। सा च अनाद्यनन्ता प्रामाणिकत्वात् न दोषायेत्याशङ्क्याह—**अननुभवश्चेति**। नहि घटे घटत्वमिव घटत्वमात्रवृत्तिधर्मोऽनुभूयते घटेतरावृत्तित्वे सति सकलघटवृत्तित्वं तत्रानुभूयते इति चेन्न घटेतरत्वस्यैव तेन विना प्रथमतोऽसिद्धेः आत्माश्रयापत्तेः। पटावृत्तित्वे संगतिरेव विशेषणमस्त्विति चेन्न। घटत्वपटत्वयोरभेदस्य अधुनैवावेदितत्वेन घटपटाभेदात् कथं तावता[2] अस्तु निर्वाहः। पटावृत्तित्वमपि भेदविशेषः कथं वैधर्म्यासिद्धौ लक्षणे निवेशनीयः।

अपि च घटत्वं त्वेतादृशधर्मः को वा परः। तत्रापि घटत्वत्वेतरावृत्तित्वे सति घटत्ववृत्तित्वम् अपरमेवं तत्राप्यपरमिति। चेदस्त्वेवं तथा घटत्वानुभव दशायां तावतामनुभवाभावात् घटत्वपटत्वयोर्विलक्षणाकारा बुद्धिः कुतः स्यात्। नहि निर्विकल्पोत्तरं भाविन्यां बुद्धौ तावन्तो धर्मा भासन्ते इति कस्याप्यनुभवः तत् सामग्रीवास्ति तथापि घटकार्यमुद्दिश्य पटे कुतो न प्रवृत्तिरिति चेद् भेदज्ञानाद् आविद्यिकादित्येव हि। अत्र घटधर्माः स्वत एव विलक्षणा इति नानवस्था। न चैवं धर्मिणोऽपि स्वत एव विलक्षणाः सन्त्विति वैधर्म्यान्योन्याभावयोरवच्छेद इतिवाच्यम्। धर्मिणः स्वत एव विलक्षणा इत्यनेन किमुच्यते—किं तत्र वैधर्म्यमन्योन्याभावश्च नास्ति, अथ स्वतोऽपि वैधर्म्यं ज्ञानाभावदशायामपि विलक्षणत्वेन ज्ञायते[3], किं वा घटादयः पटादसंकीर्णस्वभावाः इति। नाद्यः। धर्मिवत्तयोरनुभूयमानत्वात्। नापि द्वितीयः। तादृशदशायां धर्मिमात्रस्यैव भानात् न च पटाद् विलक्षण एव धर्मी तत्र भासते इति। तृतीयः पक्षोऽपि युक्तः। प्रत्यक्षेण तद्भाने सद्रूपेण संकीर्णस्य भानात् अन्यथा किमिदं वस्त्विति जिज्ञासानुदयापातात्। अथ घटत्वादीनां धर्माणामधिकरणं चेन्न स्वतोऽसंकीर्णं तथा सति कुत्र घटत्वं वर्तेत। वस्तुमात्रे चेत्तर्हि पटेऽपि प्रसङ्ग इत्यस्य स्वानुपपत्त्या मन्तव्यं घटपटयोरसंकीर्णयोर्भावमिति चेत्। नासंकीर्णता तर्हि केन रूपेण, वस्तुत्वभानस्य संकीर्णभानत्वात् तस्य प्रत्यक्षेऽवश्यभानात्। यादृशं रूपं घटत्वस्याधिकरणं न तु पटत्वस्येति चेत्तदेव रूपं तर्हि कथय। अनुभवसिद्धं तत् कथयितुमशक्यमिति चेत् कथनाशक्तेरेव कुतः

१. अस्फुटाक्षरः पपङ्क्तिः।

२. कथं तवेतास्तु निर्वाहः।

३. ज्ञायन्ते।

**नवस्थयोरेकमननुभवश्च कथं प्रत्युत्तरणीयः ? वैधर्म्ये च वैधर्म्यास्वीकारे वधर्म्ययो-रैक्यापत्त्या कथमात्माश्रयभेदत्वेन तयोः पर्यवसानं स्वात् ?**

**किं च ये ते वैधर्म्ये भेदौ ते किं घटादितो भिन्ने धर्मिणि निविशेते, किमभिन्ने ? परस्परविरुद्धयोरनयः पृथग्भूतस्य प्रकारस्यासंभवात् ।**

---

अशक्तो वा कथं परस्य तथा विधो बोधनीयः । न वोध्यते किन्तु अस्माभिरेवं[1] ज्ञायते इति चेदिदं वाक्यं तर्हि सम्प्रति व्यर्थमेव स्यात् । त्वयापि मयैव अनुभूयतामितिचेन्नास्माकं सर्वत्र सद्रूपेण संकीर्णस्यैव भानात् इति प्राहुः । तन्न । धर्मिण एव धर्मस्यापि[2] स्वतो वैलक्षण्ये दोषाणां भवदुक्तबीजैः असम्भवात । प्रतीत्यविरूद्धा नेह नाना अत एवास्माकमद्वैत[3]श्रुतिजनितप्रतीतेरविरुद्धा नेह नानास्तीति निषेध प्रतीतिरपि, तव तु परमास्तिकस्यापि श्रुत्यर्थस्य प्रामाण्यबाधः स्यात् तर्हि किं घटत्वादीनां बैधर्म्याणां नास्त्येव धर्मः । अस्ति कश्चित् परन्तु तत्र सर्वेऽपिधर्माः कल्पिताः कल्पितभेदे ब्रह्मण्येव । तद्धि स्वस्वरूपेण सदात्मके नासतः प्रपञ्चाद् विलक्षणमिति । किञ्चिद् वस्तु स्वरूपतो बिलक्षणमित्युच्यते एवं तावद्भेदस्वरूपप्रमाणपर्यालोचनया अद्वैतश्रुतेर्बाधं परिहृत्य भेदाश्रयस्य दुर्निरूपत्वादपि नास्ति भेदाधयोऽद्वैतश्रुतिबाधकत्वमिति वक्तुमुपक्रमते—

**किञ्चेति । वैधर्म्येति ।** द्विवचनं, विकल्पानुपयुक्तमपि भेदत्व[4]स्फोरणायेति शङ्करमिश्राः । वस्तुतस्तु नच वाच्यमित्यादिना आशङ्कितं यदन्योन्याभावसंसर्गाभावयोर्वैधर्म्यं भेदरूपं यच्च वैधर्म्यमेव भेद इति तृतीयः पक्षः तदभिप्रायेण द्विवचनमिति । **घटादितः इति** घटादावित्यर्थः । सार्वविभक्तिकस्तसिः । घटाद्भिन्ने पटधार्मिणि पटाच्च प्रतियोगिनो भिन्ने घटे धर्मिणीति विद्यासागरः । भेदाभेदोदासीने धर्मिमात्रे भिन्नाभिन्ने वा[5], धर्मिमात्रे भिन्नाभिन्ने वा धर्मिणीत्यपि कोटिद्वयं सम्भवतु कथमुपेक्षते इति विकल्पस्य । न्यूनतां परिहरति—"परस्परविरोधे ही" ति । प्रथमपक्षस्तु एतेनेत्यादिना स तु विकल्पो भेदत्रयसाधारणत्वादिहोपेक्षितः पृथक् कृतः । भेदाभेदौदासीन्यमपि न सम्भवति परस्परविरोधादेवेति विद्यासागरव्याख्या चिन्त्या । आश्रयताद्यवच्छेदकं तदुभयं नेत्युक्तौ विरोधाभावात् । **असम्भवादिति ।** भेदाभेदयोः परस्परविरूद्ध-

---

१. रेव ।

२. धर्ममपि ।

३. श्रुतिजनिताप्रतीतिरविरुद्धत्वात् नेहनानास्तीतिनिषेधप्रतीतिरपि तव तु परमास्मिकस्य श्रुत्यप्रामाण्यवादः ।

४. भेदत्वास्फोरणाय ।

५. भिन्नाभिन्ने धर्मिणीत्यपि कोटिद्वयं सम्भवतु इति पाठः ख पुस्तके ।

**आद्ये येन भेदेन भिन्नत्वं वैधर्म्याश्रययोर्मन्तव्यं तत्रापि पर्यनुयोग इत्यनवस्थायां पर्यवसानं स्यात् । सन्त्वनन्ता एव भेदा इति चेन्न, क्रमेण तेषामाश्रयसम्बन्धे, सावधिसत्त्वे वस्तुनि तदन्वयासंगतिरेव ।**

**अथ जायमानं वस्तु युगपदेव ते भेदाः परिरभन्ते, तदा किंभेदविशेषिते**

---

योरश्वत्वगोत्वयोरिव एकत्र विरोधेन परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायेन प्रकारान्तरस्यासम्भवादित्यर्थः ।

ननु[१] अभेदोऽपि नाभिन्ने वैयर्थ्यात् न भिन्ने विरोधादित्यत्र यः समाधिः सोऽत्राप्यस्तीति चेन्न । अस्माभिः परस्परविरूद्धयोरन्यतरनिषेधस्य अन्यतरविधायकत्वानङ्गीकारेण उदासीने धर्मिमात्रे इत्युत्तरयितुं शक्यत्वादिति विद्यासागरः । तच्चिन्त्यमेव । अनङ्गीकारेऽपि वस्तुसिद्धौ वाधकाभावात् । अभेदस्तु भेदविरहात्मा स्वरूपतोऽभिन्ने एव वर्तते । न च वैयर्थ्यं सर्वस्य प्रयोजनाभावादिति । प्रागभिन्ने धर्मिणि भेदसंसर्गोत्यसम्भवीत्याद्यं पक्षमनूद्य दूषयति—**येनेति** ।

**तत्रापीति** । आश्रयतावच्छेदकेऽपीति । सोऽपि भेदे भिन्ने एव निविशते भेदत्वात् तत्र यदि स्वेनैव भिन्ने स्वस्य स्थितिः तदात्माश्रयः अथ भेदान्तरेण भिन्ने, भेदान्तरमपि यदि वैधर्म्यं तदा अन्योन्याश्रयः इति तत्पक्षद्वयमुपेक्ष्य[२] उत्तरोत्तरभेदान्तरस्वीकारेऽनवस्थामाह[३]—तत्र =तत्रापीत्यर्थः । अवधिः =कालमर्यादा तेन सह वर्तते इति सावधि तथाभूतं सत्त्वं यस्य तत्तथा । तस्मिन् कार्यवस्तुनि तेषां भेदानामन्वयः सम्बन्धः तस्य असङ्गतिरेव सङ्गत्ययोग्यतैव । कार्यपदार्थस्य उत्पत्तेः प्राग् भेदेनासम्बन्धादुत्तरकालमपि न भेदसम्बन्धः पूर्वभेदापेक्षत्वादुत्तरभेदस्य तथा नाशादूर्ध्वमुत्पत्तेश्च प्राग्धर्मिण एवाभावात् भेदसंयोगाभावात् अनन्तभेदानामल्पीयः कालसम्बन्धिनि क्रमेण सम्बन्धो न घटते इत्यर्थः । अथ यथा कार्यद्रव्यं युगपदेव आकाशादीनि परिगृह्न्ते तथा अनन्ताभेदा एव जायमानं वस्तु एकदैव आलिङ्गन्तीत्याशङ्क्य दूषयति **तदा किं भेदविशेषितमिति** ।

ननु युगपन्निवेशे स्वीक्रियमाणे किं भेदविशेषित इति नोचितं युगपदेव निवेशादिति चेन्नैवम् । अनन्तभेदानामित्यस्य अनेकेषामित्येवार्थो नतु सर्वेषामित्यर्थः तथा च भिन्ने एव भेदानां निवेशः क्रमेण युगपद् वा-तत्र यथा घटे उत्पत्तिविनाशकाले अविद्यमाने भेदानाश्रयत्वाद् भिन्ने भेदानां क्रमेण निवेशः तथा यौगपद्येऽपि । यदि च तदर्थं पक्षद्वयेऽपि भिन्ने क्रमेण युगपद् वेति विकल्पः ततश्च

---

१. ननु भेदोऽपि क ख पुस्तके पाठः ।
२. पक्षक्षयम् ।
३. अवस्थाम ।

**किंभेदव्यवस्थितिरिति किं विनिगमकम् ? विशेषाभावादन्योन्यकलहं तेषां कः समाधातुमीष्टे ?**

**चरमचरमस्वीकार्येण च भेदेन प्रथमप्रथमस्वीकृतभेदोपयोगसिद्धेः, अग्रे**

---

भेदानां निविशमानानामनन्तत्वाद्[१] भिन्नोऽपि घटोऽल्पैरेवभेदैः यावद् घटक्षणे निवेश्यं, तथा च तदितरेषां घटे निवेशो न स्यात् घटस्य विनाशात् तथा च अनन्तभेदादिति प्रतिज्ञानुपपत्तिः वैधर्म्याश्रयसमकालीना भेदा इत्येव वाच्यम्, अतोऽनन्तभेदपक्षनिर्वाहाय यौगपद्यपक्षोपन्यासः। ततश्च एकेन अप्रविष्टभागे परस्य निवेशो न सम्भवति भेदविरहादित्यनन्तानामप्येकस्यादौ प्रवेशोऽस्तु अस्यैवेति नियामकाभावात्[२] निवेशं प्रति तेषां परस्परकलहादन्योन्यविरोधान्नैकस्यापि स्थितिरिति वैधर्म्याद्यनन्तभेदो घटे पटे च नास्तीति सर्वभेदाभावान्नाद्वैतश्रुतेर्विरोधः परन्तु अनुवादिता स्यात्। सापि च नास्त्येव तादृशपरामर्शस्य वेदाध्ययनमारभ्य शमदमादिसम्पत्तिसर्वत्यागपर्यन्तमभावात् ततः प्राक् तत्प्रमितस्यैव परामर्शतोऽवगमात्। श्रुतेरेव[३]ह्यत्र विपक्षबाधकतया परामर्शे सहकारित्वाच्च।

ननु अनन्तभेदस्वीकारे सत्ययं दोषः स्यान्नत्वेवं किन्तु वैधर्म्यनिर्वाह्याद् यो भेदः तन्निर्वाहाय च परः पुनः परः तदेवं घटनाशात् प्राक्कालं घटभेदः क्रमिकोऽस्त्वित्याशङ्कामपनुदति—**चरमचरमस्वीकार्येण चेति**। वैधर्म्याख्यो भेदः प्रथमं स्वीकृतः तस्य सिद्धचर्थं द्वितीयो भेदः चरमः तेनैव [४]भेदव्यवहारस्य प्रथमभेदप्रयोजनस्य सिद्धेः प्रथमो व्यर्थः। यदि च प्रथमोऽपि प्रत्यक्षसिद्धः तथापि द्वितीयस्य तृतीयेन अन्यथासिद्धिरिति। यावत् प्रमाणान्तरेण सिद्धचति तावदेवास्तु नतु घटसमकालनियता बहवो भेदा नवा अनन्ता इति परस्परकलहदुष्टपक्षेऽप्ययं दोष इति हृदयेन क्रमपक्षे स्थित्वैवेदं दूषणमुक्तम्। अत्राप्येकेनैव भेदेनोपपत्तेर्नानन्तभेदकल्पनायां मानमस्ति। यदि च क्रमभेदपक्षे स्थित्वैव दूषणमुद्भाव्येत तत्तदा युगपत्परिरम्भपक्ष[५] उल्लेखितःस्यात् इति। तदुत्तरमेव च क्रमपक्षे दूषणान्तरमिदमाहेति नासङ्गतिः शङ्क्या। चरमचरमपदं तु भेदद्वयं निष्प्रयोजनमित्येवं परम्। न च द्वितीयस्य तृतीयेन निष्प्रयोजनतायामपि न तृतीयस्य तथात्वं तस्य द्वितीयभेदनिर्वाहकत्वादिति वाच्यम्। घटनाशात् प्राक्कालवर्ति नैकेनैव सर्वप्रयोजननिर्वाहात्। न च निर्वाह्यस्य क्रमिकस्य अभावे निर्वाहकोऽपि न सिद्धचेत् तस्य तदेकमानत्वादिति वाच्यम्।

---

१. भाणानाम् क ख पुस्तके।
२. नैयायिकाभावात्।
३. श्रुतिरेव क ख पुस्तके।
४. स्वश्रेयांचर्यस्य।
५. पक्षोल्लेखितः।

**धावन् पश्चाल्लुप्यमानो विस्मरणशीलश्रुतवत् स भेदप्रवाहः किमालम्बेत ? एवमेवंविधे विषयेऽन्यत्रापि ।**

वैधर्म्यनिर्वाहकतयापि तत्सिद्धेः। न च युगपदारम्भपक्षे कस्य केन वैयर्थ्यमित्यविनिगमनः वैयर्थ्यमपरश्चेको भेदोऽस्तु नानन्ता इत्यत्र तात्पर्यात्। न च द्वितीये वैधर्म्ये सति पूर्ववैधर्म्यसिद्धिःसिद्धे च तस्मिन् द्वितीयवैधर्म्यसिद्धिरित्यन्योन्याश्रयचक्रकादिपरिहाराय भेदानन्त्यमिति वाच्यम्। युगपत् परिरम्भपक्षे सजातीयभेदानां[1] भेदस्थितिनिर्वाहकत्वाभावात्। अग्रे धावन् पश्चाल्लुप्यमानः = अग्रेधावन् पश्चाद्वर्ती लुप्यमानो यस्य तथा भवति। प्रवाही पूर्वपूर्वो लुप्यमानो वृथात्वादकल्प्यत्वेन स्वयमविद्यमाने भेदप्रवाहिके[2] वस्त्वालम्बेत। प्रवाहे ऽहितः प्रवाहो नास्तीति किमालम्व्य प्रवाहस्तिष्ठेदित्यर्थः। भिन्नाभिन्नत्वस्थितिः सति सत्तास्थितिः संसृष्टे संसर्गस्थितिरित्यादावपि तुल्यमिदं दूषणत्रयमित्याह– **एवमेवंविधे इत्यादि।**

अनवस्थामास्थातुः स्वीकुर्वतः पुरुषस्य[3] समाधेयदोषत्रयवत्ता भवेत्। कथमित्यत आह—प्रसंगं लोपः प्राग्लोपः। यथा लोकेऽनवस्थितिमास्थातुरनवस्थिताशनस्य त्रिदोषता वातपित्तकफानां सन्निपातः चिकित्सार्हो न भवति। प्राग्लोपो धातुत्रयस्वास्थ्यलोपः एतद्दर्शननिमित्तमेतद्भूदितिनिश्चयाभावः अन्वयव्यतिरेकात्मकप्रमाणोपगमः तैर्यथा तद्वदित्यर्थः।

ननु न प्राग्लोपः भेदप्रतीतिनिर्वाहकतया तेषां सिद्धेः भिन्ने भेद इत्यभ्युपगमात्। मैवम् एवं सति चन्द्रे या भेदप्रतीतिः तदुपपादकतयाऽपि भेदप्रवाहापत्तेः। अथ भ्रमो न भेदं विना उपपद्यत[4] इति चेत्तुल्यमिहापि। भेदवन्तं विनाऽपि भेदप्रतीतेरुपपत्तेः क्वानवस्था इति नाप्रामाणिकी स्वीकार्या। अथानन्ताभेदाः सन्तु नत्वनवस्थितिरिति चेन्न। तत्रापि दोषस्य अविनिगम्यत्वोक्तेः। नचावश्यनिर्वाह्यभेदप्रतीतिनिर्वाहाय[5] त्रययौगपद्यान्यतया आश्रयणं तस्य दुष्टत्वेन भेदनिर्वाहकत्वासम्भवात्। अतएव प्रमाणमपि न कल्पितभेदकेनैव[6] द्विचन्द्रभ्रमवदुपपत्तेः[7]। अनवस्था[8] प्रमाणं नापेक्षत इत्यर्थः। अथ न भेदानवस्था नाव्यवस्था

१. जायमानभेदानामिति ख पुस्तके।
२. भेदप्रवाहे के वस्त्वालम्ब्येत प्रवाहो वहितः इति क पुस्तके।
३. समाधेयदोषत्रयवत्ता यथा प्राप्तो यः इति पाठः क ख पुस्तके।
४. नुपपत्त इति।
५. भेदप्रतीतिः।
६. भेदेकेनैव।
७. द्विचन्द्रभ्रत्वात्।
८. अन्यवस्था क पुस्तके, अन्यवस्था इति ख पुस्तके।

प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् ।
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥१९॥

**यदि च क्वचिद् गत्वा स्वरूपमेवान्योन्यं व्यावर्तमानं भेद इष्यते; तदा ययोः स्वरूपं तथैष्टव्यं तयोः निःस्वरूपतापत्तिः ।**

---

अन्योन्याभावेन एकेनैव व्यवहारोपपत्तेः तद्भेदवत्येव तद् भेदोऽस्तु । नचात्मवत्यात्मनः स्वीकारे अंशतः आत्माश्रयादिः तस्मिन्नेव अन्योन्याभावे तत्स्वीकारे घटे पटे घटभेदे पटभेदे च घटभिन्न इति प्रतीतेरनुगतविशेषं विना उपपत्त्यभावात् । नवा भेदोऽपि भिन्न एव वर्तते इति तर्हि कुत्र[1] भेदो वर्तते इति प्रश्ने किमुत्तरम् । यत्र प्रतीयते इत्येव । कुत्र प्रतीयते इत्यत्र च यत्रास्तीत्येवेत्युद्योतकरवार्तिक इति चेत् । घटभेदो घटभिन्न इति प्रतीतिरेव साक्षिणी स्ववृत्तिभेदे । अथवा[2] तादृशप्रमा । नाद्यः—स्वशिरच्छेदस्यापि स्वप्ने जागरे चैन्द्रजालिकविद्यया प्रतीतेः । नापि द्वितीयः सप्रकारकज्ञानमात्रस्य प्रमात्वासिद्धेः ।

यत्तु यत्र प्रतीयते इत्युत्तरं तदप्यतएवपरास्तम् । प्रतीयत इति प्रथमतो वस्तुसत्त्वयोः सिद्धेः । अत एव यत्रास्तीत्युत्तरमपि न प्रश्नसमापकं पुनरपि कुत्रास्तीति प्रश्नात् । अथ इदन्तेनाधिकरणं[3] निर्दिश्य समाप्तिः, तदाधिकरणान्तरेण स्यात् न स्याच्चातीन्द्रिय इति दिक् । भेदस्य धर्मत्वे भिन्ने धर्मिणि निविशते उत अभिन्ने इत्यादि विकल्पदोषपरम्परा स्यात् । अस्माभिः तु स्वरूपभेदाङ्गीकारान्नकोऽपि दोष इत्याशङ्कते —**यदीति** । विद्यासागरः —तन्न स्वरूपभेदस्य व्युदस्तत्वात् क्वचिदपि गत्वेति ग्रन्थविरोधाच्च ।

वस्तुतस्तु नास्त्यनवस्था क्वचिदपि विश्रान्तिस्वीकारात् । तत्र च यद्दूषणमुक्तं वैधर्म्ये वैधर्म्यास्वीकारे वैधर्म्ययोरैक्यापत्त्येति तत्रैवोक्तावाशङ्केति तथा च वैधर्म्यस्य धर्मान्तराभावेऽपि स्वरूपमेव भेद इति बहुषु स्थानेषु यत्र प्रत्यक्षतो वैधर्म्यं सिद्धं तदुल्लंध्य यत्र केवलं निर्धर्मकमेव धर्मद्वयं प्रतीयते तत्रेत्यर्थः । व्यावृत्तमानमविद्यमानमित्यर्थः । नचैवं घटे[4] स्वस्यापि भेदः स्यात् । मैवम् । यतो भेदः प्रतीयत तत्रायमविद्यमानोऽपि भेदः, नतु यत्राविद्यमानः तत्र भेद एवेति शङ्कार्थः ।

यद्वा व्यावर्त्यमानः तादात्म्यप्रगित्यविषय इत्यर्थः । नच घटस्तथेति दोषः । **तथैष्टव्यमिति** । व्यावृत्तमेष्टव्यमित्यर्थः ।

---

१. कुत ।

२. अथ तादृशप्रमा क ख पुस्तके ।

३. इदं तेनाधिकरणं निर्देश्य समाप्तिः तदाधिकरणान्तरेण इति क ख पुस्तके ।

४. घटत्वे ख पुस्तके ।

**अथ न स्वरूपमात्रं मिथो व्यावर्तते, किं नाम ? स्वरूपविशेष इत्युच्यते, तर्हि स्वरूपविशेषमात्रव्यावृत्त्या स्वरूपमात्रं तयोः स्यादित्येकत्वापत्तिः। अथवा वक्तव्योऽसौ स्वरूपमात्रादन्यो विशेषार्थः।**

**अथ न स्वरूपं नाम किञ्चिद् अनुगतमिष्यते मया, विशेषरूपासु व्यक्तिष्वेव स्वरूपशब्दो नानाऽर्थः सन्निविशते इत्यभिधत्से; तर्हि गतमनेनैव न्यायेन गोत्वादि-**

**तदेति**। यथा स्तम्भकुम्भाभ्यां घटत्वे व्यावर्त्यमाने तयोर्निर्घटत्वं तथा धर्मिप्रतियोगिभ्यां स्वरूपव्यावृत्त्या तयोर्निस्वरूपत्वापत्तिः। विमतं निःस्वरूपं स्वरूपमात्रव्यावृत्तिप्रतियोगिकत्वात् नृश्रृङ्गवदित्यत्र तात्पर्यम्। यदि घटत्वस्य स्वरूपं पटत्वे नास्ति तदा तत् कुत्रास्ति न घटत्वे आत्माश्रयापत्तेः। नापि घटे पटेऽप्यापत्तेः तयोर्भेदस्य घटत्वभेदाधीनत्वात् अतो घटत्वं मिथ्यास्वरूपं तस्य प्रमासिद्धम्। तस्य प्रमासिद्धमवृत्त्यपि न मिथ्येत्युच्यते तदा घटत्वपटत्वयोः स्वरूपमेकमेवेत्यायातमिति भावः। तदेतद्देशकालविशिष्टस्वरूपविशेषे व्यावर्तमाने प्रत्यभिज्ञागोचरस्य देवदत्तस्य स्वरूपमात्रानुवृत्त्या यथैक्यं तथा घटपटयोर्भिन्नत्वेन अभिमतयोरपि स्वरूपमात्रानुवृत्त्यैक्यं स्यादित्याह—**स्वरूप विशेषमात्रेति**। स्वरूपमात्रानुवृत्त्या ऐक्यं चेत् स्वरूपविशेषव्यावृत्त्या भेदोऽपि दुर्वार इत्याशङ्क्याह— **अथवेति**। स्वरूपमेव विशेषश्चेत् नास्त्येव विशेषः। स्वरूपातिरिक्तः स्वरूपस्य विशेषः इत्युक्तेऽपि स्वरूपाकारेण सम्बन्ध्यमानोऽपि शून्यवन्निः स्वरूपो न सम्बध्येत लब्धस्वरूपस्य स्वरूपसम्बन्धे परस्पराश्रयात्। स्वरूपमात्रादन्यो विशेषार्थो न वक्तुं शक्य इत्यर्थः। विशेषस्य स्वरूपमात्रान्तर्भावे विशेषलयः स्यात्। स्वरूपमात्रस्य विशेषमात्रत्वाङ्गीकारे नोक्तदोष इत्याशङ्कते—**अथेति**। तथा च स्वरूपमात्रं तयोः स्यादित्यापादनमशक्यमिति भावः। स्वरूपशब्दो नानार्थश्चेत् गोशब्दोऽपि नानार्थो भवेदिति। गोत्वं गोपदप्रवृत्तिनिमित्ततया जातिर्न सिद्ध्येदित्यर्थः। गोत्वमनुगतसिद्धमिति चेत्तुल्यं स्वरूपत्वेऽपि। अथ प्रतीतेरनुगतविषयता जातिसिद्ध्यधीनज्ञानात् ततः सिद्धस्यैकस्य शब्दप्रवृत्तिनिमित्ततया जातित्वं बाधकाभावे सति सिद्ध्यति स्वरूपत्वं तु सामान्येषु अभावेष्वपि साधारण्यमिति न जातिरिति चेदस्तु, तथापि तस्यानुगतधर्मत्वं विना [2]समयग्रहणानुपपत्त्या तत् सिद्धिर्दुर्वारेत्याशयेनाह—**नच प्रतिव्यक्तीति**। अस्यार्थस्य इयं सञ्ज्ञेतिसम्बन्धकरणं समयः [3]साङ्केतिको हि नैयायिकानां शब्दार्थयोः सम्बन्धः तस्य करणं (ग्रहणं) तावत्यपि[4] भगवत इच्छा

१. विद्यासागरीमनुवदति।
२. समयग्राह्य।
३. साक्षतिको हि।
४. तावस्वद्यपि भगवतोरितित्र शक्तित्वाच्छक्यं।

**सिद्धिप्रत्याशया। न च प्रतिव्यक्ति स्वरूपपदसमयग्रहोपपत्तिः। यदि च स्वरूपं भेदः स्यात्, तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न संदेहः स्यादिति।**

**यदि चाभिन्ने भेदो निविशेत, तदा याऽप्येका व्यक्तिः प्रतीयते घटादिः, साऽपि तेनैव भेदेनानेका स्यादित्येकाभावे नानेकमपि व्यवतिष्ठेत। एतेन न भेदावच्छिन्ने, न चाऽभेदावच्छिन्ने भेदो विनिविशते, किंतु उदासीने इत्यपि निरस्तम्।**

---

शक्तित्वात् शक्यं तथापि प्रतिव्यक्ति तद्ग्रहणं न सम्भवति व्यक्तीनामानन्त्येन पुरूषायुषापि[१] तदसम्भवात्। अक्षादिशब्दानां तु विभीतकादौ परिमिते सम्भवति समयग्रह इति स्वरूपमात्रं तयोः स्यादिति दोषतादवस्थ्यं क्वचिदनवस्थापरिहारांय स्वरूपभेदः स्वीकार्य इति दूषयित्या सर्वत्रापि स्वरूपभेद इति पक्षे दूषिते साधारणं दोषमाह—**यदि च स्वरूपं भेदः स्यादिति।** क्वचिन्न स्यादिति। स्थाणुपुरूषसंशयोऽपि धर्म्यात्मकस्वरूपज्ञानजन्य इति सोऽपि न स्यात् [२]धर्मिज्ञानस्यैव भेदज्ञानत्वात् तस्य च संशय विरोधित्वात् इति केचित्।

वस्तु[३] यदि स्वरूपमात्रमनुगतं न स्यात् तदा दूरे व्यक्तिविशेषाज्ञानात् स्वरूपमात्रभानाभावेन संशयो न स्यादित्यर्थः। धर्मिणि दृष्टे स्वरूपं दृष्टमित्येवं संशयकारणसत्त्वात संशयो जायते तन्न स्यात् इति फक्किका योज्यते। [४]स्वरूपभेदत्वं धर्मः सचातिरिक्त इति तु न युक्तम्। तदपि किं भिन्ने धर्मिणि वर्तते अभिन्ने वेति विकल्पकवलिततया शङ्कितुमयोग्यमिति।

ननु भेदवादिनामेकाभावो न दोषायेत्यत आह—**एकाभावे इति।** अनेकत्वं संख्याविशेषः सच अवयविकारणेन[५]························विना कथं जायते।

नन्वेकस्मिन् घटे मिन्नेऽपि बहुत्वसंख्या नास्ति प्रतीतेरभावात्। न च भिन्नेऽवश्यं संख्यान्तरयोगः कर्मादौ व्यभिचारात्। [६]नच द्रव्ये तथा नियमः एकासमवायिजन्यत्वाभावस्योपाधित्वात्। मैवम् घटे एकत्वाभावे घटपटकुड्यानीति प्रतीतिर्न स्यादित्यर्थः। घटे भिन्नेऽपि एकत्वमस्तीति चेन्न। एकत्वं प्रति अभिन्नमेव समवायिकारण अतः तदभावेऽनेकत्वमपि क्वचिन्न स्यादित्यर्थः।

**एतेनेति।** एकाभावप्रसङ्गेनेति। अत्र विद्यासागरः—नचात्र पौनरुक्त्यमाशङ्क्यं, पूर्वं परस्परविरोधे प्रकारान्तरासम्भव उक्त इदानीमभ्युपगम्यापि दोषाभि-

---

१. पुरूषायुषेनापि। २. धर्मे।

३. वस्तुतस्तु ख पुस्तके।

४. स्वरूपे ख पुस्तके पाठः।

५. अवयविकारणे नैकत्रत्रायणं विना इति क ख पुस्तके।

६. एकत्वाभावेनेकत्वमघटपटकुडयानीति पाठः क पुस्तके।

**(४) अत एव च भेदो नाम स्वरूपान्योन्याभाववैधर्म्यानात्मको धर्मान्तरं पृथक्त्वापरनामकमित्यपि परास्तम्। सोऽपि हि स्वाश्रये भिन्ने विनिविशेत, अभिन्ने वेत्यादि यथोक्तदोषलङ्घनाजङ्घाल एव स्यात्।**

**स्वाश्रयेण च स्वस्मिन्नभेदभयाद्यदि स एव भेदो निविशते, तदाऽऽत्माश्रयः। अन्यश्चेत्तस्मिन्नेवं तस्मिन्नप्यन्य इत्यनवस्था। क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदस्य अस्वीकारे च तदैक्यद्वारिका मूलपर्यन्तमेकता धावेत्।**

---

धानमिति शेषादित्याह। तदत्यज्ञानतः—पूर्वं भेदाभेदस्य आश्रयतावच्छेदकताया [१]इहत्वौदासीन्यस्येत्यति विशेषात्। इदमेवौदासीन्यं यद्धर्मिणस्तन्नैरपेक्ष्येणैवाश्रयत्वमित्यर्थः एतेन [२]स्वस्मादपिभेदप्रसङ्गेनेत्यर्थः। स्वस्यापि धर्मित्वाद् भेदापेक्षारहितत्वाच्चेतिभावः।

अजङ्घालो - मन्दगामी। जङ्घालोऽतिजवस्तु स्यादितिकोशात्। पृथक्त्वस्य गुणकर्मादावभावात् तदभेदे द्रव्याणामप्यभेदापातात् तथा पृथक्त्वमवधिनिरूप्यं-भेदस्तु[३] नावधिनिरूप्यः इत्यपिबोध्यम्।

अत्र मिश्राः। परन्तु पृथक्त्वं गुणकर्मादावपि संख्यावत्, भेदोऽप्यस्मात् पृथक् इतिवदयमस्माद्भिन्नः इति प्रतीतेरवधिनिरूप्योऽपि इति वदतः खण्डनमशक्यमिति। अन्योन्याभावे वैधर्म्ये च दोषान्तरमप्याह—

**स्वाश्रयेण सहेति**। भेदो यदि स्वाश्रये स्वभिन्ने एव निविशते तदा वैधर्म्यस्य अन्योन्याभावस्य च पटाद्यात्मनो भेदिना सहाभेदे पटादीनां भेदाश्रयत्वानुपपत्तौ पटाद्यात्मकं विश्वमभिन्नमेव स्यादिति। वस्तुमात्रावशेषाद् अद्वैतापत्तिरितिभिया भिन्ने वैधर्म्यान्योन्याभावयोर्निवेशो वाच्यः तत्र दोषमाह—**स एवेति**। तद्भेदविशिष्टे तद्भेदवृत्तौ स्वाश्रयापत्तिः। अथ भेदान्तरेण भिन्ने धर्मिणि तदानवस्था। त्रिचतुरकक्षातः[४] परमभिन्ने एव भेदो निविशते इत्यभ्युपगमे तयोर्भेदहीनतया अभेदो भवेत् ततश्च तदभेदद्वारा मूलपर्यन्तम् = आद्यभेदभेदिपर्यन्तमेकतापत्त्या वस्तुमात्रपरिशेषात् सर्वाद्वैतस्यादित्यर्थः। **तदिति**। [५]प्रत्यक्षात् यो बाधः स तावन्नास्ति। तावच्छब्दः प्रत्यक्षस्य सर्वप्रमाणमूलस्य अभावः प्रथमं वाच्यः इत्येतत्सूचनाय। अनुमानादिकं प्रत्यक्षोपजीविव्याप्तिग्रहादिद्वारा तस्य बाधकत्वे का प्रत्याशेत्याशये-

---

१. औदासीन्येव इत्यस्य भेदाभेदौदासीन्ये नेत्यर्थः।

२. स्मादपि।

३. अवधिनिरूप्यस्तदस्तु नावधिनैरूप्यः।

४. त्रिचतुरकक्षांत: परभिन्न एव भेदो निविशते।

५. प्रत्यक्षातयो वाधः।

तदद्वैतश्रुतेस्तावद् बाधः प्रत्यक्षतः क्षतः ।
नानुमानादि तं कर्त्तुं तवापि क्षमते मते ॥२०॥
अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥२१॥

नन्वद्वैतश्रुतयो वर्ण-पद-विभक्ति-तदर्थादिभेदानुपजीव्य अर्थं प्रतिपादयन्त्यः

---

नाह—नानुमानादिति । अनुमानं श्रुतितो दुर्बलं बाध्यञ्चेति तवापि मतम् अन्यथा क्रतुवाह्यवर्तिनी सुरा पेया सुरात्वात् वाजपेयसुरावदित्यनुमानं स्यात् । तत्रापि निश्शेषं जुहोतीति श्रुतेः पेयता नास्तीति चेत्तर्हि दैक्षपशुर्हिंसा न कार्या हिंसात्वात् इत्येव दैक्षं पशुमात्रमेवेति श्रुतिविरुद्धमुदाहार्यम् ।

क्षतः क्षतः मते[१] मते इति पदावृत्तिरूपं [२]पादान्त्ययमकत्वम् ।

अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥

इति हि तल्लक्षणम् । अनुमानादीत्यादिपदं तर्कपरमिति । अद्वैतागमस्याल्पत्वात् भेदग्रहादीनां बहुत्वाद् बहूनामनुग्रहोन्याय्य[३] इत्याकारो हि सः तर्कत्वादेव प्रमाणाद् दुर्बलः । यतो वा इमानि भूतानि जायन्ते इत्युपनिषदोऽपि न साक्षाद्भेदबोधिकाः वाचकशब्दाभावात् किन्तु तदुत्थापितार्थापत्तिः तथा वाच्या सा च नेह इत्याह—**सेवामेव जयतीति** । अद्वैतागमस्य विजिगीषु स्थानीयस्य अग्रे सेनायाः संगरे वा अर्थापत्तिरेव पत्तिः=पदातिः तस्याः परम्परा परान् परिपन्थिनो द्वैतप्रमाणानि साधु सम्यक् धुन्वती कम्पयन्ती सेवामेवार्जयति नतु परिपन्थिनीत्यर्थः । रूपकालङ्कारोऽयम् । यथा लोके कस्यचिद् जिगीषोः पदातिपरम्परा सा पूर्वोक्ता प्रसिद्धा वा परान् विषया बिघ्न[४]पदातीन् धुन्वती सेवामेव अर्जयति ।

**अयमाशयः**—"[५]तदनन्यत्वमारम्भणशब्दादिभ्य" इति अभेदबोधनायैव । सा श्रुतिः प्रवृत्त्या बोधितै हि कार्यकारणभावे तदभेदः सुखेन बोधयितुं शक्यते । नहि मृत्तिकातोऽतिरिक्ताः शरावादञ्चनादय इति कार्यकारणभावान्यथानुपपत्त्यैव जगतो ब्रह्माभेदो ब्रह्मातिरिक्तसत्त्वशून्यत्वमापातीत्यर्थः । किञ्च कार्यकारणभावे निष्प्रयोजने वेदस्य स्वाध्यायाध्ययनविधिपरिगृहीतस्य न प्रामाण्यसम्भवः इति

---

१. क्षत वैमतः ।
२. पदात्ययमक ।
३. न्यायः
४. परानविप्रपदातीन् । क ख पुस्तके वेदान्तसूत्रं प्रथमाध्याय प्रथमपादस्थम् ।
५. तदैक्यान्वयापत्तिः इति क पुस्तके ।

**स्वोपजीव्याभिर्भेदबुद्धिभिर्न कथं बाध्यन्ताम् ? उपजीवकस्य उपजीव्याद् दुर्बलत्वात् ।**

**मैवम्, न वयं भेदस्य सर्वथैव असत्त्वमभ्युपगच्छामः । किन्नाम, पारमार्थिकमसत्त्वम् । अविद्याविद्यमानत्वं तु तदीयमिष्यत एव, तदेव च कार्यकारणभावोपयोगि ।**

---

तदन्यथानुपपत्त्याऽपि भेदो नास्तीति बोध्यम् । अन्यथापत्तिश्चिदानन्दात्मकस्यात्मनो नानाविधनरकयातनासु निपातयतो महामोहस्य परमशत्रोर्निवारणाय अर्थापत्तिः सहायभूता प्रमाणान्तराविरुद्धा अनधिगते स्वतः प्रामाण्यलब्ध तदैक्यानुपपत्ति'रप्यर्थापत्तिर्बोध्या ।

ननु इत्यादिपदावगमाय वस्तुभेदस्य, वाच्यावगमाय पदभेदस्य, अन्वयावगमाय विभक्तिभेदस्य, आकाङ्क्षावगमाय तत्तत्पदार्थभेदस्य, भिन्नपदार्थावगमाय शब्दभेदस्य बुद्धिमुपजीव्य **अर्थं प्रतिपादयन्त्यः** इति । **उपजीवकस्येति** । अद्वैतप्रतिपादकस्य भेदबुद्ध्यधीनत्वात् तदभावे वाक्यस्य अप्रामाण्यस्य अभ्युपजीवकस्य दुर्बलत्वम् । **उपजीव्यादिति** । उपजीव्यत्वोक्त्या तस्य वलवत्वम् । उपजीव्यं हि निरपेक्षं तेन तस्य बाधकत्वे न किञ्चिदपि अपचिनोति उपजीवकस्य, उपजीव्यबाधे स्वजन्यज्ञानोत्पादापत्तिरितिः[१] **नन्वद्वैतेति** । अत्र प्रतिष्ठितप्रामाणत्वादपि प्रत्यक्षप्रावल्यं निरवकाशत्वाच्चेत्यपि बोध्यम् इति विद्यासागरः । तच्चिन्त्यम् । अविद्याविद्यमानं तु सत्वं तदीयं तत्सम्बन्धि, सत एव क्रियाकारित्वात्, अपारमार्थिकस्यभेदस्य कथं श्रौतज्ञानोत्पादकत्वमित्याशङ्क्याह—**तदेवचेति** । अन्तर्भावितसत्त्वञ्चेदित्यादिना सतः कारणत्वनिषेधादाविद्यिकसत्त्वमेव कार्यकारणभावोपजीवि पारमार्थिकभेदवतोऽकार्यत्वादकारणत्वाच्च ।

अत्र मिश्राः—अद्वैतस्यैव आविद्यिकत्वमास्तु श्रुतिविषयत्वेन तस्य पारमार्थिकत्वे द्वैतस्यापि प्रत्यक्षविषयस्य पारमार्थिकत्वं दुर्वारं सकललोकव्यवहारविषये प्रतीयमाने आविद्यिकत्वं [२]परिभाषामात्रमेव स्यात् व्यवहारविषयत्वेनैव पारमार्थिकत्वसाधनात् । व्यवहाराविषयस्यैव ब्रह्माद्वैतस्य अपारमार्थिकत्वसम्भवात् । अद्वैतानुरोधेन[३] श्रुतेः परमार्थतायाः निराकार्यत्वात् अन्यथा तयैव द्वैतापत्तेः एवं तज्जन्यबुद्धेरपि तथात्वं[४], यदि स्वप्रकाशवलादद्वैतं तदा द्वैतमपि तथा किन्न स्यात्

---

१. ज्ञानोत्पादापत्तिरिवर्हरतं इति क ख पुस्तके ।

२. परिभाष मात्रमेव ।

३. अद्वैतानुबोधे ।

४. परमार्थतायानि रसनम् इत्यर्थः ।

**एतेन एकमेवेत्येवकारव्यवच्छेद्येन, अद्वितीयमिति द्वितीयेन, नाना नेति नानात्वेन, किञ्चनेत्यनेन बहुना विना नोपपद्यमानेन व्याघात इत्यपि प्रत्यादिष्टम्।**

**श्रुतिभिश्चाद्वैतार्थाभिः पारमार्थिकमद्वैतं प्रतिपाद्यते। न च पारमार्थिकमतिः अपारमार्थिकधिया शक्यबाधा। मा भूत् शुक्तिरजतधिया परमार्थशुक्तिमतिबाधः। यत्र तु 'अग्निरनुष्णः' इति बुद्धेरुष्णज्ञानोपजीवनाद् उष्णबोधेनानुष्णबुद्धिबाधस्तत्र द्वयोरप्यविद्याविद्यमानत्वाद् बाधो युक्तः।**

---

नहि [1]स्वप्रकाशस्य द्वैतन्न विषय इति शक्यं प्रतिपादयितुम् इति खण्डनमुद्धृत्य अहं खाण्डनिको न स्थापकः इति भावं व्याख्यातवन्तः। तन्न। चन्द्रद्वितीयत्वस्यापि व्यवहारविषयत्वेन पारमार्थिकत्वापत्तेः। नच सर्वलोकव्यवहारसिद्धत्वं पारमार्थिकत्वव्याप्यमिति क्वचिदपि[2] सिद्धमावयोः, व्यवहारविषस्यैव[3] बाध्यत्वेन अपारमार्थिकत्वात्। श्रुत्यभावेन श्रौतव्यवहाराविषयत्वकथनन्तु अस्माकमिष्टम्। नच द्वैतं स्वप्रकाशविषयः निर्विकल्पस्यैव स्वप्रकाशत्वात् तस्य भेदविषयतायास्तवाप्यभिमतत्वात् भाववर्णनन्तु निर्दोषमेव।

अद्वैतप्रतिपादकवाक्येनैवं द्वैतस्यापि प्रतीतेर्व्याघातमाशङ्क्य तत्राप्युपजीव्यप्रत्यक्षविरोधपरिहारन्यायमतिदिशति। एवकारव्यवेच्छेद्येन अनेकप्रदार्थेन, प्रतिषेधो नानास्तिशब्दसमभिव्याहृतस्य किञ्चनशब्दस्य। यत् किञ्चित् प्राचीनम्, अग्नीषोमीयादिवत्कृत्स्नपरत्वादाह—**बहुनेति**[4]। नहि एकस्मिन् कृत्स्नवाची शब्दः प्रयुज्यते इति बहुना विना इत्याह–एतेन=आविद्यिकप्रतिषेध्योपगमेन। प्रतिषेध्यं हि निषेधवाक्येऽनुवाद्यमेवेति तद् आंशश्रुतेः प्रामाण्यम्। नचानुवाद्योऽपि प्रत्यक्षादिसिद्धः किमिति पारमार्थिको नेष्यते इत्याशङ्क्याह—ब्राह्मणं न हन्यादित्यस्येव, ब्राह्मणवदितिभावः। **श्रुतिभिः अद्वैतार्थाभिरिति**। उपक्रमोपसंहाराभिः षड्विधतात्पर्यलिङ्गोपबृंहिताभिः श्रुतिभिः प्रतिपाद्यमानद्वैतं पारमार्थिकं तद्विरुद्धेन तु प्रत्यक्षादिना प्रतिपाद्यमानं द्वैतमाविद्यिकमित्यर्थः। तथाच पारमार्थिकधिया भेदधियोऽपारमार्थिक्याः[5] वाधः वस्तुवलसत्त्वादिति निगर्वः। अत्रैवानुरूपं दृष्टान्तमाह—**माभूच्छुक्तिरजतधियेति**। पारमार्थिकशुक्तिप्रतीतिभेदवादिमते एव दृष्टान्तः। यदि पारमार्थिकविषये एव बाधकता नोपजीव्यविरोधिज्ञानस्य तदा वह्न्युष्णत्वज्ञानमनुष्णत्वज्ञानं न बाधेत इत्याशङ्क्याह—**यत्रत्विति**[6]। अपारमार्थिकविषयत्वेन द्वयोस्तुल्यत्वे उपजीव्यत्वमपि बाधप्रयोजकमित्यर्थः।

---

१. स्वप्रकाशमद्वैतम्।

२. केचिदपि। ३. विषयएव।

४. नास्तिशब्दसमभिव्याहृतस्य पाठः क पुस्तके।

५. बहुलेति। अपारमार्थिक्यो वाधवस्तुवल। व्याहृतः इति शेषः।

६. यत्विति।

**ननु तत्रापि तर्ह्यनुष्णताऽपि पारमार्थिक्येव साध्यतामबाधनाय। मैवम्, अनुष्णताया जलादिदृष्टान्तसजातीयायाः शीताद्यव्यावृत्तस्वरूपायाः प्रसाधनेन अविद्याविद्यमानत्वे एव विश्रामात्। तत्रैवंविध (तदीयमेवं) रूपतानङ्गीकारे चाद्वैतस्यव नामान्तरकरणापत्तेः, ततस्तस्यां ज्ञेयज्ञानादिभेदावश्याभ्युपेयतया जगद्बाधयुक्तिकवलाप्रवेशासम्भवात्। अद्वैते च द्वैताश्रयस्य बाधस्य वास्तवस्यानवकाशाद् अपारमार्थिकत्वसंभावनाऽपि दूरत एवापसरतीति।**

---

ननु तर्हि अनुष्णत्वं पारमार्थिकमेवानुमीयतामनुमानस्यावाधायेत्याशङ्क्याह–[1] **मैवमिति**। अनुमेयमनुष्णत्वं जलादिदृष्टसजातीयम्[2] अन्यद्वा–आद्ये **अनुष्णताया–इति**। जलादिर्दृष्टान्तो यस्य अनुष्णत्वस्य तत् जलादिदृष्टान्तं तत्सजातीयायाः तत्सजातीयत्वस्य विवरणं शीतदीति। जलादिदृष्टशीतानुष्णाशीतस्पर्शाव्यावृत्तरूपस्य साधने तस्य व्यावहारिकत्वे एव विश्रान्तिः तद्विलक्षणस्य पारमार्थिकानुष्णत्वस्य साधने तस्याप्रसिद्धयैव[3] अप्रसिद्धविशेषणः पक्षः इति भावः। द्वितीय दोषमाह—**तदीयेति**। अनुष्णत्वस्य जलादिदृष्टस्पर्शसजातीयतानङ्गीकारेऽपि सा अनुष्णता यदि दृश्या स्वीक्रियते तदा मिथ्यैव। नचैतदद्वैतमेवेति[4]। तस्य अनुष्णतेति नामान्तरमेव साध्यवैकल्यं तु स्पष्टमेव। अतो यदि ब्रह्मणोऽन्यत्वसिद्धये[5] दृश्यत्वमिष्यते ततः तस्यामनुष्णतायां प्रपञ्चार्गतायां ज्ञानज्ञेयज्ञात्रादिभेदोऽप्यावश्यकः इति दृग्दृश्यसम्बन्धखण्डनात्मिका जगद्बाधयुक्तिस्तत्कवले[6] ग्रासे प्रवेशाभावस्यासम्भवात् मैवम् इत्यन्वयः। तथाच अविद्या विद्यमाने एव विश्राम्येत् इत्यर्थः। अद्वैतेऽपि श्रौतज्ञानविषये ज्ञानज्ञेयादिभेदेन अपारमार्थिकत्वं स्यादित्याशङ्कां निषेधति—**अद्वैतेचेति**। मानमेयादिभेदगोचरस्य वस्तुनोऽवबोधकस्य वक्ष्यमाणस्य बाधकस्य अद्वैते स्वयंप्रभे वस्तुतो मानमेयादिभावाभावात् न[7] मिथ्यात्वमित्यर्थः।

ननु मास्तु विपर्यासलक्षणमप्रामाण्यं श्रुतेरनुत्पत्तिलक्षणमप्रामाण्यं तु स्यात्, तथा अद्वैतज्ञानकाले प्रमात्रादिरस्ति नवा। नचेदाश्रयकरणाद्यभावात् प्रमा नोत्पद्येत। अस्ति चेत्कथमद्वैतप्रमा, उपजीव्यबाधात्। उपजीव्यं हि प्रमात्रादिकं बाधमानो बोधः स्वात्मानमेव कथमासदयेत्। नहि निराश्रया निष्करणिका च क्रियाऽस्तीति पूर्वपक्षयति नन्विति।

---

१. अनुमानस्य बाधाय।
२. जनादिदृष्टसजातीयमचा।
३. प्रसिद्धविशेषणः।
४. नचैतद् द्वैतमेवेति क पुस्तके।
५. नानुसिद्धये क ख पुस्तके।
६. करणे। ७. भावान्व।

**ननु किमद्वैतपरमार्थताभ्युपगमेन समाहितं भवति ? यत उपजीव्यबाधाद-द्वैते प्रमां श्रुतिर्जनयितुं न शक्नोतीति ब्रूमः। मैवम्; अद्वैतं हि पारमार्थिकमिदं पारमार्थिकेन भेदेन बाध्येत, न त्वविद्याविद्यमानेन। तस्मादविद्याव्यवस्थितं भेदं तद्वोधं चोपजीवन्त्या न परमार्थाद्वैतबुद्धे रुपजीव्यबाधः।**

**यदि श्रुतिजन्या भवन्त्यप्यद्वैतबुद्धिः अविद्याविद्यमाना, तथापि तद्विषयस्ता-वत् परमार्थसदेवाद्वैतम्। विरोधेन च तस्याः बाध्यता, स च नास्तीति। तस्मात्—**

**पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।**
**बाधनादुपजीव्येन बिभेति न मनागपि ॥२२॥**

---

अद्वैतपरमार्थताभ्युपगमेन, किं समाहितं भवति। न किञ्चित् मिथ्याविषय-त्वाभावसमाधानेऽपि ज्ञानं स्वरूपत एव मिथ्या स्यात् कारणाभावादित्यर्थः। **इदं पारमार्थिके न भेदेनेति।**

समानसत्ताकयोरेव विरोधादिह तु प्रमात्यपेक्षितेः नतु तद्वाधाभावोऽपि। श्रुतिज्ञाने करणमपेक्षितं नतु तस्य पारमार्थिकत्वमपीत्याह—**तदिति**। तस्मादित्यर्थे तथाच नास्त्येव उपजीव्यस्य वाधः[१] कल्पितस्यैव उपजीव्यत्वात् तस्य वोधात् प्राक् सत्त्वादेव। नचोपजीव्येन श्रौतज्ञानस्य बाधः कल्पितभेदधियो दुर्वलत्वात्। द्वैतबुद्धिरिव अद्वैतबुद्धिरपि श्रुतिजन्यत्वात् अविद्याविद्यमानैव, श्रुतेः कारणीभूतायाः आविद्यिकत्वात्। तथा च द्वयोराविद्यिकताऽविशेषे उपजीव्यत्वेन प्रवलया भेद-बुद्धया बाध्येतेत्याशयेनाह—**यदीति**। द्वयोराविद्यिकत्वे तुल्येऽपि श्रौतस्य विषय-परमार्थः सद् अद्वैतम्, तथा च [२]यदाऽद्वैतबुद्धेः स्वरूपं बाधितमित्युच्यते तदिष्टापत्तिः, विषयबाधस्त्वनुपपन्नः "तत्सत्यमिति" श्रुतिविरोधादित्याशयेन परिहरति—**तथा-पीति**। ननु विषयतः परमार्थत्वेऽपि स्वरूपतोऽपरमार्थत्वादुपजीव्यबाधः स्यादित्या-शङ्क्याह—**विषयेति**। ज्ञानयोर्हि न स्वरूपतो विरोधः किन्तु विषयकृतः सच नास्ति पारमार्थिकव्यावहारिकाभ्यां व्यवस्थापितत्वादित्यर्थः।

विद्यासागरस्तु ज्ञानं प्रमाणं विषयस्याबाधादिति व्यधिकरणो हेतुरित्या-शङ्क्याह—[३]**विषयविरोधेनेति**। अबाध्यविषयत्वेनैव ज्ञानस्य प्रामाण्यं न स्वरूप-सत्यतया व्यभिचारादित्यर्थः। अद्वैतं बाध्यम् अन्तःकरणपरिणामगोचरत्वात् घटवदित्याशङ्क्याह—**सचेति**। अत्र जडत्वमुपाधिः सत्यं ज्ञानमनन्तमित्यादिश्रुति-विरुद्धञ्चेति व्याचष्टे। विषयबोधे नहि बुद्धेर्बाध्यता विषयापहारो हि बाध्यता

---

१. बाधः।

२. यदा द्वैत बुद्धेः।

३. विषयबोधेनेति क ख पुस्तके।

**श्रुतिरपि तदाह—'द्वितीयाद्वै भयं भवति' इति।**

**तच्चाद्वैतं ब्रह्मैवेदं सर्वमि'ति श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात्, विज्ञानमानन्दं ब्रह्मे'ति च श्रुत्या ज्ञानानन्दात्मतया व्यवतिष्ठते। तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते।**

---

सचेह नास्ति पारमार्थिकत्वादित्येव ग्रन्थार्थः। **पारमार्थिकमिति**। यस्माद् भेदप्रतीतिमेव श्रुतिः पारमार्थिकाद्वैतगोचरा उपजीवति अतः पारमार्थिकमद्वैतं शरणं प्रविश्य उपजीव्येन[१] व्यावहारिकविषयेण बाधनात्। विपर्यासत्वापादनाद् उत्पत्तिप्रतिबद्धरूपाच्च अद्वैतश्रुतेर्बाधमयाभावः श्रुतिरप्याह इत्याह - **श्रुतिरपीति**। द्वितीयाद् वै भयं भवति[२] पारमार्थिके चाद्वैते द्वितीया भावात् भयं न भवतीति श्रुतेः परमार्थतोऽर्थोऽत्रापि शक्यो योजयितुमित्याशयः खण्डनकृतः। न मनाग् = ईषदपि विभेतीत्यर्थः।

ननु श्रुतयोऽपि नानाविधाः काचिदद्वैतं सत्यमाह काचित् ब्रह्म पारमार्थिकमिति द्वयोः पारमार्थिकत्वे द्वैतापत्तिः। यच्च एकं "ब्रह्मास्त्र"मिति भवता ब्रह्मणः सत्यत्वं प्रतिपादितं [३]तदद्वैतस्यापि सत्यत्वं प्रतिपादयतो विरुद्धं स्यादित्याशङ्क्याह—**तच्चेति**। योऽयं स्थाणुः पुमान् एष[४] इति बाधायां सामानाधिकरण्यमिव ब्रह्मैवेदं सर्वमिति सर्वस्य ब्रह्ममात्रता श्रुत्या प्रतिपाद्यते तेनाद्वैतमेव ब्रह्म सम्पद्यते इत्यर्थः। ब्रह्मैवेदं सर्वमिति श्रुतेः परमार्थद्वैतरहितं सद् वस्तु तात्पर्यार्थः। तेनैकतापन्नं तदद्वैतं ब्रह्मैव स्यादिति योजना। तथापि ज्ञानस्य पारमार्थिकत्वात् द्वैतापत्तिरित्यत आह—**विज्ञानमिति**। वस्तुतो ब्रह्मण एव विज्ञानात्मकत्वात् नाद्वैतभङ्ग इत्यर्थः। ब्रह्मणो विज्ञानरूपत्वेऽपि वृत्तिज्ञानेन सद्वितीयत्वमाशङ्क्याह—**तेनेति**। ब्रह्मैव ज्ञानात्मकतया व्यवस्थितं तेन श्रुतिजन्यज्ञानमपि श्रुतिप्रतिपाद्ये विज्ञानाद्वैतब्रह्मस्वरूपे एव निविशते ततो न भिद्यते इत्यर्थं इति भट्टः।

विद्यासागरस्तु अद्वैतावाप्तिः न पुरुषार्थः ज्ञानानन्दयोरभावात् मुक्तौ ज्ञानसुखयोरुच्छेदादित्याशङ्क्याह—**विज्ञानमिति**। विज्ञानात्मकतया इत्यानन्दात्मताया अप्युपलक्षणम्। यद्वा अपुरुषार्थता परिहारार्थं स्वीकृताभ्यां ज्ञानानन्दाभ्यां सद्वितीयतापत्तिरिति शङ्कानिरासाय **विज्ञानमिति**। ननु नाद्वैतस्य विज्ञानात्मता श्रुतिजन्य-

---

१. उपजीवेन।

२. बृह० १।४–२।

३. तद् द्वैतस्य क ख पुस्तके।

४. पुमानेव सः।

५. स्वीकृताभ्यां सद्वितीयतापत्ति शङ्कानिशाय।

**ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते ? सत्यम्, एवं स्याद् यदि तस्य पारमार्थिकी श्रुत्या जन्यताऽपि स्यात् । अविद्याऽव्यवस्थिता तु तज्जन्यता न पारमार्थिकेनाजन्यत्वेन विरुद्ध्यते ।**

---

ज्ञानविषयत्वाद् धर्मवदित्त्याशङ्क्याह—**तेनेति** । वृत्तिज्ञानात्मत्वानुमाने सिद्धसाधनं तत्प्रतिविम्बितस्फुरितानात्मत्वानुमाने प्रज्ञानघनश्रुतिव्याकोप इति व्याचष्टे ।

वस्तुतस्तु अद्वैतं यदि द्वैताभावस्तदा शून्यता श्रुत्यर्थः स्यात् तर्हि साधु ब्रह्मवादसमर्थनमित्याशङ्क्याह—**तच्चेति** । इदं दृश्यं सर्वं ब्रह्मेति दृश्यस्य ब्रह्माभेदो वास्तवोऽसम्भवीति मिथ्यारूपस्याभेदस्य ब्रह्मरूपत्वे मिथ्यापदार्थस्याभावो भाव एव पर्यवस्यति अभावाभावस्य भावरूपत्वात् ।

ननु तथापि घटाभावाभाववत् जात्यापत्तिः तथा च तदपि दृश्यतया मिथ्या-स्यात् इत्याशङ्क्याह—यद् ब्रह्म तद् विज्ञानमिति श्रुत्या ज्ञानभिन्नत्वं बोध्यते । नन्वेवं तदेव चेत् ज्ञानं तदा श्रुत्या किं जन्यते नहि श्रुतिर्नित्यज्ञानजननाय समर्था । यदि तज्जन्यं न ज्ञानं तदा तस्याः प्रमाणत्वभङ्ग इत्याशङ्कामपनुदति । **यदिति** । अद्वैताकारं ज्ञानं यच्छ्रुत्या जन्यते तर्हि ज्ञानमद्वैतात्मकमेव । अत्र शङ्कते—**नन्विति विरुध्यते** ।

नहि ज्ञानस्य जन्यता वास्तवी सम्भवति ज्ञानाभावे श्रुतेरभावापत्तेः । नहि श्रुतिज्ञानयोर्भेदः प्रत्यक्षेण प्रमातुं शक्यते प्रत्यक्षस्य सर्वस्य अप्रमात्वात् । तर्हि श्रुतेः कथं (प्रामाण्य[१]) सिद्धिः, ज्ञानादेवेति । विज्ञानस्य श्रुतेः प्राक् सतः कथं [२]श्रुतिजन्यत्वमिति । कथं तर्हि श्रुतेः प्राक् ज्ञानं नासीदासीच्चेत् कथमद्वैतमानमिति चेदाकर्णय । ज्ञानमासीदेव परन्तु द्वैतविशिष्टतया श्रुतिस्तु द्वैतमध्यनिविष्टा अविद्याविलासरूपादि द्वैताभावात्मतया बोधयन्त्यपि निर्विकल्परूपामेव ताम् उत्पादितवतीति भवति जन्यता भ्रमः, पूर्वंविद्यमानमेव निर्द्धमकं ज्ञानमविद्यानिवर्तकं नासीत् परन्तु साक्षादात्मना साधकमेवासीत् अधुना तु श्रौतपरपदानुज्ञानयोग्यताज्ञानानन्तरमविद्यानिवृत्तिक्षमा जातेतिभवत्यन्वयव्यतिरेकप्रमाजन्यत्वभ्रम इति भावः ।

अत्र विद्यासागर,—वृत्त्युपाध्यविवेकेन तद्भेदजन्यत्वादिस्फुरणे परिकल्प्यते न स्वतो जन्यादिरित्यर्थः । वस्तुतो द्वैताभावब्रह्मणोरेकत्वे ज्ञानत्वे च सिद्धे

---

१. सिद्धि ।
२. प्राक्गतः कथं श्रुतिजन्यत्वेति ।
३. आसीसेचेत् कथद्वैत ।

**अत एव श्रुत्येदमेकं साध्यते। यत्तु तत्र यद्येकता भेदाभावः, यदि चैकत्व-संख्या, यदि वा ज्ञानात्मकत्वं, यदि वाऽन्य एवैकत्वनामा कश्चिदभेदापरपर्यायो धर्मस्तद्वत्त्वं बोध्यते। तच्चाद्वैतव्याघातकत्वान्न सेद्धुं शक्नोति, तदा तदपि निष्पीडनमसहमानं तज्ज्ञानं श्रुतिजन्यत्वेन सहैव निवर्तताम्।**

---

श्रुत्या अविद्यमानया कथं तस्य जन्यताऽपि अद्वैतश्रुतिविरोधादेव इति भावः। यदि वा **ज्ञानात्मकतेति।**

यदि विश्वस्य संवेद्यस्य संवेदनैक्यं तदा विज्ञानवादवद् ग्राह्यस्य ग्राहक[२]-भेदादद्वैतव्याघातः इति विद्यासागरः। ज्ञानात्मकता ज्ञानतादात्म्यं धर्मभेद इति तु वस्त्वर्थः।

**यदि वा अन्यएवेति।** घटादीनां परस्परमभेदोधर्मः तद्वत्त्वं बोध्यते। निष्पीडनं न्यायाघातम् असहमानम्[२]। न्यायश्च तस्य दृश्यत्वे सम्बन्धासम्भवान्न वास्तवम्[४] अदृश्यत्वे शशशृङ्गवत् असत्वं दृश्यादृश्यत्वे ब्रह्ममात्रत्वमित्यादि[3] प्रपञ्चबाधकखण्डनयुक्तिरूपः[५]। **निवर्ततामिति**। परमार्थिकरूपेण इत्यर्थः। **तदपराधादिति**[६]। आरोपितधर्मबाधरूपापराधादित्यर्थः। एवमद्वैतमुपदिश्य नात्र कुतर्केण प्रत्यवस्येयं स्वप्रयोजनहानिप्रसङ्गादिति करुणया शिक्षयति—**तर्केणेति।**

ननु [७]श्रुतिव्युत्पादनमेवं षण्ढमैथुनवदकिञ्चित्करमेव तदुपस्थाप्यस्य अद्वैतस्य त्वयैव निरसनात्। किञ्च द्वैतमेव तदुपास्थाप्यं किन्न व्युत्पादितं धर्मत्वेन तन्निवृत्तेरप्यद्वैतवदेव सम्भवात्। कथं वा श्रुतेः प्रामाण्यं धर्मबाधे तज्ज्ञानस्याप्रामाण्य-पर्यबसानात् तदप्रामाण्ये कथं[८] वा द्वैताद्वैतादि विना कर्तुं तस्य ब्रह्मणः सिद्धिः, स्वप्रकाशस्य ब्रह्ममात्रविषयत्वात्, धर्माभावे तस्यातन्त्रत्वात्, ब्रह्मणि चाविप्रतिपत्तेः। द्वैताद्वैतविचारस्य गर्दभीक्षीरमथनायमानत्वात् ब्रह्म सर्वैः स्वीक्रियते तदेकत्वं तु त्वयापि नाभ्युपगम्यते तथा च सर्वमिदमाकुलमिति तर्काकार इति मिश्राः।

---

१. वस्तुतः इति क ख पुस्तकें।
२. ग्राहकाभेदात्।
३. निवर्ततामित्यर्थः।
४. दृश्यत्वामिति शेषः
५. द्रष्टव्य इति शेषः।
६. तदपबाधादिति।
७. श्रुतिमुत्पादनमेवं षंडमैथुनवत् क ख पुस्तकें।
८. वा द्वैताद्वैतादिविनाकर्तुंस्तस्यब्रह्मणः।

**यत्तु तादृशस्याद्वैतस्य धर्मस्य धर्मितया प्रमितं तन्मात्रमबाधादधिगतं परमार्थतो व्यवतिष्ठताम्। न हि परमार्थशुक्ती रजततया प्रतीयते यदा, तदा बाधात्तत्र रजतत्वे व्यावर्तमाने धर्मिव्यक्तिरपि तदपराधान्निवर्तते।**

**सेयमद्वैतबुद्धिर्न तर्कशतमवतार्य प्राज्ञैरपनेया। यदाह श्रुतिः—"नैषा तर्केण मतिरापनेये'ति। तस्मात्—**

**धीधनाः! बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।**
**क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ॥२३॥**

---

**तन्मात्रमबाधादिति**। अत्र किमेकस्य अबाधाद् उत सर्वस्य। आद्ये अतिप्रसङ्गः अन्ते सिद्धिः बहूनामद्वैतबाध सत्त्वात्। सार्वश्यं विना सर्वबोधानिश्चयादिति तर्काकार इति श्रीपादाः।

**सेयमिति**। श्रुतेः निर्दोषायाः सत्यं ब्रह्मेत्यात्मिकाया जाता या बुद्धिः सा तर्केण न नाशनीयेति। तथा च तर्कापेक्षया श्रुतेर्बलवत्त्वं श्रुतिरेवाहेत्येतादृशस्तर्को ब्रह्मविषयो हेयः। मत्वा एषा ब्रह्माद्वैतविषयामतिः। तर्केण स्वविषयापादनेन[१] अपनेया न भवतीत्यर्थः। द्वयोरेकविषयत्वाभावात् श्रुतेः परमार्थविषयत्वात्, तर्कस्य मिथ्याविषयत्वात् इतिभावः।

विद्यासागरस्तु—अद्वैतबुद्धेः अद्वैतेन असम्बन्धे, न तद्बुद्धित्वं, सम्बन्धे च तस्य वास्तवत्वेऽसंगत्वहानिः कल्पितत्वे च कल्पितसम्बन्धत्वाद्रजतबुद्धिवदमानत्वमित्यादि तर्कस्तेन न नाशनीया क्लृप्तकारणाजन्यत्वस्यैव अमानतात्वप्रयोजकत्वेन कल्पितसम्बन्धस्य अप्रयोजकत्वात् तर्कागोचरत्वाच्च[२] श्रुतिविरोधान्नोदेतीति मन्तव्यम्। यद्वा कथिततर्ककलापादेव अद्वैतबुद्धिसिद्धेरद्वैतागम वैयर्थ्यमित्याशङ्क्याह—**सेयमिति**। अत्र प्रमाणमाह—**यदाहेति**। अपनेया प्रापणीयेति यावत् इति व्याचख्यौ। नान्यः पन्था विद्यतेऽयनायेतिशास्त्राद् अद्वैतमतिव्यतिरेकेण तदसिद्धेः तर्केण तन्मतिर्न निराकार्येत्याह—**तस्मादित्यादिना**।

धीधनाः पण्डिताः प्रपच्छथ अथ यदि हस्तप्राप्तं मणिं चिन्तामणिं समुद्रे प्रक्षेप्तुमिच्छथेति यदीदृशं दौर्भाग्यं स्यात् तदा अस्याः बाधाय प्रज्ञां कुरुथेति श्लोकार्थः। प्रयोजनाभावादियं बुद्धिस्त्यज्यते चेत्तत्राह—**सेयमिति**। निरस्तसमस्तदुःखं निरतिशयानन्दं विदेहकैवल्यं फलं यद्यपि शास्त्रदृष्टं तथापि ब्रह्मास्मीति निश्चयवतः संसारभयात् निवृत्तिः प्रत्यक्षमपि फलमस्येत्यर्थः। अत्र प्रमाणमाह—

---

१. स्वविषयापादने या न भवति।

२. तर्कागोचरश्रुतिविरोधन्नोदेति।

३. मिति।

**सेयमद्वैतदृष्टिर्दृष्टार्थाऽपि । यदाहुऽ—'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' । तस्मात्—**

**ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।**
**महाभयकृतत्राणा द्वित्राणां यदि जायते ॥२४॥**

---

**यदाहुरिति** । भगवच्चरणा इति शेषः । भगवद्वाक्यमेवाह—**स्वल्पमिति** । अस्येश्वरार्पितनित्यनैमित्तिकधर्मस्य स्वल्पं लेशोऽपि महतो भयात् संसारापरपर्यायात्[1] सत्त्वशुद्धिद्वारा ब्रह्मज्ञानोत्पादनेन संसारनिदानाज्ञाननिवर्तनात् त्रायते पालयतीत्यर्थः । अथवेदानीं मुमुक्षूनपि अद्वैतज्ञाने प्रवर्तयन् प्रयोजनान्तरमप्याह । सेयं दृष्टार्था संसार्यनुभाव्यप्रयोजना । अस्याद्वैतज्ञानरूपस्य सुकृतस्य स्वल्पमपि स्वरूपं महतो नरकपातादिभयादपि रक्षतीत्यर्थः । ननु विषयव्यासक्तचित्तस्य अद्वैतप्रमैव नोदेति, उदितापि असम्भावना विपरीतभावनाभिभूता नोक्तफलद्वयं जनयति इत्यद्वैतविचारो व्यर्थ इत्याशङ्क्याह—**तस्मादिति** ।

यस्मात् अद्वैतज्ञानस्य पुरूषार्थसाधनत्वं श्रुतिसिद्धं तस्मादेषा दृष्टार्था तावज्जायतेतामाह—**महाभयकृतत्राणेति** । एकस्य यदि न जायते तदापि द्वित्राणां जायते एव तेषामपि ईश्वरानुग्रहादेव ।

यद्यपि सर्वेषामद्वैतप्रमा नोत्पद्यते तथापि ईश्वरानुगृहीतामुत्पद्यत एवेति नाद्वैतविचारो व्यर्थः इति भावः । यद्वा-यस्माद् दृष्टादृष्टफला[2] अद्वैतदृष्टिर्बहुविघ्ना च तस्मादद्वैतवासना तत्संस्कारः पुंसां यदि जायते तर्हि ईश्वरानुग्रहादेवेति । विद्योत्पत्तिप्रतिबन्धककलुषनिर्वहणाय[3] ईश्वराराधने यतितव्यं मुमुक्षुभिः । तत्र हेतुमाह—महाभयकृतत्राणा वैराग्यादिसाधनस्य दुर्लभत्वात् विशिष्टाधिकारी दुर्लभ इत्याशयेनाह—**द्वित्राणामिति** । तथा च—

'मनुष्याणां सहस्रेषु कश्चिद् यतति[4] सिद्धये ।
यततामपि सिद्धानां कश्चित् मां वेत्ति तत्त्वतः[5] ।

इति भगवद्वाक्यं तेन सकृत् श्रवणाद्यनुष्ठानेन अद्वैतमतिर्नोत्पद्यते यदि तदा किं ततो निर्वर्तितव्यम् उत प्रवर्तितव्यमेवेति जिज्ञासायाम् आह—आवृत्तिरसकृदुपदेशात् इति

---

१. संसार पारम्पर्यात् ।
२. यस्माद् दृष्टफला ।
३. निर्वहनाय ।
४. कश्चिद्यतमिति सिद्धये ।
५. गीता अ० ७ श्लो० ३ ।

तस्मात्—

आपाततो यदिदमद्वयवादिनीनाम्,
अद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत् स्वप्रकाशपरमार्थचिदेव भूत्वा
निष्पीडितादहह ! निर्वहते विचारात् ॥२५॥

**तदिदमेताभिरात्ममतसिद्धसद्युक्तिलक्षणोपपन्नाभिः युक्तिभिरुपनीयमानमद्वैतमविद्याविलासलालसोऽपि श्रद्दधातु तावद्भवान् । तदनु च अनयैवोपनिषदर्थ-**

---

न्यायेन प्रवर्तितव्यमित्युपदिष्टमिति बोध्यम् । यद् वा अद्वैतवाक्यं श्रुतवतां शब्दसामान्यबोधसामग्रीमतामद्वैतबोधे, न वैराग्यादिमतोऽधिकारः किन्तु तद्वाक्यश्रवणेच्छा ईश्वरानुग्रहात् इत्याह—अद्वैतवासना अद्वैतं प्रति वासना=अद्वैतबुभुत्सेति । किं वा अद्वैतविषयकः संस्कारः तद् वाक्यार्थज्ञानं[1] तद्वाक्यश्रवणेच्छाधीनम् इच्छा च ईश्वरानुग्रहात् । यदि जायते तदेश्वरानुग्रहात् यदि वेदाः प्रमाणं स्युरितिवद् यदिशब्दयोजना ।

ननु यद्यद्वैतज्ञानस्य श्रुतिजन्यत्वमपि नास्ति तदा किं तत्र मानं कथं वा तत्रोपनिषन्मानम् । यदाहुः—तत्त्वौपनिषदं पुरुषं पृच्छामीति । किञ्चाद्वैतज्ञानं तावत् श्रुत्यजन्यमस्तीत्येतावतापि द्वैतापत्तिरित्याशङ्कामपाकुर्वन् महाप्रमेयमुपसंहरति[2]—**तस्मादित्यादिना ।**

आपाततो निष्पीडितविचारमन्तरेण अर्थत्वेन यदद्वैतमवगतं तन्निष्पीडितात् शोधिताद् विचारात् स्वयंप्रकाशा परमार्थरूपा अबाध्या याति तथाविधा भूत्वा स्वयमेव प्रतिष्ठितं भवति,"यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति" श्रुत्या वस्तुतो वाङ्मनसागोचरत्वस्योच्यमानत्वात् । अविद्यादशायामेव श्रुतिप्रामाण्यात् तज्जन्यं ज्ञानं प्रमात्रादिकं विलापयत् कतकरज इव सलिलमलं विनाश्य स्वयमपि विलीयते इति नाद्वैतस्य भङ्गः । स्वरूपसिद्धिस्तु स्फुरणाभेदेन स्वतः स्फुरणादित्यर्थः । **अहहेति**[3]। अविषयस्यापि विषयत्वप्रतिपादनोत्पन्नात्मीयचमत्काराविष्करणं तदित्थं त्वदङ्गीकृतसदविचारलक्षणोपपन्नैरेवंविधैर्विचारैरित्यारभ्य प्रतिपादितमुपसंहरति—**तदित्थमिति ।**

परार्थानुमानस्थानीया एता युक्तयः तथा च परेषां सद्युक्तिलक्षणोपेतत्वेन अस्मद्युक्तीनां सिद्धत्वादेताभ्यो निश्चयः सम्भवतीत्यर्थः । यद्यपि युक्तिविषयता नाद्वैतस्य सम्भवतीत्युक्तं तथापि ताभिः सहायभूताभिः श्रुतिभिः प्रतिपादितं युक्तिनिर्णीत-

---

१. तद् वाक्यार्थज्ञानात् ।
२. महाप्रेयमुपसंहरति ।
३. अहति ।

**श्रद्धया अध्यात्मं जिज्ञासमानः परमार्थतत्त्वं क्रमात् वृत्तिव्यावृत्तचेताः स्वप्रकाशसाक्षिकं माक्षिकरसातिशायि स्वात्मनैव साक्षात्करिष्यति ।**

**यथा च परिहृतचापलमात्मतत्त्वामृतसरसि निमज्य रज्यति निरायासमेव**

---

तात्पर्यमश्रुत्या उपनीयमानं समीपे स्थित्वा समर्प्यमाणम् अविद्याविलासोऽविद्याकार्यो भेदः [1] तल्लालसस्तदेकरुचिरित्यर्थः। नन्वात्मज्ञानान्निःश्रेयसाधिगम इत्येव सर्वसम्मतमिति किमनया अद्वैतश्रद्धया इत्याशङ्क्याह-**तदिति**। तदनु परमात्मतत्त्वं भवता आत्मनैव साक्षात् करिष्यते इत्यनुषज्यान्वयः।[3] **आत्मनेति**। इत्थंभावे तृतीया। एवकारश्च भेदाभेदव्यावृत्यर्थः वस्तुसिद्धिः प्रमाणाधीना कथं श्रद्धामात्रा स्यादित्याशङ्क्याह-**अध्यात्ममिति**। **जिज्ञासमान इति**। ज्ञानेच्छयोरन्तर्णीतं[4] विचारं लक्षयति **अध्यात्ममिति**[5] तत्त्वं पदार्थम्। श्रद्धावान् लभते ज्ञानमिति स्मृतेः[6] उपनिषदर्थं श्रद्धया गुरूपसर्पणपूर्वकं तत्सन्निधौ वेदान्तानां शक्तितात्पर्यनिर्णयात्मकं श्रवणं कुरु इत्यर्थः। सकृत् श्रवणमात्रेण [7]पिशाचवदाप्नुयात् श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते ततोऽपर इति न्यायेनाधिकारिणां बहुविषयत्वाद् बहुविधानि साधनानि उपदिशति **क्रमादिति** वृत्तिभ्यः स्वाभाविकीभ्यः शब्दादिगोचराभ्यः व्यावृत्तचेतो यस्य स तथा। अनेन विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययसन्ततिकरणं निदिध्यासनमुपदर्शितं क्रमादिति च मननं दर्शितम्। मनननिदिध्यासनाभ्यां विषयदोषकर्तृदोषापनये श्रवणेन च करणदोषेऽपनीते फलोपकार्यङ्गाभ्यां[8] सहकृतात्[9] श्रवणात् साक्षात् करिष्यते इत्यर्थः। श्रौतनिश्चयेन साक्षात् क्रियमाणस्य बलादापतितं तु जड़त्वमित्यत आह-**स्वप्रकाशेति**। वृत्त्यभिव्यक्ततया स्वत एव सिद्धेर्न जडत्वमित्यर्थः। स्वसमवेतसुखसाक्षात्कारस्य पुरुषार्थत्वादद्वैते तदभावात् अपुरुषार्थता इत्याह-**माक्षिकेति**। मधुमक्षिकाभिरुपचितो रसो मधु, तदतिशेतुं शीलं यस्य। अनेन आनन्दरूपतोक्ता। सुखसाक्षात्कारत्वेनैव पुरुषार्थता ननु स्वसमवेतत्वविशेषितेन मानाभावादितिभावः। ननु मनसोऽतिचञ्चलत्वात् तत्सहकृतश्रवणस्य कथमपरोक्षसाधन-

---

१. तन्नाशः।

२. आत्मज्ञानाभिः श्रेयसा।

३. अनुषज्यान्नया।

४. अन्तर्नीतं।

५. च त्वं पदार्थं।

६. गीता अ. ४ श्लोक ३९।

७. पिशच करदामुपात्।

८. फलोपकार्यताभ्याम्।

९. सहकृता।

**मानसम्, तथाऽहमकथयं नैषधचरितस्य परमपुरुषस्तुतौ सर्गं इत्येषा दिक् ।**

त्वमित्याशङ्क्याह—**यथेति** । नैषधाख्ये यत्काव्ये परमपुरुषस्तुतिपरे सर्गे अभ्यास-वैराग्यादिसाधनमकथयमित्यर्थः । सत्यज्ञानादिपदानां पर्यायत्वे[१] पदान्तरवैयर्थ्यम् अपर्यायत्वे अखण्डार्थनिष्ठत्वासिद्धिरित्याशङ्क्याह —**इत्येषा दिगिति**[२] । अद्वैतसाधने इतिशेषः । अकार्यकारणद्रव्यमात्रनिष्ठं समानाधिकरणवाक्यस्य सोऽयं देवदत्त इति वाक्यवत् प्रवृत्तिनिमित्तभेदे[३] सत्यपि लक्षणया अखण्डनिष्ठत्वमितिविद्यासागर-व्याख्या खण्डनकृतां विरुद्धैव । खण्डनकृद्भिः [४]श्रद्दधातु भवानित्यादिना साक्षात्कारपर्यन्ततताया उपदेशाद् उपदेशाय गुर्वन्तरगमनस्यानौचित्यात् । तत्त्वमस्यादि-वाक्यार्थजिज्ञासायाः कार्यत्वेऽनयैवोपनिषद् ब्रह्मया इत्यद्वैतोपनिषद् ब्रह्मया हेतुत्व-वर्णनञ्चायुक्तमित्यन्यथा[५] व्याख्येयम् । तत्र आत्मानं भोक्तारमधिकृत्य वर्तमानमन्तः-करणं तत्र स्वहृदये परमात्मतत्त्वं जिज्ञासमानः क्रमेण विषयोन्मुखवृत्तेर्व्यावृत्तं चेतो यस्य स तथा[६]भवान् स्वयमेव साक्षात् करिष्यते इति श्रीपादैर्व्याख्यातम् । वस्तुतस्तु यदि धर्मिमात्रमेवाबाधितं तदा तत्र किं मानं वाक्यस्य धर्मिमात्रागोचरत्वात् विशिष्टज्ञानमेव हि ततो जायते । किञ्च तस्य विज्ञानत्वमानन्दत्वमपि नास्तीति जडता पुरुषार्थरूपताहानिश्च स्यादित्याशङ्क्याह—**तस्मादिति** । सत्यं, धर्मविशिष्ट-ज्ञानमेव शब्दाज्जायते तत्रापि च यदा पुनर्द्वैतापत्तिस्तदा तात्पर्यविषयाद्वैतोपपत्तये धर्मा अपि सत्यत्वानन्दत्वज्ञानत्वाद्वैतत्वादयो व्याघातान्न सिध्यन्ति परन्त्वापाततो भवत्प्रतिबोधायेदमुक्तम् । भवता च स्वमते सद्युक्तिभिरिदमवगतं,[७] तत्र बाधकसत्त्वे तदेवोद्भाव्यताम् । यदि च बाधकोद्भावनासमर्थस्यापि मम तत्र रूचिर्न जायते इति ब्रूषे तदापि त्वन्मतस्य त्वयादृष्टत्वेन अवधारितत्वात्ततः श्रद्धामपनीयास्मत्प्रतिपाद्ये श्रद्धां कुरु, अविद्याकार्यस्वर्गपशुपुत्रादिषु लालसावान् ननु नित्यानन्दात्मकमोक्षेच्छा-वान् । तच्च नित्यसुखम् आत्मनैव =स्वाभेदेनैव साक्षात् करिष्यते न [१०]नानाश्रयेण सह द्वैतम् । अद्वैतभानन्तु न तत्र प्रमाणं स्वप्रकाशसाक्षिकं हि तत्, तेन मानमेयादि-खण्डनदोषास्तत्र न निपतन्ति ।

१. तदांतर ।
२. एषादिति ।
३. निवृति ।
४. अश्रद्धातु ।
५. वस्तुनं ।
६. भगवान् ।
७. इदमगतं ।
८. तत्र बाधत्त्वसत्त्वे तदोवो ।
९. यदि च बाधकोद्भविता ।
१०. ननाश्रयेण ।

ननु परमात्मतत्त्वं स्वाभिन्नमेव चेत् तदा परमानन्दात्मना कथं न भातीत्याशङ्क्याह—**क्रमादिति**। व्यावृत्तचेता अधुना वृत्तौ जीवनोपाये अध्यापनादौ भवच्चित्तं व्यावृत्तमस्ति। यदातूपनिषदर्थे अविद्यादशायां श्रद्धा भविष्यति तदैव तत्प्रकटी भविष्यति, तथा च चेतसो विषयलालसा तत्स्फूर्तिविरोधिनीति भावः। ननु चञ्चलं मनः तस्य विषयवैमुख्यं [1]तन्निग्रहसाध्यं, तन्निग्रहः कथं भवति—यदि योगात्तर्हि तमेवोपदिशन्तु[2] भवन्तः इति प्राणायामाद्यभ्यासः कार्यश्चेत्तर्हि अलमद्वैतशास्त्रश्रद्धयेत्याशङ्क्याह—**निरायासमेव मनो निमज्जति**=आयासं विनैव परिहृतचापलं यथा स्यात् तथा निमग्नं सदनुरज्यति यथा तथा अहमकथयमिति। ननु तथापि आनन्दत्वं यत्र नास्ति स कथमानन्दः आरोपितेन आनन्दत्वे नेति चेत्तर्हि शुक्तिरपि तेन रजत्वेन रजतं स्यात्। अनानन्दत्वम् आनन्दभिन्नत्वं तदपि तत्र नास्ति आनन्दत्वस्येव तस्यापि धर्मत्वादिति चेन्न। आनन्दत्वाताश्रये आनन्दव्यवहारादृष्टेः। न च सर्वव्यवहारातीतोऽलौकिक एवायमानन्द इति वाच्यम्। लौकिकवैदिकपदार्थयोरैक्यस्य लोकविदाधिकरणसिद्धत्वात्। न च वाक्यार्थ एवायमानन्दः, वाक्येन आनन्दत्वबोधने द्वैतापत्तेः। नच सर्वथाऽलौकिके वस्तुनि कस्यापि इच्छा भवितुमर्हति स्वर्गादेरपि लौकिकसुखसजातीयत्वात्।

अत्र केचित् अनानन्दव्यावृत्तिमात्रमानन्दत्वं नतु स्वसिद्धः आनन्दो ब्रह्म धर्मः[4] धर्मधर्मिभावानङ्गीकारात्। नच व्यावृत्त्यापिद्वैतापत्तिः तस्या आश्रयानतिरेकात्। एतेन ज्ञानत्वादयोऽपि व्याख्याता इत्याहुस्तन्न। व्यावृत्तेरपदार्थत्वाद् अपोहवादापत्तौ यावतीनां तन्निराकरणयुक्तीनामापत्तेः व्यावर्त्तकधर्माभावात् व्यावृत्तेरप्यसिद्धेः। नच स्वरूपेणैव व्यावृत्तिः ब्रह्मणो व्यावृत्तत्वे ब्रह्मतैव न स्यात्।

अन्ये तु आनन्दत्वादयो यत्र कल्पिताः त एवानन्दादिपदार्था लोकेऽपि प्रसिद्धाः तत्राप्यानन्दत्वादीनां कल्पितत्वात्। नच एतावता आनन्दस्य क्वचित् क्षतिरस्ति आनन्दत्वस्यानुपादेयत्वात् तदाश्रयव्यक्तेरेवेष्यमाणत्वादिति। तदप्यसत्। विशिष्टस्यैवानन्दपदार्थत्वे व्यक्तिमात्रे तदनुपपत्तेः। कल्पितानन्दत्वाश्रयस्य आनन्दत्वप्रसङ्गाच्च। नहि यो धर्मो यत्र न स्वाभाविकः तदन्तर्भावितपदार्थः सम्भवति शुक्त्यादेरपि रजतपदार्थतापत्तेः। अत्र प्रकाशानन्द सरस्वती श्रीपादाः—यदि लोके आनन्दत्वविशिष्ट एव आनन्दपदार्थः तदा आत्मैव आनन्दपदस्य[5] मुख्यार्थः एकस्यैव

---

१. मनोनिग्रह साध्यमित्यर्थः।

२. तमेवोपदिशति भवन्तः इति पाठः क ख पुस्तके।

३. आनन्दत्वाताश्रये।

४. आनन्दो ब्रह्म धर्मधर्मिभावानङ्गीकारात्।

५. आनन्दपत्तैदस्य क पुस्तके।

## ९. खण्डनयुक्तीनां यथेष्टविनियोगः

**अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।**
**तत्तानि कस्मान्न यथाऽभिलाषं सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥२६॥**

---

नानोपाध्यनुप्रविष्टस्य अनुगतव्यावृत्तधी हेतुतया [1]जातित्युभयरूपतोपपत्तेः उपाध्यनुप्रविष्टजलचन्द्रवदित्युक्तं लक्षणास्थले। यद् वा व्यक्तावेव सर्वत्र पदस्य शक्तिः नचानन्त्यव्यभिचारो दोषः, विशिष्टशक्तिपक्षेऽपि तुल्यत्वात् विशेषणाभेदेऽपि विशेष्यभेदेन प्रति विशेष्यं विशिष्टभेदात् तस्मादशक्येनापि शक्यतावच्छेदकेनानुगतव्यावृत्तव्यवहारयोर्जनयितुं शक्यत्वात् तत्रापि शक्तिकल्पने मानाभावः हेतुस्वरूपवहिर्भूतस्य हेतुतावच्छेदकत्वादित्याहुस्तदपि न युक्तम्। धर्मेण द्वैतापत्तेः, आद्यस्य अशुद्धत्वात्, द्वितीये तु का व्यक्तिर्वाच्या आनन्दत्वोपलक्षिता व्यक्तिरिति चेत् आनन्दत्वं कल्पितं चेत् तर्हि धर्मिणो नानन्दरूपता अन्त्ये द्वैततादवस्थ्यमिति। अत्राहुः—

यत्रानन्दादिना[2] आनन्दत्वकल्पना स एवानन्दः। नहि दुःखाभावे पुत्रादौ वा तथा, तत्र कल्पनायाः शुक्तिरजतादिवत् प्रातीतिकत्वात्। अवश्यं हि आनन्दत्वं पारमार्थिकमिच्छताऽपि तस्य सम्बन्धार्थं व्यक्तिरपि विलक्षणा स्वीकार्येति तदुत्तरं सैवास्तु लौकिकानन्दे आनन्दशब्दप्रयोगोप्यनाद्यभेदकल्पनात एवोपपद्यमानो न जातिकल्पनायै नवा व्यक्तिभेदकल्पनायैव प्रभवति, एवं सत्य[3] ज्ञानाद्वैतशब्दानामपि। यद् वा यत्रानन्दभेदकल्पना[4] त एव उपपद्यमान एव न जातिकल्पनायैव प्रभवति। एवं सत्यज्ञानानन्दो व्यवहारगोचरोऽनाद्यविद्याकल्पितै धर्मैः। वस्तुतस्त्वेकमेव यथा एकस्मिन्नेव पिण्डे पिता[5] दृष्टो मातुलश्चेति एवमभिसन्धायाह— दिगिति[6]।

ननु खण्डनयुक्तिभिः पराभिमतलक्षणानामेव दूष्यत्वाद् अस्मदभिमतानां स्वप्रकाशादिलक्षणानां सिद्धावद्वैतव्यापकोप इत्याशङ्क्याह-—**अभीष्ट सिद्धाविति।** यथा राज्ञामाज्ञा स्वीयेषु परकीयेषु न पतिता[7] तथा पराभिमतलक्षणेष्विव स्व-

---

१. जातिंगत्युभय इति ख पुस्तके।
२. यत्रानादिवानन्दत्व इति ख पुस्तके।
३. एवं सति।
४. कल्पना मिथ्या स आनन्दः एवं सत्यादि पदानामपि एकमेव च वस्तु सत्यानन्दादि यदि नानाव्यवहारगोचरोऽनाद्यविद्याकल्पितैः धर्मैः इति ख पुस्तके।
५. पिण्डेऽपि दृष्टो मातुलश्च।
६. दिगति।
७. व्यापकोपः क ख पुस्तके।

**तदेतादृशीषु सर्वास्वपि दर्शनस्थितिषु काममास्माकीनाः खण्डनयुक्तयः प्रगल्भन्ते, यासामीश्वरपरवशां विश्वव्यवस्थामनास्थाय निरसनमशक्यं तासामेवा-**

---

प्रकाशादिलक्षणेऽपि संभवति तत्रापि योजयध्वम् । तथाच खण्डनयुक्तिवाध्यैर्व्यवि-हारिकैरेव स्वप्रकाशत्वादिव्यवहारासिद्धेर्न कोऽपि दोष इति भावः । अथ पूर्वमेव तत्तद्युक्तिभिः प्रतिपक्षनिरासस्य कृतत्वात् त्वदीया खण्डनयुक्तयो वृथेत्याशङ्क्-याह—तदेतदेतादृशीषु लक्षणद्वारा लक्ष्यनिरूपणपरासु सर्वास्वपि दर्शनप्रक्रियासु आस्माकीनाः खण्डनयुक्तयः प्रगल्भन्ते नान्यदीया इत्यतो न वृथा इत्यर्थः । यथा युष्मत्सिद्धान्ते लब्धावकाशा अपि खण्डनयुक्तयो न वाध्याः[२] एवमस्मत्सिद्धान्त-ऽस्यापीत्याशङ्क्याह—**यासामिति** । ईश्वराधीनमायाकल्पितां प्रपञ्चविचित्रा-माश्रित्य अस्माभिः खण्डनयुक्तीनां निरसनं शक्यं, दुर्घटत्वं हि मायाया भूषणं[३] नतु दूषणमिति न्यायात् । युष्माभिस्तु न तथा शक्यं वक्तुमित्यर्थ इति भट्टाः । खण्डनानां प्रतिपक्षप्रतिक्षेपफलत्वात् तत्र विजिगीषूणामेवाधिकारो न मुमुक्षूणां तत्त्वनिर्णय-फलत्वाभावादित्याशङ्क्याह—**अभीष्टेति** ।

एवमुक्तन्यायेन खण्डनानाम् [५]अद्वैताद्यभीष्टसिद्धावाज्ञासामर्थ्यं नाखण्डि यथा राज्ञां परपक्षप्रतिक्षेपे स्वपक्षप्रतिपालने च । ननु अद्वैतं श्रुतिप्रमाणकं न्यरूपि, निरूपयिष्यसि च, प्रमाणादिलक्षणासम्भवं तत्कथं सिद्धान्तसिद्धिरिति आशङ्क्याह—**तत्तानीति**[६] । प्रमाणप्रमेयविभागस्य तत्त्वांशखण्डनेऽपि ज्ञानोत्पत्ते[७]-रर्वाक् व्यावहारिकं सर्वमवाधितं यस्मात् तस्मात् सैद्धान्तिकेप्यध्वनिखण्डन-वाक्यानि कस्मान्न यथेच्छं योजयध्वं योजयध्वमेवेत्यर्थः । तदुक्तं ब्राह्मणेन "यत्र द्वैत-मिव भवति तदितर इतरत् पश्यतीति" विद्यासागरः । **यासामिति** ।[८] प्रसिद्धप्राग-ल्भ्यानां यासामित्यादिरेक अन्योवा अवतारणार्थमवतारज्ञापनार्थं प्रावादुकानां = प्रवादुका एव प्रावादुका[९] वादिनः तेषां प्रवादाः = सिद्धान्तवाक्यानि

---

१. खण्डितेत्यर्थः ।

२. नस्यवाध्य ।

३. दूषणमिति क ख पुस्तके ।

४. कल्पितां ।

५. अद्वैतामभीष्टसिद्धा राज्ञा । क ख पुस्तके ।

६. तत्रादीति क ख पुस्तके ।

७. ज्ञानोत्पत्तिरर्वाक् क ख पुस्तके ।

८. तासामिति ।

९. एवाप्रवादुका ।

वतारणार्थमयं प्रावादुकप्रवादोपन्यासः। तथा हि—यदि शून्यवादानिर्वचनीयपक्षयोराश्रयणम्, तदा तावदमूषां निराबाधैव सार्वपथीनता।

यदि तु प्रमाणादिसत्ताभ्युपगन्तृमतावलम्बनम्, तदाऽपि लक्षणखण्डनयुक्तीनां लक्षणविशेषखण्डने लक्ष्यखण्डनयुक्तीनां च तद्विषयप्रमाणादिविशेषखण्डने प्रत्येकं तात्पर्यम्।

न च सौत्रादिलक्षणखण्डने अपसिद्धान्तापत्तिः, तादृश्याः सूत्रादिव्याख्यायाः खण्ड्यमानत्वात्। न च वाच्यं लक्षणविशेषवस्तुव्यवस्थापकप्रमाणविशेषसूत्रादिव्याख्याविशेषखण्डनपरत्वेन लक्षणान्तरं प्रमाणान्तरं व्याख्यान्तरं च वाच्यं प्रसज्येत भवतोऽपीति, वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात्। तत्र च व्यावृत्य स्वपक्षनिर्वाहं प्रति पर्यनुयोगानवकाशात्।

---

तेषामुपन्यासः क्रियते इति शेषः। यद्यपि "लषपत[1]" (३।२।१५४ अष्टाध्यायी) इत्यादि सूत्रे वदतेरनुपादानात् प्रावादुको न सिध्यति तथापि व्याकरणान्तरं दृष्ट्वा प्रयुक्तवानिति भट्टाः। वस्तुतस्तु अवयवव्युत्पत्तिशून्योऽयं प्रावादुकशब्दो रूढः कुण्डादिशब्दवदिति ध्येयम्। नहि कुण्डगोलकादिशब्दा अपि सिद्धावयवार्था इति। **निराबाधेति**। मध्यमकस्य ब्रह्मवादिनश्च[2] स्वस्यापि पक्षाभावात्[3] सार्वपथीनत्वं निर्बाधमित्यर्थः। सार्वपथीनत्वं सर्वलक्षणप्रमाणवर्त्मप्रवेशिता।

ननु वैशेषिकादिमतमभ्युपेत्य चेत् खाण्डनिकः प्रमाणादिलक्षणं खण्डयति तदापसिद्धान्तापातान्न सार्वपथीनता स्यादित्याशङ्क्याह—**यदित्विति**। तु शब्दो व्यवच्छेदे लक्षणविशेषखण्डने प्रतिवाद्युक्तलक्षणविशेषदूषणे तात्पर्यं तद्विषयप्रमाणविशेषखण्डने प्रतिवाद्युक्तप्रमाणविशेषस्य दूषणे इत्यर्थः। तथा च लक्षणलक्ष्यप्रमाणयोरन्वया[4]स्वीकारान्नापसिद्धान्त इतिभावः। प्रतिवादिना सूत्रकारभाष्यकारोक्तानां लक्षणलक्ष्याणामुपन्यासे अपसिद्धान्तापत्तिमाशङ्क्य परिहरति—**तादृश्या इति**। **स्वपक्षनिर्वाहं प्रतीति**। स्वपक्षस्थापनाहीनत्वाद् वितण्डायाः स्वपक्षस्थापनाङ्गानां[5] प्रमाणादीनामवक्तव्यत्वमित्यर्थः। दर्शनभेदेन खण्डनावसरमभिधाय दर्शनाभेदेऽप्याह—**एवञ्चेति**। स्वपक्षनिर्वाहप्रतिवादिपर्यनु-

---

१. लखपतेत्यादि। "लषपतपदस्थाभूवृषहनकमगमशॄभ्यनुकञ्" इतिशम्।

२. बह्मवादिनः।

३. साधनीयाभावात् इत्यर्थः।

४. अन्वयोः स्वीकारात्।

५. स्यपनादीनाम् क ख पुस्तके।

एवं च सति वादिदर्शनमाश्रित्यापि खण्डनप्रयोगो निर्बाध एव, एकदेशिवत् प्रत्यवस्थातुं शक्यत्वाद् वैयाकरणानामिव च शब्दसिद्धिप्रश्नस्य परकीयतत्त्वज्ञान-निरूपणार्थं समानपक्षस्थित्याऽपि पर्यनुयोगसांव्यवहारिकतायाः संभवात् ।

वस्तुस्थितिं कुर्वाणेन च विचारकेणावश्यमेता युक्तय उद्धरणीयाः । अन्यथा वस्तुस्थितेरशक्यत्वादिति वादेऽपि प्रयोगः संभवत्येव खण्डनयुक्तीनाम् ।

जल्पस्त्वेका कथा न संभवत्येवाऽसामयिकी, वितण्डाद्वयशरीरत्वात् । अन्यथा

---

योगानवकाशे सतीति कथं तद्दर्शनमेवाश्रित्य कथं तदुपन्यस्तं लक्षणप्रमाणखण्डन-मित्याशङ्क्याह—**एकदेशिवदिति** ।

एकदेशिनामस्ति प्रमेयांशे कुत्रचिद् वैलक्षण्यमिति । अत्यभिन्नप्रमेयेऽपि खण्डनावताराय आह—**वैयाकरणानामिवेति** । **समानेति** । एकमताश्रयणेनापि संवा-दिनः सत्त्वाद्यनन्तरं प्रति पर्यनुयोगस्य व्यवह्रियमाणतायाः सम्भवात् इत्यर्थः ।

**वस्त्विति** । खण्डनानुद्धारे वस्त्वसिद्ध्यापत्तेः । खण्डनैरेव खण्डनोद्धारः कार्य इत्यर्थः । **एका (कथा) न सम्भवत्येवेति** । किन्तु कथाद्वयमित्यर्थः । ननु जल्पः कथान्तरमेव पक्षप्रतिपक्षस्थापनावत्वात् वितण्डायां तु द्वितीयस्य प्रतिपादिनः[1] स्थापना नास्तीति महद् वैलक्षण्यम् । तथाहि—"यथोक्तोपपन्नश्छलजातिनिग्रह-स्थानसाधनोपालम्भो जल्प[2]" इत्यक्षपादसूत्रम् । यथोक्तस्य[3] च पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रह इत्यक्षपादीयाः प्राहुरित्यत आह—असामयिकी = पारि-भाषिकी संकेतं विना न्यायतो विचार्यमाण इत्यर्थः । कथं नास्तीत्यत्र हेतुमाह—**वितण्डाद्वयेति** । वादिना स्वपक्षस्थापनार्थमुपन्यस्ते प्रमाणे प्रतिवादी वादिपक्षं[4] यदा दूषयति तदास्य स्वपक्षसाधनावसराभावात् दूषयित्वैव[5] निवर्तते इत्येका वितण्डा, दूषितश्च वादी यदा प्रतिवादिपक्षं दूषयति तदा तत्पक्षस्य साधनानर्हत्वात् सोऽपि[6] प्रतिपक्षं दूषयित्वैव निवर्तते इत्यपरा वितण्डा इति सिद्धं वितण्डाद्वय शरीरत्वं जल्पस्य । अथ वादी स्वमतसाधनपुरस्सरं परमतनिरासं जल्पे करोति, अस्ति च

---

१. प्रतिपादिनं क ख पुस्तके ।

२. न्यायसू० । प्र०अ०२।२·······

३. तस्य चेति पाठः । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरूद्धः पञ्चावयवोपपन्नः पक्षप्रति-पक्षपरिग्रहोवादः इति वादलक्षणम् । पञ्चावयवोपपन्नपक्षप्रतिपक्षं परिग्रहेति पदद्वयं यथोक्तपदेन जल्पलक्षणे संगृहीतमिति ।

४. वादे पक्षं पादा ।

५. दूषयति द्वैत ।

६. सापि ।

प्रतिवादिनोऽपि पक्षपरिग्रहः ननु वितण्डायां स्थाप्याभावात् वितण्डायां तु परमत-निरसनमेवेति कथं वितण्डातो न जल्पः पृथक् इत्याशङ्क्याह— **अन्यथेति** । स्वपक्ष-साधनपुरस्सरं परपक्षमुपालभ्य पुनः पक्षोपालम्भनपुरस्सरं स्वपक्षसमर्थनमेका चतुर्थी कथापि स्यादित्यर्थः । पिष्टपेषणवदनर्थकं वादिनो द्वितीयस्वपक्षसाधनादिति चेन्न । स्थूणाखननन्यायेन दाढ्र्यस्य प्रयोजनत्वसत्त्वात् जल्पतः पृथक् फलाभावात् नैव-मिति चेद् वितण्डातः पृथक् फलाभावस्य जल्पेऽपि तुल्यत्वात्, तथाच वितण्डायां प्रवेश एव जल्पे प्रवेश इति भाव इति विद्यासागरः । तदसत् । वादिना स्वपक्ष-साधनमुपन्यस्य विरत एव प्रतिवादिवाक्यान् मध्यस्थानामाकाङ्क्षोदयात् मध्यस्था-वगमस्य तेनाजननात् तद्वैयर्थ्यापत्तेः । अन्यथा पुनः प्राग्वत्[1] प्रयोगापर्यवसानं श्रान्तिपर्यवसितो वा प्रयोगः स्यादिति कथा नैतादृशी सम्भवति । जल्पस्तु एकस्य [2]प्रमाणोपन्यासानन्तरं प्रतिवादिपक्षपरिग्रहः प्रमाणाभ्युपगमोपन्यासात्मको मध्यस्याकाङ्क्षितत्वादुपपद्यत एव । यदि च तत्रापि प्रतिवादी परपक्षदूषणमेव प्रथम-मुद्भावयति तदा भवतु साप्येका वितण्डा मध्यस्याऽप्याकाङ्क्षितप्रतिवादिवचनात् तदपि बुध्यते उत्तरकालं तु तदीयां स्थापनामाकाङ्क्षति प्रतिवादिनः स्वपक्षस्था-पनासामर्थ्यज्ञानाय, तदा तदुत्तरं प्रतिवादिना ससाधनस्थापनीयायां[3] ( पदे वादी स्वपक्षदूषणमेव परिहरति प्रथमतो न परपक्षं तदा कथं द्वितीयापि तस्याः खण्डना-करणादिति कथं वितण्डाद्वयात्मको जल्पः । यदि समयबन्धात् द्वितीयोऽपि) परपक्षं दूषयित्वा स्थापनां कुर्वन् वादिना तद्दूषणेनैव पराजेयः तथासति प्रतिवादिदूषण-सामर्थ्यमिव वादिनोऽपि दूषणसामर्थ्यं मध्यस्थावगतं भवतीत्युच्यते तथापि भवदुक्त-कथान्तरासम्भवः । उन्मादविरहदशायामिति त्वदुक्तप्रकारस्तु जल्प एव नेति जल्पद्वयेनेति ग्रन्थविरोधः । अथ भवत्वेवं वितण्डाद्वयं तथापि यत्र स्वपक्षस्थापना परपक्षदूषणसामर्थ्यं च द्वयोर्निरूप्यं तत्र द्वयोरपि स्थापनात् तन्न वितण्डा, जल्प एव "स प्रतिपक्षस्थापना हीनो वितण्डेति" सूत्रात् । तथा च तत्र जल्पे खाण्ड-निकस्याप्रवेश एवेत्याशङ्क्याह — तादृशसमयाधीनकथाप्रवृत्तौ खण्डनावतारेऽपि न क्षतिः प्रमाणसिद्धकथाभेदे एव खण्डनप्रागल्भ्यस्योक्तत्वात् । नन्वयमेव जल्पः किमिति प्रामाणिको न भवति स्थापनायां खण्डनावतारेण दुष्टत्वादेव हि । **अन्य-थेति** । स्वपक्षद्वयस्थापनपरपक्षद्वयनिराकरणशक्तिनिरूपणार्थे जल्पद्वयेनापि कथान्तरं स्यादित्यर्थः । पक्षद्वयस्थापनं नानाविशेष्यकनानासाधनसाध्यम् एकदा न सम्भवति वचसः क्रमभावित्वात्, क्रमप्रयोगे च नानैव जल्प इति चेन्न । एकैकं

१. प्राग्यतः ।

२. प्रमाणाभ्युप्रमाणाभ्युपन्यासानन्तरं क ख पुस्तके ।

३. स्थापनीयोऽपि परपक्षं दूषयित्वा स्थापनां कुर्वन् वादिना तद्दूषणेनैव पराजेयः इति पाठः ख पुस्तके । क पुस्तके उपलभ्यमानः कोष्ठान्तर्गतः पाठः ख पुस्तके नास्ति ।

**जल्पद्वयेनापि किमित्येका कथा न कल्प्यते। अवोचाम च जल्पविचारप्रस्तावे विस्तरेणैतदिति।**

---

स्वपक्षं क्रमेण प्रयुज्य साध्यञ्च पश्चाद् [१]यथासंख्यमेतावतीमेकां कथामपरिसमाप्यैव कथान्तरं सहितमेव कुर्यात्। यदि च नैवं कथकानां समयोऽस्तीत्युच्यते तदैकदैव शक्तिद्वयं निरूप्यमिति कथन्नास्ति, एकस्याः शक्तेर्निरूपणादेव प्रशंसापात्रत्वात्। तस्मादेकस्याः शक्तेर्निरूपणमेव शक्यं चेत् खण्डनमवतार्येति स्थापना पक्षः त्याज्यः अतएव सूत्रमपि[२] (जल्प एव) प्रतिपक्षस्थापना हीनो वितण्डेति। प्रतिवादिनः स्थापना=प्रतिपक्षस्थापना इत्यर्थः। ननु यदि अस्य स्थाप्यो नास्ति तर्हि प्रतिपक्षाभावात् प्रतिपक्षहीनेत्येवोच्यतामिति चेन्न। परस्थापनाखण्डनादेव तद्विपरीतोऽसत् पक्षः सेत्स्यतीत्यभिप्रायेण वैतण्डिकप्रवृत्तेस्तस्यापि पक्षोऽस्त्येव नतु स्थाप्य इत्याशयेन स्थाप्यो नास्तीत्युच्यते। अस्थाप्यत्वे कथं पक्षत्वमिति चेत् स्थापनयोग्यत्वेनैव हि पक्षपदप्रयोगादिति कस्यचित्सूत्रव्याख्यानमशुद्धम्। खाण्डनिकस्य स्थाप्यासत्त्वे[३] स एवास्य स्थाप्यः पक्ष इति खाण्डनिकत्वं विजहातीति भाष्यविरोधः। शून्यवादिनां प्रमाणाद्यपि नास्तीति शून्यता व्यवस्थापनसामर्थ्याभावेऽपि खाण्डनिकत्वात् प्रतिपक्षहीनेति करणे कथं तद्धीनतेत्याकाङ्क्षायां तन्निराकरणार्थमेव स्थापनावद[४] प्रयोगात्, यतः प्रतिपक्षस्थापना नास्ति असामर्थ्यादेव, अन्यथा व्याघातापत्तेरतः प्रतिपक्षोऽपि नास्तीत्यभिप्रायेणेति यथाश्रुतमेव सूत्रं नेयम्। का च स्थापनायोग्यता तादृशप्रयोगविषयतेति चेन्न। अप्रयोगदशायामव्याप्तिः। प्रयोगयोग्यता न शक्यनिर्वचनेति। ननु जल्पावृत्या चतुर्थी कथा न कथकसम्प्रदायसिद्धा त्रिविधैव कथा जल्पस्य कथान्तरत्वाभावे कथकसम्प्रदायविरोधः। न च कथाद्वयमेकदा सम्भवति येन वितण्डाद्वयं स्यात्। कथैकत्वप्रसिद्धे जल्पे वितण्डाद्वयत्वं नास्ति। एवं च सति यत्र वादी एव साधकः प्रतिवादी दूषक एव सैव वितण्डा, जल्पस्तु न तथा तत्र प्रतिवादिनोऽपि व्यावृत्तमुपस्थापकत्वं वादिनोऽपि तदुक्तदूषकत्वमित्यत्राह—**अवोचाम चेति**। ईश्वराभिसन्धि संज्ञे मम ग्रन्थे विस्तरेण। जल्पस्य कथान्तरत्वं दूषितमिति। अयमाशयः—सिद्धे जल्पस्य कथान्तरत्वे विशेषणप्रवेशः तदेव तु न सर्वकथकव्यवहारतः सिद्धं, शून्यवादि वेदान्तिनोस्तदनङ्गीकारात्। अपि च सामान्यलक्षणखण्डनयुक्तीनां जल्पलक्षणेऽपि सम्भवात्। अवोचाम इत्युक्त्या ईश्वराभिसन्धौ ममेश्वरोपासनत इदमद्वैतज्ञानं

---

१. एतावतीवित्येकां।
२. अतएव सूत्रमपि जल्प एव श्रुतिपक्ष इति क ख पुस्तके।
३. स्थाप्यसत्त्वे सहाएवास्य।
४. स्थूनां परयोगात्।

**जल्पकथयाऽपि चाभिधाने स्वपक्षे व्यावर्त्त्यं सदोषस्यापि प्रमाणतया अभि-**

जातमिति सूचितम् । अभ्युपेत्यापि [१]जल्पकथां दशरथदशाननतनय युद्धवत् कृतविद्यक्षत्रियकुमारयुद्धमप्यनुभवसिद्धमेव यथा तथैव स्वपक्षरक्षणपरपक्षखण्डन[२]-फलकं कथान्तरं जल्पः किन्नस्यादित्यत आह—**जल्पकथयापि चाभिधान** इति । जल्पकथैव कार्येति समयबन्धेनेत्यर्थः[३] ।

यत्तु वादस्यापि तर्हि कथान्तरत्वं न स्यात् तत्रापि वितण्डाद्वयरूपस्य सुवचत्वादित्याशङ्क्य अवोचाम चेतिग्रन्थावतारणं विद्यासागरस्य । वादजल्पयोः तत्त्वनिर्णयविजयरूपफलभेदोभेदकः तथा छलजात्यादिप्रयोगविरहः प्रयोगसत्त्वञ्च भेदकमस्ति नत्विह तथा किञ्चिदिति वर्णनं तत्पुनर्जल्पग्रन्थार्थानुपपत्तेरयुक्तमेवेत्युपेक्षितम् । **सदोषस्यापीति** । परपक्षदूषणानन्तरं स्वपक्षे सद्धेतोरपरि [४]स्फूर्तौ सर्वस्यैव वा हेतोरसिद्धयादिदोषस्य सत्त्वात् सदोषमपि प्रमाणम् । प्रतिवादिनाऽभेदवतां तत्र दोषोद्भावन[५]कारिखण्डनयुक्तिमवतार्य निग्राह्य इति जल्पेऽपि खण्डनयुक्तयः[६] सावकाशा इत्यर्थः ।

एतेन स्तम्भादिप्रत्ययो मिथ्याप्रत्ययत्वात् स्वप्नप्रत्ययवदित्यनुमानस्य प्रमात्वे हेतोरद्वैतव्यभिचारः अप्रमात्वे स्तम्भादि प्रत्ययमिथ्यात्वासिद्धिः । यदि च हेतुभूतप्रत्ययान्यप्रत्ययत्वं हेतुः तेन मृषात्वानुमानं सत्यमेव । स्तम्भादिप्रत्यये तु मिथ्यात्वमेव तत्प्रत्ययभिन्नत्वस्य तत्वादित्युच्यते तथापि एतत्प्रत्ययभिन्नत्वहेतो— ग्राहकं ज्ञानं प्रमा नवा —आद्ये तत्रैव एतत्प्रत्ययान्यत्वहेतोर्व्यभिचारः अन्ते[७] हेतोरसिद्धिरित्येवं प्रत्यवस्थायी [८]सत्त्ववादी एवं निग्राह्यः । एतत्प्रत्ययभिन्नत्वं स्तम्भादि प्रत्यये स्वीक्रियते नवा —आद्ये कथमसिद्धिः अन्त्ये तयोरभेदे, कथं स्वेनैव स्वस्य बाध्यता । कथञ्च मिथ्याभूतेन मिथ्यात्वं साध्यम् । अथ प्रमा मिथ्याभूतमेव तदाहि[९] मिथ्याभूतेनानेन स्तम्भादिप्रत्ययस्याभेदे तस्यापि सत्यत्व[१०]मेवेति मृषात्वसाधनं

१. जल्पकथायौत्पादशरथदशाननतनययुद्धवत् कृतविद्यक्षत्रकुमारयुद्धमपि अनुभवसिद्धे मे ।

२. परपक्षण परपक्षखण्डनकलहकथान्त जल्पः ।

३. समयबन्धो नेत्यर्थः इति ख पुस्तके ।

४. स्फुरित्तौ ।

५. दोषोद्भावने कारीत्वं ।

६. खण्डनयुक्तः सावकाशः ।

७. आद्ये ।

८. सत्त्वादी ।

९. तदाह ।

१०. सत्यत्वमिवेति ।

**धानं कृत्वा तद्दोषोद्भावनकारी कामपि खण्डनयुक्तिमवतार्य बाधनीय इति जल्पेऽपि नात्यन्तमनवकाशाः खण्डनयुक्तयः।**

## १०. लक्षणसामान्यखण्डनम्

**कीदृश्यः पुनस्ताः ? उच्यन्ते। तथा हि—लक्षणाधीना तावल्लक्ष्यव्यव-**

---

बाधितमेवेतिमतं तदपि न तत्प्रत्ययानन्यत्वस्य स्वप्नेऽपि सत्त्वात् हेतोर्व्यभिचारः। अथ स्वप्नस्य मिथ्यात्वानुमितिभिन्नत्वमेवेति चेन्न। तस्य भेदे यदि प्रमास्ति तदा प्रत्ययहेतोर्व्यभिचारेण त्वया प्रत्यवधेयत्वात्, तस्माद् भेद आविद्यिकं एव हेतुः वाच्यश्चेत्। तदा स्वप्नजाग्रत्प्रत्यययोरभेद एवेति सम्यगुक्तं स्तम्भादिप्रत्ययो मिथ्येति खण्डनप्रकारः अन्ततो व्यभिचारादिलक्षणखण्डनमेवावतारणीयमिति। तथा चैवं स्वपक्षस्य[१] आद्ययोः **द्वावेव वादी निगृहीतो** भवति न प्रतिवादी, तस्य पुनः पक्षस्थापनाव्यापाराभावादिति[२] भावः। [३]खण्डनानामेवमनुपममहिमानमुपश्रुत्य सञ्जातकौतुको बुभुत्सुः पृच्छति—**कीदृश्य** इति। सर्वत्र सावकाशाः तास्तु किं प्रकारा इत्यर्थः।

यद्यपि द्वैतवादिभिः ताःनिर्वक्तुमशक्याः तथाप्यद्वैतवादिभिरस्माभिः शक्यते वक्तुमित्याह-**उच्यन्ते** इति। खण्डनयुक्तीनामानन्त्येन साकल्येनाभिधानस्याशक्यत्वात्। कियत्य इति शेषः। ननु खण्डच[४]मानलक्षणेभ्यो नामरूपप्रपञ्चस्य लक्ष्यस्य[५]अन्यत्वात् लक्षणखण्डनेऽपि न काचित् क्षतिरित्यत आह—**तथाहीति**। व्यवस्थितिः व्यावृत्तस्वरूपावधारणं, प्रत्यक्षादिप्रमाणैर्धर्मविशेषं निश्चित्य काणादादिभिः संमुग्धधर्मिविशेषनिष्ठतया लक्षणनामभिधानात् कथमनुपपन्नतेत्याशङ्कयाह—**लक्षणानीति**। व्यवस्थितानि परस्परव्यावृत्तस्वरूपाणि। ननु लक्षणानीति सामान्येन कथमुच्यते अनन्तानां साकल्येनानुपस्थितौ दूषयितुमशक्यत्वादिति चेत्। सत्यम्। सर्वाणि विशेषेण नोपस्थितानि तथापीदं दूषणं सर्वलक्षणानुगतमेवेत्याशयेन आह— [८]**ज्ञानेति**। ज्ञानं मिथ्याधिकरणं च आदिशद्वात् लक्षणापेक्षिता व्यतिरेकव्याप्तिश्च तेषां लक्षणनिरूपण-

---

१. स्वपक्षस्याद्ययोद्वावेवाद्ये।
२. अस्फुटानि अक्षराणि।
३. अनूप।
४. क्वदृश्य इति।
५. खण्डमान।
६. लक्षणस्य।
७. कारणाक्षादिभिः।
८. ज्ञातेति शाङ्करी सम्मतः पाठः।

**स्थितिः, लक्षणानि च अनुपपन्नानि, ज्ञाताधिकरणादि ( ज्ञानाधिकरणात्मादि ) लक्षणनिरूपणद्वारेण चक्रकाद्यापत्तेः ।**

---

द्वारेण प्रत्येकं चक्रकाद्यापत्तेरित्यर्थः । तथाहि–लक्षणे लक्ष्यव्यावृत्तिमिच्छता ज्ञानानामेव तेषां व्यावर्तकत्वमेष्टव्यम् । ततश्च किं ज्ञानमिति प्रश्ने ज्ञानत्वयोगीति वाच्यं पुनः किं ज्ञानत्वमित्यनुयोगे सुखाद्य[1]वृत्तिरात्मविशेषगुणवृत्तिर्जातिरिति निर्वाच्यं जातिरेव केत्यनुयोगे च अनुवृत्तिज्ञानासाधारणकारणमित्यभिधानीयमिति ततो ज्ञानसिद्धौ जातिसिद्धिः तत्सिद्धौ च तद्विशेषभूतज्ञानत्वस्य सिद्धिः, तत्सिद्धौ च ज्ञानसिद्धिरिति चक्रकम् आदिशब्दात् तथैव ज्ञानसिद्धौ ज्ञानत्वसिद्धिः तत्सिद्धौ ज्ञानसिद्धिरित्यन्योन्याश्रयः, ज्ञानसिद्धौ ज्ञानसिद्धिरित्यात्माश्रयश्चेति ।

तथा लक्षणानि लक्ष्याधिकरणानि वाच्यानि ततश्च किमधिकरणमिति प्रश्ने इह प्रत्ययविषय इति कथनीयं कः प्रत्यय[2] इत्यनुयोगे प्रत्ययत्वयोगीति वाच्यं किं प्रत्ययत्वमित्यनुयोगे सुखाद्यवृत्तिरात्मविशेषगुणवृत्तिर्जातिविशेष इत्युत्तरे क आत्मेति जिज्ञासायामात्मत्वाधिकरणमिति पुनरधिकरणम् इह प्रत्ययविषयः इति निर्वाच्यं ततश्चाधिकरणसिद्धावात्मसिद्धिः तत्सिद्धौ च प्रत्ययत्वस्य सिद्धिः तत्सिद्धौ च प्रत्ययसिद्धिरिति चक्रकं पूर्ववदेव अन्योन्याश्रयात्माश्रयौ च । तथा लक्षणस्य व्यतिरेकिरूपतया व्याप्त्यपेक्षायां साध्याभाववद्वृत्तित्वराहित्यं वाच्यं किं साध्यमित्याकाङ्क्षायां लिङ्गावगम्यमिति वाच्यम् । लिङ्गं तु व्याप्तिपक्षधर्मतावदिति वर्णनीयं ततश्च व्याप्तिसिद्धौ लिङ्गसिद्धिः तत्सिद्धौ साध्यसिद्धिः तत्सिद्धौ व्याप्तिसिद्धिरिति चक्रकं तथैव पूर्ववदन्योन्याश्रयात्माश्रयौ वोध्यावित्यपव्याख्यानम् । तथाहि—निश्चितानामेव व्यावर्तकत्वं निश्चयत्वं संस्कारकारणगुणत्वम् । यदि संशयोऽपि संस्कारहेतुस्तदा संशयत्वं जातिं[3] मानसत्वव्याप्यां निरुच्य तदन्यत्वेन गुणत्वं विशेष्यव्यतिरेकानुमितौ साध्याभावव्यापकाभावप्रतियोगिसत्त्वज्ञानमेव हेतुः, साध्यञ्चानुगतेनरूपेण निर्वाच्यमिति खण्डनप्रसङ्गः । अपरेतु लक्षणेन हि गन्धवत्त्वादिना ज्ञातेन पृथिवीस्वरूपेण[4] लक्ष्येऽधिकरणे [5]प्रतिबन्धवलेन भेदरूपं साध्यं साधनीयं, तत्र यदि लक्षणव्यावृत्तिर्लक्ष्यज्ञानाधीना तदान्योन्याश्रयः लक्ष्यपरतन्त्रलक्षणान्तराधीनत्वे चक्रकं तत्रापि लक्षणान्तराधीनत्वमेवं तत्रापीत्युक्तावनवस्था । एवं जलादि साधारण्येन ज्ञातायां पृथिव्यामितरभेदसाधनमसम्भवीति व्यावृत्तत्वेन ज्ञातायां तस्यां तत्साधनं

---

१. सुखाद्यरा ।

२. कः प्रत्यनुयोगे क ख पुस्तके ।

३. जातिमानसत्वव्याप्या निरूच्य क ख पुस्तके ।

४. ज्ञातेन पृथिवीस्वरूपे

५. प्रतिबन्धो व्याप्तिः ।

वाच्यं तद्व्यावृत्तिर्यदि लक्षणाधीना तदान्योन्याश्रयः लक्षणान्तरेण चेत्तदा प्रकृत-लक्षणानुपयोगः तदपि च लक्षणव्यावृत्तायामेव तस्यामित्यपरापरानुधावने अनवस्था एवं प्रतिबन्धकज्ञानसाध्यज्ञानादावप्यूह्यमित्याहुः ।

अन्ये तु लक्षणस्य अज्ञातस्य न गमकत्वमिति ज्ञातमेव तथा वाच्यं तस्य लक्षणान्तराधीनसिद्धत्वे तथैव परपरस्यापीत्यनवस्था, क्वचिद् विच्छेदे तदसिद्धि-रामूलपर्यन्तमसिद्धयापत्तेः लक्षणान्तराधीनसिद्धित्वाभावे तद्वदेव लक्ष्यस्यापि सिद्ध्युपपत्तेः लक्षणवैयर्थ्यापत्तेरादिशब्दार्थः ।

ननु न सर्वं लक्षणाधीनं येनेयमनवस्था स्यात् किन्तु सन्दिग्धं लक्षणेन बोध्यते, न च सर्वत्र सन्देहस्तथाऽदर्शनादिति चेन्न । कस्य सन्दिग्धं, न तावल्लक्षणप्रणेतुः[१] तथासति तद्प्रणयनप्रसङ्गात् । नापि प्रतिपाद्यस्य [२]लक्ष्यसन्देहसिद्धचर्थमेव सामान्यतः पूर्वं[३] तन्निश्चयाङ्गीकारात् । अनिश्चिते स्थाणुपुरुषादौ स्थाणुर्वा पुरुषो वेति सन्देहानुपपत्तेः पूर्वं निश्चितत्वे यत एव स निश्चयः तत एव निश्चयान्तरोपपत्ते[४]-र्लक्षणप्रणयनवैयर्थ्यमित्याहुः ।

श्रीपादस्तु लक्षणं लक्ष्यसम्बद्धं वाच्यं सम्बन्धोऽपि च लक्षणेन व्यवस्थाप्यः ततश्च लक्षणसम्बन्ध इति चक्रकं, स्वयमेव सम्बन्धत्वे आत्माश्रयत्वं सम्बन्धान्तरेण सम्बद्धत्वेऽनवस्था । सजातीयविजातीयव्यवच्छेदार्थञ्च लक्षणमिष्यते, लक्षणप्रवृत्त्या च सजातीयविजातीयव्यवस्थेत्यादिदोषान्नास्त्येवं लक्षणं नाम वस्त्विति तदसिद्धौ लक्ष्यासिद्धिरितिभावः ।

वयं तु लक्षणस्य ज्ञानं प्रमारूपं तदधिकरणञ्च कालव्यावृत्तम् अधिकरणलक्षणं च दुर्निरूपमिति व्यावर्तकधर्माभावात् ज्ञानाधिकरणाधिकरणलक्षणानामभेदे सर्वाभेद इत्याशयेनाह–[५]**ज्ञानं भ्रमरूपं न भेदसाधकमिति** । [६]लक्षणवति लक्षणज्ञानं तथा वाच्यं ततश्च लक्षणवत्तायां सिद्धायां लक्षणस्य भेदानुमापकत्वं सिद्धे च भेदानुमाने भिन्नस्य [७]लक्षणवृत्तेति चक्रकम् । [८]सर्वाणि च लक्षणानि कालेऽतिव्यापकानि नच कालिकसम्बन्धातिरिक्तसम्बन्धेन तस्य हेतुतेति कालिकसम्बन्धस्य देशिकव्यति-

१. लक्षणप्रयोणेतुः ।
२. लक्ष ।
३. पर ।
४. रोपपत्तिः ।
५. प्रतीकरूपेणधृता पङ्क्तिः मूले नोपलभ्यते ।
६. सर्वक्षणवति ।
७. क्षणवत्तेति ।
८. सर्वानि ।

## ११. लक्षणविशेषखण्डनम्

**तेषु तावत् 'तत्त्वानुभूतिः प्रमा' इत्यप्ययुक्तम्; तत्त्वशब्दार्थस्य निर्वक्तुमशक्य-**

---

रेकस्य निर्वक्तुमशक्यत्वात्। स हि लक्षणकालावितिचेज्जन्येऽतीते च धर्मे लक्षणत्वं न स्यात् काललक्षणयोः[1] द्वयोरसत्वात्। एकैकं चेत्तदा स एव कालो यथा स्ववृत्तिधर्मं प्रति तथा गोत्वं प्रत्यपीति सोऽपि गौः स्यात्, कालभिन्नत्वे सतीति कालक्षणातिरिक्ते प्रवेश्यमिति चेन्न काले कालभेदस्यापि वृत्तेः, दैशिकसम्बन्धेन वृत्तिर्विवक्षिता इति चेन्न। तस्याद्याप्यनिरुक्तेः नहि लक्षणान्तरभेदास्तत्र दैशिकेन सम्बन्धेन, वर्तन्ते चेत्तर्हि सोऽपि देश एव। किञ्च अधिकरणत्वं न पतनप्रतिबन्धकत्वं गुणकर्माद्यात्मकस्य पतनाप्रसिद्धेः। समवायित्वमिति चेन्न। समवायानङ्गीकर्तॄणां तदप्रसिद्धेः अन्येषान्तु गोत्वसमवायस्य अश्वादिष्वपि सत्त्वात् समवायस्यैकत्ववादिमतेऽतिव्याप्तिः नाना समवायो मिथ्यैव [2]गुणगुण्यादेरभेदादेव सम्बन्धाभावात्, असमवेतानां सामान्यत्वादीनां च लाक्षणिकः सम्बन्धः स्वरूपमिति चेत्तर्हि समवायो मिथ्यैव, स्वरूपसम्बन्धस्य दूषयिष्यमाणत्वाच्चेति।

वस्तुतस्तु लक्षणानां ज्ञानादिद्वारा चक्रकादि यदुक्तं तदेव कथयितुमाह—**तेषु तावदिति**। ननु सामान्यलक्षणखण्डनाय प्रयासान्तरम्। यावद्विशेषनिर्मुक्तस्य सामान्यस्यासत्त्वादिति।

अत्र मिश्राः—सर्वलक्षणखण्डनकृतः किमभिप्रेतं किं लक्षणसाध्यस्य अर्थस्य व्यवहार एव नास्ति, सन्नपि वा निर्हेतुकः, सहेतुकोऽपि लक्षणातिरिक्तहेतुको वा सर्वलोकसिद्धे[3] लक्ष्यव्यवहारे लक्षणानुपयोगो वा, लक्ष्यलक्षणव्यवहारस्यानिर्वचनीयत्वं वा, तत्सर्वमनुपपन्नमनुभवविरोधात् इति चेन्न। वादिनो लक्ष्यलक्षणव्यवस्थाभिधाननिवर्तनस्य अभिप्रेतत्वादिति प्राहुः।

सकलमपि द्वैतं प्रमात्यवस्थित्यधीनव्यवस्थितिकमिति[4] प्रमालक्षणलक्ष्यमालाग्रन्थे न्यायाचार्येण[5] प्रथमतो निरूपितं ततश्च प्रमालक्षणखण्डने सर्वं द्वैतं खण्डितं भविष्यतीत्याशयेन, अक्षपादोक्तषोडशपदार्थखण्डनाय प्रथमतस्तदुक्तप्रमाणलक्षणखण्डनाय वा प्रमालक्षणखण्डनमेव करोति—**तेष्विति**। लक्ष्यमाणलक्षणेषु

---

१. क्षणयोः क ख पुस्तके।

२. गुणगण्यादेः।

३. सिद्धत्वव्यवहारे।

४. व्यवस्थितिकिमिति।

५. न्यायाचार्यः शिवादित्यमिश्रः।

**त्वात्। तस्य भावो हि तत्त्वमुच्यते, प्रकृतं च तच्छब्दार्थः। न चात्र प्रकृतं किञ्चिदस्ति यत् तच्छब्देन परामृश्यते।**

**अथ अनुभूत्या स्वसंबन्धिविषय आक्षेपाद् बुद्धिस्थः कार्यते, स तच्छब्देन परामृश्यते, वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरणपदार्थविश्रामात्। तेन यस्यार्थस्य यो भावः, तत् तस्य तत्त्वमुच्यत इति।**

**न, अरजतादेरपि रजताद्यात्मना अनुभूतिविषयतासंभवाद् असत्यानुभूत्यव्यवच्छेदात्। भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेन धर्म्यंशे विशिष्टे च प्रमाया अप्रमात्वापातात्।**

---

मध्ये इत्यर्थः। अत्र विद्यासागरेण—तत्त्वानुभूतिः [1]प्रमेत्यप्ययुक्तम् इत्यपि शब्दं पठित्वा अत्रापि शब्दः साधारणदूषणस्य वक्ष्यमाणविशेषणदूषणेन समुच्चयार्थ इति व्याख्यातम्। **तत्त्वशब्देति**। तत्त्वशब्दः किं तत्त्वशब्दो यौगिको रूढो वा। आद्ये पक्षे निष्पन्नमर्थमनुभाषते तस्यभावोहीति। प्रकृतमिति पूर्वोपक्रान्तमित्यर्थः। आचार्यग्रन्थे अस्य लक्षणस्यैव प्रथममभिधानादिति भावः।

**अनुभूत्येति**। लक्षणपदोपात्तया अनुभूत्या विषयिशयासन्निरूपको विषयः सामर्थ्यात् शब्दप्रयोक्तृभिर्बुद्धिस्थः कार्यते स तच्छब्देन परामृश्यते विषयमन्तरेण अनुभवस्य अनुपपत्तिलक्षणं यत्सामर्थ्यं तदेवाक्षेपपदार्थः। बुद्धिस्थत्वेऽपि शब्दानुपात्तत्वेन अप्रकृतत्वान्न तत्पदपरामृश्यमानत्वमित्याशङ्क्याह—**वक्त्रेति**। प्रकरणमितिपदस्यार्थः वक्तृश्रोतृबुद्धिस्थितैव ननु पूर्वनिर्दिष्टतेत्यर्थः पूर्वबुद्धिस्थमेव तच्छब्दार्थ इति भावः। एवं तच्छब्दार्थं निरूप्यत्वशब्दार्थमाह—**तेनेति**। बुद्धिस्थतया परामर्शसम्भवेनेत्यर्थः। तथाच बुद्धिस्थस्य यस्यार्थस्य यो भावो धर्मः स तस्य तत्त्वमुच्यते प्रवृत्तिनिमित्तं हि भावपदार्थस्थले वाच्यम् इति भावः। बुद्धिपदं प्रमापरं, भ्रान्तिपरं, भ्रमप्रमासाधारणबुद्धिपरं वा। आद्ये आत्माश्रयः, द्वितीये व्याधात इति, तृतीयः कल्पो वाच्य इति भ्रान्तौ अतिव्याप्तिमाह— [2]**अरजतादेरिति**। भ्रान्तिविशेष्यं सर्वमादिपदार्थः। रजतादीत्यादिपदं यावदारोप्यपरं रजतमित्यनुभवे हि रजतमपि भासते, तस्य च रजतत्वं भाव इति तदपि तत्त्वमेव तस्येतितादृशानुभूतिरप्रमापीत्यर्थः। अथ पुरोवर्त्तिनो बुद्धिस्थस्य यस्तत्त्वं तदनुभूतिः प्रमेति नायं दोष इत्यत आह—**भवितुरिति**। तच्छब्दार्थस्य भवितुर्धर्मिणस्तत्त्वशब्दार्थत्वं नास्तीति निर्विकल्पे तथा घटत्वविशिष्टस्य च धर्मिणस्तत्त्वशब्दार्थत्वात्, सविकल्पे च प्रमायाम् अव्याप्त्यापातादित्यर्थः। भाववाची हि प्रत्ययो न धर्मिणि वर्तते इति भावः।

---

१. प्रमित्यपि। २. रजतादो।

**अथोच्यते—अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यताम्, यतोऽयं तत्त्वशब्दः स्वरूपमात्रवचन इति। एतदप्ययुक्तम्; स्वरूपत्वस्य जातेरुपाधेर्वा स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेः, स्वरूपशब्दार्थस्यैकस्यासम्भवेन प्रतिविषयव्यावृत्त्यालक्षणस्याव्यापकत्वापातात्।**

**कथञ्च तत्त्वेति विपर्यासादेर्निरासः? तथा हि—शुक्तौ यो 'रजतमि'ति प्रत्ययः, सोऽपि स्वरूपबुद्धिर्भवत्येव। न हि धर्मी वा रजतत्वं वा न स्वरूपम्, नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपमिति युक्तम्; समवायो हि तयोः सम्बन्धः प्रतिभाति, स च स्वरूपमेव।**

**सत्यम्, समवायः स्वरूपम्। स एव तु शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेत्, मैवम्, तत्र नास्तित्वेऽपि स्वरूपताया अव्यावृत्तेः। न हि गृहे देवदत्तो नास्तीति स्वरूपं न स्यात्।**

---

**स्वरूपमात्रवचनः इति।** अविवक्षित ( विशेष ) स्वभावविशिष्टरूपे रूढः तथा च धर्मधर्मिधर्मविशिष्टानां सर्वेषां स्वरूपतया तत्त्वपदवाच्यत्वेन नाव्याप्तिरितिभावः। **स्वरूपत्वस्य जातेरिति।** सा जातिः स्वात्मनि वर्तते चेदात्माश्रयः न चेत् प्रमायामव्याप्तिः तस्या निःस्वरूपत्वे तद्योगिनोऽपि निःस्वरूपतापत्तिश्च। उपाधिपक्षेऽप्ययमेव दोषः। अथ प्रमेयत्वमेव स्वरूपत्वं तच्च केवलान्वयि, नचात्माश्रयः प्रमाणं[२] शरणं वृत्तौ न भिन्नाभिन्नते यतः इति चेन्न। प्रमेयं स्वरूपमिति सहप्रयोगानुपपत्तेः प्रमाविषयत्वस्य प्रमाघटितत्वेनात्माश्रयापत्तेश्च। नचाकाशात्यन्ताभाव एव प्रमेयत्वं तदविदुषोऽपि[३] प्रतीतेः। नाप्यभिधेयत्वमेव स्वरूपत्वं भ्रमेऽतिव्याप्तेः। नच वस्तुत्वमेव स्वरूपत्वं तस्यार्थक्रियाकारित्वात्मकस्यापि दूषयत्वात्। सत्तायोगित्वस्याभावेऽभावात् तत्प्रमानुपग्रहापत्तेः। स्वरूपशब्दस्य तत्तदर्थपरत्वे दोषमाह—**एकस्याभावेनेति**[४]। यद्येकमनुगतमेव शब्दार्थः तदाद्वैतापत्तिः, अथ प्रत्येकं तदाऽव्याप्तिरित्यर्थः। सम्भूयैव सर्वस्वरूपाणां तत्त्वपदार्थत्वेऽप्येकैकप्रमायामव्याप्तिः। विपर्यासादेरित्यादि पदेन संशयस्य परिग्रहः। यद् विशेषणविशिष्टतया यत् प्रतिपन्नं तस्य तद्विशिष्टतयैव स्वरूपमित्याशयेन शङ्कते—**सत्यमिति। मैवमिति।** स्वरूपत्वे तत्र विद्यमानत्वमतन्त्रमितिभावः। तथापि शुक्तौ रजतत्वस्य समवायो नेति योऽयं निषेधः समवायरूपस्य निषेधः किं वा तस्य ताभ्यां सम्बन्धान्त-

---

१. अविवक्षिभावमविशिष्ट।

२. यतो भिन्नाभिन्नते=भिन्नत्वाभिन्नत्वे वस्तुनो वृत्तौ=वर्तने शरणं=नियामकं न तस्मात् प्रमाणमेव वृत्तौ शरणमित्यर्थः।

३. आकाशात्यन्ताभावमजानतोऽपि स्वरूपत्वाभिन्नप्रमेयत्वज्ञानात्।

४. एकस्यासम्भवेनेति मूलपाठः मुद्रितपुस्तकेषु।

**न स्वरूपमात्रं तत्त्वमुच्यते, किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकालसम्बन्धि स्वरूपं तत्त्वमुच्यत इति चेत्। मैवम्, देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात् तयोः स्वरूपमेव तत्त्वशब्दार्थं इति चेन्न, तत्वपदस्यानेकार्थत्वे लक्षणाव्यापकत्वापत्तेः।**

**अथैवं ब्रूषे—यद्यथाभूतं प्रतीयते तत्तथा परमार्थतो व्यवस्थितं तत्वमुच्यते। नैतदपि युक्तम्, यद्यथाभूतं प्रतीयते; तद्यदि प्रतीतिसमयमपहाय कालान्तरे तथाभूतं स्यात्तदाऽप्येवं तत्त्वं स्यादेवेति भाविपाकजरागः कुम्भः श्यामदशायामपि रक्तपित्तिना रक्ततयोपलभ्यमानस्तत्त्वं स्यादिति तद्बुद्धेः प्रमात्वापातः। यदा तदेति विशेषणप्रक्षेपेण च कालविशिष्टताप्रतीतेरप्रमात्वापातो न हि कालवैशिष्ट्येऽपि कालान्तरसम्बन्धः सम्भवी।**

---

रेण निषेधः। नाद्य उक्तदोषानुषङ्गात्। नान्त्यः—सम्बन्धान्तरनिषेधेऽपि समवायस्य क्षत्यभावादित्याशयः। **नहीति**। समवायस्य शुक्तिसंसर्गत्वनिषेधेऽपि न स्वरूपापाय इत्यर्थः। **देशकालसम्बन्धांशे प्रमायामिति**। देशकालयोर्देशान्तरकालान्तराभावात् तयोर्देशकालसम्बन्धाभावात् सम्बन्धस्य संयोगात्मनः समवायसम्भवेऽपि तत्समवायस्य ताभ्यां सह सम्बन्धान्तराभावात् तत्प्रमायामव्याप्तिरिति तु ग्रन्थार्थः। तयोरित्युत्तरग्रन्थविरोधादिति तु भ्रमः अत्रत्यसम्बन्धपदव्यर्थतापत्तेः। ज्ञानोल्लिखितदेशकालसम्बन्धः स्वरूपमिति तत्त्वपदार्थं इति विवक्षितस्य सम्बन्धांशेऽप्यव्याप्तिमन्तरापि[१] तत्त्यागस्य ग्रन्थकृतोऽभिमतत्वाभावे प्रमाणाभावाच्च। तयोरित्यत्र यस्य सम्बन्धस्य देशकालाभ्यामसम्बन्धः स देशकालसम्बन्ध एव न भवतीत्याशयेनेति द्रष्टव्यम्। **स्वरूपमेवेति**। देशकालसम्बन्धानां स्वरूपस्यैव तत्स्वरूपत्वादितरेषां तु देशकालसम्बन्धितयेत्युभयोरपि तत्त्वपदार्थत्वान्नाव्यापकत्वमित्याशयः। **तत्त्वपदस्येति**। देशस्वरूपं कालस्वरूपं प्रत्येकं तत्त्वमित्यनेकार्थता, तदन्यतमत्वस्य तु वक्ष्यमाणान्यतमत्वरीत्या खण्डनीयत्वादिति भावः।

**अथैवमिति**। तथा च ज्ञानोल्लेखितप्रकारत्वमित्यर्थः। एतेन[२] यद् यद् रूपं प्रतिपन्नं तस्य तादृरूप्येण व्यवस्थितत्वमित्ययुक्तं प्रमाणवलात् तादृरूप्येण निश्चयः प्रमाणञ्च प्रमाकारणमित्यन्योन्याश्रयापत्तेरित्यपास्तम्। उक्तार्थे तात्पर्येण दोषासम्भवात्। **रक्तपित्तिनेति**[३]। तद्रक्तरक्तपित्तस्य नयनरश्मिभिः वस्त्वन्तरवर्तिनी रक्तता घटे श्यामदशायां गृह्यमाणा[४]भाविन्यपि तत्त्वं स्यादित्यर्थः। अथ श्याम-

---

१. मन्तेरेऽपि।

२. एतेन इत्यादिना विद्यासागरोक्तिं खण्डयति।

३. रक्तपित्तेनेति।

४. गृह्यमाना।

अन्योपाध्यवच्छिन्नः सोऽन्योपाध्यवच्छिन्नेन सम्भत्स्यतीति चेत्; तर्हि दण्डयपि देवदत्तः कुण्डलित्वं स्वमारोक्ष्यत्येव। उपाधिभेदेऽप्युपधेयस्य एकत्वानिवृत्तेर्नैवमिति चेत्, तुल्यम्।

एतेन कारणं तत्त्वमित्यपि निरस्तम्, सर्वस्य तथात्वे प्रमित्यभावेन आत्मा-

---

दशायामपि घटो रक्त इति प्रतीतिः प्रमैव विषयाबाधात्। मैवम्—इदानीं रक्त इति प्रतीतेरेवाकारात्[१]। नचेदानीन्त्वभाने मानाभावः, तथासति रक्तघटार्थिनः तत्राप्रवृत्त्यापत्तेः, घटोऽयं रक्त इति निश्चयानन्तरमिदानीं रक्तो नवेति संशयापत्तेश्च तस्मात् प्रत्यक्षज्ञाने कालोऽप्युपनीतो भासते एव। न्यायाचार्यमते तु स्मृतावपीति तन्मतं सुतरां दुष्टमिति। पीलुपाकमते तस्य घटान्तरत्वान्नायं दोषः किन्तु भाविकुङ्कुमानुलिप्ता कुंकुमानुलिप्ततया गृह्यमाणकुम्भो बोध्यः। नहि कालविशिष्ट इति कालस्यैकत्वादिति।

अन्योपाध्येति। काल एकोऽप्युपाधिभेदात् भिद्यते, अत एव दिनस्य प्रहरो वा रात्रेर्यामो यामवती यामिनीति प्रयोगः। तर्हीति। तत्राप्युपाधिरेव भिद्यते तस्य चोपाध्येतरवैशिष्ट्यान्नतु कालस्य प्रतीतिः एवमेवोपपत्तेरिति भावः। दण्डोपाधिको देवदत्तः कुण्डलोपाधिकादभिन्नः[3] किन्तु दण्डकुण्डले (भिन्ने) एवेत्याशयेनाह—उपाधिभेदेऽपीति। तुल्यमिति। अथास्तु तर्हि कालोपाधिरेव लक्षणघटकः स उपाध्यन्तरविशिष्ट इति चेत् तत् सिद्धयत्येवं तथापि तद्दिनविशिष्टघटप्रमायां तद्दिनांशे प्रमात्वं स्यादेव।

कारणानुभूतिः प्रमा इत्यपि न लक्षणमित्याह—एतेनेति। कारणत्वं तत्त्वमिति। तथा च कारणस्य तत्त्वानुभूतिः=कारणत्वानुभूतिरित्यर्थः। कालस्य कालान्तराभावेन नियतप्राक्कालसत्त्वरूपं कारणसत्त्वासम्भवात्। कालांशे कालविशिष्टांशे च ज्ञानमप्रमा स्यात् कालातिरिक्तपदार्थानां कारणत्वं नियतप्राक्कालसत्त्वं, कालस्य तु नियतपूर्वसत्त्वं तेन कालस्यापि कारणत्वान्नाव्याप्तिरित्यत आह—सर्वस्येति[४]। विद्यासागरस्तु अधिकं सर्वतथात्वे[५] प्रमित्यभावम् आत्माश्रयम् अनवस्थाख्यञ्च दोषत्रयमाह—सर्वेति। सर्वेषां पदार्थानां कारणत्वे प्रमाणं नास्ति अकिञ्चित्कराणामपि सत्त्वे बाधकाभावात्। पारिमाण्डल्यस्य त्वया कारणत्वानभ्युपगमात्, तदपि स्वविषयकस्य योगिप्रत्यक्षस्य ज्ञायमानलिङ्गकारणता-

---

१. प्रतीतेवाकारात्।

२. भावे।

३. पाधिकालभिन्नः इति क पुस्तके। ख पुस्तकं खण्डितमत्र।

४. सर्वत्वेति।

५. तथात्वे प्रमेत्यभावमात्माश्रयमपसिद्धान्ताख्यञ्च इति क पुस्तके।

श्रयेण च प्रतिक्षणविशिष्टविश्वावश्यकारणत्वोपगमे दुरपवादार्थक्रियाकारित्व-स्वरूपसत्त्वलक्षणाङ्गीकारिजैनचरणशरणप्रवेशविडम्बनापादिदोषग्रासेन चेति ।

---

वादिनो मम मते अनुमितेर्वा जनकमिति चेत् । अस्त्वेवं तथापि सर्वेषां योगि-प्रत्यक्षाणां जनकत्वे भानं वाच्यम् । मिथत्वमेव मानमिति चेन्न । सति कारणत्वे तद्विषयकं ज्ञानं प्रमा सत्याञ्च प्रमायां प्रमेयत्वेन तेषां योगि (प्रत्यक्ष) जनकत्वानु-मानमिति चक्रकापातात् । तथा कारणत्वे कारणत्वाभ्युपगमे आत्माश्रयात् कारणत्वप्रमायामव्याप्तिः कारणत्वस्य कारणत्वशून्यस्य अतत्त्वात् तदाश्रयस्यापि तत्त्वशून्यत्वान्न लक्षणमिदं [1]सम्भवि च, किञ्च पूर्वक्षणविशिष्टस्य घटस्य उत्तरक्षण-वर्तिघटं प्रति कारणत्वमस्ति नवा । अन्ते घटोऽयमिति धारावाहिकज्ञानस्य तत्त्वानु-भूतित्वादप्रमात्वापत्तेः । अस्ति चेत् अर्थक्रियाकारित्वं सत्त्वमिति बौद्धमतप्रवेशा-पत्तिरित्याह—प्रतीति । प्रतिक्षणविशिष्टस्य विश्वस्यावश्यं कारणताया अभ्युपग-मेन दुरपवादं दुःखेन निरसनं यस्य तद्रूपं यदर्थक्रियाकारित्वं तदेव स्वरूपसत्वस्य लक्षणमङ्गीकरोति यो जैनस्तच्चरणयोः प्रवेशः स एव विडम्बनाविलासः तामा-पादयितुं शीलं यस्य दोषस्य तद्ग्रासेन निरस्तमिति सम्बन्धः । जैनो भट्टः तत्समया-नुसारी जैनः । अयं भावः नियतप्राक् सत्त्वात् कारणत्वस्य पूर्वपूर्वक्षणावच्छिन्नस्य घटस्य उत्तरोत्तरघटं प्रति कारणत्वमवश्यमेष्टव्यम् अन्यथा धारावाहिकज्ञानानाम-प्रमात्वापत्तेः ।

ततश्च कालप्रमासावच्छिन्नं सत्त्वमिष्टं स्यात् तथार्थक्रियाकारित्वं सत्त्व-मित्यपीष्टं स्यात् । तच्च द्वयं स्थिरवादिनामनिष्टमतश्चेष्टहानिरनिष्टावाप्ति-श्चेति दूषणद्वयमापन्नमिति । इति शब्दो लक्षणविशेषण (दूषण, समाप्तौ इति विद्यासागरस्य वाचालतया अपव्याख्यानम् । घटः स्वीयगुणान् प्रत्यक्षं च प्रति कारणं पूर्वक्षणविशिष्टश्चेति किमनुपपन्नं पूर्वक्षणविशिष्टत्वेन रूपेण न कारण-तेति तेन रूपेणावत्वापत्तिरिति चेत् तथापि न घटप्रमायामव्याप्तिर्घटस्यैव तत्र भानात् । नहि [2]पिहितदृशामस्मादृशां क्षणः प्रत्यक्षः तथापि अनुमितिरूपायां क्षणविशिष्टप्रमायामव्याप्तिरिति चेन्न । तत्रापि क्षणविशिष्टं ज्ञानं प्रतिक्षणज्ञानस्य हेतुतया क्षणस्यालिङ्गस्यैव हेतुतायाः सुवचत्वात् । तथापि क्षणविशिष्टो न जनक इति चेन्न । घटस्यापि साध्यज्ञानविशेषणविशिष्टतया जनकत्वात् । पर्वतो वह्नि-मान इत्यनुमितौ विशिष्टस्याकारणत्वेऽपि अनुमितेरेव कर्मत्वापत्तिवत् क्षणविशिष्ट-घटस्यानुमितिकर्मत्वाभावप्रसङ्गात् । यच्चार्थक्रियाकारित्वमापद्येतेति तत्कुतः किमस्तीत्येव क्षणं स्वीकर्तव्यमुतभेदकतया । नाद्यः अकारिण्यव्याप्तेः सत एवार्थ-क्रियाकारित्वेन अर्थक्रियोपयोगितया प्रागेव सत्त्वस्यापेक्षणात् । नाप्यन्त्यः—

---

१. असम्भवि च । २. पिशित ।

अभेदकत्वम् अव्याप्तिरेव यतः यच्च कालपरमासावच्छिन्नं सत्त्वं स्यादिति। तदपि न। सूक्ष्मकालावच्छिन्नसत्त्वेऽपि सोऽयं घट इति प्रत्यभिज्ञायाः ज्ञातघटात्मनास्थैर्यस्य दुरपवादत्वात् तस्मान्नैवं ग्रन्थव्याख्या।

मिश्रास्तु कार्यं वस्तुनाम यत् प्रतिक्षणभावि नास्तीति पूर्वपूर्ववीजादेरेव उत्तरोत्तरवीजोत्पत्तिर्वाच्येति बौद्धमतप्रवेशादपसिद्धान्तरूपविडम्बनापादकदोषापत्तिः। यदि च (कारणत्वं) कारणतावच्छेदकरूपवत्वं तच्च यदा कदाचित्कालसम्बन्धेनापि निर्वहतीत्युच्यते तदा भ्रमेऽतिव्याप्तिः भ्रमविषयाणामपि कारणत्वात् कारणत्वप्रमानुपग्रहश्च दोषः। यदि च तदनुभवकारणत्वमेव तत्त्वं तदाऽनुमितिप्रमायामव्याप्तिः। अत्र तत्त्वं मिथ्यादिशब्दाः प्रसिद्धार्था न व्याख्यानमपेक्षन्ते, विवेचयन्ति हि [1]पामरा अपि इदं तत्त्वं स्वरूपमिति तथा इदमतत्त्वमस्वरूपमिति तदर्थप्रश्नः प्रष्टुरेव जाड्यमापादयति प्रसिद्धानुरोधाच्च धर्मिस्वरूपे विषयतासमानाधिकरणधर्मे च तत्त्वपदप्रयोगः, विषयताव्यधिकरणो धर्मोऽतत्त्वं, तदेव च विषयतासामानाधिकरण्यविषयतावैयधिकरण्याभ्यामेव[2] व्यपदिश्यते। तत्त्वपदञ्च अव्युत्पन्नमेव धर्मिमात्रे विषयतासमानाधिकरणे धर्मे च रूढं तदेतद्रूपिणो भावाः तद्रूपहेतुजा इति प्रयोगदर्शनादेव च भ्रमे धर्मांशे नातिव्याप्तिः नवाधर्म्यंशं प्रमायामव्याप्तिः, एवं स्वरूपपदस्यापि तत्रैव प्रयोग इति न काचिदनुपपत्तिः यद्यपि तथापि विचारकाणां न प्रसिद्धिमात्रार्थबोध इति हृदयमिति व्याचक्षते। [3]तदतिशून्यहृदयस्य पूर्वापरपर्यालोचनाविधुरस्य वचनं तस्यैवाज्ञानं स्पष्टयति। तत्त्वपदस्य रूढतायाः [4]खण्डनकृतैवोक्तेः। धर्मे धर्मिणि लोके[5] का शक्तिरित्येकस्यैव प्रवेशेऽन्यतरत्राव्याप्त्यापत्तेः। विषयता च यदि ज्ञानमात्रं तदा रजतादावपि विषयतासमानाधिकरणधर्मवत्त्वमित्यतिव्याप्तिः, विशेष्यता चेन्निर्विकल्पिका अव्याप्तिरिति न प्रसिद्ध्यनुसारेण त्वयापि तत्त्वशब्दार्थो निरुक्तः। किञ्च प्रसिद्धिरपि प्रमाणमूलैव निर्णयाय अलमन्यथा लोकप्रसिद्धस्य लक्षणमपि व्यर्थमेव स्यात्। धर्मशब्दो हिंसायामपि तथाहुः—संसारमोचकादीनां हिंसाधर्मत्वसंमतेति। संसारमोचको=बौद्धविशेषः स प्राणिमात्रस्य हिंसाधर्मं मेने। प्राणी हि सति शरीरे दुःखं लभेतेति तन्नाशेन संसारान्मोचयत्ययं कारुणिकाभिमानी तस्मात् सर्वतथात्वे प्रमित्यभावेनेत्यत्र सत्त्वमेव प्रमाणम् अत्र अव्याप्तिरुच्यते तत्सतो ज्ञानमतः कारणानुभूतिः अन्यथा सत्त्वानुपपत्तेः अकारणस्यासत्त्वात्। कारणत्वमपि सदेव तच्च कारणत्वान्तरेणैव अन्यथा स्वज्ञानं न जनयेत्। यदि चैवमनवस्था तदापि न क्षतिः प्रामाणिकी हि सा, कारणता च शक्तिरेवेति न दोषः इत्याशङ्क्याह—प्रतिक्षणविशिष्टकारणतो-

---

१. यामए। २. वि॰याधिकरणाभ्या।
३. शून्यं हृदयस्य। ४. खण्डनकृतैवोक्तः।
५. लोसै।

## १२. अनुभूतित्वजातिखण्डनम्

**किञ्च इदमनुभूतित्वं नाम ? ज्ञानत्वावान्तरजातिभेदो वा ? स्मृतिव्यति-**

पगमेन [१]दुरपवादोऽर्थक्रियाकारित्वलक्षणस्वरूपसत्त्वाङ्गीकारिणो जैनस्य चरणमेव शरणं रक्षितृ[२]तत्प्रवेशविडम्बनोपहासः तदापादी=तदापन्नश्च यो दोष इति दुरपवाद इत्यस्य विशेष्यं तेन ग्रासेन (त्रासेन) च निरस्तमित्यन्वयः। प्रतिक्षण-विशिष्टं यत् तत् कारणं तत्प्रमाणकारणत्वाख्य तत्त्वाश्रयजन्येऽतिव्या-प्त्यापत्त्या विश्वमेव तत्तत्क्षणविशिष्टकारणं वाच्यम्। नच तत्क्षणविशिष्ट-स्याकारणत्वेऽपि विशेष्यस्य कारणतयैव लक्षणोपपत्तिरिति वाच्यम्। सर्वस्य विशेष्यस्य कारणत्वे मानाभावात्। सत्त्वेन तदनुमेयमिति चेन्न। अप्रयोजकत्वात्। तत्र चेद् वक्तव्यमर्थक्रियाकारित्वमेव सत्त्वमिति तदा नाक्षपादानामिदं मतं तैः सतः एव अर्थक्रियाकारित्वाभ्युपगमाद् अन्यथा जन्यद्रव्यस्य उत्पत्तिक्षणे[३] सत्त्वा-पत्तेः अतो बौद्धचरणप्रवेश एव त्वया कार्यं इति तच्छिक्षयैव त्वयेदमुक्तमित्यापन्नम्। ततश्च त्वं हास्यास्पदं स्यात् नैयायिकमतेन प्रमालक्षणनिर्वचनमुपक्रम्य बौद्धमतं प्रविश्य तन्निर्वचनात्। नच तदपि शक्यं त्वयैव बौद्धाधिकारे अर्थक्रियाकारित्वाख्य-[४]स्वरूपसत्त्वस्य चूर्णीकृतत्वात्, तथाच प्रमाणलक्षणमेवं निर्वचता स्वपक्षः त्यक्तः परपक्षे च न प्रवेशमर्हसि त्वदुक्तदोषभीतैस्तैरपि दूर एव [५]बाधनीयत्वात् इत्यन्ते-वासिताऽभिलषिता दुर्लभैव इति भावः। यत्त्वयि कारणं किमपि नास्ति यतः स्वेम्बरक्षणविशिष्टस्य तत्कार्यत्वात् तथा च प्रतिक्षणविशिष्टस्य स्वस्य स्वोत्तर-भाविनोऽन्यस्य चाविश्वमेव कारणमिति फक्किकार्थः। नचैवं न बौद्धमतप्रवेश इत्युत्तर फक्किकाविरोधः स्वमते विशिष्टस्यातिरिक्तस्याभावेन क्षणविशिष्ट-स्योत्पादो विशेषणोत्पादो वाच्यः, ततश्च घटः स्वोत्तरक्षणस्य जनक इति पर्यवस्येत् नच तत्सम्भवति घटस्य क्षणजनकत्वे मानाभावात्। विशेषणस्यैव विशिष्टजनकत्व-मिति सर्वसम्मतत्वादिति। किञ्च घटो न क्षणमात्रस्य हेतुर्व्यभिचारादिति घटक्षणस्य हेतुर्वाच्यः, स च न सम्भवति स्वोत्पत्ति क्षणं प्रति स्वस्याहेतुत्वात्। नापि स्वोत्तराव्यवहितक्षणं प्रति उत्पत्तिक्षणस्येव तस्याप्यन्यत एवोत्पत्तेरिति द्वितीयक्षणेऽपि घटस्यैवोत्पत्तिर्वाच्येति दिक्।

**ज्ञानत्वावान्तरेति**[६]। ज्ञानत्वव्यावृत्तये ज्ञानत्वा वान्तरेति। स्मृतित्व-व्यावृत्तये जातिभेद इति तथा च स्मृतित्वन्यूनवृत्ति साक्षात्कारिवृत्तिर्जातिरित्यर्थः। संशयत्वं तु न जातिः, चाक्षुषत्वं तु न सर्वस्मिन् साक्षात्कारे वर्तते, एवमनुमित्यादि-

१. क्षण। २. रक्षतृतातप्रवेशविडम्बनापरहासः।
३. उत्पत्तिलक्षणे। ४. कारित्वाख्यस्य रूप।
५. दूर एव वा साधनीयत्वात्। ६. ज्ञानद्वारान्तरेति।

रिक्तज्ञानत्वं वा ? स्मृतिलक्षणरहितज्ञानत्वं वा ? तदविदूरप्राक्कालोत्पत्तिनियतासाधारणकारणकबुद्धित्वं वा ।

न तावदाद्यः । तथा हि—अनुभूतित्वं नाम जातिरेकाऽभ्युपगम्येति कुतः ? अनुभवामी'ति प्रत्ययानुगमवशादिति चेन्न; माघमासीयनिशावसाने सितासितसरित्सम्भेदस्नायिनः सत्यपि शब्दबलाद् भाविस्वकीयस्वर्गसुखसम्प्रत्यये सुखमनुभवामी'ति प्रतीत्यनुदयात्, प्रत्युत शीतसम्भूतवेदनासंवेदनादेव । परस्त्रिञ्च

वृत्तित्वेनापि । लक्षणान्तरयुक्त्या स्मृतिलक्षणरहितत्वं = तदत्यन्ताभाववत्त्वं तदिति तस्य जायमानत्वाच्च । बुद्धिरविदूरे प्राक्काले उत्पत्त्या नियतं मिथ्योत्पत्तिकमसाधारणं कारणं यस्याः तथाभूतबुद्धित्वमित्यर्थः । प्राक्कालनियतोत्पत्तिकसंस्काररूपासाधारणकारणिकायाः स्मृतेर्वारणाय –तदविदूरेति । अविदूरोत्पन्नसंस्कारजस्मृतिविशेषेऽतिव्याप्तिवारणाय नियतपदम् । यद्यपि तत्रापि व्यक्तिगर्भानियमोऽस्त्येव तथापि जात्यवच्छिन्ने नियमस्याविवक्षया अतिव्याप्तिनिरासः । आत्ममनः संयोगे तादृशसाधारणकारणमादाय अतिव्याप्तितादवस्थ्यमित्यसाधारणग्रहणम् । प्रत्यक्षादिज्ञाने तु इन्द्रियसन्निकर्षलिङ्गसादृश्यज्ञानाख्यमसाधारणं कारणं तदविदूरप्राक्कालोत्पत्तिकमिति तेषामुपसंग्रहः । ननु स्मृतित्वावच्छिन्नं प्रत्यात्मनो योगस्य नाविदूरं प्राक्कालोत्पत्तिनियमः चिरकालोत्पन्नात्ममनोयोगस्यापि कारणत्वात् । अथेन्द्रियसन्निकर्षलिङ्गपरामर्शादिजन्यबुद्धित्वमित्यत्र तात्पर्यमिति विद्यासागरः तन्न । अननुगतत्वादिति चेन्न यज्ञाद्यवच्छिन्नस्य असाधारणं कारणम्, किञ्चेदं चिरोत्पन्नमेवेत्यर्थः । असाधारणपदानुपादानेऽसम्भवः स्यादात्ममनोयोगाद् आत्मादेरपि अनुभूतिकारणत्वात् । स्मृत्यसाधारणकारणे अचिरोत्पन्नत्वनियमो नास्ति बहुलं चिरोत्पन्नात् संस्कारादेवोत्पत्तेः । **अनुभवामीति प्रत्ययानुपगमवशादिति** । अत्र जातिबाधकशून्यत्वे सतीत्यपि विशेषणं बोध्यम् । **सितेति** । सितासितसरितोः = गङ्गायमुनयोः संभेदः = सङ्गमः शब्दः तु तत्राल्युतासो दिवमुत्पतन्ति इति तदेवाल व्याप्तिग्राहकस्य बलाद् भावी यः स्वर्गप्रत्ययः अहं स्वर्गाश्रयः प्रयागस्नायित्वात् प्रतिपन्नपुरुषवदित्यानुमानिकस्वर्गप्रत्ययः इत्यर्थः । भावी यः स्वर्गस्तस्य प्रत्यय इति व्याख्यानेऽपि न क्षतिः । भाविपदं [1]योग्यानुभवविरोधनिरासाय । तत्रापि च भवत्येव सुखमनुभवामीति प्रत्ययात्[2] इत्याशङ्क्याह—**प्रत्युतेति** । शीतात् सम्भूतस्य दुःखस्यैव दुःखमनुभवामीति विपरीतसंवेदनादेव सुखानुभवो नास्तीत्याशयः । आस्तिककामुकस्य शास्त्रं "परपत्नीं समारुह्य नारकी स्यान्न संशयः इति प्रमाणं मन्यमानस्येत्यर्थः । नास्तिकस्य परस्त्रीगमने नारकी स्यामिति प्रतीतिरेव नास्तीत्यास्तिकस्येत्याह ।

१. नुभाव । २. प्रत्ययः ।

**सम्भुञ्जानस्य आस्तिककामुकस्य शब्दाधीने सत्यपि भाविनरकगमनानुभवनीय-यातनाधिगमे 'दुःखमनुभवामी'ति मतेरनुत्पत्तेः। प्रत्युत 'अमन्दमानन्दं संविदन् साम्प्रतमस्मी'ति प्रत्ययात्।**

**यदि तु शब्दोपदर्शितव्याप्तिजमनुमानमनुभव एव स्यात्, तर्हि 'सुखं दुःखं वाऽनुभवामी'ति तयोः प्रत्ययः स्यात्।**

**अथ मन्यसे—साक्षात्कारमनुभवार्थमनुरुद्ध्य तयोर्नैवमधिगमव्यवहारौ शब्दजानुमानापेक्षौ तु विमर्शकस्य स्यातामेव ताविति। तर्हि साक्षात्कारिणि**

---

अमन्दमनल्पं शब्दवलादित्यतः=शाब्दप्रतीतिवलात्[१] सा चानुपपन्ना शब्दस्य पुरुष-विशेषनिष्ठतदुभयांशप्रत्यापकत्वात्[२] तादृशशब्दाभावात् साधनताप्रत्यायकत्वा-च्चेति भ्रमापनुत्तये फक्किकार्थं स्पष्टयति—**यदित्विति**। यत् प्रयागस्नानं तत् सुखसाधनमिति शब्दोपदर्शिता व्याप्तिः शब्दजन्यज्ञानानन्तरमवगम्यमाना व्याप्ति-रित्यर्थः। लौकिकैः साक्षात्वस्यैवानुभवशब्दार्थतया गृहीतत्वात्तदभावादेवानुमितौ अनुभवामीतिप्रतीत्यभावो न तु जातेरभावादिति शङ्कते—**अथेति**। तर्हि तत्रानुमत्वं न स्यात् प्रमाणाभावादिति तु न विचारकस्य तत्त्वप्रतीतिव्यवहारयोः सत्त्वादित्याह—**शब्दजानुमानापेक्षौ त्विति**।

शब्दप्रयोज्यानुमानेऽपि प्रत्ययव्यवहारौ, परप्रतीत्यप्रतीत्योः व्यवहारगम्यतया उभयत्र व्यवहारग्रहणम्। प्रतीतितदभावावेव विवक्षितौ[3] नानुगतप्रत्ययवशादिति प्रमाणोपक्रमग्रन्थेन न विरोधः।

**अथेति**[४]। लौकिकस्येव परीक्षकस्यापि साक्षात्वं जातिः क्लृप्तेतितयैव प्रयोजनस्य व्यवहारस्य प्रमाणस्य अनुगतप्रतीतेरुपपत्तौ[५] तत्र प्रत्यक्षे नानुभवत्वं जातिः किन्तु साक्षात्वमेव, परीक्षकस्य त्वनुमितावपि अनुभूतित्वमन्या जातिरिति प्रत्यक्षेऽनुभूतिशब्दार्थः साक्षात्वम्; अनुमितौ त्वनुभूतित्वं जातिभेद इति लक्षणे एकस्य ग्रहणे अपराग्रहणादव्याप्तिरित्यर्थः। तदेव पदार्थान्तरव्यावृत्तमेव रूपं अननुभूतिभिन्नत्वमेव। ननु अनुभूतित्वाज्ञानेऽनुभूतिभिन्नत्वं दुर्निरूपं ततश्च भेदप्रतियोगितावच्छेदकतया तदावश्यकत्वमित्याशङ्क्याह—**तथासतीति**। यथा च तत्र अक्षपदवाच्यत्वेन विभीतकादीन् अननुगमय्य अक्षपदवाच्य विभीतकादि-भिन्नेभ्यो घटादिभ्योऽनक्षेभ्यो भिन्नेषु सत्यपि अक्ष इति अनुगतव्यवहारे न जातिः; क्लृप्तेनैव अनक्षभेदे न प्रत्ययोपपत्तेः तथैव प्रत्यक्षानुमित्यादि चतुष्टयभिन्नज्ञान-भिन्नज्ञानत्वेन उपाधिनैव प्रत्यक्षव्यवहारयोरुपपत्तिरित्याशयः। मतिभिन्नत्वस्य वा निमित्तत्वे तात्पर्यम्।

---

१. प्रतीतिवक्ता। २. तदुभयां प्रत्यापकत्वात्।
३. विवक्षिते। ४. अत्रेति। ५. प्रतीति।

**ज्ञानेऽनुभवप्रत्ययव्यवहारौ साक्षात्त्वनिबन्धनाविति तत्रानुभवत्वजातिकल्पनायां न प्रयोजनप्रमाणे इत्यनुभूत्यर्थभेदाल्लक्षणाऽननुगमो दोषः ।**

**अथ स्मृतिव्यावृत्तेन रूपेण यः प्रत्यक्षादिष्वनुभव इत्यनुगतावगमः, स साक्षात्कारित्वादनुपपन्नः । ततश्च साक्षात्कार्यसाक्षात्कारिविशेषसाधारणमनुभूतित्वमन्यदेष्टव्यमित्युच्यते । तदपि न युक्तम्, पदार्थान्तरव्यावृत्तेन रूपेण यस्तदितरेष्वनुगतप्रत्ययस्तद्व्यवहारो वा, तत्र तदेव रूपं निमित्तम्, न तु जातिः काचित्तदनुरोधात्कल्प्यते । तथा सति अनक्षपदार्थेभ्यो घटादिभ्यो व्यावृत्तेन रूपेण विभीतकादिषु साम्य वगमादक्षत्वादिजातिः कल्प्या प्रसज्येत ।**

**इतोऽपि नानुभूतित्वं नाम स्मृतिव्यावृत्ता जातिः । तथा हि—'घटः स एवायामि'ति तावत्प्रत्यभिज्ञा ज्ञायते, सा किं स्मृत्यनुभवरूपं ज्ञानद्वयम्, एकमेव वा विज्ञानमंशे स्मृतिरंशे चानुभवः, उत स्मृतिरेव, आहोस्वित् अनुभव एव ?**

---

यत्तु अत्र शङ्का मिश्राणां दूषणं—सुखानुमाने सुखमनुमिनोमीत्येवानुव्यवसायः विशेषोल्लेखतिरस्कृतत्वात्, सामान्योल्लेखस्य, अन्यथा गौरितिज्ञाने सत्त्वद्रव्यत्वपृथ्वित्वानामप्यवश्यमुल्लेखः स्यात् तदप्यनुमित्यादावनुभवत्वे किं प्रमाणमिति चेत्; कदाचित् वह्न्याद्यनुमितौ वह्निमनुभवामीत्यनुगतमतिरेव । किञ्च निर्विकल्पके एव अनुगतमतिभङ्गः कथं न दर्शितः किं माघमासीयनिशावसान इत्यादिकादम्बरीयगद्येनेति तदसत्यज्ञानतः । सामान्योल्लेख इत्यत्र उल्लेखशब्दो यदि ज्ञानपरः तदा तिरस्कारोक्तिरेव तिरस्कारीयसामान्यज्ञानसामग्रीसत्त्वेन तदुत्पादस्य दुर्वारत्वात् । अथोल्लेखः शब्दानुविद्धं ज्ञानं, तत्रत्वाह—[1]सशब्दस्मृतिरपिहेतुः सत्यां तस्यां सुखानुमितावप्यनुभवत्वोल्लेखापत्तिः वह्न्याद्यनुमितावनुभवत्वाकारा मतिः नोभयसिद्धेति कथं तत्रानुभवत्वं, निर्विकल्पे चातीन्द्रियत्वात्[2] नानुभवसाक्षात्कारः, योग्ये त्वनुमानादौ तत्साक्षात्कारो विषयाभावनिबन्धन एवेति । परिहासस्तु परिहासास्पदस्वस्वगोष्ठ्यामेव शोभते इति दिक् ।

जातिसाङ्कर्यापत्त्यापि न्यायविदां नानुभूतित्वं जातिरित्याह—**इतोऽपीति** । प्रत्यभिज्ञायां स्मृतित्वेन सह साङ्कर्यादपीत्यर्थः । **तथाहीति** । अनेन प्रत्यभिज्ञायां वादिप्रतिवादिनोः संप्रतिपत्तिः दर्शिता एकस्य कालद्वयसम्बन्धावगाहिज्ञानं प्रत्यभिज्ञेति केचित् । कालद्वयोपलक्षितस्वरूपस्यैक्यज्ञानं प्रत्यभिज्ञेति तत्त्वविदः । अंशे स्मृतिरंशे चानुभव इति भट्टमतं वा, स्मृतिरेवेति एकमेव ज्ञानं तत्रापि स्मृतिरेव नानुभव इति विकल्पे युक्तिसम्भवः कृतः । आद्ये—अनुभव एवेति नैयायिकमतपरिग्रहः, प्रागवस्थाप्राककालः इदं तावद्

---

१. शशब्दस्मृतिरपि ।

२. अतीन्द्रियत्वानुभव ।

**आद्ये य एष प्रत्यभिज्ञायां प्रागवस्थाविशिष्टादिदन्ताविशिष्टस्याभेदः प्रकाशते, स स्मृतावन्तर्भावयितुमशक्यः, अननुभूतचरत्वेन संस्कारानुपनेयत्वात् ।**

**अत एव न तृतीयोऽपि । नाप्यनुभवेऽन्तर्भावयितुमसौ शक्यः, प्रत्यभिज्ञानकालेऽनुभवेन प्रागवस्थाया असंवेदनात् । संवेदने वाऽनुभव एवेति शेषपक्षेऽन्तर्भावः स्यात्, स चाग्रे दूषयिष्यते ।**

**अत एव न द्वितीयः, प्रागवस्थाविशिष्टाभिन्नत्वांशे अनुभवस्वीकारश्चेत् प्रागवस्थावैशिष्टचमप्यनुभवविषय एव निविष्टमिति चरमपक्षप्रवेशः ।**

**अथ प्रागवस्थाविशिष्टादभिन्न इत्ययमर्थोऽप्यनेकांशः,तत्र प्रागवस्थाविशिष्ट इत्यत्रांशे स्मृतित्वम्, अभिन्न इत्यत्रांशे चानुभवत्वमित्युच्यते । एवं तर्हि प्रागव-**

---

वर्तमानकालः प्राक्कालप्राग्देशविशिष्टस्यैतत्कालदेशविशिष्टेनाभेदः प्रत्यभिज्ञायां प्रतिभातीति स्थिरवादिनः सिद्धान्तः । तत्राभेदो न स्मृतौ प्रकाशते संस्काराविषयत्वात् इत्याह—**न स्मृताविति** । स्मृतावन्तर्भावयितुं स्मृतिविषयत्वेन वक्तुं न शक्यः अन्तर्भावः स्मृतौ विषयभावेन प्रवेशः अभेदस्य स्मृतौ भानं न भवतीत्युपपाद्य ज्ञानमेकं स्मृतिरेवेत्यपि न सम्भवति अभेदांशे संस्काराजन्यत्वादिति तृतीयपक्षोऽपि एष्टव्यो दूषणमर्हतीत्याशयेनाह—**अत एवेति** । अभेदस्य संस्कारानुपनेयत्वादित्यर्थः । नाप्यनुभव इति ज्ञानद्वयपक्षस्य दूषणं प्रत्यभिज्ञानकाले अनुभवो नेति साक्षात्कारो नेत्यर्थः सहीन्द्रियसन्निकर्षजन्यत्वात् प्रागवस्थाविशिष्टस्य विप्रकृष्टतया तत्प्रतियोगिकाभेदस्यानुभवासम्भवादित्यर्थः[१] । तथा च अनुभवे इदमित्येव भासेत यदि चासन्निकृष्टमपि प्रत्यक्षे भासते तदा ज्ञानद्वयपक्षे प्रमाणाभाव इति नैयायिकपक्ष एव स्यादित्याशयेनाह—**अनुभवेति** । ननु ज्ञानद्वयमित्यर्थः । एतेन विशेषणधीकालीनं ज्ञानं विशेष्यसन्निकर्षजं विशिष्टं गोचरयति विशेषणज्ञानन्तु न सन्निकर्षः किन्त्वपेक्षणीयमेव संज्ञाविशिष्टप्रत्यक्षे संज्ञास्मृतिरेवेति ननु जन्यजनकभावः तथा च अविरललग्नं ज्ञानद्वयमेव प्रत्यभिज्ञा तत्ता स्मृतिः इदमनुभवश्चाभेदावगाहीत्यपास्तम् । अभेदस्य भासकाभावादिति भट्टमतं दूषयति—**अत एव न द्वितीय इति** । प्रागवस्थाविशिष्टस्यासन्निकृष्टतया अनुभवगोचरता नास्तीति तत्प्रतियोगिकत्वेन तत्प्रतियोगिकोऽप्यभेदो नानुभूयेतेत्यर्थः । भ्रमार्थवदिन्द्रियेणासन्निकृष्टोऽपि भासते इत्यतस्तद्ज्ञानमनुभव एव स्यात् अनुभवसामग्री जन्यत्वादित्याशयः । **स्मृतित्वमिति** । संस्कारजन्यत्वात् भ्रमोऽपि भ्रमार्थं स्मृतिरेवेत्यस्मन्मतमितिभावः । **एवं तर्हीति** । स इति प्रागवस्थाविशिष्टः, अयमितीदंताविशिष्टः अभिन्नश्चायमिति । यद्यपि अयमित्यस्येदंताविशिष्ट एव विषयो ननु तदभेदोऽपि तथाप्ययमिति निश्चये अय-

---

१. अस्पष्टम्

**स्थाविशिष्टः स इदन्ताविशिष्टोऽभिन्नश्चायमिति स्मृत्यनुभूतिभ्यामावेदितं भवति, प्रागवस्थाविशिष्टाश्रयतया त्वभेदः केनापि न प्रकाशित इति य एव प्रागवस्थाविशिष्टः स एवायमिति प्रत्यभिज्ञायाः शरीरं न स्यात्।**

**अथानुभवेन योऽसौ अनुभूयमानधर्म्याश्रयतया अभेदो बोधितः, स कोटयन्तरमनालम्ब्य न पर्यवस्यतीति केनचित् खलु कस्यचिदभेदो भवति। ततः स्मृत्यंशोपनीतमेव सन्निधानात् कोटयन्तरं प्रागवस्थाविशिष्टरूपमालम्बत इत्यभेदस्य प्रागवस्थाविशिष्टाश्रयतासिद्धिरिति।**

**तदेतत्तुच्छतरम्, 'कोटयन्तरमालम्बते' इति किं कोटयन्तराश्रितो भवति, उत कोटयन्तराश्रिततया ज्ञायत इति? नाद्यः; अभेदस्येदानीं प्रागवस्थाविशिष्टधर्म्याश्रयेणोत्पत्तौ पूर्वं प्रागवस्थाविशिष्टेदन्ताविशिष्टयोर्भेदः स्यात्। द्वितीये तु यदेव कोटयन्तराश्रिततया इदन्तावच्छिन्नधर्म्यभेदस्य ज्ञानं तत्स्मृतौ नान्तभावयितुं शक्यम्, नाऽप्यनुभवांश इत्युक्त एव दोषः।**

---

मयन्नवेति संशयस्य भ्रमस्य चानुदयाद् अभेदोऽपि भासते स चेदन्तारूपतया प्रकारोऽपीत्याशयेन इदं स्वीकृत्योक्तम्। वस्तुतोऽभेदस्य संसर्गत्वे सकारत्वे वा मानाभावः। इदन्ताह्यत्र प्रकारः सा च तद्गतरूपादिधर्मान्तरमखण्डो वा नत्वभेदः भ्रमसंशयौ तु भवतो दोषस्याभावात्। अथवा अनिदं व्यावृत्तिरूपस्य वैशिष्ट्यस्यैव परमतेऽस्माकमपि वैलक्षण्यस्य मानमिति तैः स्वीकारादिति ध्येयम्। **प्रागवस्थाविशिष्टाश्रयतयात्विति**। इदन्तु आश्रयाभेदः प्रागवस्थावतो न केनापि स्मृत्यंशेन अनुभवांशेन वेत्यर्थः। यत्तु स्मृत्यनुभूतिभ्यामित्युक्तं तत्रप्यंशभेदमपेक्ष्यैव द्वित्वं वोध्यम्। अत एव स्मृत्यंशोपनीतमिति वक्ष्यति। अथ ज्ञानद्वयवादिनामेवायं दोषो नत्वेकज्ञानवादिनाम्, एकस्मिन् ज्ञाने भासमानस्य भिन्नत्वेन निरवभासमानस्य अभेद्मानियमाद् अभेदज्ञानमिति गूढाशयः शङ्कते। अथानुभवेन योसाविति मानमिदंताविशिष्टस्य प्रागननुभवादितिभावः। अथानुभूतस्य अभेदस्य को ह्यन्तरालम्बनत्वं किमर्थं स्वीकार्यं व्यर्थत्वादिति स्यात् न प्रागवस्थाविशिष्टविषयतार्थमिति गृहाण। अत एवाह कोट्यन्तरप्रागवस्थाविशिष्टमिति। आलम्बते इत्यत्र आलम्बनशब्देन किं भवनमुच्यते ततश्च को कोट्यन्तरमाश्रित्यभवनमित्यर्थः। किञ्च अतन्निष्ठतया ज्ञानमिति द्वितीयविकल्पार्थः। अभेदस्योत्पत्तेः प्रागभेदापत्त्या दूषयति—**नेति**। यद्यपि भवनं नालम्बनपदार्थः शक्त्या तथापि यदि लक्षणया तथोच्यते तदा दूषणमिदम् अथवा आलम्बनमाश्रय इति तुल्यार्थमिति प्रथमः पक्षः। द्वितीयस्तु विषयतेतिभेदः। एतेन स्मृत्यनुभवात्मकमेकं ज्ञानं दूषितम्, अधुना अस्तु तदेकं तथापि नानुभूतित्वं जातिस्मृतित्वेन सह साङ्कर्यापत्तेरित्याह—**किञ्चेति**। यद्यपि

किञ्च—यदा प्रत्यभिज्ञानं 'सः' इत्यंशे स्मृतिः 'अयमि'त्यंशे चानुभव इत्येकं ज्ञानमभ्युपेयते, तदा धर्मिणमादायापि स्मृत्यनुभवसङ्करो दुर्वारः। तथा हि—संस्कारेण तत्तामात्रं वोपनीयेत, तत्ताविशिष्टो वा धर्मी ? आद्ये स इति प्रत्यभिज्ञायाः शरीरं न स्यात्, तत्तायाः केवलायाः संस्कारेणोपनीतत्वात्। नापि द्वितीयः तथा सति 'अयम्' इत्यनुभवांशेऽपि धर्मिप्रकाशो वक्तव्य एव। अन्यथा इदन्तामात्रप्रकाशेऽयमिति तच्छरीरं न स्यात्।

एवञ्च संस्कारस्य चेन्द्रियस्य च धर्मिप्रतीतिहेतोरुभयस्योपनिपाते किं विशेष्यांशे भिन्नाभ्यां ज्ञानाभ्यामुत्पत्तव्यम्, उत कारणद्वयसम्भेदादभेदभाजा ज्ञानेन ? प्रथमे प्रत्यभिज्ञानस्य एकज्ञानव्यक्तिताभ्युपगमव्याघातः, भेदपक्षोक्तदूषणापातश्च। द्वितीये धर्म्यंशे प्रत्यभिज्ञायाः स्मृतित्वमप्यनुभवत्वमपीति अनुभूतिस्मरणसङ्कर इति विषयव्यवस्थयाऽपि नियमो भग्नः।

अथोच्यते—मा भूद्विषयोपाधिभेदाद् व्यवस्थानम्, उपाध्यन्तरात्तु भविष्यति। तद्यथा संस्कारजत्वमादाय स्मृतित्वव्यवस्थितिः, इन्द्रियसन्निकर्षजत्वमादाय चानुभवत्वव्यवस्थानमिति विरोधपरिहारोऽस्तु। न, प्रमात्वसामान्यानङ्गीकारे प्रमारूपताया विषयव्यवस्थित्यैवोपगमेन उपाध्यन्तरोपन्यासेऽपि स्मृतित्वानुभूतित्वयोरेकस्मिन्नेव धर्मिण्यर्थे निवेशात् प्रमात्वाप्रमात्वयोरेकविषयतैव।

---

भट्टमते जातिसाङ्कर्यं न दोषः तथाप्येकस्मिन् एव ज्ञानस्य स्मृतित्वानुभूतित्वयोः स्वीकारे प्रत्यभिज्ञाया अग्रहीतग्राहित्वाभावेन अप्रामाण्यापत्तिरित्याशयः। न द्वितीयः इति अनुभवो हि न धर्ममात्रगोचर इति विशिष्टस्य संस्कारगोचरतया विशिष्ट एवोपनेय इत्यपि नेत्यर्थः। अयमिति प्रत्यक्षे यदि धर्मो न भासेत तदा न साङ्कर्य्यं स्यादिति संस्कारस्य विशिष्टोपनायकताऽपि कुतः। सामग्रीसत्त्वाच्च धर्मिविषयता न शक्यापलापेति भावः। प्रागुक्त[1]दूषणमेवेति। प्रागवस्थाविशिष्टा-[2]भेदासिद्धिप्रसङ्गादित्यर्थः। यदि हि प्रमाणत्वं जातिः स्यात्तदा तस्याविषयात्मकोपाध्यपेक्षा न स्यात् सा च न जातिः परोक्षत्वेन साङ्कर्य्यापत्तेः। निर्विकल्पस्य प्रमाप्रमात्वबहिर्भावे च साक्षात्वेन सङ्करापत्तेरित्याशयवानाह—प्रमात्वजात्यनङ्गीकारेण इत्यपव्याख्यानम्, भट्टानां तदनङ्गीकारात्। परन्तूपाधिनैव अन्यथासिद्धौ न सा जातिः किन्तु अयथार्थागृहीतग्राह्यनुभवत्वं प्रमात्वमिति तैरङ्गीकृतेः, तथा चोपाधिव्यवस्थापेक्षेति भावः। उपाध्यन्तरोपन्यास इति। विषयाद्भिन्नयोरूपाध्योः संस्कारजत्वसंप्रयोगजत्वाख्ययोरुपन्यास इत्यर्थः। प्रमात्वाप्रमात्वयोरेकविषयतेति। एकाश्रयतेत्यर्थः। नन्व स्मृतित्वेन अप्रमात्वमेव स्यात् तत्त्वानुभूतित्वेन प्रमात्व-

---

१. उक्त दोष एव इति मूल पाठः।

२. विशिष्टभेदो सिद्धि इति।

**किञ्च—ज्ञानविकल्पानामध्यात्मं भावाभावसंवेदनात् स्मृतित्वानुभूतित्वयोर्द्वयोरपि प्रत्यभिज्ञायां स्वत प्रतिभानेन विषयनिरूपणव्यवस्थित्यनङ्गीकारे स्मृतित्वादेरिदन्तायामपि स्मृत्यवगमप्रसङ्गात् ।**

---

मनुवादस्य भ्रमस्य च सत्यप्यनुभूतित्वे प्रमात्वाभावादिति वाच्यम् । अभेदांशस्य अगृहीतस्यापि भानाद् यथार्थत्वाच्च प्रमात्वमपि स्यात् । नच तर्हि अप्रमात्वं कुतः इति वाच्यम् । संस्कारजत्वेन स्मृतित्वात्, स्मृतौ च तान्त्रिकाणां[1] प्रमात्वव्यवहाराभावात् सेयमुभयतः पाशारज्जुरिति प्रत्यभिज्ञाया स्थैर्यसाधकत्वं न स्यात्, एकत्वस्य अप्रमाविषयत्वात् । अथागृहीतग्राहियथार्थानुभवत्वमेव प्रमात्वम् [2]अस्तिचेदमर्थयोगजत्वाद् अनुभवत्वम् । ननु संस्कारजत्वात् [3]स्मृतित्वमप्यस्तीति चेदस्तु ।

तथापि प्रमात्वे अनुभवकारणासंप्रसक्तसंस्कारजन्यभिन्नत्वमेव तन्त्रं प्रत्यभिज्ञायां यथार्थायाम् अप्रमाव्यवहाराभावादित्यस्वरसादाह—**किञ्चेति** । तथा च स्मृतित्वे प्रमाणाभावो न प्रमालक्षणे विशेषणप्रवेशो व्यर्थ इत्याशयः । ज्ञानविकल्पानामित्यक्षपादसूत्रस्य ज्ञानविकल्पानां ज्ञानविचित्राणामात्मन्यधिकरणे भावाभावयोः सत्त्वासत्त्वयोः संवेदनादित्यर्थः । अनुभवामीदमितिवत् स्मरामीत्यपि प्रतीतिः स्यादित्यर्थः । ननु भट्टानां ज्ञानमतीन्द्रियमिति कथमेवमापद्यत इत्याशङ्क्याह-स्वतः प्रतिभानेन ज्ञानस्य स्वप्रकाशतायामेव स्थापनादित्याशयः ।

अत्र विद्यासागरः- ज्ञानं नानुमेयं तद्व्याप्तिलिङ्गाभावात् नापि मानसं ज्ञानान्तरस्य ज्ञानत्वनिर्विकल्पात्मन उत्पत्त्या ज्ञानस्य नाशात्, अतः परिशेषात् स्वतः प्रतिभानमित्याशयमाह । तन्न । ज्ञाततान्यथानुपपत्त्या ज्ञानसिद्धेः, मानसत्वं तु न तेषां मतेऽपि ज्ञानज्ञानपरम्परापत्तेः तस्माद् ज्ञानस्य ज्ञानान्तरस्वीकारे मानाभावादनवस्थापाताच्च स्वप्रकाशतैवोचितेत्याशय एव युक्तः । विषयनिरूपणव्यवस्थानङ्गीकारे=विषयभेदनिरूपणेन अव्यवस्थानङ्गीकारे, इदन्ताविशिष्टधर्मिभानकाले तत्ताभानं तत्ताविशिष्टधर्मिभाने चेदमनुभवामीत्यनुभूतित्वावगमः प्रसज्येतेति प्रघट्टकार्थः ।

नच संस्कारजत्वमेव स्मृतित्वस्य व्यञ्जकं तच्चेदमंशे नास्ति इति वाच्यम् । तस्य किं स्वरूपसतो व्यञ्जकत्वं ज्ञातस्य वा । आद्ये तथाप्यनुपपत्तिरिति दूषयिष्यति । नान्त्यो । योग्यव्यक्तिवृत्तिजातेर्ग्रहणे व्यञ्जकापेक्षायास्तैरेव गोत्वादिग्रहे सास्नादेर्व्यञ्जकत्वं दूषयद्भिर्निरस्तत्वात् । योग्यतायाश्च अव्यवस्थापितत्वान्न

---

१. तान्त्रिकानाम् । २. अस्ति चेह ।
३. स्मृतिमप्यस्तीति ।

**यदि च संस्कारजत्वमेव स्मृतित्वम्, तदा तस्यैव विरोधेऽभिधीयमाने स एव विरोधसामञ्जस्याय उपाधिरूपन्यस्त इति नान्यस्य चेतसि निविशते।**

**अथान्यत् स्मृतित्वं नाम, तदाऽप्यनुपपत्तिः। तथा हि—संस्कारजत्वं संस्कारादनन्तरं नियमेन भावः। नियतत्वञ्च नानाव्यक्तिगतमेकं रूपं संग्राहकमक्रोडीकृत्य असम्भवीति स्मृतित्वेनैव संस्कारजत्वं वक्तव्यम्। तथा च संस्कारजत्वव्यवस्थितौ स्मृतित्वमुपाधिः, स्मृतित्वव्यवस्थितौ च संस्कारजत्वमित्यन्योन्याश्रयः। तस्मात् स्मृत्यनुभवसङ्करो दुर्वार एव।**

---

स्मृततयैव तदवगम इति दिक्। संस्कारातीन्द्रियत्वेन तस्मातीन्द्रियतया नेदन्ताभानेभानमित्याशङ्कां परिहरति—**यदिचेति**। तदा तस्यैवेति।[१]

अनुभूतित्वासङ्कीर्णं स्मृतित्वं नास्ति प्रत्यभिज्ञायां सहैवावस्थितिबाधकोपन्यासे तत्परिहारार्थं तदेवोपाधिरूपन्यस्यते ततश्च संस्कारजत्वव्यवस्थितिसिद्धौ तदभिन्नस्मृतित्वव्यवस्थेत्यात्माश्रयापत्त्या इयं व्यवस्था न परस्य चेतसि निविशते[२] इति। **अथान्यदिति**। स्मृतित्वं जातिस्तन्न उल्लेखिज्ञानत्वं प्रत्यक्षादिभिन्नज्ञानत्वमेवेत्यर्थः। एतेन धर्मद्वयकल्पनायां प्रमाणाभावाद् गौरवाच्चायं कल्पो न युक्त इति विद्यासागरोक्तं हेयम्। **नियमेन भाव**[३] इति। यस्य सत्ता संस्कारानन्तरकालत्वव्याप्ता, तथाच संस्कारं विना यस्य नाद्यक्षणसम्बन्ध इति यावत्। **नानाव्यक्तिगतमेकरूपमिति**। यद्यपि वन्हिजन्यतायाा आलोकत्वधूमत्वादिना रूपं परिगृह्यापि यथा सम्भवः तथेहापि तत्तज्ज्ञानत्वमनुगतमेव परिगृह्य तथात्वं च तथापि बाधकाभावे[४]अननुगतं रूपमेव तथा अन्यथा कार्यतावच्छेदकतया जातिर्न सिद्ध्येत्। अपि च तज्ज्ञानत्वस्य पुरुषायुषपर्यवसानेनाप्यसर्वज्ञेन ज्ञातुमशक्यत्वेन संस्कारस्य तादृशज्ञाननिर्णयं[५] विना भावग्रहो दुर्ग्रहोऽप्रामाणिक एव स्यादितिभावः। अनुभूतिस्वरूपैस्तु संस्कारजत्वं का च ते इति प्रश्ने घटस्मरणस्येति नोत्तरं पटस्मरणस्य तदजन्यतापातादतोनानाव्यक्तिताभासकरूपमन्तरेण शक्यं स्मृतिस्मृतित्वजातीयज्ञानानां यदि तन्निश्चीयते तदा अन्योन्याश्रयत्वमित्यर्थ इति व्याख्यातम्। **स्मृतित्वे नेति**[६] ज्ञेयं[७] वक्तव्यमित्यध्याहारार्थम्। उपाधिव्यावर्तको धर्मः। **तस्मादिति**। एकस्मिन्=एकांशे अनुभूतित्वस्मृतित्वे स्यातामिति कुत्र नरसिंहाकारत्वमित्याशयः एकस्योभयविचित्राकारत्वमेव नरसिंहाकारत्वमित्यङ्गीकारे स्थैर्यस्य अप्रमेयत्वप्रमेयत्वे स्यातामिति च

---

१. यदिचेदिति।

२. निवेशते। ३. अनियमेन भाव इति। ४. अनुगतं।

५. तादृश ज्ञानानिपुणं विना।

६. स्मृति तेनैव। ७. सामग्रीनां।

**अपि च स्मृत्यनुभवयोर्ये कारणसामग्र्यौ, ते प्रत्यभिज्ञायां मन्तव्ये न वा ? न चेत्, कथमंशतोऽपि स्मृतित्वमनुभवत्वञ्च प्रत्यभिज्ञानस्य । एवमेव तथात्वेऽतिप्रसङ्गात् स्मृत्यनुभूत्योः स एव सङ्करः । प्रथमे तु पृथगेव कार्योत्पत्तिप्रसङ्गः, प्रत्येकं स्वस्वस्मृत्यनुभूत्योः स एव सङ्करः । प्रथमे तु पृथगेव कार्योत्पत्तिप्रसङ्गः प्रत्येकं स्वस्वकार्ये समर्थत्वात्, सामग्रीभेदस्य कार्यभेदहेतुत्वेनावधारितत्वात् ।**

**अथ यत्र ते पृथक् जायेते तत्र पृथगेव कार्यम् । प्रत्यभिज्ञायान्तु तयोर्युगपज्जातत्वेन सम्भूय जननात्करम्बितकार्योत्पत्तिः । यद्यपि घटपटादिसामग्र्योर्नैवं**

---

दोषः । प्रत्यभिज्ञानानुभवस्मृत्यात्मको भवेद् विलक्षणसामग्रीकत्वादित्यनुभवभिन्नत्वेन तत्र प्रमाव्यवहारो न स्यादित्याशयेनाह **अपि चेति** ।

कारणानां=सामग्रीणां साकल्ये इत्यर्थः । सामग्रीपदस्याशेषकारणपरताभ्रमनिराकरणाय कारणपदं, समग्रस्य भावो हि सामग्री एकक्षणावच्छिन्नानि यावन्ति कारणानि इति तु न युक्तं घटादिसामग्र्यामसम्भवात् । घटकारणादृष्टजन्यकर्मणो घटाद्युत्पत्तिकालाव्यवहितकालेऽसत्त्वात् नापि प्रागभावातिरिक्त यावत् कादाचित्ककारणप्रागभावानाधारः प्रागभावाधारः क्षणः सामग्रीति वर्द्धमानोपाध्यायोक्तं सम्यक् । सामग्रीशब्दस्य रूढ्यापत्तेः, नच योगेन प्रयोगसम्भवे तत्कल्पनायां प्रमाणमस्ति । नच घटादिकारणानां यावतां घटोत्पत्तेः प्रागसत्त्वं विनष्टस्यापि कर्मणः प्राक्कालवृत्तित्वादेवेति दिक् । **कारण**सामग्र्यौ संस्कारसम्प्रयोगाख्ये इति विद्यासागरस्य अपव्याख्यानं संस्कारप्रयोगयोरेकत्वेन साकल्यस्यासत्त्वात् किन्तु संस्कारसंप्रयोगघटिते इत्येवार्थः । अतितच्छत्वेनान्त्यपक्षमादौ नचेदित्यनेन सन्निहितीकृत्य दूषयति—**कथमंशत** इति । नच विकल्प एव प्रथमपक्षस्य प्राथम्ये युक्तः निषेधबुद्धिः प्रतियोगिधीसापेक्षत्वेन प्रथमतः प्रतियोग्युपस्थापने तस्यैव प्रथमपक्षतायाः सिद्धत्वादिति रहस्यम् । एवमेव च तथा गन्धसंस्कारप्रयोगजत्वं विनाऽपि तथात्वेऽतिप्रसङ्गः स्मृतावप्यनुभूतित्वं अनुभूतावपि स्मृतित्वं स्यादित्यर्थः । यद्यपि संप्रयोगजत्वं विनापीश्वरज्ञाने ब्रह्मणि च अनुभवत्वमिष्टं नैयायिकैरौपनिषदैश्च तथापि[१] भट्टानामतिप्रसङ्गः स्यादित्याशयः ।

**युगपज्जातत्वेनेति**[२] । संस्कारस्य पूर्वमुत्पन्नत्वेपीदानीमुद्बुद्धतोत्पत्तेर्युगपज्जन्म कथ्यते इति विद्यासागरः सहकारिकालविशिष्टतया जन्मेति परमार्थः । भट्टानां सर्वपदार्थानामेव युगपज्जन्मस्थितिविनाशानां रूपभेदेन स्वीकारात् । न चैवं क्षणभङ्गरूपेण स्थिरत्वात् मेलनमेकदेशकालावस्थानं कथमनुपयोगि[४] । [५]सत्येव मेलने कार्यजन्मदर्शनात् इत्यत आह—सहकारिभावविरहेणाप्रयोजकत्वात्

---

१. विद्यासागरी २७२ ।

२. तथाच । ३. युपज्ज्ञातत्वेन । ४. अनुपयोगित्वम् ५. सत्यमेव ।

दृश्यते, तथापि तद्विलक्षणस्वभावत्वादनयोरीदृशत्वमुपपद्यते। न हि एकस्य यादृक् पदार्थस्य स्वभावस्तादृगन्यस्यापि सर्वस्य भवति, जगद्वैचित्र्यभङ्गप्रसङ्गादिति।

नैतदस्ति, यत्र हि मिलितत्वं तयोस्तत्र किं परस्परसहकारित्वमनयोरेष्टव्यं न वा ? न चेत्, परस्परमेलकलक्षणो विशेषोऽनुपयोगी, कार्यजननं प्रति मिथः सहकारिभावविरहेणाप्रयोजकत्वात्। ततश्चाविशेषात्। पृथगेव कार्यं प्रसज्येत। अथ परस्परसहकारित्वं तयोरिष्यते, तदा अनुभवांशेऽपि संस्कारस्य व्यापारः, स्मरणांशेऽप्यक्षस्येति नियामकत्वाभिमतयोस्तयोरुभयांशे साधारण्यात् स्मृत्यंशेऽप्यनुभूतिरनुभूत्यंशेऽपि स्मरणमिति वज्रलेपायितं प्रत्यभिज्ञायामनुभूतिस्मृतिसङ्करेणेति।

नाऽप्यनुभव एवेति पक्षः, तथा सति तत्तावच्छिन्नस्याभेदाश्रयतायां न संस्कारो नेन्द्रियसन्निकर्षश्चेति तदविषयत्वापातः।

न च संस्कारद्वारा प्रत्यासत्त्या सम्बद्धविशेषणतया तद्ग्रहः, क्वचित् सोऽयं न वेति तर्हि संशयो न स्यात्।

---

कार्यजननं प्रतीत्यनेन योजनीयं विद्यमानमपि मेलनं कार्यजन्मप्रति न प्रयोजकं स्यात् परस्परसहकारित्वाभावात्। ततश्च यथा एकस्मिन् देशे एकस्मिन् काले च जायमानयोः पटघटयोः सामग्र्योः न कार्यैक्यं तथा प्रत्यभिज्ञापि कुतो न ज्ञानद्वयं स्यात् मेलनामेलनयोः संस्कारसम्प्रयोगयोः प्रत्येकं स्वस्वकार्यजननसामर्थ्यस्याविशेषादिति। **ततश्चाविशेषादिति**[1]। तथा च सिद्धमेककार्यत्वम्। नानाकार्ये परस्परसहकारित्वाभावादिति। अनुभवांशेऽपि संस्कारस्य व्यापार इति सम्प्रयोगे प्रत्यभिज्ञाशक्त्या आधानं तथा सम्प्रयोगस्यापि संस्कारनिष्ठानुभवशक्त्या आधानं तदेव चोपकारशब्दवाच्यं कालोपधायकमात्रवृत्ति अन्यथाकारित्वलक्षणविरुद्धधर्माध्यासापत्तेरिति भट्टमतदूरदर्शिनः नियामकत्वाभिमतयोः व्यापारवतोः संस्कारसंप्रयोगयोरित्यर्थः **सङ्करेणेति**। एकस्मिन्नेवांशे स्मृतित्वानुभूतित्वसङ्कर इत्यर्थः।

नैयायिकमतं दूषयति—**नाप्यनुभव एवेति**। अभेदो हि न स्वरूपमात्रं किन्तु तत्ताविशिष्टप्रतियोगिकान्योन्याभावात्यन्ताभावत्वं तच्च प्रतियोगिघटितमूर्तिकतया तदसन्निकर्षे असन्निकृष्टतत्ताविशिष्टांशे अस्ति संस्कारः इदन्ताविशिष्टांशेचेन्द्रियं ग्राहकमस्तु तत्ताविशिष्टाभेदांशे तु नैकस्यापि सामर्थ्यं संस्कारस्य तदगोचरत्वात् इन्द्रियस्य च तेन सममसन्निकर्षात् इत्यर्थः। ननु इन्द्रियेण सममस्ति प्रत्यासत्तिः, तथाहीन्द्रियेण संयुक्तं मनः तत्संयुक्त आत्मा तत्समवेतः संस्कारः

---

१. ततो विशिष्यते इति।

**दोषवशात्तत्र तत्प्रकाशो न सम्बद्धविशेषणत्वादिति चेन्न, विनाऽपि संस्कारं दोषवशात्तदापत्तेः । वस्तुप्रकाशिनि च दोषत्ववाचोयुक्त्यनिरुक्तेः ।**

**क्वापि तस्यावस्तुप्रकाशित्वाद्दोषश्चेत्; कथमक्षादेरपि तन्न स्यात् ? विशिष्टत्वेन तथात्वस्य प्रकृतेऽप्यपरिहारात् । न हि विनैव कुतोऽपि विशेषादस्यावस्तुप्रकाशिता । सत्यप्यर्थे दोषादवस्तुन एव प्रकाशे संशयात् प्रेक्षावत्प्रवृत्त्यादेरसम्भवापत्तेः ।**

**वस्तुविषयत्वेऽपि दोषादनिश्चयतेति चेन्न, वस्तुतस्तस्यासंकीर्णत्वात्तस्य प्रकाशे तदेव संशयैककोटौ प्रकाशितमिति कुत्र तदनिश्चयता ? निश्चयार्थस्य च**

---

तद्विशेषणं सत्ताविशिष्टाभेद इति इन्द्रियसम्बद्धविशेषणताख्या प्रत्यासत्तिरस्तीत्याशङ्क्य निषेधति—नचेत्यादिना **विनापि संस्कारमिति**। धर्मीन्द्रियसन्निकर्षस्य सामान्यग्रहणकारणत्वाद्, दोषस्य च सन्देहहेतुत्वात् । संस्कारघटितसन्निकर्षस्य क्वाप्यनुपयोगात् सन्देहः स्यादिति भावः। अथेन्द्रियसम्बद्धविशेषणता संस्कारघटिता दोषविशिष्टा संशयहेतुः संस्कारस्य अन्वयव्यतिरेकग्रहादित्याशङ्क्याह—**वस्तु प्रकाशिनि चेति** । अभेदमिन्द्रियविशेषणतया सम्बद्धं यदि दोषो भासयति तदा तस्य दोषत्वमेव स्यादित्याशयः । अथ यत्र तदभेदो नास्ति तत्र अवस्तुप्रकाशकतया दोषत्वं तर्हि चक्षुरादावप्यतिव्याप्तिः स्यादित्याह—**क्वापीति** । स्वरूपे वस्तुप्रकाशकत्वमेव दोषत्वं न च चक्षुषः स्वरूपेण तथात्वं किन्तु दोषविशिष्टस्येत्याशङ्क्ते । विशिष्टत्वेन तथात्वस्य[३] = विशेषणताख्यसन्निकर्षस्य। तथा च यत्रार्थोऽस्ति तत्र दोष एव नेति दोषविशिष्टसन्निकर्षाभावात् कथं संशय इत्याशयः। अथार्थसत्त्वं न दोषविरोधीति सन्निकर्षो दुष्ट एवेत्याशयेनाह—**सत्यप्यर्थे इति**। तथा च दुष्टः सन्निकर्षोऽसन्तमेवाभेदं भासयति इति संशयो नानुपपन्न इति। अर्थस्य दोषाविरोधित्वे दोषमाह—**प्रेक्षावत्प्रवृत्यादेरिति**। आदिपदेन रजतार्थिनो रङ्गेप्यनिवृत्त्यापत्तिः तत्राप्यसतो रजतत्वस्य भावादिति भावः।

**निश्चयार्थस्येति**। निश्चयस्य यो विषयो भावरूपः घट इत्यादौ घटत्वं तस्य भानात् न घटाभावज्ञानेन खण्डनं तथा च द्वयोरप्येकस्मिन् ज्ञाने विषयतया प्रमाणसिद्धतया भावाभावात्मकमेव वस्तु स्यादिति। एतेन यदाहुरेके—

वा शब्दो विकल्पार्थो विकल्पोऽप्येकवस्तुनः ।
विरोधरूपोऽभिमतः समारोपितरूपयोरिति ॥

---

१. अवस्तु प्रकाशतया । २. कापीति । ३. विशिष्टत्वेन तथात्वं स्यात् अस्येति ।

**संशयकोटावखण्डने संशये तदभावाधिकग्राहित्वेऽपि निश्चयत्वस्याप्रत्यूहत्वादेव अभावनिश्चयः कोटयन्तरं केवलमधिकं स्यात् ।**

**जातिः संशयत्वम्, तत्प्रयोजकदोष इति चेन्न, 'इदं तद्वा न वा' इति संशयकोटयर्थनिर्देशसमन्वयेन वाशब्दप्रतीतिव्यवहारयोरभावापत्तेः । प्रतीत्या**

---

तदपास्तम्, प्रतीतयोः विरोधासम्भवात् । **अधिकमिति**[1] । घटोऽयमिति निश्चयाद् वैलक्षण्यमिदमेव न तु संशयत्वमितिभावः । एतेनाभावांशे भ्रम इत्यपि न युक्तं बाधाभावात् । विशेषदर्शनदशायामस्ति बाध इति चेन्न । तस्य इतो भिन्नत्वात् । यद्वा घटत्वं भासत एव तच्च यद्यस्ति तदा तन्निश्चय एव सः परन्तु भावोऽप्यधिकः तत्र भासते, तथाचोभयनिश्चयरूपमेव न तु संशयाख्यमपरमिति भावः । कुत्र कौटौ अनिश्चयत्वं घटत्वाभावांशे संशयः स्यादित्यपि नास्ति तस्यापि घटत्वाभावमात्रविषयत्वेन निश्चयात्मकत्वात् एककोटिकस्य संशयस्याभावः तथा च विरुद्धानेककोटिकं ज्ञानं संशय इत्यपास्तम् । न च तदभावाप्रकारकं तत्प्रकारकं ज्ञानं संशयः सचाभावकोटिप्रकारत्वे न सम्भवतीति वाच्यम् । विरुद्धसमुच्चयात्मकनिश्चयाव्याप्तेः विरुद्धत्वे भासमानायाः कोटेः[2] तदप्रकारकत्वमिति चेन्न । पीतः शङ्खः इति निश्चयाव्याप्तेः । विरोधज्ञानाजन्यत्वमपि विवक्षितमिति चेन्न । विरोधज्ञानजन्यतावच्छेदकस्याप्रसिद्ध्या तदभावस्य ज्ञातुमशक्यत्वात् ।

अत्र शङ्कते—**जातिरिति** । अर्थनिर्देशोऽर्थस्य वाचकः शब्दः तेन समन्वयः सामानाधिकरण्येन स्यात् । वा शब्दस्य प्रतीतिः व्यवहारश्च तस्य प्रयोग इत्यर्थः । अयमाशयः—संशयकोटयोर्विषयः स्थाणुत्वं पुरुषत्वं च तन्निर्देशः स्थाणुशब्दश्च पुरुषशब्दश्च तत्समर्थित एव वा शब्दः प्रतीयते पुरः क्रियते च । तेन स्थाणुत्वपुरुषत्वयोरव्यवहितत्वमेव वा शब्दार्थः, तथाच विषयकृतमेव वैलक्षण्यं विरोधज्ञानजन्यतावच्छेदकं न संशयत्वं जातिर्मानाभावात्, चाक्षुषत्वादिना सांकर्यापत्तेः, धर्म्यंशेऽपि संशयत्वापत्तेः । अतएव संशयत्वं मानसत्वव्याप्यवृत्तिश्चेत्यपास्तम् । अपसिद्धान्तापातात् । अथ संशयहेतुसूत्रे[3] च वर्द्धमानोपाध्यायेन तथा स्वीकृतेर्नापसिद्धान्तः नवा विषयवैलक्षण्यम् । किञ्च तदस्ति तदभावातिरिक्तं, तच्च तादृशनिश्चयत्वेनाप्युपपत्तेः । नच सन्देह इत्यनुव्यवसायविरोधः तावतापि विषयवैलक्षण्यानिर्वचनात् । यावान् विरुद्धसमुच्चये विषयः तावताऽधिकस्याप्रकाशात् । वाकारार्थोऽधिकोऽव्यवस्थितत्वं कोट्योः विषय इति चेत्—किमव्यवस्थितत्वं विशेषप्रकारेणावस्थितिः वस्तुनोर्व्यवस्था, यथा कस्यचित् स्थाणुत्वेन कस्यचित् पुरुषत्वेन

---

१. अधिकं स्यादिति ।

२. कोटिः ।

३. संशयहेसूत्रे ।

**सह वाकारार्थसम्बन्धे 'प्रत्येमि न वे' ति तदापत्तेः । वाकारार्थस्य प्रतीतिगतत्वेऽपि निश्चयत्ववत् 'स्थाणुमानय पुरुषं वे' ति स्थाणुपुरुषगतपाक्षिकव्यवहारानापत्तेः । तस्माद् वाकारार्थस्य ज्ञानधर्मत्वे साक्षात्कारित्वादिवद्विषयानन्वयापत्तिरेवेति ।**

---

तद्विरहोऽव्यवस्थेति चेत् । किमियं संशये विषयः, ओमिति चेन्न । मानाभावात्, विरुद्धत्वेन निर्णीतयोः कोटयोः प्रकारतामात्रं तत्त्वं, तच्च शङ्खपीतयोः द्वयोरपीति[1] न ततो विशेषः । अत्र विरोधोऽपि भासते इति चेत्तत्रापि तद्भानसम्भवात् । किञ्च स्थाणुपुरुषत्वयोरेकधर्मिगतत्वेन प्रतीतयोः विरोध एव । मिथ्या तर्हि सर्वत्रैव पुरुषे स्थाणुत्वभानं स्यादिति चेन्न । क्वचिदेव प्रतीतेः, क्वचिदेव समाविशति । अथ वाकारो विकल्पार्थः विकल्पश्च पाक्षिकत्वात्मकः ततश्च तस्य विषयसम्बन्धे कदाचित् स्थाणुः कदाचित् पुरुषः इत्यर्थः स्यात् नचैवं सम्भवतीति वाकारः प्रतीतिगतमेव पाक्षिकत्वमुपस्थापयति तदाह–**वाकारार्थस्येति** । प्रतीतेः स्वप्रकाशतया प्रत्येमीतिवत् तस्याः पाक्षिकत्वे कदाचित् प्रत्येमि कदाचिन्न प्रत्येमीत्येव संशयाकारः स्यात् नत्विदं स्थाणुं वा पश्यामि पुरुषं वेत्याकारः स्यात् ।

विद्यासागरस्तु यथा गुणत्वस्य ज्ञानगतस्य ज्ञानं गुण इत्येवं प्रतीतिरेवं[2] संशयत्वस्यापि ज्ञानगतस्य वाकारेण समन्वये प्रत्येमि नवेति प्रतीत्याकारः स्यादित्यर्थः इति व्याचष्टे । तत्तु न संशयत्वस्य[3] ज्ञानधर्मता सर्वसम्मता [4]कथमपह्नूयत इत्यत आह—**वाकारार्थस्येति** । सत्यं संशयत्वं ज्ञानधर्मो नतु वाकारार्थः । **निश्चयत्ववदिति**[5] । यथा निश्चयत्वं ज्ञानधर्मः नार्थेन तथा वाकारार्थो यदि संशयत्वं तदा विषयेणान्वितं स्यात् । अन्वयश्चेह साक्षादेव विवक्षित इत्याह—**स्थाणुमानयेति** । इमम् आनय स्थाणुं पुरुषं वेत्याकारो नतु निश्चितः साक्षात्कृतः इतिवत् परम्परया सन्दिग्धाहं इत्याशयः । साक्षात्कारित्ववदिति । साक्षात्कारिज्ञानमित्येवान्वयो नतु विषयो यथा तथा । वाक्यार्थस्य संशयत्वे पुरुषः संशय इतिवत् स्थाणुर्वा पुरुषो वेत्यन्वयो न स्यादित्यर्थः । अनुभूतिस्वरूपैस्तु वस्त्वभासित्वेऽपि संशयत्वजातिः दोषेण त्यज्यते इति तस्य दोषत्वं भविष्यतीत्याशङ्कते **जातिरिति** । विकल्पितरूपत्वं संशयत्वं, तस्य ज्ञानगतजातित्वेऽर्थे विकल्पितव्यवहारो न स्यादतः संशयत्वं न जातिरिति ज्ञानगतेनैव विकल्पितरूपेण अर्थे विकल्पितव्यवहारो भविष्यतीति न वाच्यमित्याह –**वाकारार्थस्येति** । अन्यगतेन विकल्पितरूपत्वेन अर्थे विकल्पित-

---

१. शंखपीतद्वयोरपीति ।

२. प्रतीतिरेव ।

३. संशयत्वस्य वार्थत्वे संशयपदं समानार्थत्वस्यैवोचितत्त्वेन स्थाणुपुरुषसन्देह इतिवत् स्थाणुं पुरुषं पश्यामीत्याकारस्यैवापत्तेः इति ख पुस्तकेऽधिकः पाठः ।

४. कथमपद्रूयत ।     ५. निश्चयदिति ।

**न च प्रत्यासत्तौ सत्यामपि प्रत्यासत्त्यपुरस्कारान्मनसा न ग्रहणं तत्र दोषवशादित्यस्तु। दोषे सत्यपि वस्तुनः संस्कारेण, संस्कारस्य चाऽऽत्मना, तस्य च बाह्येन्द्रियेण, प्रत्यासत्त्यपेक्षण एव तदर्थप्रकाशादिनियमोपपत्तेः कः पुनः प्रत्यासत्त्यपुरस्कारस्त्वन्मते स्यात् ? यदि तु संस्कारप्रत्यासत्तिमनपेक्ष्य तथा सन्दिह्यते, तदा अननुभूय प्रस्मृत्य वा तथा सन्दिह्येत।**

रूपत्वेऽतिप्रसङ्गात् यथा निश्चितेऽर्थे पाक्षिकव्यवहारो निश्चयत्वं च न भवति तथा[1] संशयितेऽपि न स्यात्. दृश्यते च अतः संशयत्वजातिव्यञ्जकत्वेन वस्त्ववभासिनोऽपिदोषत्वमित्ययुक्तमित्यर्थः[2] इति प्रघट्टकार्थो व्याख्यातः।

ननु संशयत्वं ज्ञानगतजन्यं, वाकारार्थस्तु तद्विषय एवान्वेति तथैव प्रतीतेः, प्रतीतिर्हि नियामिकेति नातिप्रसङ्ग इति चेन्न। विषयगतवाकारार्थोल्लेखिज्ञानत्वमेव संशयत्वं न जातिः तत्र प्रमाणाभावात् इत्याशयात्। प्रत्यासत्त्यपुरस्कारात् दोषात् प्रतिबन्धात् संस्कारस्य सतोऽप्यपुरस्कारात् अहेतुत्वादिति यावत्। अभेदज्ञानं प्रत्यक्षं नोत्पद्यते किन्तु दोषादेव तत्प्रकाशः इत्याशयः।

**दोषे सत्यपीति**। दोषो यद्यपि हेतुः तथापि तस्य विशेषादर्शनद्वारकस्य संस्कारप्रत्यासत्तितायां न प्रतिबन्धत्वमुपपद्यते। नहि तेन संस्कारस्वरूपोत्पत्तिप्रतिबन्धकः सम्भवी तस्य प्रागुत्पन्नत्वात्। नचातच्छक्तिप्रतिबन्धः तस्याः त्वयानभ्युपगमात्। नच तन्नाशकत्वं[3] निवृत्ते[4] दोषेऽनन्तरं सोऽयमेवेति निश्चयानुपपत्तेः इत्याशयः। दोषस्य अवश्यापेक्षत्वे संस्कारस्य कारणत्वे किं वीजमित्याशङ्क्य तस्याप्यावश्यकतामाह—**यदित्विति**। अननुभवे, कालव्यवधानादिना संस्कारनाशे वा संशयो नोत्पद्यते इति तस्याप्यावश्यकत्वमित्यर्थः।

अत्र शङ्करमिश्राः[5]— अप्रमात्वावच्छिन्नकार्यता[6]प्रतियोगिककारणतावच्छेदकरूपवत्त्वेन प्रमाप्रतिबन्धकत्वेन, वा[7] पित्तादिदोषत्वमिति दोषखण्डनमयुक्तम्। तथा इमं धर्मिणं स्थाणुत्वेन पुरुषत्वेन वा न[8] निश्चिनोमि किन्तु सन्दिहानोऽस्मीति निश्चयविरुद्धस्य सर्वलोकसिद्धस्य संशयस्य निश्चयत्वमापाद्य उपपादयितुमशक्यत्वं, कारणस्य च समानासाधारणधर्मदर्शनविप्रपत्तिरूपस्य प्रतिस्वं निश्चयकारणविलक्षणस्यानुभवात्। संशये च विधिकोटिनिषेधकोटयोः ( अन्यतरस्य ) प्राधान्यमनुभूयमानमशक्यापलापम्। वाकारार्थश्च विरोध एव स्थाणुर्वा पुरुषो वेतिशब्दश्रवणानन्तरं स्थाणुपुरुषविरोधज्ञानं विरोधप्रतिसन्धायिनश्चैषशब्दप्रयोग इति प्रतिसन्धा-

१. तथा तथा। २. इत्युक्तमिति क पुस्तके।
३. स्वरूप प्रतिबन्ध इति भावः।
४. निवृत्तेर्दोषेनन्तरं सोऽयमेवेति निश्चयात् ख पुस्तके।
५. पृ० १६८। ६. कार्याप्रति। ७. पित्त्यादि। ८. न श्चिनोमि।

**वस्तुतस्तु मनसा संस्काराग्राहिणा, चक्षुरादिना च आत्माऽग्राहिणा, तादृश-**

नादित्याहुस्तन्न। अप्रमात्वस्य अनुगतस्याभावात् तदप्रमात्वं तथा वाच्यं तथा च तद्घटितदोषत्वाननुगमः। कारणतावच्छेदकं च यदि पित्तत्वं तदा काचकामलादौ अव्याप्तिः पित्तस्य च दोषतायाः पित्तप्रमायाः भ्रमत्वापत्तिः। स्वप्रमायां पित्तं न दोष इति चेत्, तत् किं पित्तं न पित्तं किं वा [1]अप्रमाजनकतावच्छेदकरूपवन्न। आद्ये व्याघातः। द्वितीये तु किं तदिति वक्तुमशक्यम्। यच्च प्रमाप्रतिबन्धकत्वेन तन्निरुक्तिः, तदपि न युक्तं दोषस्य प्रमाकारणीभूताभावप्रतियोगित्वे, गुणस्य प्रमाकारणत्वाभावप्रसङ्गे अपसिद्धान्तापाताच्च। सन्दिहानोऽस्मि इत्यस्य च विरुद्ध-कोटिद्वयनिश्चयत्वमेव विषयः कारणमपि तादृशनिश्चय एव विधिकोटिनिषेध-कोटचोः प्राधान्यं च निश्चयविशेषेऽस्मिन् नानुपपन्नं, लोकप्रसिद्धिश्च भ्रममूलेति न किञ्चिदेतत्। संस्कारद्वारा विशेषणतायाः प्रत्यासत्तित्वमभ्युपेत्य संशयानुपपत्तेः। उपपत्तिरुक्ता सम्प्रति तस्याः प्रत्यासत्तित्वमेव खण्डयति। **वस्तुतस्त्विति**। तत्ता-वच्छिन्नाभेदः किं मनसा अनुभूयतो चक्षुरादिना वा, उभयथाप्यनुपपत्तिः। यदि हि मनसा चक्षुरादिना वा संस्कारो गृह्येत तदा तस्य सम्बन्धस्य विशेषणीभूतः तत्ता-वच्छिन्नाभेदोऽनुभूयेत यथा मनोग्राह्यस्य सम्बन्धस्य ज्ञानादेर्विशेषणं [2]ज्ञानभिन्नत्वं मनसाऽनुभूयते संस्कारस्त्वतीन्द्रियत्वादग्राह्यः चक्षुरादिना तद्ग्रहणे [3]बाधकमाह— **आत्माऽग्राहिणेति**। यथा चक्षुर्ग्राह्यस्य सम्बन्धस्य स्वरूपादिविशेषणमद्रव्यत्वं चक्षुषा गृह्यते तथा यद्यात्मा चक्षुषा गृह्येत तदा आत्मसमवेतस्याऽपि ग्राह्यत्वं कथञ्चिदाशङ्कयेत। गुणगुणिनोः [4]शक्तिशक्तिमतोर्वा अभेदमाश्रित्य आत्मनः चक्षु-राद्यग्राह्यत्वे तु नेयं शङ्का कथमप्यवतरतीत्याशयः इति विद्यासागरः। वस्तुतस्तु संस्कारविशेषणता किं मनस एव प्रत्यासत्तिः चक्षुरादिकं त्वप्रत्यासन्नमेव जनकम्। जनकेन्द्रियसन्निकर्षो हेतुः ज्ञानजनकेन्द्रियसन्निकर्षो हेतुरित्याशयेनाह—**मनसा संस्काराग्राहिणेति**[5]। यदि चाक्षुषी प्रत्यभिज्ञा चक्षुः प्रत्यासत्तिमपेक्षते तदा चक्षुः संयुक्तात्मसमवेतसंस्कारविशेषणता प्रत्यासत्तिरित्युच्यते तदाह—[6]**चक्षुरादिनीति**। तथा च तस्यात्माऽग्राहकत्वेन तत्समवेत संस्कारग्राहकत्वं दूरपरास्तम्। ततश्चक्षु संयुक्तात्मसमवेत संस्कारस्य विशेषणतया तद्ग्रहणशङ्काऽपि नेत्याशयः। सम्बन्धस्य [7]ज्ञानेऽपेक्ष्यमाणहेतुमाह—**नियमेनेत्यादि**। स्वेन इन्द्रियेण ग्राह्यश्चासौ सम्बन्धश्च स्वग्राह्यसम्बन्धः तस्य विशेषणं तस्यभावस्तत्ता तस्या एव

१. अप्रमाजान्यतावच्छेदक इति क पुस्तके।

२. अज्ञानभिन्नत्वं मनसानुभूयत्वे संस्कारस्त्वतीन्द्रियत्वाग्राह्यः।

३. अधिकमाह। ४. शक्तिमतोर्वा। ५. संस्कारग्राहिणा। ६. चक्षुषांचेति।

७. ज्ञानमपेक्ष्यमात्रहेतुमाह।

**प्रत्यासत्त्या ग्रहणानुपपत्तेः; नियमेन तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकेतरस्य ग्रहणे स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वनियमात्। अन्यथा आप्यपरमाण्वादौ**

प्रत्यासत्तित्वात्। यदिन्द्रियं ग्राहकं तद्ग्राह्यं[1] यत् सम्बद्धं तद् विशेषणं तस्य प्रत्यासत्तिः यथा चक्षुषो भूतलस्य तादृशाविशेषणीभूतेन घटाभावेनात्रानुकूलं तर्कम् अन्यथेत्यादिना वक्ष्यति। ननु शब्दाभावे श्रोत्राग्राह्याकाशविशेषणतायां व्यभिचार इत्याशङ्क्याह—**तदिन्द्रियेति**। शब्दाभावादिग्राहकश्रोत्रादि तदुच्यते तेन श्रोत्रादिना न ग्राह्यः आकाशादिराश्रयो यस्य शब्दादेः स तदिन्द्रियाग्राह्याश्रयकः शब्दादिः स प्रतियोगी यस्य शब्दाभावादेः[2] तस्य ग्रहणेऽयं नियमः इत्यर्थः इत्यशुद्धम्। शब्दाभावस्याप्रत्यक्षत्वात् प्रत्यक्षत्वपक्षेऽपि सम्बद्धविशेषणतायामेवायं नियमो नतु विशेषणतायामिति मूल एव व्यक्तम्। तस्माद् गन्धरसाभावयोर्ग्राहिकायां विशेषणतायां व्यभिचारवारणायैवेदम् इतरान्तम्। स्वग्राह्यत्वविशेषणप्रवेशे गौरवमाशङ्क्य निराकरोति **नियमेनेति**। तथाच अन्वयव्यतिरेकप्रमाणसिद्धत्वात् न गौरवं दोषायेत्याशय इति। यद्वा रूपाश्रयस्य क्वचित् चक्षुर्ग्राह्यत्वात् परमाणुनिष्ठश्यामत्वाभावोऽपि इन्द्रियग्राह्याश्रयप्रतियोगिकेतर इति तद्ग्रहेऽपि स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वं प्रसज्येतेति नियमेन इति विद्यासागरः। तन्न। अन्यथोत्पन्नेनैव गौरवस्य निरस्यत्वात् नियमेनेत्यस्य पौनरुक्त्यापत्तेः। यद् वेत्याद्यनुक्तं यत्र प्रत्ययत्वं[3] तत्र स्वग्राह्यसम्बद्धविशेषणताप्रत्यासत्तिः नतु तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकेतरत्वं यत्र, तत्र स्वग्राह्येन्द्रियविशेषणता प्रत्यासत्तिकत्वमिति, तस्मात् यत्र सम्बद्धविशेषणतायाः प्रत्यासत्तित्वं तत्र स्वग्राह्यसम्बद्धप्रतियोकत्वमिति व्याप्तेः परिच्छेदो न घटाभावस्य सम्बद्धविशेषणतायां सम्भवात्, तस्य तदिन्द्रियाग्राह्याश्रयप्रतियोगिकत्वात्। गृह्यते हि—घटस्य आश्रयं भूतलम् अगृहीत्वापि कदाचित् घट इति तदिन्द्रियाग्राह्याश्रयप्रतियोगिकेतरग्रहणत्वं तत्राप्रसिद्धं स्यात् इति नियमेनेति। तेन नियमतो यस्याश्रयो न तदिन्द्रियेण गृह्यते इति। यथा च यस्याभावस्य प्रतियोगिनः आश्रयः तदिन्द्रियग्रहणस्वरूपायोग्य इति पर्यवसिते भवति घटाभावोऽपि तदितर इति तत्प्रत्यक्षे व्याप्तिग्रहः। अत एव नियमेन इत्यन्ता[4] फक्किका तादृशप्रत्यासत्त्या ग्रहणानुपपत्तिनियमादित्यर्थ इति मिश्रस्यापव्याख्यानम्। व्याप्तिग्रहस्थलाभावापत्तेः। नच तदिन्द्रियाग्राह्यस्यैव तदिन्द्रियस्वरूपायोग्येत्यर्थो वाच्यः तथापि ग्रहणानुपपत्तेरेतावतैवोपपत्तौ नियमेनेत्यस्य वैयर्थ्यापत्तेरिति। स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वेति। स्वग्राह्यस्य भूतलादेर्व्यवधानदशायामपि घटाभावप्रत्यक्षता स्यादिति सम्बद्धेत्याह। तावन्मात्रे च स्वरूपयोग्यसम्बन्धमादायातिप्रसङ्ग इति स्वग्राह्यपदम्। अथ तदि-

१. तदग्राह्यम्। २. शब्दाभावादिः।
३. प्रत्यत्वम्। ४. इत्येता फक्किका।

पृथिवीत्वादेरन्यत्र ग्राह्यतया निरस्तस्वरूपायोग्यत्वस्याभावो दृगादिभिर्गृह्येत । न

न्द्रियाग्राह्यौ आश्रयप्रतियोगिनौ यस्य तदितरेति व्याख्याय शशविषाणं पिशाचो न भवति, इत्ययम् अभावप्रत्यये व्यभिचारवारणायोपात्तमिति स्वरूपस्य[1] भ्रमः। ग्रहणपदस्य प्रत्यक्षपरत्वेन तत्र तादृशप्रत्यक्षाभावात् वायौ रूपाभावप्रत्यक्षे अग्राह्यसम्बद्धविशेषणताया व्यभिचारः स्यादिति तदिन्द्रियाग्राह्याश्रयकेतरेति विशेषणं, तथापि गन्धप्रागभावप्रत्यक्षे तादृशप्रत्यासत्तेर्व्यभिचारः तस्यापि घ्राणग्राह्याश्रयकगन्धेतरप्रत्यक्षत्वादिति । तस्य च तदिन्द्रियाग्राह्यौ आश्रयप्रतियोगिनौ यस्य तद्भिन्नत्वमर्थः। गन्धप्रागभावस्तु यद्यपि घ्राणाग्राह्याश्रयकः तथापि घ्राणग्राह्यप्रतियोगिकः इति न तदितर इति तद्ग्रहे स्वग्राह्यसम्बद्धविशेषणता प्रत्यासत्तिरेव नेति कथं व्यभिचारः । एवं रूपाभावोऽपि न चक्षुर्ग्राह्यप्रतियोगिक इति न तद्ग्रहे स्वग्राह्यसम्बद्धविशेषणता हेतुरिति न तद्व्यभिचारो दोषाय। येतु यस्याभावस्य प्रतियोगी तदिन्द्रियाग्राह्याश्रयकः तदितरप्रत्यक्षग्राह्यसम्बद्धविशेषणताहेतुरिति व्याचक्षते । तेषां व्यभिचारो दुरुद्धरः । यच्च प्रतियोगिग्राहकेन्द्रियाग्राह्ये अधिकरणे यः प्रतियोगी समारोप्य निषिध्यते स एव तदिन्द्रियाग्राह्याश्रयक प्रतियोगी तादृशः प्रतियोगी यस्याभावस्येति रूपाभावेऽपि न तदितरत्वं शङ्करमिश्राणाम् आरोप्यसम्बन्धेन रूपाभावाधिकरणमपि रूपाश्रय इत्याशयेन व्याचक्षते तदारोपस्य हेतुताया दुष्टत्वात् अतिदुष्टः आरोपे विशेष्ययोग्यतायाः तन्त्रत्वात् । नच वायुर्योग्यः नचाभाव[2]-प्रत्यक्षतः प्रागाहार्यारोपः सम्भवत्यपि । नचारोपादाश्रयो भवति सर्वस्य सर्वाश्रयतापत्तेः । आश्रयपदे लक्षणापत्तेः । यस्याभावस्य आश्रय इन्द्रियग्राह्यस्तदितरग्रहणम् इत्येवमुपपत्तौ प्रतियोगिपदवैयर्थ्यापत्तेश्चेति । **अन्यथेति** । ननु योग्यानुपलब्धेरिन्द्रियसहकारिण्या विरहादेव तत्र कार्यानुत्पादोऽस्तु नतु प्रत्यासत्तिविरहादिति चेन्न । अनुपलब्धेः कारणत्वे मानाभावात् प्रतियोगिमति प्रतियोग्युपलम्भाभावदशायामभावभ्रमोत्पत्तौ सोऽपि हेतुरिति-चेदस्तु तदभावाद्-धूमाभावः प्रमातुः तया विनापि स्यात् इत्याशयेनाह—**जलपरमाण्वादौ पृथिवीत्वाभावादेवेति** । यदि चानुपलब्धिरपेक्षिता तदा साप्यस्त्येवेत्याशयेन जलपरमाणाविति । नचानुपलब्धेर्योग्यतापि विशेषणं सा च प्रतियोगिसत्त्वविरोधित्वरूपा नेह सम्भवति सत्यपि पृथिवीत्वे जलत्वे इव उपलम्भकाभावेन उपलब्ध्याभाससम्भवादिति वाच्यम् । अधिकरणे प्रतियोगिसत्त्वस्यात्यन्ताभावग्रहस्थले असत्त्वापादितेन प्रतियोगिसत्त्वेन यस्या अनुपलब्धेरभाव आपादयितुं शक्यते इत्या-

१. स्वरूपाचार्यस्येत्यर्थः ।

२. नचाभावः ।

**हि इन्द्रियविहारदेशेषु निष्परमाणुकत्वनियमो युक्ताभ्युपगमः। शब्दाभावप्रत्यक्षत्ववादिनये श्रोत्रेन्द्रियविशेषणता सप्तमः सन्निकर्षः, न तु तत्र सम्बद्धविशेषणतेत्यतोऽपि न व्यभिचारः।**

---

पादनयोग्यताया निरूपयितुमशक्यत्वात् । किञ्च जलपरमाणुनिष्ठतया पृथिवीत्वाभावस्य प्रत्यक्षयोग्यतायां कदाचित् उत्पादापत्तिः सन्निकर्षस्य तद्धेतोः सत्त्वात्। नच अतएव न स्वरूपयोग्यता पृथिवीत्वाभावस्य स्थूले जले प्रत्यक्षत्वात्। नच तदेवाधिकरणविशेषे अयोग्यं भवति स्वरूपस्यानपायात्। तस्मात् भूतलसम्बद्धस्यापि घटाभावस्य घटस्मृतिमतो भूतलज्ञान-काले प्रत्यक्षोदयो नान्यदेति निर्णयात् जलपरमाणोरप्रत्यक्षत्वादेव तव तदग्रहणमिति स्थिते किं तस्य सन्निकर्षसम्पादकत्वं स्वातन्त्र्येण वा कारणत्वमिति चिन्तायामाद्यमेव ज्यायः। न च लाघवेन सम्बद्धविशेषणता तेन प्रत्यासत्तित्वे सति अधिकरण प्रत्यक्षस्य कारणत्वकल्पनं फलमुखमिति वाच्यम् । सम्बद्धविशेषणतामात्रस्य प्रत्यासत्तित्वे मनसा सदैवानुभूतस्य संस्कारविशेषणतया प्रत्यक्षत्वापत्तिरतः संस्कारस्य ज्ञातस्य विशेषणतायाः प्रत्यासत्तित्वनिरासाय ज्ञातस्यैव प्रत्यासत्तिघटकतया अधिकरणप्रत्यक्षस्यावच्छेदकत्वमेवोचितमिति दिक्।

अथ परमाणोरिन्द्रियग्राह्यत्वाभाववदिन्द्रियसम्बद्धताऽपि नास्तीति कथं तद् विशेषणतया पृथिवीत्वाभावग्रहः प्रसज्येत इत्याशङ्कामपनुदति। **नहीति**। परमाणोः सर्वत्र सञ्चारित्वादिन्द्रियसञ्चारदेशेऽपि सम्भवात् इन्द्रियसम्बद्धता सम्भवति नतु ग्राह्यता, इन्द्रियायोग्यत्वेनाभाववद् इन्द्रियसम्बद्धताया अप्यभावे[१] किञ्चित् कारणमस्ति। किञ्च इन्द्रियसञ्चारदेशे परमाणोरभावे तत्कार्यस्य स्थूलस्याभावप्रसङ्गात् परमाणूनामविरलतया अवस्थानमिति इन्द्रियसम्बद्धता दुर्वारा। ननु शब्दाभावो न प्रत्यक्ष इति मते स्वग्राह्यसम्बद्धविशेषणता अस्तु प्रत्यासत्तिः तत्प्रत्यक्षमते तद्ग्रहे एव स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्ति व्यभिचार इत्याशङ्क्याह—**श्रोत्रेन्द्रियविशेषणता सप्तम इति**। सम्बद्धविशेषणता। सम्बद्धस्य विशेषणतासम्बन्धस्य ग्राह्यत्वं न व्यभिचरतीति मतं तच्च विशेषणमात्रस्य ग्राहकत्वेऽपि न व्यभिचरति। **अतोऽपीति**[२]। तदिन्द्रियाग्राह्यतया[३] उक्तरीत्याऽपि न व्यभिचार इति अपेः[४] अर्थः। चक्षुषा सह तत्तायाश्चक्षुः संयुक्तमनः संयोगात्मसमवेतसंस्कारविशेषणता मास्तु प्रत्यासत्तिः, मनसः संस्कार एव प्रत्यासत्तिरस्तु पूर्वानुभूतार्थेन सह मनसः संस्काराभावात् कथं सा[५] प्रत्यासत्ति रित्याशङ्क्याह—

---

१. इन्द्रियग्राह्यतावद्। २. इतोऽपीति।
३. तदिन्द्रियाग्राह्ये तत्रेत्युक्त। ४. इत्यग्रेरर्थः क ख पुस्तके।
५. स इति।

न चाऽऽत्मसंयुक्तमनः प्रति पूर्वानुभूतार्थात्मप्रत्यासत्तिरेव संस्कार इति तदतीन्द्रियत्वं न दोषाय, प्रत्यासत्तेरतीन्द्रियाया इन्द्रियार्थसन्निकर्षस्य उपगमादिति स्वीकृते निस्तारः। तथा सति स इत्यंशे चक्षुरादेः प्रत्यासत्त्यभावात् प्रत्यभिज्ञाया अचाक्षुषत्वापातात्। अयमित्यंशो दृगादिना, तदंशस्तु मनसा गृह्यताम्, तदेतदभेदस्तु केनेत्युक्तमप्यावर्तत इति।

एतेन संस्कारः सहकारिमात्रमिन्द्रियस्यातिप्रसङ्गनिवारकः, प्रत्यभिज्ञायां तदर्थ इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्। सन्निकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्यवश्यम्भावमात्रम्, तच्चेदमंशसन्निकर्षादेव स्यात्, न तु सर्वग्राह्यसन्निकर्षसहकारिता—इत्यपि निरस्तम्, 'सोऽयं न वे'ति संशयाभावापत्तेरेवेति।

---

आत्मसंयुक्तमनः प्रतीति। मनसा सह संयुक्तसमवायः संस्कारस्यास्तीति साक्षात् सम्बन्धाभावेऽपि न क्षतिरितिभावः। पूर्वानुभूतेन अर्थेन सोऽयं घट इत्यादौ, सोऽहमित्यादौ त्वात्मना तेन यद[1]गोचर आत्मसमवेतोऽपि संस्कारो नाननुभूतः घटादिना मनसः प्रत्यासत्तिरिति नातिप्रसङ्गः। प्रत्यभिज्ञेया अर्थाश्च आत्मा च, आत्मेति समाहारद्वन्द्वे पूर्वानुभूतेत्यनेन कर्मधारयः, पूर्वानुभूतार्थस्वरूपेणेति वा आत्मपदं व्याख्येयम्। यद्वा संस्कारः स्वरूपेण प्रत्यासत्तिरेव नतु प्रत्यासत्तिघटकः तदिन्द्रियत्वं संस्कारस्य अतीन्द्रियत्वं चक्षुः संयोगस्यातीन्द्रियस्यैव प्रत्यासत्तित्वादिति भावः अचाक्षुषत्वापातात् इति। सोऽहमिति प्रत्यभिज्ञायाः सम्भवेऽपि सोऽयं घट इति प्रत्यभिज्ञा न स्यादित्यर्थ इति विद्यासागरः। अचाक्षुषपदमुपलक्षणं स्पर्शनादीनामपि, अतएवाग्रे दृगादिनेति संगच्छते। अचाक्षुषत्वे का क्षतिरित्याशङ्क्याह—तदेतदभेदस्त्विति। यद्यपि चाक्षुषमानसयोरेकदा नोत्पत्तिः सम्भवति तथापि अभ्युपेत्य उक्तम्। अथवा एकं [2]चाक्षुषमेवास्तु तत्र सा गृह्यतामिति तु मानसप्रत्यक्षाभिप्रायिकं किन्तु तदंशे मनः प्रत्यासन्नमित्यभि[3]प्रायेण, गृह्यतामिति तु सर्वस्मिन्नेव जन्यज्ञाने मनसः कारणत्वाभिप्रायेणैव प्रमाणान्तरासहकृतमनो जन्यत्वमेव मानसत्वे तन्त्रमिति सन्निकृष्टमनोजन्यत्वेऽपि न क्षतिः। अथवा एकमेव ज्ञानं तत्तांशे मानसम् इदमंशे चाक्षुषमस्तु को विरोध इत्याशयः। संस्कारो न मनसः प्रत्यासत्तिः मानाभावात्, किन्तु यदि असन्निकृष्टमपीन्द्रियं गोचरयति तदा सर्वमेव गोचरयेदिति वा अतिप्रसक्तिः। सन्निवारकमात्रं सहकारितामात्रेणापि तद्भञ्जकतोपपत्तेः। तथा च चक्षुषैव संस्कार सहकृतेन तत्तावैशिष्ट्यमसन्निकृष्टमेव गृह्यते इति मतं निरस्यति—एतेनेति।

---

१. पद। २. चाक्षुकमेव इत्यभिप्रायं।

३. उद्देश्यप्रतिनिर्देश्ययोरैक्य मम्पादयत् सर्वनामपर्यायेण तल्लिङ्गभागिति नियमेन "स प्रत्यासत्तिरि"ति क ख पुस्तके पाठोऽपि युक्त एव।

**'तदद्राक्षमि'त्यादिस्मृतिरपि चैवमनुभव एव स्यात्। मनस आत्मसंयोग-सहकृतादात्मार्थसन्निकर्षात् संस्कारात् जायमानायास्तस्या इन्द्रियार्थसन्निकर्षज-**

---

एतत्पदार्थं स्पष्टयति—संस्कारसहकृतेन्द्रियस्य प्रत्यभिज्ञात्मकनिश्चयकारणस्य सत्त्वात् निश्चय एव स्यात् दोषस्य तु खण्डितत्वात् इति भाव इति मिश्रास्तन्न। तथापि विरुद्धकोटिद्वयावगाहिनो[१] ज्ञानस्य अनुभूयमानस्य अपलापस्य अशक्यत्वेन तत्कारणस्य सत्त्वेन एकमात्रकोटिकज्ञानापादनासम्भवात्। तस्माद् यथादोषात् संशय इति वाच्यं तथा प्रत्यभिज्ञापि दोषादेवेति मयोच्यते असन्निकृष्टवैशिष्ट-विषयत्वात् विभ्रमवत् यदि चासन्निकृष्टमपि तदर्थवैशिष्टयं भासते तदा सर्वमपि भासेत। प्रतीत्यनुसारिणी कल्पनेति चेत्तर्हि संस्कारस्य सहकारितापि मास्तु प्रतीति-वलादेवाननुभूतं किञ्चिदेव भासते इत्येवास्तु। तत् किं प्रत्यभिज्ञा नास्त्येव इत्यु-च्यते। अस्त्येव परं भ्रमः। कथं तर्हि स्थैर्यसिद्धिः, न कथञ्चित् धर्ममात्रस्यैव मिथ्या-त्वात्। आत्माऽप्यस्थिर इति चेद् वाढं तत् किं क्षणिक इति चेन्न। क्षणिकत्वस्यापि धर्मत्वेन मिथ्यात्वात् आत्मनो भेदसिद्धिः कथमिति चेन्न। सर्वभेदस्य मिथ्यात्वा-देव इत्यवेहि। विशिष्टज्ञानमात्रस्य मिथ्याविषयत्वात् निर्विकल्पकमेव सत्यं तत्र कस्यापि बाधाभावात् इति वेदान्तिवरेण्या इत्यलमतिपल्लवेनेति।

संस्कारस्य प्रत्यासत्तित्वपक्षे दूषणान्तरमप्याह—**तदद्राक्षमिति**। आत्म-संयोगसहकृतं मनो विद्यते आत्मरूपो योऽर्थः तद्गोचरश्च संस्कारोऽस्ति ततश्च तदुभयस्माज्जायमानायाः स्मृतेरिन्द्रियार्थसन्निकर्षजत्वाद् अनुभवत्वं साक्षात्-कारित्वं स्यादित्यर्थः।

यद्यपि संयुक्तमनसः संस्कारः प्रत्यासत्तिरित्यत्र संयोगस्य न सहकारिता किन्तु संस्कारस्य मनसा सम्बन्धः मनः संयुक्तात्मसमवायः तेन संस्कारस्य असम्बद्धता-परिहारेण स प्रत्यासत्तित उपयुक्तः तथापि संस्कार आत्मगोचरो विद्यमानः संयुक्तस्य मनसः प्रत्यासत्तिरिति तदभिमतम्। यदि मनः आत्मसयुक्तं भवति तदुपपत्ति-वलेन उक्तः।

अयमाशयः जन्यज्ञानं प्रति मनो निमित्तकारणं तस्य आत्मना संयोगो-ऽसमवायीति स्मृतावपि तदुभयमावश्यकमिति संयुक्तमनः प्रत्यासत्तित्वं संस्कारस्य अर्थसिद्धमिति।

ननु संस्कारो यदि मनः प्रत्यासत्तिः स्यात्तदा स्मृतिः संस्कारात्माख्य-प्रत्यासत्ति जन्या स्यात् प्रत्यक्ष च स्यादिति अत्र बहिरप्रत्यासत्तिजन्यत्वमुपाधि-रित्याशङ्कया आत्मप्रत्यक्षे ज्ञानसुखादिप्रत्यक्षे च साध्याव्यापकतां दर्शयितुमाह—

---

१. द्वयावगाहिणो।  २. जन्यज्ञानभवि प्रति।

त्वादेव, मनसा आत्मसंयोगादात्मसमवायेन प्रत्यक्षीक्रियमाणैर्ज्ञानादिभिः स्मर्यमाणस्य अर्थस्याविशेषादिति ।

एतेन तत्तावच्छिन्नप्रतियोगिकान्योन्याभावविरहः स्वरूपाभेदो वाऽयं भातित्यपि निरस्तम्, अन्योन्याभावव्यतिरेकोऽन्योन्यमेव तत्तेदन्तोपाध्यवच्छिन्नयोः स्यात्, न च तन्मिलितमेकेन सुग्रहम् । एवं स्वरूपाभेदेऽपि तयोर्धर्मैक्यं तदनवगाहिना दुरवगममेव ।

संस्कारोपनीते च विषये यदि ज्ञानमनुभवः स्यात्, स्मृतिरपि कुतो नानुभूतिः ?

**मनसा आत्मसंयोगात्मसमवायेन प्रत्यक्षीक्रियमाणैः ज्ञानादिभिः स्मर्यमाणस्य अर्थस्याविशेषादिति ।** आत्ममनःसंयोगजे आत्मप्रत्यक्षे संयुक्तसमवायजे सुखादि प्रत्यक्षे च साध्याव्याप्तिरित्याशयः । आत्मसंयोगेन आत्मनि समवायेन प्रत्यक्षीक्रियमाणैः [१]ज्ञानमादिर्येषामात्मसुखादीनां तैरित्यर्थः । स्वरूपेण तु आत्मसंयोगस्याऽपि निःस्वरूपे समवायोऽस्ति यस्य मनसः तदात्मसंयोगात्मसमवायेन मनसा प्रत्यक्षीक्रियमाणज्ञानसुखादयो यथा आत्म-सम्बद्धाः तद्वत् स्मर्यमाणस्यापि अर्थस्य मनः संयुक्तात्मसन्निकृष्टत्वाविशेषात् प्रत्यक्षत्वं स्यादित्यर्थः इति व्याख्यातम् ।

क्वचित्तु आत्मसंयोगादात्मसमवायेनेति पाठस्तत्र च शब्दः[२] पूरणीयः ।

सोऽयं न भवतीति न इत्येवमनन्योन्याभाव विरहः तत्तावच्छिन्नप्रतियोगिताको भवति । **अन्योन्यमेवेति ।** नतु अन्योन्यस्मादन्यः एकतरनिषेधनिषेधस्य अन्यतरविधिरूपत्वात् ।

ननु घटे पटान्योन्याभावो घटपटत्वे एव नतु घटपटौ, कपाले तन्तुषु च घटान्योन्याभावपटान्योन्याभावविरहवत्त्वे कपालघटयोः तन्तुपटयोश्चाभेदापत्तेरिति चेन्न । प्रतियोगितावच्छेकसम्बन्धावच्छिन्नघटपटयोस्तत्रासत्त्वादेव, नहि तादात्म्य-सम्बन्धावच्छिन्नघटवत् कपालं किन्तु समवायावच्छिन्नघटवदेव, तथा तन्तवोऽपि समवायेनैव पटवन्तः इत्याशयात् । **धर्म्यैक्यमिति ।** पूर्वापरकालविशिष्टयोर्धर्मिणो रैक्यं तदभिन्नोऽयमित्याकारं भानमित्यर्थः ।

न्यायाचार्य मतं दूषयति—**संस्कारेति ।** प्रत्यभिज्ञा स इत्यंशे नानुभूतिः स्यात् संस्कारजत्वात् स्मृतिवत् । विपक्षे बाधकमाह—**स्मृतिरपीति ।** केवलसंस्कार-जन्यत्वं स्मृतिप्रयोजकम् अतिरिक्तकारणजत्व[१]मनुभवत्वे इति वादिकल्पनैव विनिगमिकेत्याशङ्क्याह—**स्वयं कल्पितेति ।**

१. तात्तत्रादिर्येषाम् ।

२. समुच्चयबोधनायः चकारः पठनीयः समस्तपाठस्यैव बहुलमुपलम्भात् चकारोऽनादेयः ।

अथ न संस्काराधीनत्वमात्रेण स्मृतित्वम्, किन्त्वनुभवकारणासम्पृक्त-संस्कारजत्वेन। ततश्चाधिकार्थाक्षसन्निकर्षापेक्षं प्रत्यभिज्ञानकनुभव एव भवति, न तु स्मृतिरिति चेन्न। संस्कारासम्पृक्तानुभवकारणजत्वेन अनुभव त्वं भवति, प्रत्यभिज्ञानन्तु संस्कारसहितानुभवकारणजं स्मृतिरेवेति वैपरीत्यं किं न स्यात् ?

अन्यत्र न स्मृतिरनुभवकारणसम्पृक्तसंस्कारजन्मेति तु नान्यत्रानुभवोऽपि संस्कारसम्पृक्तार्थेन्द्रियसंयोगजन्मेति साम्यादेवाबाधकम्।

तदेवं विनिगमनायां प्रमाणाभावात् स्वयं कल्पितव्यवस्थानवैपरीत्येनाऽपि कल्पनासम्भवात् प्रत्यभिज्ञानमुभयकारणम्प्लवात् स्मृतिश्चानुभवश्चेति मन्तव्यम्। तथा च स्मृतिव्यावृत्तमनुभवत्वं जातिरस्तीति दुष्प्रत्याशा निरवकाशा।

न च विषयांश स्मृतित्वानुभवत्वयोर्व्यवस्था कर्तुं शक्यते, तन्निरासस्य निवेदितत्वात्। ततश्च तदेव ज्ञानं तस्मिन्नेवांशे स्मृतिश्चानुभूतिश्चेत्यापतितेऽपि यदि न विरोधबुद्धिर्भवतस्तदा तदधीने तत्रैवार्थे प्रमात्वाप्रमात्वापाते साऽस्तु।

एतेन विरोधापत्त्या अनुभवत्वस्वीकारे बाधकेन स्मृतिव्यतिरिक्तमनु-भवत्वं नामानुगतं साक्षात्कारीज्ञानानुमित्यादिसाधारणमनुभवबलादेव व्यवस्था-नीयमिति प्रतीतिकलहोऽपि निरस्तः।

ननु चानुभव एव शरणमिह, प्रत्यभिज्ञाने ह्यनुभवत्वमेवानुभूयते न तु स्मृतित्वम्। तेन संस्कारजत्वेऽपि इन्द्रियार्थसन्निकर्षाधिकापेक्षया अनुभवत्वमेवेति विनिगमनायामपीदमेव प्रमाणम्। अन्यथा प्रत्यभिज्ञानेऽनुभवप्रत्ययो न स्यादिति प्रतीतिकलहेन प्रत्यवस्थेयमिति। न, इदन्तातत्तावभासयोरनुभवस्मरणभागयोः सत्त्वेनानुभवस्यैकपक्षे असाधारणीकृत्य प्रमाणयितुमिहाशक्यत्वात्

---

केवलेति विशेषणप्रवेशे गौरवं संस्कारजन्यत्वमेवातिरिक्तत्वे प्रयोजकमिति कल्पनाऽपि[२] सम्भवतीत्यर्थः ततश्च यत्काले तं तदाह—**प्रत्यभिज्ञानमुभयकारण-संप्लवादिति**। [३]स्मृत्यतिरिक्तत्वेनैव व्यवहारोपपत्तौ साक्षात्कारि साधारणमनुभवत्वं नेष्टव्यम्। अङ्गीकारे प्रमात्वाप्रमात्वयोरेकत्रावस्थानप्रसङ्ग इतिदूषणमतिदिशति—**एतेनेति**। एतेन=बाधकेन स्मृतित्वानुभूतित्वसङ्करूपेण प्रमात्वाप्रमात्वयोरेका-श्रयत्वविरोधापत्त्येति यावत्। **इतन्तातत्तावभासयोरिति**। यद्यपि अयं स इत्यनु-मितावपि तत्ताभासते, नवा संस्कारजन्यत्वेनैव स्मृतित्वसंस्कारस्य सामान्यप्रत्या-सत्तितायामप्यभ्युगमेन तादृशप्रत्यक्षे व्यभिचारात्। नापि प्रत्यभिज्ञा संस्कारजन्या तत्ता स्मृतिजन्या ( हि सा ) तथैव न्यायवार्तिकोक्तेः। नच तथाप्यभेदः कथं प्रत्य-

---

१. कारणजत्वमतिरिक्तवादि कल्पनैव विनिगमका इति क ख पुस्तके।

२. कल्पनाया अपि सम्भवतीत्यर्थः क ख पुस्तके। ३. स्मृति क ख पुस्तके।

**एतेन स्मृत्यनुभवसङ्करप्रसङ्गेन अनुभूतिपदव्यवच्छेद्यं परिप्लुतं मन्तव्यम् ।**

**न च वाच्यं प्रत्यभिज्ञानं व्यवच्छेद्यं मा भूत्, स्मृत्यन्तरन्तु भविष्यतीति । तस्याप्यनुभूतित्वेन भवताऽवश्यं स्वीकर्तव्यत्वात् । तथा हि—'घटस्तत्रासीदि' त्यादिस्मृतौ पूर्वकालविशिष्टो घटः स्फुरति । न चासौ पूर्वमनुभूता भूतता, या संस्कारेणोपनीयेव । प्रत्युत पूर्ववर्तमानतया एवानुभूत्या ग्रहणम् । तस्मादिदानीं पूर्वताधीसामग्रीसम्भेदात् सोऽयमिति प्रत्यभिज्ञानवद्विशिष्टावगमोऽप्यसौ स्मृत्यनुभवात्मक एवाभ्युपगन्तव्यः ।**

---

भिज्ञाविषयः स्मरणानुपनीतत्वादिति वाच्यम् । अभेदस्य संसर्गविधयाभानात् संसर्गस्य प्रत्यासत्त्यनपेक्षणात् इति तथापि संस्कारेन्द्रियाभ्यां जायमानस्य ज्ञानस्य तदुभयरूपतायाः किं बाधकम् । नच जातिसाङ्कर्यं, तस्येष्टत्वात् । नच तत्तास्मृतिरेव प्रत्यभिज्ञाहेतुः, समसमयत्वात् । संसर्गांशे च तज्ज्ञानं प्रत्यासत्तिसापेक्षं दोषजन्यप्रत्यक्षे तस्य हेतुत्वात् अन्यथा तस्य प्रत्यक्षतैवेति कुतः स्यात् । तथाहि संस्काराजन्यतया तत्र न स्मृति स एव[1] तथा सन्निकर्षाजन्यतया न प्रत्यक्षं स्यादपीति प्रत्यभिज्ञा अभेदांशे भ्रम एवेति दिक् ।

प्रमाणलक्षणखण्डनप्रस्तावे प्रत्यभिज्ञाखण्डनस्योपयोगमाह—एतेन = अनुभूतित्वेनेति । अनुभूतित्वेन अप्रतीति इत्यर्थः । अत एव वक्ष्यति स्मृत्यनुभवात्मकएव अभ्युपगन्तव्यः इति ।[2]

नचासाविति । यद्यपि पूर्वकालविशिष्ट एव घटः तत्काले इदन्ताविशिष्टत्वेन गृहीतस्तथापि भूतत्वेन न गृहीत इत्यर्थः । नच भूतताऽपि तद्गतधर्मत्वाद् धर्मान्तरवद् गृह्यत एवेति वाच्यम् । तदानीं वर्तमानत्वग्रहे तद् विरुद्धापास्तस्याग्रहणमित्याशङ्क्य वचनत्वात् । **तस्मादिदानीं पूर्वताधीसामग्री सम्भेदादिति**[3] । इदानीं विद्यमाना या पूर्वताधीः तस्याः सामग्री तथा सम्भेदात् संस्कारस्येत्यर्थः । **सोऽयमिति प्रत्यभिज्ञावदिति** । यथा हि संस्कारेन्द्रियाभ्यां प्रत्यभिज्ञा तथाभूतता अनुभवसामग्री संस्काराभ्यां स्मृतिरित्यर्थः ।

अयमाशयः भूतता तावत् प्रतीयते साच प्रतीतिर्न चक्षुरादिना विप्रकृष्टविषयत्वात्, नापि मानसी बहिरर्थविषयत्वात् । अनुमितित्वादिकं त्वशक्यमेवेति । संस्कारः षट्प्रमाणीतो भिन्नं पूर्वताभानाय प्रमाणान्तरं कार्यवलादास्थेयमिति ।

अत्र वदन्ति पूर्वानुभवकालीना वर्तमानतैव तत्र[4] पूर्वकालवैशिष्ट्यं वा[5]

---

१. स एवं । २. इमे ।

३. सामग्री संभवेदादिति । ४. तत्रा ।

५. पूर्वकालवैशिष्ट्येन पूर्वकालसम्बन्धाधिकरणत्वं बोध्यते ।

एतेन अनुभवसामग्रीसहितः संस्कारोऽनुभवकारणमिति पक्षे पूर्वं शङ्कित

पूर्वदेशे सम्बन्धो वा तत्कालीनयत् किञ्चित् धर्मसम्बन्धो वा सर्वथा पूर्वानुभव विषयतायाः सत्त्वात् एव स्मृतिः पूर्वानुभववैशिष्टचं तत्तेति पक्षेऽपि प्रमाणान्तरेण गृहीतमेव तत् स्मरणे भासते इति नाननुभूतविषयता स्मरणस्येति ।

किञ्च स्मरणस्यानुभूतविषयत्वं यथार्थागृहीतग्राहिज्ञानत्वात् तादृशानुभवत्वाद् वा प्रमात्वापत्तिरिति ।

तदसत् । आद्य चतुष्टये स्मरणकारणीभूतानुभवेऽपि तत्तोल्लेखापत्तिः । विषयस्य वैलक्षण्याभावेऽपि संस्कारजन्ये एव ज्ञाने तत्तोल्लेख इति चेन्न । अवैयाकरणस्य अयमिति बक्तव्ये स इत्यनुभवकालेऽपि तच्छप्रयोगसम्भवात् तदिदमोः पर्यायितापत्तिश्च समानप्रवृत्तिकत्वात् ततश्च सोऽयमितिप्रयोगानुपपत्तिः । पूर्वकालवैशिष्टयादित्रयमिह पूर्वत्वेन स्मृतौ भासते इति चेत्तर्हि अधिकपरिच्छेदस्मृतेः दुर्वारानुभवता प्रमितिता चेति । अत एव किञ्चेत्याद्ययुक्तं प्रमात्वस्यैव[१] ममेष्टत्वात् । पूर्वानुभवविशिष्टत्वं तत्तेति पक्षे तु तस्या अचाक्षुषतापत्तिः । तत्तेदंते अखण्डोपाधी इत्यनुभवयोरेव भासते नानुभवस्मृत्योरिति पक्षे तु अनुभवाविषयस्यापि भाने कुतः स्मृतिता, कथं तर्हि स्मृत्यनुभवात्मकं इत्युक्ते धर्म्यंशो गृहीत ग्राहिकत्वात् संस्कारजन्यत्वाच्च अन्यथा अननुभूतेऽपि घटस्तत्रासीदितिधीप्रसङ्गात् ।

अथ तत्रेति देशवैशिष्ट्यमासीदित्यतीतकालमविषयीकृत्यापि स घट इति स्मृतिर्जायमाना अनुभूयते तस्याः प्राक्कालीनो घट इत्येव विषये इति चेन्न । प्राक्कालीनतापि एतत्कालवर्तमानध्वंसप्रतियोगिकालीनतातो नातिरिक्ता प्रागभावे मानाभावात् ।

वस्तुतस्तु तदाकारानुगतप्रतीत्या तत्ता अखण्डैव ।

यत्तु आचार्यैरुक्तं स्मृतिकाले स्मर्यमाणस्य वर्तमानतापि भासते । अत एव ततः प्रवृत्तिरन्यथा एतत्काले स घटो नवेति संदिहानस्य प्रवृत्त्यनुपपत्तिः तन्निरासायैव तत्रासीदित्याह ।

युक्तञ्चैतत् नहि वर्तमानैतत्कालसम्बन्धिना संस्काराविषयीभूता स्मृतं भासितुमर्हति । नच तत्राधुना घटोऽस्ति नवेति न सन्देहः । कदाचित् सन्देहाभावस्तु कोटिद्वयस्मरणाद्यभावादेव तदैव[२] च निष्कम्पप्रवृत्तिरिति दिक् ।

ननु तर्हि यस्यां स्मृतौ तत्ता न भासते सा व्यवच्छेद्याऽस्तु यथा पदजन्या पदार्थस्मृतिः घटोनास्तीत्यभावप्रतीतिहेतुभूता प्रतियोगिस्मृतिश्चेत्याशङ्क्याह ।

१. प्रमात्वस्येव । २. तदेव ।

इदमपि दूषणं द्रष्टव्यम्—तथा सति स्मृत्युच्छेदापत्तेः, न च तदस्ति स्मरणं यत्र सा न प्रकाशते, ततश्च व्यवच्छेद्यानुपपत्तिः।

यदपि कैश्चिदुच्यते दोषवशात् प्रमुष्टतत्ताशस्मरणं भवतीति। तदपि नोपपन्नम्, तदीयस्मरणत्वे प्रमाणाभावात्। न चानुभवसामग्र्यभावात् पारिशेष्येण स्मृतित्वम्, इन्द्रियार्थसन्निकर्षव्यावृत्त्या अनुभवसामग्र्यभावात् पारिशेष्येणानुमित्यादेरपि स्मृतित्वापत्तेः।

---

नच तदस्तिस्मरणमिति। सा सत्ता। यत्तु—"भावना वचनस्तावत् तां स्मारयति लोकवदि"ति भट्टवार्तिकं तत्—

"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यत्वे" इति वार्तिकविरूद्धम्। अनेन हि स्मारकेण सह गृहींतग्राहितया पदं स्मारकतुल्यमित्युक्तम् अन्यथा विशेषपदं व्यर्थमेव स्यात्। तस्मात् पदं पदार्थस्यानुवादकमित्येव तदर्थः। गृहीताविस्मृतिशक्तिकपदज्ञानादावश्यकादेव तदुपपत्तौ पदार्थगोचरसंस्कारत्वेन पदार्थज्ञानेन च संस्कारत्वेन पदार्थज्ञानत्वेन च कारणतायां विस्मृतशक्तिकपदज्ञानाभावादाववश्यकादेव तदुपपत्तौ पदार्थगोचरसंस्कारत्वे मानाभावात्। अतएव—

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्ति तज्ज्ञानं जायतेऽक्षानपेक्षया।

इत्यत्रापि प्रमितं प्रतियोगिनं पुनर्ज्ञात्वेत्यर्थः[३]। मानसमिति=मानसो[४] ज्ञानत्वावच्छिन्नं प्रति मनस्त्वेन कारणत्वमभिप्रेत्य। अतएवाह—अक्षानपेक्षयेति[५]। मानसप्रत्यक्षपरत्वे मनस एव अक्षत्वात् तन्नोपपद्यते।

अयमाशयः अभावज्ञानं प्रतियोग्यंशे यत्प्रकारकं तत्प्रकारकं प्रतियोगिज्ञानमपेक्षते नतु स्मृतिमेव व्यभिचारादिति पुनरुत्पद्यमानस्य ज्ञानस्य यदि प्रमाणान्तरविरहकाले स्मृतिरूपता तदावश्यं तद्देशाकालावच्छिन्नता भासत एवेत्यवश्यमुक्तया मुक्तया अनुभूतित्वं दुर्वारम्। नच भासमानस्य अवश्यमभिलापः, विवक्षाधीनत्वात् अतो नास्ति भूतता व्यभिचारः स्मृतेः।

यदि च तत्ता न भासते तदा मानसप्रत्यक्षमेव तद्भविष्यति।

अपि च घटः तद्देशतत्कालावच्छिन्न एव प्रतियोगी भूय भासते अन्यथा जगति घटमात्रस्य देशविशेषनिषेध इत्यपि न कालान्तरे घटवत्यपि तद्देशे घटनिषेधात्

---

१. इन्येवविषया। २. ज्ञानपेक्षया। ३. त्यचार्थः।
४. मानसो ज्ञानत्वा। ५. क्षणपेक्षयेति।

सर्वानुभवसामग्र्यसम्भवादिति चेत्, कथं पुनस्तत्तांशशून्यरतादिज्ञानहेतुसामग्री नानुभवहेतुसामग्रीत्यवधारितमायुष्मता ?

पञ्चप्रमाणीकारणसामग्र्यसम्भवादिति चेन्न, चतुष्प्रमाणीजनकसामग्र्यसम्भवात् पञ्चमी प्रमा किं न पारिशेष्यात् स्मरणं त्वया व्यवास्थापि ? कुत्र च प्रतिपन्नं पञ्चप्रमाणीकारणसामग्र्यभावे जायमानं ज्ञानं स्मृतिर्भवतीति ? 'घटस्तत्रासीद्' इत्यादिज्ञानानामनुभवत्वोपन्यासस्य कृतत्वात् ।

अथ मन्यसे प्रत्यक्षादिकारणसामग्र्यनुपपत्त्या रजतमात्रस्य च पूर्वमनुभूतत्वेन तद्विषयसंस्कारसम्भवात् संस्कारस्यैव हेतुताऽङ्गीक्रियते, न त्वन्यत्कारणत्वेन कल्प्यते, इन्द्रियार्थसन्निकर्षाद्यसम्भवे जायमानस्य तु अनुमानादेरननुभूतविषयत्वेन तस्मान्नोत्पत्तिसम्भव इति तत्कारणं लिङ्गादिकमङ्गीक्रियते । ततः प्रमाणान्तरासहकृतसंस्कारजत्वं तद्व्यङ्ग्यो वा जातिविशेष एव स्मृतित्वमिति । मैवम्, तत्र कारणत्वं किमिति नाक्षस्यैव, येन संस्कारजत्वं व्यवस्थाप्यते ।

तेनार्थेन सह तदाऽक्षस्य सन्निकर्षाभावादसन्निकृष्टस्य च तस्य ज्ञानजनकत्वेऽतिप्रसङ्गात् नेन्द्रियजत्वं तस्येति चेन्न, संस्कारस्यापि केवलस्य तज्जननेऽतिप्रसङ्गतादवस्थ्यात् ।

---

तद्देशकालावच्छिन्नस्यैव निषेध इति तादृशं प्रतियोगिज्ञानमपेक्ष्यमेवेत्यलमतिप्रसङ्गेन ।

प्रभाकरमतं दूषयति तदपीति । रजतज्ञानमनुभवसामग्री जन्यम् अपरोक्षव्यवहारनिदानत्वात् घटोऽयमिति ज्ञानवत् इत्याशयेनाह—**कथं पुनस्तत्तांशशून्यरजतादीति** । **पञ्चप्रमाणीति** । पञ्चानां प्रमाणानां समाहारः पञ्चप्रमाणी[१] प्रत्यक्षानुमानोपमानशब्दार्थापत्तीनां प्रमाणत्वात् । **व्यवास्थापि**[२] । किं न व्यवस्थापितम् । अनेन अनुमानस्य अतिप्रसङ्गात्मकप्रतिकूलतर्कपराहतिरुक्तेति विद्यासागरः । अप्रयोजकत्वमुक्तमिति वस्तुगतिः । पञ्चप्रमाणीसामग्र्यजन्यज्ञानत्वस्य[३] साध्यव्याप्तिरेव नास्तीत्याह—**कुत्रचेति अनुभवत्वेनोपन्यासस्येति**[४] । यद्यपि स्मृतित्वमपि तस्योपन्यस्तमिति न साध्यवैकल्यम् तथापि यदि स्मृतिरेवेति साध्ये साध्यवैकल्यं तदनन्तभावे तु गृहीतग्राहित्वेन रजतज्ञानस्य स्मृतित्वं स्मृतिमात्रस्यैव अनुभवसामग्रीजन्यत्वेनानुभवत्वमप्यस्त्वित्याशयः **तद्व्यङ्ग्योवेति** । अयमपि पक्षः प्राभाकराणां मतभेदेनेति विद्यासागरः । अनास्थोक्तिर्वा **अतिप्रसङ्गादिति** । असन्निकृष्टस्य भासने सर्वदा सर्वमेव च भासयेदित्यर्थः । **संस्कारस्यापि केवलस्येति**, असन्निकृष्टस्याक्षस्य ज्ञानजनकत्वे यथाऽतिप्रसङ्गस्तदा भिन्नसंस्कारस्यापि भिन्न-

---

१. अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट इति वार्तिकात् स्त्रीत्वे द्विगोरिति सूत्रेण ङीप् ।
२. वस्थापि व्यवस्थापितम् । ३. सासग्रीजन्य । ४. अनुभवं नोपन्यासस्य ।

सहचरितधर्मदर्शनादिना सहकारिणा युक्तस्य संस्कारस्य तज्जनने नास्त्यतिप्रसङ्ग इति चेन्न, तेनैव सहकारिणा सहितस्येन्द्रियस्यापि तज्जननेऽतिप्रसङ्गाभावात् ।

अननुभूतेऽपि तर्हि प्रसङ्ग इति चेन्न, तत्रापि तद्धर्मतानधिगततद्धर्मवत्त्यधिगते तस्य संस्कारवतः स्मृत्यापत्त्या समाधिसाम्यात् ।

लुप्ततत्साहचर्यदर्शनजसंस्कारस्याऽपि तथा सति सहचरितरजताद्यक्षजप्रतीतिप्रसङ्ग इति चेन्न, तवापि मते तादृशस्य रजतादिसंस्कारवतो रजतादि-

---

विषयकसर्वस्मृतिजनकत्वेन सर्वस्मृतिजनकत्वं स्यादित्यर्थः । **तेनैव सहकारिणेति**। एव कारेण स्वसंस्कारोपेक्षा[1] वार्यते । तर्हीति संस्कारानपेक्षायामित्यर्थः । तत्रापि रजतसंस्कारादेव स्मृतिः किं वा सदृशदर्शनजसंस्कारादपि । आद्ये सादृश्यविशिष्टतया रजतानुभवेऽपि स्मृतित्वं स्यादित्यभिप्रेत्य परिहरति—**तद्धर्मतेति** । तस्य शुक्तिशकलादेर्धर्मः सादृश्य भूयोऽवयवसादृश्यं तत् यस्य रजतधर्मकस्य भावस्तत्ता तयाऽनधिगतं तच्च तद्धर्मवच्च तथोक्तम् । तस्मिन् अधिगते[2] शुक्त्यादिसादृश्यं विहाय[3] स्वरूपेण रजतादौ अनुभूते इति यावत् । तत्रापि रजतानुभवसंस्कारात् तत् स्मृतिः स्यादिति प्रसङ्गः तवापि तुल्यः, ततश्च सादृश्यवत्तया पूर्वानुभूते रजते तद्वत्तया च शुक्तिशकलेऽनुभूयमाने रजतसंस्कारात् स्मृतिरिति त्वया परिहरणीयम् । मया तु तद्धर्मवत्तयाऽनुभूतरजतस्यैव तद्धर्मवत्तया पुरोवर्तिनि गृह्यमाणे तद्भ्रम इत्यभ्युपगम्यते नतु रजतसंस्कारस्याऽपि तज्जनकत्वं मानाभावात् ।

द्वितीये रजतस्मृतिर्नियमतः सादृश्य विषयतापातः ।

[4]नन्विन्द्रियस्य संस्कारनिरपेक्षस्यैव रजतभ्रमजनकत्वं किं वा रजतसंस्कारनिरपेक्षस्यैव । आद्ये शङ्कते—**लुप्तेत्यादि** । लुप्तः तत् साहचर्यदर्शनजः संस्कारो यस्येति विग्रहः । लोपश्च कालव्यवधानरोगादिना बोध्यः । तत्साहचर्यं केन ? रजतत्वादिना एकधर्मिगतत्वम् तथा च सादृश्यमेव भङ्ग्या प्रदर्शितम् ।

ननु तर्हि द्वितीयः पक्ष एवास्तु । नच रजतज्ञानस्य स्मृतितापत्तिः । सादृश्यदर्शनजसंस्कारस्य रजतगोचरत्वेऽपि रजतसंस्कारत्वेन अकारणत्वात् । स्मृतित्वे समानविषयकसंस्कारत्वावच्छिन्नकारणतानिरूपितकार्यत्वस्यैव तन्त्रत्वमन्यथा घटपटोभयसंस्कारवतो घटमात्रस्मरणस्याऽपि न पटस्मृतितापत्तिरिति चेत् । सत्यमेवं न कोऽपि दोषः तथापि सादृश्यदर्शनजः संस्कारोऽपि न हेतुरिति प्रतिवन्ध्या परिहरति—**तवाऽपि मते इति** । त्वया सादृश्यदर्शनजसंस्कारस्यापि हेतुत्वोपगमं प्रागुक्त-

---

१. संस्कारापेक्षा इति पाठः । २. अधिगति । ३. विषयस्वरूपेरजतादौ ।

४. इन्द्रिय संस्कार ।

**स्मृतिप्रसङ्गसाम्यात्। तस्माद्यतस्ते कालव्यवधानादितः संस्कारलोपः तदनुपनिपातस्यापि हेतुत्वोपगमेऽनतिप्रसङ्गात्।**

**तदेवं—**

**तत्सदृक्प्रत्यभिज्ञानं यत्ते संस्कारबोधकम्।**
**सहकारि तदेवास्तामक्षस्यातिप्रसक्तिनुत्॥ २७॥**

**तत्सदृशप्रत्यभिज्ञानं तु स्मर्तव्यस्मरणपूर्वकमित्येतदपि सममेव।**

**तदाऽप्यन्यत्र अर्थसन्निकर्षमन्तरेणेन्द्रियस्य ज्ञानकरजत्वं नोपलब्धचरमिति चेन्न, विशिष्टरूपेण भ्रमविषये मया तदुपगमात् सहकारिभूतदोषशक्तेर्वा प्रत्यासत्तित्वे नेष्टत्वात्।**

---

दोषापत्तिः। नच सादृश्यसंस्कारस्योद्बोधकालाभादेव न स्मारकत्वमिति नोक्तदोष इति वाच्यम्। तथा सति रजतस्मृतेरनुत्पादापत्तेरुभाभ्यां संस्काराभ्यामेव तदुत्पादात्। एकस्याऽपि सहकारिसमवधानाभावे कथं तदुभयजन्यकार्यस्यात्मलाभ [1]इत्यपि परिहर्तव्यम् इत्याशयेनाह—**तदिति**। आदिपदेन विपरीतसंस्कारादिपरिग्रहः। **अनतिप्रसङ्गादिति**। अभ्युपगमेनातिप्रसङ्गः इति पाठस्तु सुबोधः। **तत्सदृशप्रत्यभिज्ञानमिति**। केवलसंस्कारस्य स्मृतिहेतुत्वेऽतिप्रसङ्गात्। तेनानुभूतरजतेन सदृशमिदमिति तत्सजातीययत्सादृश्यज्ञानं प्रत्यभिज्ञानद्वितीयज्ञानमनुसन्धानात्मकं संस्कारोद्वोकं त्वया स्वीक्रियते तदेवाक्षस्य सहकार्यास्ताम् इत्यन्वयः। तथा च कालादिव्यवधानाभावसदृशदर्शनाभ्यां सहकृतस्य चक्षुषः तथाभूतरजतप्रतीतिहेतुत्वमिति प्रघट्टकार्थः। रजतसदृशज्ञानमिति ज्ञानमपि रजतस्मरणं विना नेति तस्यावश्यकत्वेन अनुभवान्तरं[2] न कल्प्यमित्याशङ्क्य दूषयति—**एतदपि समानमिति**। पूर्वरजतसादृश्यानुभवादेव रजतसादृश्यमनुसन्धीयते तत्र च रजतं गुणीभूय भासते इति स्वतन्त्ररजतस्मरणं ततः परं त्वयाऽपि कल्प्यं मया तु तत्सहकृतेन चक्षुषा रजतानुभवः कल्प्यते संस्कारस्य कारणत्वे प्रमाणाभावादिति विशेषः। इहापि नेन्द्रियस्य सन्निकर्षानपेक्षत्वं धर्मीन्द्रियसन्निकर्षस्य सत्त्वादित्याशयेनाह—**विशिष्टरूपेण भ्रमविषये** इति। सादृश्येन सितभास्वरत्वादिना विशिष्टभ्रमस्य विशेष्ये इत्यर्थः। विशेष्येन्द्रियसन्निकर्ष एवापेक्ष्यो ननु विशेषणसन्निकर्षोऽपि विशिष्टज्ञानसामग्रीत एव तद्भानोपपत्तेरितिभावः।

ननु तथापि रजतप्रत्यक्षे रजतसन्निकर्षो हेतुः क्लृप्त इति कथं तेन विना सस्यादित्यत आह—**सहकारिभूतदोषशक्तेर्वेति**। त्वयाऽपि तत्तांशमोषाय संस्का-

---

१. इत्यथापरिहर्तव्यम्। २. अनुभवभ्रमापरनामा कल्प्या।

३. प्रज्ञारजतसादृश्यानुभवादेव रजतसादृश्यम्।

**किञ्च—संस्कारस्याऽपि प्रमाणान्तरासहकृतस्य नान्यत्र ज्ञानजनकत्वं दृष्टिमिति तदपि कथं कल्प्यते ? प्रत्यभिज्ञान एव संस्कारस्य सदृशदर्शनादि-सहकारित्वं कल्पितं न त्विन्द्रियस्येति चेन्न, प्रत्यभिज्ञाने संस्कारेन्द्रिययोर्द्वयोरपि कारणत्वात् सदृशदर्शनादिसहकृतत्वदर्शनाविशेषात् ।**

---

रस्य यो दोषः सहकारी स्वीकृतोऽस्ति तस्य किं ज्ञानप्रतिबन्धकता कल्प्यतां रज-तानुभवजनकता वा । तत्राद्ये गौरवमित्याशयेनाह—**दोषशक्तेरिति** । दोषस्य शक्तिः सैवेन्द्रियस्य प्रत्यासत्तिः प्रत्यक्षासाधारणकारणमिन्द्रियधर्म एव सन्निकर्षः । सच दुष्टेन्द्रियेषु भ्रमजननाद् या भ्रमशक्तिरिन्द्रियाणां सैव प्रत्यक्षोपयोगितायाः प्रत्या-सत्तिरन्विता, अन्यथा इदं रजतं साक्षात् करोमीति प्रत्ययानुपपत्तेः दोषस्य प्रमा-प्रतिबन्धकस्य प्रत्यासत्तित्वं लोकविरुद्धमिति, दोषाहिता इन्द्रियशक्तिरेव तथोक्ता ।

ननु संयोगाद् व्यतिरिक्तस्य सन्निकर्षत्वं लोकविरुद्धत्वमिति चेदन्यथानु-पपत्त्या लोकविरुद्धत्वमप्येकमेव कल्पयितुं युक्तं नतु तावेव । नानास्मृतिः प्रमुष्टतत्ता-स्मरणत्वेन अप्रतिभासमाना प्रतिभासमाना च साक्षात्त्वेनेति । न चायं सन्निकर्षो लौकिकः किन्तु अलौकिकः[1] इति लोकविरोधोऽप्यनुगुण एव ।

एतेन रजतप्रत्यक्षे रजतसंयोगो हेतुरित्यपि परास्तम् । तव मते रजतानुमिति-रपि अनुमित्यंशे प्रत्यक्षात्मिकाया रजतगोचरायाः तदजन्यत्वात् रजतविषयतावच्छे-देन प्रत्यक्षात्मिकायास्तथात्वं वाच्यं ततश्च रजतजन्यप्रत्यक्षत्वमेव तदपेक्षया लघु-कार्यतावच्छेदकमित्येव ज्यायः । यथेन्द्रियस्य विप्रकृष्टज्ञानजनकत्वं न दृष्टमिति तत् त्यज्यते तथा संस्कारस्यापि केवलस्य ज्ञानजनकत्वं न दृष्टमिति तदपि त्यज्यता-मिति दोषान्तरं समुच्चिनोति इति ।

**किञ्चेति** । यत्र प्रमाणान्तरसहकृतत्वं संस्कारस्य दृष्टं तत्र सदृशदर्शन-सहकारित्वं संस्कारस्यैव । **नत्विन्द्रियस्येति** । त्वया इन्द्रियस्य तत् कल्प्यत इत्य-लौकिककल्पनेत्याशङ्कते—**प्रत्यभिज्ञान एवे**त्यादिना । तत्तोल्लेखे संस्कारजत्वं न प्रयोजकं किन्तु सदृशदर्शनसहकारिता सैव भ्रमस्थले त्यज्यतामित्याशङ्कते—**नचेति**।

**सदृशदर्शनेति** । सत्यपि संस्कारे विना सदृशदर्शनं स्मरणानुत्पत्तेर्भ्रमस्थलेऽपि तस्यावश्यकत्वमित्यर्थः ।

अथ विमतं रजतं नैन्द्रियकं विद्यमानत्वे सति असंप्रयुक्तत्वात् तदसन्निकृष्ट-

---

१ · लौकिकः ।

**अत्र सदृशदर्शनसहकारित्वे संस्कारसहकारित्वस्यापि प्रसङ्गः प्रत्यभिज्ञानवदिति चेन्न, तथा सति तद्वदेव तत्तोल्लेखापत्तेः। सदृशदर्शनादिसहकृतत्वेन च तत्तांशप्रसञ्जने संस्कारजत्वस्योपाधित्वम् ।**

**न च सदृशदर्शनसहकारितैव तत्ताप्रयोजिकाऽत्र त्यज्यतां न संस्कार इति युक्तम्, सदृशदर्शनं परित्यज्य संस्कारे सत्यपि अतथाबोधात् ।**

**तथापि सदर्थे प्राप्यकारित्वमिन्द्रियस्य दृष्टं न हातुं शक्यमिति चेन्न, उक्तमत्र यथेन्द्रियस्य प्राप्तिसहकृतस्य ज्ञापकत्वं दृष्टं तथैव संस्कारस्यापि प्रमाणान्तरसहकृतस्य ज्ञापकत्वमुपलब्धमिति तदपि हातुं न युक्तमिति, संस्कारस्यापि चेन्द्रियप्रत्यासत्तित्वस्वीकारेण तद्विरहासिद्धेः । तत्तांशमोषकल्पनं च स्वतन्त्रसंस्कारजत्वपक्ष एव यावदधिकम् । कुतश्चायं तत्तांशमोष इति विचारमधिकरोति पूर्वं वर्तमानादिकालविशेषविशिष्टस्य रजतादेरेकस्मिन्ननुभवे प्रकाशिततया तज्जन्येन संस्कारेणापि तथैवोपनेतुमुचिततत्वात्, प्रत्यभिज्ञायां तथैव फलदर्शनात् ।**

पटवत् । प्रत्यभिज्ञायां तत्तांशे व्यभिचारवारणाय विद्यमानत्वे[1] सति इत्याह । रजतञ्च वणिग् वीथ्यं विद्यमानमेवेति न विशेषणासिद्धिः ।

**तदपि हातुं न युक्तमिति ।** तथाच रजतज्ञानमिदं संस्कारजन्यमिति न स्मृतिः । तथा च विद्यमानत्वविशेषणं न देयमेवाप्रयोजकम् । तथाहि अविद्यमानाऽपि तत्ता विशेषणीभूतेति न प्रत्यक्षार्थं स्वसन्निकर्षमपेक्षते तथा विशेष्येऽविद्यमानं रजतमपीति निष्कर्षः । **संस्कारस्यापि चेति ।** न्यायाचार्यैः संस्कारः सन्निकर्षः स्वीकृत इति भावः । तेन दोषस्य प्रत्यासत्तिता प्रागुक्ता न विरुद्ध्यते ।

नचेन्द्रियप्रत्यासत्तित्वे च रजतज्ञाने चक्षुषः संस्कारस्य च कारणतायां गौरवमिति वाच्यम् । साक्षात्करोमीत्यनुव्यवसायवलेन इन्द्रियस्यापि तथात्वात् । नचैवं संस्कारजत्वेन स्मृतित्वापत्तिः इन्द्रियजत्वेन प्रत्यक्षत्वात् । केवलसंस्कारजत्वेनैव स्मृतित्वं वाच्यम् अन्यथा तत्तांशभानमप्यापद्येत ।

वस्तुतस्तु ज्ञानद्वयकल्पनागौरवमप्यस्त्येव । तत्तांशमोषः किं कारणाभावात्, दोषाद् वा । नाद्यः इत्याह—

**पूर्वमिति ।** वर्तमानः काल एव संस्कारणे ज्ञाने वा[2] तच्छब्देन कथ्यते इति[3]। तत्र भट्टाचार्यस्य मतमनुस्मृत्येदमाह[4] । दोषः किं संस्कारस्य विषयसम्बन्धं प्रतिबध्नाति, संस्कारसामर्थ्यं वा, अथवा दोषाभावः कारणमिति कारणाभावात् कार्या-

१. स दर्श इत्याह । सदर्थं इत्याह इति ख पुस्तके ।

२. ज्ञाने न तच्छब्देन इति क पुस्तके । ३. इति चेन्न भट्टाचार्यं इति क ख पुस्तके ।

४. अनुस्मृतेदमाह ।

**दोषवशात् तत्तांशमोष इति चेन्न, विषयसम्बन्धस्य स्वभावत्वेन संस्कारे तदलोपात्। दोषात् स्मृतौ तथेति चेत्, कः पुनरसौ दोषः ? यस्माद् भ्रान्त्युत्पत्तिः परेषामिति चेर्त्तहि तद्रजतविशिष्टमिदं रजतमित्यत्र, सैव रजतव्यक्तिरियमित्यत्र वा, पुनस्तदेव रजतमुपस्थितमितीह वा, सामान्यत एव, रजतस्य तदाऽपि परा-**

भाव इति। आद्ये दोषमाह—**विषयसम्बन्धस्येति**। संस्कारस्य विषयेण सम्बन्धः स्वरूपमेवेति तत्प्रतिबन्धो न शक्य इति भावः।

द्वितीयतृतीयौ एकोक्तया अनुवदति—**दोषात् स्मृतौ तथेति**। सदर्थज्ञापकस्य न दोषत्वं चक्षुरादिवत्। नापि तस्याग्रहणहेतुत्वम्। अग्रहणस्य प्रागभावरूपस्यानादित्वेनाजन्यत्वात्। नापि ग्रहणविरोधकत्वं तदुत्पत्तिं विना तद्विनाशासम्भवात्। नापि प्रतिबन्धकत्वं, रजतज्ञानाभावापत्तेः। तत्ताज्ञानप्रतिबन्धकत्वमिति चेन्न। तर्हीत्यादिना दूषयिष्यमाणत्वादित्येवं साहंकारो दोषमाक्षिपति — **कः पुनरसाविति**। अयं खाण्डनिकाद्भीतः **परेषामिति**। तथाच परैः वेदान्तिभिर्नैयायिकादिभिरेव च तस्य रूपं निर्वाच्यमिति नास्माकं तन्निर्वचनायासः।

यद्यपि त्वन्मतें भ्रान्तेरप्रसिद्धया भ्रान्त्युत्पादकत्वेन न शक्यनिर्वचनत्वं नच परैः सहास्माकं विवादो यतस्ते प्रष्टव्याः तव [१]चेन्नास्ति सामर्थ्यं तदा[२] त्वं मूकीभव इत्येव कथयित्वा विजयी भवितुमर्हतीति तथापि निश्शङ्कतया परपरिभवाय आह—**तर्हीति**। अपहृतरजतस्यरागान्धधिषणस्य प्रथमाभ्रान्तिः। विरक्तस्य त्यक्तरजतस्य द्वितीया। प्रतिग्रहभीरोरस्वीकृतरजतस्य तृतीया भ्रान्तिः। **तद्रजतविशिष्टमिति**। मदीयं यन्नष्टं रजतं तद्[३]विलक्षणमिदमित्यर्थः। **सैव रजतव्यक्तिरिति**। या रजतव्यक्तिर्मदीया पूर्वं मया लोष्टवत् निष्प्रयोजनतया त्यक्ता भवन्ति हि[४] न्यासिनः समलोष्टाश्मकाञ्चनाः। स एवायं पुनस्तदेवेदं यन्मया नरकनिपातभीत्या न गृहीतं तदेव केनचित् मदपकारचिकीर्षुणा पुनः प्रस्थापितमिदमुपस्थितमित्यर्थः।

ननु तत्र शुक्तिरजतं न विषयः किन्त्वन्यदेवेत्याशङ्कयाह—**सामान्यत एव रजतस्य तदा[६]परामृष्टस्येति**। तदा इति तच्छब्देनेत्यर्थः। अयमाशयः तच्छब्दस्य पारमार्थिकं रजतमेव वाच्यं भ्रमे च यदि स एव विषयः तदा तत्तापि तद्गतैवेति तत्तामोष इति न शक्यते वक्तुमिति।

---

१. मास्ति। २. दता।

३. तद् पिलक्षणम्। विलक्षणं भिन्नम् अविलक्षणंयर सदृशमित्यर्थः।

४. सन्यासिनः इत्यर्थः। ५. सैवायम्।

६. तदापि परामृष्टस्येति मूले पाठः उपलभ्यते। यद्यपि तच्छब्दस्य तृतीयाविभक्तौ तेनेति रूपं तथापि अनुकरणरूपतच्छब्दस्य सर्वादिगणे पाठाभावत् तदेति रूपं सम्भवति। अतएव उभस्य सर्वनामत्वे इति भाष्य प्रयोगः।

**मृष्टस्य भ्रान्तौ तत्तांशमोषः स्यात्, दोषस्य विद्यमानत्वात्। अन्यथा इदं रजतमित्यंशेऽपि तस्मिन् ज्ञाने तत्तांशमोषो न स्यादित्यास्ताभियं प्रसक्तानुप्रसक्तिः।**

**न च प्रत्यभिज्ञा नाम स्मरणानुभवाभ्यामन्य एव प्रकार इति वाच्यम्, अन-**

---

विद्यासागरस्तु शुक्तिविवर्तद्रजतसदृशमिदं रूप्यमिति भ्रान्त्युपत्तौ तत्ताप्रकाशो न स्यात् दोषस्य सत्त्वादिति चेदुच्यते नैवं सम्भवति [1]संसर्गख्यातौ अन्यथाख्यात्यापत्तेः, तस्याश्च तैरनङ्गीकारादित्यस्वरसादाह—**सैवेति**। काल[2]-सम्बन्धभेदेन पूर्वानुभूतरजतस्य व्यक्त्यभेदग्राहिप्रत्यभिज्ञाभ्रम इत्यर्थ इत्याह।

तदसत्। परेषां तदनङ्गीकारात्। अथ शुक्तिविशेष्यकज्ञानात् भिन्नेमेवेदं ज्ञानमभिज्ञारूपभ्रमद्वयमित्यभिप्रायः तर्हि प्रथमपक्षेऽपि तादृशे नास्वरसः उदाहरणबहुत्वन्तु व्यभिचारदार्ढ्यायेति ध्येयम्।

ननु अभिज्ञारूपे भ्रमे एव तत्तांशमोषो दोषान्न प्रत्यभिज्ञायामित्याशङ्कयाह—**अन्यथेति**। दोषस्य क्वचित् तत्तांशमोषाहेतुत्वे व्यभिचारादभिज्ञायामपि तत्तांश न मुष्णीयादित्याशयः[3]। किञ्च प्रत्यभिज्ञापि यद्येकं ज्ञानं तदा [4]अन्यथाख्यातिः यदि ज्ञानद्वयं तदाभिज्ञातुल्यत्वं तथाच तत्रापिदोषात् तत्तामोषः स्यादेव। यदि तु तत्तोल्लेखिज्ञाने दोषो न हेतुरित्युच्यते। तस्य तत्तामोषहेतुतयैव सिद्धेरिति चेत्तर्हि दोषाजन्यतया प्रमात्वापत्तिः। अथ तस्य तत्तामोषाप्रतिबन्धकदोषविशेषजन्यत्वमित्यभिमतं तन्न। दोषस्य तत्तामोषकतायाः क्वाप्यक्लृप्तत्वात्। इदं रजतमित्यत्र क्लृप्तमितिचेन्न। संस्काराजन्यत्वेनैव तदुपपत्तेरिति दिक्।

प्रमालक्षणखण्डनेन सह तत्तांशमोषखण्डनस्य का संगतिः, बोढा संगतेरेव तन्त्रेषु प्रसिद्धेरित्याशङ्कय अस्यापि प्रसङ्गेऽन्तर्भावमाह—**आस्तामिति**। प्रकृतं प्रमाणलक्षणखण्डनं ततः प्रत्यभिज्ञाखण्डनं प्रसक्तं तदनुप्रसक्तं तत्तांशमोषखण्डनमिति। स्वीकृतञ्चैव तस्या अपि संगतित्वं भट्टाचार्यैः प्रसक्तानुप्रसक्तादि[5] प्रकृतादिह जायते। इति

आधिक्यं तु वर्तते नेवेति चिन्त्यम् इति।

**अन्य एव प्रकार इति** प्रत्याभिज्ञानद्वयं नापि स्मृत्यनुभवात्मकमेकं ज्ञानं

---

१. संसर्गाख्यातौ।

२. कालपदंनास्ति।

३. इत्याशङ्कयाह इति क पुस्तके।

४. अन्यथाख्यतेति क पुस्तके।

५. प्रसक्तानुप्रसक्तिस्तु प्रस्तुतादुपजायते इति पाठान्तरम्।

**नुभवत्वेन अप्रमात्वापातात्। न चैवमस्त्वित्यपि वाच्यम्, अक्षणिकत्ववादिना स्थिरसिद्धौ प्रमाणत्वेनोपन्यस्तत्वात्। ईदृशप्रसिद्धलक्ष्यत्यागेन च लक्षणोपपादनेऽनियमः प्रसज्येतेति। तस्मात् जातिवाचिनोऽनुभवपदस्य स्मृतितो व्यवच्छेदार्थमुपादानमिति सर्वथानुपपन्नमिति।**

## १३. स्मृत्यन्यत्वखण्डनम्

**नापि स्मृत्यन्यत्वमनुभवार्थः, नापि स्मृतिलक्षणरहितत्वम्; उत्क्रमेण स्मृत्यनुभूतिसङ्करस्य दर्शितत्वेन व्यवच्छेदकत्वानुपपत्तेः।**

**इतोऽपि न स्मृत्यन्यत्मनुभावार्थः तथा हि—स्मृत्यन्यत्वं यत्किञ्चित्स्मरणान्यत्वं वा, सर्वस्मृतिव्यक्त्यन्यता वा, स्मृतित्वरहितत्वं वा अभिप्रेतम्?**

---

न च स्मृतिरेव अनुभव एव वा येन स्मृतित्वानुभूतित्वयोः[1] साङ्कर्यं स्यात् किन्तु प्रकारान्तरमेवेति न कोऽपि दोष इत्यर्थः। **स्थिरसिद्धाविति**। तथा चापसिद्धान्त इत्यर्थः। इदमुपलक्षणं प्रकारान्तरत्वपक्षेऽप्यपसिद्धान्त एव। अभिज्ञेव[2] प्रमाणप्रत्यभिज्ञा-इत्युक्तेर्दोषः स्यात् नत्वेवं किन्त्वभिज्ञा प्रमाया[3] एव लक्षणमिदं नतु प्रत्यभिज्ञाया इत्याशङ्क्याह—**ईदृशप्रसिद्धलक्षणत्याग** इति।

योऽहमन्वभवं[4] सोऽहं स्मरामीत्यात्मस्थैर्यसाधकप्रत्यभिज्ञाप्रामाण्यमेव सप्रयोजनं न वाह्यपदार्थप्रत्यभिज्ञाप्रामाण्यं तदेव लक्ष्यं न प्रत्यभिज्ञेति वदवा त्वया कथायां[5]यो नियमः स त्यक्तः स्यात्। प्रमामात्रलक्षणमभिधाय अव्याप्तिपरिहाराय प्रत्यभिज्ञाया लक्ष्यत्वत्यागः। [6]दुष्टहेतुमभिधाय तत्र दोषोद्भावने प्रतिवादिना कृते पुनरदुष्टहेत्वन्तरोपादानसम्भवादित्यर्थः।

यद्वा यत्र यत्राव्याप्तिः तत् त्याज्यमेव चेत्तदा पदार्थव्यवस्था न स्यादित्यर्थः। वस्तुतस्तु प्रत्यभिज्ञानमेव लक्ष्यमिति[7]नियमः प्रत्यभिज्ञानलक्ष्या अभिज्ञानलक्ष्येत्यर्थः।

अनुभवत्वस्य जातितायां लक्षणघटकत्वानुपपत्तावपि उपाधितयैव तद्घटकतास्तु इत्याशङ्क्याह—**नापीति**। तत्सदृशप्रत्यभिज्ञानमित्यादिना सर्वासामेव स्मृतीनामनुभवत्वव्यवस्थापनात् [8]ज्ञानमात्रमनुभव इत्यनुभूतिपदव्यवच्छेद्यं नास्तीत्यर्थः। यद्वा स्मृत्यन्यत्वेत्यत्र अन्यपदव्यवच्छेदानुपपत्तिरित्यर्थः।

---

१. असाङ्कर्यम् क ख पुस्तके।
२. अभिज्ञैव।
३. अभिज्ञाप्रमाणे। ४. मनुभवम्। ५. कथा यो।
६. बहुष्ट। ७. तत्राद्यमेव। ८. व्यवस्थापना ज्ञानम्।

**प्रथमे तु स्मृत्यन्तरव्यतिरेकात् स्मृत्यन्तरमप्यनुभूतिः स्यात्। न हि यतो व्यतिरिक्ता स्मरणव्यक्त्यन्तरादेका स्मृतिव्यक्तिस्तत् स्मरणमेव न भवति, येन तदन्यत्वं न स्मृत्यन्यत्वं स्यात्।**

**नापि द्वितीयः, मदीयादिस्मृतिव्यक्तिभ्यो हि भवता कथङ्कारं व्यतिरिक्तत्वमवधारणीयं प्रमाया: ? तासां सर्वासां भवता प्रत्येतुमशक्यत्वात्। तथा हि— न तावत्परकीयज्ञाने परस्यास्मादृशोऽध्यक्षसम्भवः। नाप्यनुमानार्थापत्ती, लिङ्गानुपपद्यमानयोः सर्वत्रार्वाग्दृशा प्रत्येतुमशक्यत्वात्। नापि शब्दः, सर्वत्र तस्यासम्भवात्। उपमानाद्यसम्भवोऽपि स्फुट एव। ततः कथं सर्वाभ्यः स्मृतिव्यक्तिभ्यो व्यतिरेको निरूप्यः प्रमाया इत्यनवबोधादसिद्धिर्लक्षणस्य।**

**न च वाच्यं स्मृतित्वेन सर्वाः स्मृतिव्यक्तयः सर्वकालसर्वपुरुषसम्बन्धिन्यः स्वात्मीयां स्मृतिव्यक्तिं प्रत्यक्षयता प्रत्यक्षादेवावगम्यन्ते सामान्यलक्षणया इन्द्रियप्रत्यासत्त्या व्याप्तिग्रहणकाल इव व्याप्यव्यापकव्यक्तय इति, दृष्टान्तदार्ष्टान्तिकयोर्दोषग्रस्तत्वात्। तथा सति ह्येकं प्रमेयं प्रत्यक्षयतः प्रमेयत्वसामान्यप्रत्यासत्त्या विश्वमेव प्रत्यक्षं स्यात्। एवमभ्युपगच्छतश्च श्रद्दधीमहि ते सार्वज्ञ्यमिदम्, यदि जानासि किमस्मच्चेतसि विपरिवर्तत इति।**

---

द्वितीयतृतीयविकल्पयोः साधारणं दोषमभिधाय द्वितीयेऽसाधारणं दोषमभिधातुं तदेवानुवदति इतोऽपि नेत्यादिना। **सर्वेति**। स्मृतित्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्त्वमित्यर्थः। स्मृतित्वासन्ताभावाधिकरणत्वमिति तृतीयविकल्पार्थः। अन्यपदन्तु वैधर्म्यपरमिति नापदार्थे विकल्पः। **तासां सर्वासामिति**।

यद्यपि सर्वस्मृत्यनुपस्थितौ तासां सर्वासां प्रत्येतुमशक्यत्वादिति तवाप्यभिधानमनुपपन्नम् तथापि लक्षणवक्त्रा लक्षणवाक्यार्थो बोधयितुमशक्यः स्वयमप्रतिपन्नत्वादित्यत्र तात्पर्यम्। नच स्मृतित्वावच्छिन्नप्रतियोगिताकोऽन्योन्याभावो वाच्यः तत्र च यावत् प्रतियोगिनां यावत्वेन ज्ञानं न कारणमिति वाच्यम्। यावद्विशेषाभावातिरिक्ते तत्र मानाभावात्।

किञ्च यावत् प्रतियोगिताभाववद्वृत्तित्वाज्ञाने सामान्यस्य प्रतियोगितावच्छेदकत्वमेव दुर्ग्रहम्। नच वस्तुतः तादृशत्वमेवापेक्षितं वास्तवतत्त्वस्य प्रमाणं विनाऽसिद्धेरिति। **सर्वत्र तस्यासम्भवात्**[1]। स्मृत्यन्यत्वग्रहदशायां नावश्यं तादृशः शब्दोऽस्तीत्यर्थः। **उपमानादीति**। उपमानस्य प्रवृत्तिनिमित्तपरिच्छेदकत्वेन, सर्वस्मृत्युपस्थापकत्वायोगात्। आदिपदेनैतिह्यपरिग्रह इति मिश्राः। अभावो ग्राह्यः तस्य स्मृतिषु भावेषु परिच्छेदकत्वासम्भव इति भावः। **मम चेतसि किं वर्तत इति**।

---

१. सर्वत्र तदभावादितिमूलपाठः आदर्शपुस्तकानुसारेण।

चेतसि=ज्ञाने । यद्वा वेदान्तविदां मनोवृत्तिरेव धीरिति तदभिप्रायेण मन एव चेतः पदार्थः ।

ननु जानामि प्रमेयमस्तीति । यदि च विशेषजिज्ञासाऽपि सामान्यरूपेण विशेषाभिधानादेव निवर्तताम् । अथ घटत्वादिरूपेण प्रश्नः सच विशेषप्रकाराभिधानादेव निवर्तते इति चेत्तर्हि प्रमेयत्वात्मकप्रत्यासत्त्या घटत्वप्रकारकं ज्ञानं न जातमिति कथं तथा वाच्यम् । अथ प्रमेयत्वेन ज्ञापमानेन घटत्वेन प्रत्यासत्त्या तदपि ज्ञायतामित्युच्यते । तन्न । तथाविधज्ञानविषयघटत्वस्य न प्रत्यासत्तित्वं किन्तु घटत्वांशे निष्प्रकारकज्ञानविषयस्यैव, फलवलकल्पनायाः तत्रैव विश्रामादिति चेदत्र शङ्करमिश्राः—

यत्र घटत्वमिन्द्रियसन्निकृष्टं, तादृशज्ञानप्रकारीभूतं च परस्यापि हृदि घट एव तत्र घटं जानाम्नीत्युत्तरापत्तेः परमनोगतस्यापि घटस्य घटत्वेन ज्ञानमस्त्येव परन्तु परमनोगतत्वेन ज्ञानं नास्ति परमनोगतत्वस्य सामान्यस्याप्रत्त्यासतित्वात् । यत् सामान्यं प्रत्यासत्तिः तया तत्प्रकारकं ज्ञानमेव जन्यते इति नियमादिति चेन्न । प्रमाणं विना तथा नियमस्यासिद्धेः । नहि भासमानत्वे सत्यपि प्रकारं प्रति कश्चिद् विशेष इत्याहुः । तन्न ।

तथा ज्ञाने सति तदुत्तरापातात्[३] नचोत्तरयति तस्मात् नास्त्येव तथाज्ञानमिति । तादृशज्ञानाभावप्रमाणस्यैव तथा नियमकल्पकत्वात् । नच सामान्यस्य प्रत्यासत्तित्वाभाव एव तेन सिध्यति नतु तत्प्रत्यासत्तिनियामकं किञ्चिदिति वाच्यम् तथासति नास्त्येव तस्य प्रत्यासत्तित्वमिति वाच्यं नतु सार्वज्ञ्यापादनमिति चेन्न । सार्वज्ञ्यापादनस्यानिष्टापादनतया सामान्यस्य[४] प्रत्यासत्तित्वे नास्ति प्रमाणमित्यत्रैव तात्पर्यात् ।

एतेन यदि सामान्यलक्षणा नास्ति तदा धूमादौ विशेषादर्शनदशायां व्यभिचारसंशयो न स्यात् [५]प्रसिद्धधूमवह्निसम्बन्धावगमाद् अप्रसिद्धस्य चाज्ञानात् सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनात् संशयो युज्यते इति व्यभिचारशङ्कान्यथानुपपत्त्यैव सामान्यलक्षणायाः प्रत्यासत्तित्वं कल्प्यमिति गङ्गेशोपाध्यायस्य स्वशिष्यप्रतारणाऽपि अपास्ता । समानप्रकारकनिश्चयस्यैवः संशयविरोधित्वेन अयं धूमो वह्निव्याप्य इति निश्चयस्य तत्रैव धूमत्वावच्छेदेन व्याप्त्यग्रहात् धूमो वह्निव्याप्यो नवेति संशयाविरोधात् ।

किञ्च विनाऽपि सामान्यस्य प्रत्यासत्तित्वं धूमप्रत्यक्षे धूमेन्द्रियसन्निकर्षस्यहेतुत्वं नतु यावद्धर्मसन्निकर्षस्य तथात्वं गौरवादिति । यत् किञ्चिद्धूमसन्नि-

१. अभावो वा ग्राह्याः इति ख पुस्तके । २. तत्रैव मिश्रामादिति ।
३. तदुत्तरापात् । ४. मान्यस्य । ५. प्रसिद्धधूमवत्ति ।

**नापि तृतीयः स्मृतित्वरहितत्वं हि स्मृतित्वाभाववत्त्वं वा स्यात्, स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं वा, तज्ज्ञानं वा ?**

**न तावदाद्यः, यथा हि–स्मृतित्वान्योन्याभावोऽपि स्मृतित्वाभावो भवत्येव। तद्वत्त्वञ्च स्मृतिष्वप्यस्ति। [ न हि स्मृतित्वमेव स्मृतिः। ] ततश्च स्मृतेरपि**

---

कर्षादेव असन्निकृष्टधूमस्यापि प्रत्यक्षसम्भवेनैव विनापि धर्मीन्द्रियसन्निकर्षं धर्मिज्ञानादेव संशयोपपत्तेः। अत एव अनागतः पाकेऽपि सिद्धाः तथा वह्निविशिष्टप्रत्यक्षमपीति तदुभयहेतुतयाऽपि न सामान्यलक्षणायाः प्रत्यासत्तित्वकल्पनमिति। घटरहितं भूतलमित्यादौ राहित्यशब्दस्याभावमात्रपर्यायित्वात् तत्र च वादिनां धर्मत्वेन स्वरूपत्वेन च विप्रतिपत्तेः। विकल्पयति।

**स्मृतित्वप्रतियोगिकमिति**। अन्यथा स्मृतावपि स्मृतिभेदः स्यादिति। दृश्ये प्रतियोगिनि धर्मिमात्रमभाव इत्यत्र मात्रचोऽनतिरिक्तार्थत्वे प्रतियोगिमति अतिप्रसङ्गः अतिरिक्तार्थत्वे नाम्नि परं विवादः स्यादित्याशङ्क्य प्राभाकरैरेवोक्तं पक्षान्तरमुपन्यस्यति। **तज्ज्ञानमिति**। आश्रयस्य ज्ञानमिति ज्ञानव्यक्तिः यत्र परेषामभावव्यवहारः तस्य आश्रयस्य ज्ञानमित्यर्थः। धर्ममात्रस्य अभावत्वे भावाभावशब्दयोः पर्यायत्व प्रसङ्गात्।

तदभाववत्त्वमिति प्रथमपक्षमाशङ्क्य निषेधति—**न तावदिति**। तथात्वापत्तेरित्यनुभवापत्तेरित्यर्थः। तथा च प्रमालक्षणं स्मृतावतिव्याप्तमित्याशयः। क्वचित्तु स्मृतेरपि[२] प्रमात्वापात इत्येव पाठः। **विशेषणवैयर्थ्यञ्चेति**। स्मृत्यन्यज्ञानत्वमित्यत्र यद् विशेषणं स्मृत्यन्यत्वं तद्व्यर्थमित्यर्थः। सत्यपि विशेषणे स्मृतावतिव्याप्तेर्दुर्वारत्वादित्याशयः।

यद्वा प्रमाणलक्षणे यदनुभवत्वं ज्ञानस्य विशेषणं तद् व्यर्थमित्यर्थः। स्मृतेर्व्यावृत्ताया अभावात् तस्या अपि स्मृतित्वाभाववत्त्वेन अनुभवत्वात्।

ननु विशेषणस्य व्यर्थत्वं ब्रुवतो विशेष्यस्य सार्थकत्वममिमतं तच्च न सम्भवति तस्यापि व्यर्थत्वात्। न चेच्छापरमानन्दात्मकतत्त्वविषया[३] व्याधत्तां तस्या निर्विषयत्वात्। प्रकाशस्य सतः तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयतेति न्यायाचार्यैः ज्ञानस्यैव सविषयतोक्तेरित्याशङ्क्याह **विनाविशेष्यमिति**। अपिशब्दात् स्मृतावतिव्याप्तिरस्त्येवपरमिच्छादावपि अतिव्याप्तिरधिकास्यात्। तद्विषयत्वस्य प्रमा(ण)लक्षणत्वे यच्च ज्ञानमेव विषयतेत्याचार्यवचः तत्तु इच्छाया अपि ज्ञानस्वरूपमेव विषयता नत्विच्छास्वरूपमपीत्यभिप्रापकम्। आदिशब्दात् तत्त्वविषयके संस्कारे च।

---

१. अतएवावागया केपि सिद्धा तथा। २. स्मृतिरपि। ३. प्रमा इत्यर्थः।

**प्रमात्वापातः । तदव्यवच्छेदाद्विशेषणवैयर्थ्यञ्च, विना विशेष्यमिच्छादावतिप्रसङ्गात् ।**

**स्मृतित्वस्य संसर्गाभावस्तत्र विवक्षित इति चेन्न, तथा हि—स्मृतित्वस्य संसर्गाभाव इति किमुच्यते ? किं स्मृतित्वविशिष्टस्य संसर्गस्याभावः ? उत संसर्गविशिष्टस्य स्मृतित्वस्य, अथान्यदेव वा किञ्चिदनया वाचोयुक्त्या विवक्षितम् ? आद्ये स्मृतित्वसंसर्गान्योन्याभावः स्मृतावस्तीति स एव प्रसङ्गः । न हि स्मृतित्वसंसर्गः स्मृतिः ।**

**अत एव न द्वितीयोऽपि, न हि संसर्गविशिष्टं यत्स्मृतित्वं तदेव स्मृतिव्यक्तिः। ततश्च संसर्गविशिष्टस्मृतित्वेन सह स्मृतिव्यक्तेरन्योन्याभावमादाय उक्तदोषानिवृत्तिः । एवं तत्र तत्रापि संसर्गविशेषणप्रक्षेपे दोषानिवृत्तिरेव. अनवस्थायां वा पर्यवसानं विशेषणप्रक्षेपपरम्परायाः ।**

---

यद्वा मया विशेषणवैयर्थ्यमुक्तं कैश्चित्तु विशेष्यमपि व्यर्थमित्युच्यते तत्तु न युक्तमित्याह—**विना विशेष्यमिति** । तथा च तत्त्वं ज्ञानत्वमित्यवश्यमेव वाच्यम् । न च तत्त्वस्य ज्ञानमित्यत्रापि षष्ठचर्थो यदि सम्बन्धिमात्रं तदा आत्मनिष्ठे भ्रमेऽतिव्याप्तिः । यदि च तत्त्वविषयत्वं तदापि गौरोऽहमिति[1] भ्रमेऽतिव्याप्तिरिति वाच्यम् । तत्त्वमात्रविषयत्वस्य विवक्षणीयत्वात् धर्म्यंशप्रमाया अलक्षणीयत्वात् अन्यथा शुक्तिरजतस्यापि प्रमेयतापत्तेरितिदिक् ।

**तथाहीति** । स्मृतित्वस्य यः संसर्गस्तस्याभाव इति वान्वयः किं वा स्मृतित्वस्याभावः संसर्गेण तथाच संसर्गेण विशिष्टस्य स्मृतित्वस्याभाव इति फलति । **अन्यदेव वा किञ्चिदनया वाचोभङ्ग्येति**[2] । स्मृतित्वोपलक्षितसंसर्गाभाव तृतीयविकल्पार्थः । वाचोभङ्ग्या = वाक् प्रकारेण । अन्यदेवेत्यस्य संसर्गावच्छिन्नप्रतियोगिकत्व····मभावे[3] विवक्षित (तु) मित्यर्थः ।

ननु स्मृतित्व संसर्गस्यान्योन्याभावमादाय अतिप्रसङ्गो नास्ति । यतः स्मृतित्वसंसर्गस्य संसर्गाभाव एव लक्षणघटको नच स्मृतित्वसंसर्गस्य संसर्गाभावः स्मृतिषु स्मृतित्वसमवायस्य तत्र सत्त्वादित्यत आह **एवमिति** । अपरापरसंसर्गप्रवेशे चरमसंसर्गान्योन्या[4]भावमादाय स्मृतावतिप्रसङ्गतादवस्थ्यम् । तत्र तत्रापि संसर्गविशेषणप्रवेशेऽविश्रामता अनवस्थाप्रसङ्ग इत्यर्थः ।

**सुतरामशक्यत्वादिति** । स्मृतित्वे संसर्गान्योन्याभावात् ( स्मृतित्वसंसर्गाभावस्य संसर्गान्तरविशेषणप्रवेशेऽविश्रामता अनवस्था प्रसङ्ग इत्यर्थः । ) कथञ्चिद्

---

१. गौरोहिमिति प्रमातिव्याप्तिः । २. वाचो युक्तयेति बहुत्र मूलपाठः ।

३. प्रतियोगिकत्व आतमभावे बिवक्षितुम् इति क ख पुस्तके पाठः ।

४. चरमसंसर्गान्योभाव इति क ख पुस्तके ।

**न च वाच्यं स्मृतित्वसंसर्गस्य न संसर्गान्तरेण सम्बन्धित्वं किन्तु स्वभावत एव ततः कुतः परम्परागवेषणं कार्यमिति ? स्मृतित्वसंसर्गस्यान्योन्याभावमादाय कृतस्य प्रसङ्गस्य परिहर्तुं तदानीं सुतरामशक्यत्वात् संसर्गान्तरविशेषणवचनस्य अधिकार्थापर्यवसायित्वात् ।**

**किञ्च—तदुभयस्वरूपातिरेकं तत्संसर्गस्यामन्यमानेन स्मृतित्वसंसर्गः स्मृतित्वधर्मिस्वरूपं चेत्येतयोः संसर्गात्मत्वे व्यवस्थाप्यमानेऽनुभूतौ कथं तादृशस्य संसर्गस्य निषेधः । किमनुभूतेः स्वरूपं नास्ति, उत स्मृतित्वसंसर्गस्य, ततः कस्य निषेधः ?**

---

भेदो वक्तुं शक्येत तत्तदभावे तु भेदकाभावात् अन्योन्याभावमादायातिप्रसङ्गो दुरुद्धर इत्याशयः ।

ननु स्मृतित्वाभाववत्त्वमनुभूतित्वमस्ति स्मृतिव्यावृत्तो धर्मं इति चेन्न । यदि आत्यन्तिकोऽभावः स, तदा स्मृतित्वान्योन्याभावमादायातिप्रसङ्गः । एवं नित्यसंसर्गाभाव इत्युक्तावपि संसर्गान्योन्याभावमादाय स्मृतित्ववृत्तिः स्मृतित्वाभाव इत्यत्रानुभवे [1]स्मृत्यवृत्तेरस्योक्तत्वात् भेदकत्वं स्मृतित्वसंसर्गस्य संसर्गतदन्योन्याभावावभ्युपेत्य अनुभूतावतिव्याप्तिरुक्ता सम्प्रति साऽपि[2] नानुभूतावस्तीति लक्षणस्यासम्भवमाह—**तदुभयस्वरूपातिरेकं तत्संसर्गस्यमन्यमानेनेति** ।

अतिरेको भेदः । ननु स्मृतित्वसंसर्गः स्मृत्यात्मको धर्मी च तयोः संसर्गः स च नास्त्येव अनुभूताविति कथं निषेधानुपपत्तिरित्यतः कथं शब्दसूचितामनुपपत्तिं स्फुटयति—**किमनुभूतेरिति**[3] । अयमर्थं यदि स्मृतित्वसंसर्गो धर्मिमात्रञ्चेत्युभयरूपस्वरूपतायाः संसर्गः तदा अनुभूतिरप्यस्ति स्मृतित्वसंसर्गोप्यस्त्येव द्वयोरपि प्रामाणिकत्वात् अतः कथं तदुभयनिषेधः । अथ न धर्मिमात्रं तदुभयान्तर्गतं किन्तु स्मृतिरेवेति चेन्न । स्मृतित्वसंसर्गो हि स्मृतिपदार्थः ततः संसर्गस्य संसर्गनिरूपणात् प्राक् ज्ञानमशक्य[4]निरूपणम् । यदि चानुभूतिस्वरूपं स्मृतित्वसंसर्गश्च न संसर्ग इत्युच्यते तदा तदुभयस्वरूपं नास्तीत्येवं निषेधे तदुभपापलायापत्तेः । यदि च स्मृतित्वसंसर्गस्य संसर्गरूपो नानुभूतिः किन्तु स्मृतिरेवेत्युच्यते तदाह—**स्मृतावपीति** । नहि स्मृतौ स्मृतित्वसमवायादतिरिक्तः समवायस्य सम्बन्धोऽस्ति, तर्हि कथं स्मृतित्वसमवायवतीः स्मृतिरिति व्यवहार इति चेन्न । समवायस्वरूपेण तन्निर्वाहस्य अनवस्थाभयेन त्वया स्वीकृतत्वात् । तत्र भवतः=पूज्यस्येति विपरीतलक्षणया प्रयोगः ।

---

१. संसर्गान्योन्याभावात् इत्यनन्तरं कथञ्चिद् भेदो वक्तुं शक्यते इत्येवं पाठः ख पुस्तके । रेखाङ्कितः पाठो नास्ति । युज्यते च एष पाठः । स्मृत्यवृत्तीरस्योक्तत्वाभेदकत्वम् ।

२. सोऽपि । ३. किमनुभूरिति । ४. ज्ञानं शक्यनिरूपणा ।

**अर्थान्तरभूतस्य च संसर्गस्य निषेधे स्मृतावपि प्रसङ्गस्तदवस्थः, स्मृतौ तस्यार्थान्तरभूतस्य भवताऽनभ्युपगमात्, स्वरूपमेव तयोः सम्बन्ध इति तत्र-भवतोऽभ्युपगमः ।**

**अथोच्यते—अनुभूतिस्मृतित्वसंसर्गयोः स्वरूपसम्भवेऽपि न परस्परसम्बद्ध-बुद्धिजनकत्वं तयोः, तादृक्त्वञ्च यत्र तयोस्तत्र सम्बन्धात्मकत्वं स्वरूपयोरुच्यत इति नैवम् विशेषोपसङ्ग्राहकासिद्धौ तस्याऽप्यनुपपत्तेः । उपसङ्ग्राहकान्तरोक्तौ तत्सम्बन्धेऽपि प्रसङ्गेन अपरापरोपसङ्ग्राहकगवेषणायामनवस्थापातात् ।**

---

ननु स्मृतित्वसमवायानुभवो नानुभवोऽस्ति आत्माश्रयापत्तेरिति चेत्तर्हि स्मृतित्वसमवायस्मृतिरपि न स्मृतिरिति अव्याप्त्यापत्तिः । अथ स्मृतित्वसंसर्ग-धर्मिणः स्वरूपमात्रं न सम्बन्धः किन्तु परस्परसंसृष्टबुद्धिजनकं स्वरूपं न चानु-भूतित्वस्मृतित्वसंसर्गयोस्तादृशं रूपमस्तीति नातिप्रसङ्गः इति शङ्कते—

अथोच्यते इत्यादिना । [1]सम्बद्धबुद्धिजनकत्वाभावस्तु लोकप्रसिद्ध इति भावः । किन्तु यत्र [2]सम्बद्धबुद्धिजनकत्वं तत्र संसर्गिणोः सम्बन्धात्मकत्वमित्यत्र यत्पदेन व्यक्तेरभिधानेऽव्याप्तिः अनुगतरूपस्याभिधानं[*] वाच्यं तत्राह—**विशेषेति** । व्यक्तिरुच्यते उपसंग्राहकमनुगतं रूपमुच्यते तदुपसंग्राहकं स्मृतित्वमिति चेन्न । तस्याद्याप्यनिरूपणात् । स्मरामीत्यनुव्यवसीयमानो जातिविशेष इति चेदस्त्वेवं तथापि सा कास्तीति प्रश्ने यदि तद्व्यक्तिविशेष इत्युच्यते तदा या व्यक्तिर्नोपदिष्टा तत्र न स्यादिति तासां व्यक्तीनामुपसंग्राहकान्तरमवश्यं वाच्यं, तस्य स्मृतौ कः सम्बन्धः, समवायश्चेदसावनुभूतावपि । स्मृतिमात्रनिष्ठः कश्चित् सम्बन्धश्चेत् तर्हि तेनैव समवायोऽन्यथा सिद्धः । अथ समवाय एव सतु नाना तथापि समवायः समवायिसंसृष्टो नवा आद्ये तस्यापि संसर्गो यत्रास्ति तत्रैव समवायिनि (तत्) तावेवेति एवं तस्य तस्यापि इत्यप्रामाणिकी अनवस्था स्यात् । एतेन नवेति पक्षोऽपि परास्तः असंसृष्टेन तेन तज्जनने अनुभूतावपि प्रसङ्गात् ।

अथ जाति नं व्यक्तेरत्यन्तं भिन्ना किन्तु व्यक्त्यभिन्ना अनुवृत्तिप्रतीत्या पदम् इति तस्याः संसर्गो नापेक्षते अभेदादेवेति भट्टमतमावलम्बसे । तदपि न युक्तम् । तस्याः अभेदः कया व्यक्त्या, न तावदेकयैव स्मृतिव्यक्तीनां नानात्वाभावप्रसङ्गात् । नापि नानास्मृतिव्यक्त्या सहाभेदः नाना स्मृतीनां भेदकान्तरस्वीकारे तस्य तस्य सम्बन्धेऽपि कथितदोषापत्तेः । भेदकान्तराभावे अनुभूतावपि स्मृत्यभेदापत्तिः । अथानभूतौ स्मृत्यभेदो न लोकसिद्धो नवा प्रामाणिक इति चेत् । तत् किं लोक एव प्रमाणं तथासति अलौकिकपदार्थोच्छेदापत्तेः । नवा प्रामाणिक इति पक्षेऽपि किं

---

१. सम्बन्ध । २. सम्बन्ध ।

*. अनुगतरूपस्याधानं वाच्यम् इति क ख पुस्तके ।

**तावताऽपि चानुभूतिस्वरूपे कस्य निषेधो वर्णितः स्यात् ? स्मृतित्वसंसर्गानुभूती सम्बद्धे इत्येवं रूपबुद्धिजनकत्वस्येति चेन्न, भ्रान्त्यात्मिकाया ईदृशबुद्धेर्जनकत्वस्य वारयितुमशक्यत्वात् । यथार्थाया इति चेत् ईदृशबुद्धेर्यथार्थाया यदि सत्त्वमभ्युपैषि, तदाऽनुभूतौ स्मृतित्वप्रसङ्गः । अथ नाभ्युपैषि, किं प्रति तस्या जनकत्वाभावो निरूप्यः ?**

---

प्रतीतिरेव नास्तीत्युच्यते । अथवा सत्यपि न प्रमेति । नान्त्यः प्रमाया अद्याप्यनिरूक्तेः । नाप्याद्यः अन्यथाख्यातिरूपे रजतानुभवेऽपि अख्यातिवादिनो रजतस्मृतिव्यवहारात् ।

अनुभूतिरिति यस्य प्रतीतिः तस्य स्मृतिप्रत्ययो नास्तीति चेत् । ततः किं तथापि वस्तुतोऽनुभूतौ स्मृतिप्रतीतिरस्त्येव । अथ वस्तुतो न अनुभूतित्वस्य व्यवस्थापितत्वात् इति स्मृतिस्मृतित्वसंसर्गयोर्विशिष्टबुद्धिजनकत्वं न सिध्यति नियामकाभावादित्युक्तम् । अस्तु वा तत् तथापि अनुभूतिलक्षणस्यासिद्धिरित्याह—तावतापि चेत्यादिना ।

अत्र विद्यासागरः—अनुभूतिस्मृतित्वसंसर्गयो स्वरूपं न निषेध्यं सत्त्वात् । नापि तयोः संसर्गोऽनङ्गीकारादेव निषेधानर्हत्वात् इत्यर्थं इति व्याचष्टे । तन्न । तावतापीत्येनन विशिष्टबुद्धिजनकताया एव परामर्शात् । न चैवं स्मृतित्वसंसर्ग[1]त्यव्यवहितग्रन्थानुत्थानम् । बुद्धिमात्रजनकत्वं निषेध्यं प्रमाजनकत्वं वेति[2] विकल्प्य तदुत्थापनात् ।

एतेनैव स्मृतित्वसंसर्गोऽनुभूतौ नास्तीत्यन्योन्याभावमादाय प्रकृतप्रसङ्गस्य तादवस्थ्यादित्याह—**एतावतेति** । स्मृतित्वसंसर्गनिषेधस्य वर्णयितुमशक्यत्वादिति भावः ।

ननु स्मृतित्वसंसर्गस्मृती सम्बद्धे इति बुद्धिरस्ति स्मृतित्वसंसर्गानुभूती सम्बद्धे इति धीर्नास्तीति तादृशधीजनकत्वमेव निषिध्यत इति मिश्रव्याख्याऽपि परास्ता । अथोच्यत इत्यादिना स्मृतित्वसंसर्गनिषेधपक्षस्य स्वयमेवान्यथा वर्णितत्वेन शङ्काया अनुत्थानात् । अत्र निषेध्यप्रतियोगी[3] पदार्थः तादृशधीफलोपधायकत्वं स्वरूपयोग्यता वा । आद्ये स्मृतावपि फलानुपधानदशायां तदस्तीति स्वरूपयोग्यता निषेध्या । अस्ति च स्मृतावपि स्मृतित्वसंसर्गस्मृती सम्बद्धे इति बुद्धियोग्यता[4] नत्वनुभूतौ तादृशयोग्यतेत्याशयेन शङ्केयम् । **भ्रान्त्यात्मिकाया इति** यद्यपि अनुभूतिः स्मृतिरेवेतिभ्राम्यत एवं बुद्धिः सम्भवति परन्तु अयं भ्रम एव

---

१. स्मृतित्वसंसर्गे व्यवहितग्रन्थानुत्थान । २. प्रमाजनकत्वयेति विकल्पार्थं तदुत्थापनाद् ।

३. प्रतियोग्योपदार्थ ।

४. आद्ये स्मृतावपि इत्यारभ्य इति बुद्धियोग्यतेत्यन्तं द्विवारमादर्शपुस्तके लिखितम् ।

**अथात्यन्तासतीमेव तादृशबुद्धिं प्रति जनकत्वाभावावधारणमनुभूतेरभ्युपैषि, तदा स्मृतावपि प्रसङ्गः यावत्यस्तद्बुद्धयस्तत्र जायन्ते, तदधिकां तादृशबुद्धिमत्यन्तासतीं प्रत्यजनकत्वस्य स्मृतावपि सम्भवात् ।**

**सर्वामेव तादृशबुद्धिं प्रत्यजनकत्वमनुभूतेः, न तु एवं स्मृतेरिति चेन्न सर्वतद्व्यक्तिप्रमित्यसम्भवात् ।**

**किञ्च सर्वामिति कोऽर्थः—किमसतीं सर्वाम्, उत सतीम्, अथ सतीमसतीञ्चेत्युभयीमपि प्रत्यजनकत्वम् ? आद्ये द्वितीये च स्मृतावपि तदजनकत्वमस्त्येव । न हि 'स्मृतित्वसंसर्गस्मृती सम्बद्धे', इति यावत्यः स्मृतिव्यक्तिषु बुद्धय उत्पद्यन्ते,**

---

दुरूपपादः प्राभाकराणामपि अनुभूतित्वेन उपस्थितिदशायां स्मृतित्वासंसर्गाग्रहानङ्गीकरात् । न वा[1] साबुद्धिस्तेषामन्यथाख्यात्यापत्तेः तथापि आहार्यारोपो नैयायिकानाम् । यद्वा नरसिंहाकारप्रत्यभिज्ञावादिनो भाट्टाः प्रसिद्धा एव । न च सा न भ्रान्तिरपि समवादिनां मतमिति । न चैतादृशभ्रान्तिजनकता अनुभूतेर्नास्ति, प्रमाणाभावात् आरोप्यज्ञानधर्मिज्ञानदोषेतरत्वादिति वाच्यम् । विशिष्टप्रत्यक्षे विशेष्यस्यापि हेतुत्वादिति । अथा[2]प्रमितप्रतियोगिक एव निषेधोऽस्त्वित्याशङ्कते **अथेति** । यावत्य इति । स्मृतित्वसंसर्गस्मृती सम्बद्धे इति यावत्यः सत्यबुद्धयः सहस्त्रसंख्या जायन्ते ततोऽधिकाया बुद्धेः स्मृतावभावात् तज्जनकत्वाभावस्य सत्त्वात् स्मृतावतिव्याप्तिरित्यर्थः **तादृशबुद्धिमिति** । स्मृतित्वसंसर्गस्मृती[3] सम्बद्धे इति या बुद्धिरेका तस्या अजनकत्वं स्मृत्यन्तरस्येति । **सर्वामिति तादृशीमिति** । स्मृतित्वसंसर्गानुभूती सम्बद्धे इति बुद्धिभिन्नामित्यर्थः । यद्यपि तादृशसर्वबुद्धिजनकत्वं न स्मृतेरप्येकस्या एकबुद्धावेव विशेष्यतया जनकत्वात् नत्वेवमित्यनुपपन्नं तथापि इदं किञ्चेत्यादिना वक्ष्यत्येव । **सर्वतद्व्यक्तिप्रमित्यसम्भवादिति** । सर्वासां स्मृतिविशेष्यकतादृशबुद्धीनामसर्वज्ञत्वेन ज्ञातुमशक्यत्वात् । तादृशप्रमितिजनकत्वरूप प्रतियोगिनोऽज्ञाने अनुभूतिलक्षणं दुर्ज्ञेयमित्यर्थः स्मृतावतिव्याप्तिं समुच्चिनोति—**किञ्चेत्यादिना** ।

शङ्करमिश्रास्तुसामान्यलक्षणायां तदनभ्युपगमतन्त्रमित्यनुशयेनाह—"किञ्चे" ति जल्पन्ति । तथापि विप्रतिपन्नाः बोधयितुमशक्या इति । तदर्थं शब्दप्रयोगस्तव न स्यादिति दोषानुद्धारात् इति । आद्ये असतीं सर्वामिति पक्षे स्मृतावतिव्याप्तिः स्पष्टैव नहि असत्याः कारणमस्ति न वा तस्यां कार्त्स्न्यं धर्मतो विशेषणमपि सर्वत्वं व्यर्थ मेवेति । द्वितीये दोषं स्पष्टयति—**यावत्यः स्मृतिव्यक्तय इति** । द्वितीये एवं

---

१. नचास् बुद्धिः ।

२. अथ प्रमित इति क पुस्तके ।

३. स्मृतित्वसंसर्गस्मृति पाठः ।

**ताः प्रति प्रत्येकं स्मृतिव्यक्तिषु जनकत्वमस्ति। काञ्चित् सतीं प्रति च तदजनकत्वं प्रागेव दूषितम्। तृतीये नानुभूतावपि तदजनकत्वम्, सत्यासत्यतादृशबुद्धेर्भावेन अभावेन वा सतीमसतीं प्रत्यजनकत्वस्यासम्भवादिति।**

---

शङ्कते—काञ्चित् सत्यां सतीमिति। सत्यां यथार्थामित्यर्थः। तेनानुभूतावेव तादृशबुद्ध्यजनकत्वं न स्मृतौ। तदनुपादाने अनुभूतावपि तादृशभ्रान्तिजनकत्वादतिव्याप्तिः स्यात्। सतीं विद्यमानां तेन भूतभाविनीनां वर्तमानानां[1] वर्तमानानामपि पुरुषान्तरीयाणां स्मृतीनाञ्च तदजनकत्वे न दोष इति सर्वां प्रत्यजनकत्वेऽपि किञ्चित् प्रति तदस्त्येव स्मृतौ नत्वनुभूताविति नातिव्याप्त्यव्याप्ती इति भावः। **प्रागेवेति**। स्मृतित्वसंसर्गधर्मिणी सम्बद्धे इत्याकारायाः यथार्थायाः बुद्धेरनुभूतिविशेष्यायाः सत्त्वे अनुभूतेः स्मृतित्वापातादित्यर्थः। **सत्यासत्यतादृशबुद्धिरिति**। सत्या विद्यमानायाः सत्यतादृशबुद्धेः स्मृतित्वसंसर्गानुभूती सम्बद्धे इति यथार्थाया[2] भावेन अभावेन चाजनकत्वासम्भवात् तादृशबुद्धेरनुभूतौ सत्वेन अनुभूतौ अजनकत्वम् असत्ये च निरूपकाप्रसिद्ध्या तदजनकत्वमशक्यग्रहमित्यर्थः। असत्यास्तु प्रतियोग्यनिरूपणादेव अजनकत्वासम्भवात्। सतीमसतीं प्रति अजनकत्वमसम्भवीतिभावः।

प्रत्येकाजनकत्वमादाय स्मृतावतिप्रसङ्गोऽपि बोध्य इति मिश्राः। तन्न। तत्ताया अनेकत्वात्।

ननु स्मृतित्वसंसर्गानुभूती न सम्बद्धे इति प्रतीयमानः सम्बन्धाभावोऽनुभूतावेव नतु स्मृतौ इत्यनुभवसिद्धमेतत्। सच सम्बन्धः स्वरूपत्वं सम्बन्धान्तर वेत्यन्यदिति। किञ्च स्मृतित्वसमवायः स्मृतौ स्मृतिसंसर्गः स्मृतावित्येवमनुभूयमानस्य स्मृतित्वसंसर्गस्य निषेधोऽनुभूतौ शक्यग्रहः तथा स्मृतित्वसंसर्गस्वरूपे नानुभव इति निषेधः सम्भवत्येवेति चेन्न। आद्ये स्मृतित्वसंसर्गानुभूतिस्वरूपस्वरूपत्वे तयोः प्रामाणिकयोः असत्तापत्तिः। अनुभूतावेव तयोरसत्त्वं न स्मृताविति चेन्न। स्मृतावपि स्मृतेरसत्त्वात् उभयाभावः। द्वितीये नैयायिकस्यापसिद्धान्तः। किञ्चेत्युक्तमपि न युक्तं, स्मृतित्वसमवायस्यानुभूतित्वसमवायाभेदात् अनुभूतावपि तन्निषेधासम्भवात् समवाय[3]स्य स्फुटतरप्रत्यक्षाविषयत्वाच्च। अन्यथा तत्र विवादानुपपत्तेः। किञ्च संसर्गान्योन्याभावमादायातिप्रसङ्गतादवस्थ्यात्। स्मृतित्वसंसर्गस्मृती नानुभव इति प्रत्ययेऽपि नानुभूतित्वसमवायाश्रयभेदो विषयः सम्भवति स्मृतावपि अनुभूतित्वसमवायसत्त्वात्। अनुभूतित्वविशिष्टः समवायो न स्मृतावितिचेत् तर्हि

---

१. अधिकः पाठः प्रतिभाति।

२. यथार्थाया भावेन चाजनकत्वासम्भवात्।

३. समायस्फटतर इति।

**स्यादेतत्—स्मृतित्वस्य अन्योन्याभावमादाय याऽतिप्रसक्तिर्दर्शिता सा नोपपद्यते, भेदाभेदवादिमते स्मृतित्वभेदाभेदस्य स्मृत्या सहाभ्युपगमात्। ययोर्भेदाभेदः, तयोस्तत्रान्योन्याभावानभ्युपगमात्। मैवम्; कथं ह्यवधार्य स्मृतित्वस्य भेदाभेदः स्मृत्या नानुभूत्येति ?**

**अनुभूत्या सह तद्विशिष्टप्रमाया अभावादिति चेन्न, किं सत्याः किमसत्या इत्याद्युक्तविकल्पदोषात्। प्रागभावप्रतियोगिन्या इति चेन्न, अनुभूतौ तादृश्याः**

---

अनुभवत्वविशिष्टो[1] न इत्येवास्तु। अस्त्वेवमेवेति चेन्न। स्मृतेरनुभवाभेदस्य व्यवस्थापितत्वात्। अयमपि प्रत्ययः प्रमा भ्रमो वेति विकल्पनीयम्। आद्ये असिद्धिः सर्वस्यैव विशिष्टबुद्धिविषयस्य असत्तया आगमेन बोधितत्वात्। अन्त्ये न ततोऽर्थसिद्धिरिति मूकीभूय विस्मृश्यतामिति। स्मृतित्वरहितत्वमित्यनुभवलक्षणे स्मृतित्वान्योन्याभावमादायातिव्याप्तिः तां भट्टमतेन परिहर्तुमाह **स्यादेतदिति**।

नहि[2] **ययोर्भेदाभेद** इति। न च भेदसहितोऽभेदोऽस्ति अन्योन्याभावो नास्तीति स्ववचनविरोधः अन्योन्याभावस्यैव[3] भेदपदार्थत्वादिति वाच्यम्। तादात्म्याभावो- हि अन्योन्याभावः स्मृतित्वस्मृत्योस्तु[4] तादात्म्यं जातिव्यक्त्यात्मकत्वात्। तस्मात् सत्यपि भेदाभेदे तादात्म्यापरनामनि नान्योन्याभाव इह अनुष्णाशीतस्पर्शवत् तादात्म्यस्य विचित्रात्मकत्वात् इति भावः। स्मृतित्वस्य स्मृत्या सह तादात्म्यमनुगतप्रतीत्या सिद्धं नानुभूत्या। नहीयं स्मृतिरियमपि स्मृतिरितिवदनुभूतिरपि स्मृतिरिति प्रतीतिरस्ति तस्माद् योग्यानुलब्ध्या अनुभूतावन्योन्याभावोऽवधार्यत इत्याशङ्कते—**अनुभूत्या सह तद्विशिष्टप्रमाया** इति। तादात्म्यप्रमाया इत्यर्थः। किं सत्या इति। यद्यनुभूतिः स्मृतिरिति प्रमा नास्ति इत्युच्यते सा प्रमा यदि सती तदा अनुभूतिस्मृत्योः द्वयोः सिद्धं तादात्म्यमिति भावः। अथ सा प्रमा असती तदा कथं निषेधः असतोऽप्रतियोगित्वादिति भावः। अत्यन्तासत्याः प्रमायाः अभावस्वीकारे स्मृतावपि स्मृतित्वतादात्म्यं न स्यादत्यन्तासत्याः तत्राप्यभावसम्भवादितिभावः इत्यन्ये।

ननु अत्यन्तासत्या अभावो नोच्यते किन्तु प्रागभावप्रतियोगिन्या इति नोक्तदोष इति शङ्कते—**प्रागभावेति**। यस्य हि यत्र प्रागभावः तस्य तत्र कदाचिद्भाव इत्याशयेनाह—**अनुभूतौ तादृश्याः स्वीकारेणेति**। ननु स्मृतितादात्म्यप्रमाविषयता स्मृतौ प्रसिद्धा तस्या अभावोऽनुभूतावस्तीति योग्यानुपलब्ध्या अभावग्रहोऽस्त्विति चेन्न। प्रमामात्रदूषयितारं प्रति तादात्म्यप्रमाया अभावस्य अनुभूतावे-

---

१. विशिष्टोऽन्य इति क पुस्तके।

२. "नहि" इत्येतद् रहितः पाठो भूले।

३. अन्योन्याभावस्यैवाभेदपदार्थत्वात्। ४. स्मृतिविस्मृत्योः। क ख पुस्तके।

**स्वीकारेण अनुभूतेस्तथात्वापातात्। स्मृतिस्मृतित्वयोरन्योन्याभावश्च अन्योन्यात्माऽनुभूतावपि तुल्यः। न हि स्मृतित्वान्योन्याभावोऽनुभूतिरित्युक्तमावर्तने।**

## १४. अन्योन्याभावसंसर्गाभावयोर्भेदखण्डनम्

**अथ मा भून्द्वेदाभेदमादाय परिहारः, तथापि 'इदं तन्न भवति, इह तन्नास्ती'ति प्रतीतिसाक्षिक एवान्योन्याभावसंसर्गाभावयोर्भेद इति चेन्न, प्रतियोगिरूपोपाध्यवैचित्र्याद्, अभावे जात्यादिभेदानभ्युपगमाच्च तयोर्भेदबुद्धिरेव प्रामाण्यमनश्नुवाना कूटसाक्षिणीति तदनादरणात्।**

---

वेत्यशक्यवचनत्वात् स्मृतावपि तादात्म्यप्रमा अस्त्येवेत्येव हि खाण्डनिकमतम्। किञ्च अनुभूतौ या स्मृतित्वतादात्म्यप्रतीतिः सा भ्रम इति कुतो निर्णीतं, बाधादिति चेत्। स किं सर्वस्य स्वस्य परस्य वेति विकल्प्य स्मृतावपि तत्प्रतीतेर्भ्रमत्वमापादनीयम्। अन्यच्च प्रमालक्षणदूषणोद्धाराय प्रमाघटितलक्षणाभिधानं चक्रकग्रस्तमित्यपि दूषणं बोध्यम्। दूषणान्तरमाह–**स्मृतिस्मृतित्वयोरिति**। ननु नानुभवः स्मृतिः स्मृतित्वञ्चेति कथं तदुभयान्योन्याभावाभावः स इत्याशङ्क्याह—**नहि**। अनुभवो न तयोरन्योन्याभावः त्वयापीष्यते अतः सिद्धं स्मृतिस्मृतित्वयोरिव अनुभवस्यापि अन्योन्याभावाभावत्वमिति भावः। **उक्तमिति**। अनुभूतेस्तथात्वमुक्तमावर्तत इत्यर्थः।

**संसर्गाभावयोरिति**। तथा च स्मृतित्वं स्मृतौ नास्तीत्यप्रतीते नातिप्रसङ्ग इत्याशयः। उपाधिभेदात् दण्डचदण्डयोर्भेदः, जातिभेदात् गवाश्वयोः गुणभेदात् कृष्णशुक्लयोः नचेह तदन्यतरदप्यस्तीत्याशयेनाह—**प्रतियोगीति**। प्रतियोगिरूपस्योपाधेरभेदादित्यर्थः। अनभ्युपगमात्--अभ्युपगमे भावत्वापातात् गुणाभ्युपगमे द्रव्यत्वापाताच्च। **कूटसाक्षिणीति**। यथा कूटं साक्षिणमाहृत्य व्यवहारः प्रामाणिको न भवति तथा प्रत्येतव्यभेदाभावे प्रतीतिवैलक्षण्यधीरपि इयमेकजातीये ज्ञाने मिथ्येति न ततः स्वेष्टसिद्धिरिति भावः। कूटसाक्षिणी = मिथ्याबुद्धिरित्यर्थः इति। विद्यासागरः। स्वप्रतियोगिसमानाधिकरणोऽभावः स्व प्रतियोगिना सह [1]समानमधिकरणं यस्य स, स्तम्भः कुम्भो नेतिप्रतीयमानस्याभावस्य प्रतियोगितादात्म्यं तस्याधिकरणं तदुभयम् अभावोऽपि तदुभयाधिकरण इति। अत्र संसर्गाभावेऽतिव्याप्तिवारणाय प्रतियोगिपदम्। तच्च अन्य प्रतियोगिसमानाधिकरणे संसर्गाभावे। तथाप्यतिव्याप्तमिति[2] स्वपदम्। पृथक्त्वाख्ये गुणे गुणप्रतियोगिद्रव्यनिष्ठेऽतिव्याप्तिवारणाय अभावपदमिति व्याचष्टे[3]। तन्न।

---

१. सहमानम्। २. अतिव्याप्तिम्।

३. विद्यासागर इति शेषः।

**न च स्वप्रतियोगिसमानकालसमानाधिकरणोऽभावोऽन्योऽन्याभाव, तदन्योन्याभाववाँश्च तदभावः संसर्गाभावः, यथासम्भावमत्माश्रयाद्यननुभवस्वभेदाननुगमतत्तदवगमानभ्युपगमानामनुत्तरणीयत्वप्रसङ्गात् ।**

प्रागभावध्वंसयोरतिव्याप्तेः। यदि च प्रतियोगिपदं[1] तादात्म्यपरं तदा अभावपदवैयर्थ्यं पृथक्त्वस्य तादात्म्याप्रतियोगिकत्वात्[2] तस्मात् स्वप्रतियोगिसमानाधिकरणसमानकालीनोऽभाव[3] इत्येव लक्षणम्। वदरसंयोगे स्वप्रतियोगिना वदरेण सह कुण्डे वर्तमानेऽतिव्याप्तिवारणाय अभावपदम्। आकाशान्योन्याभावोऽपि आकाशसमानाधिकरणः तस्यापि संयोगे वृत्तिमत्त्वात्। अभावविरहात्मत्वप्रतियोगित्वविवक्षायान्तु अभावपदं न देयमेव।

**तदन्योन्याभाववानिति**। अन्योन्याभावभिन्नोऽभाव इत्यर्थः। अन्योन्याभावस्याश्रयेऽतिव्याप्तेर्वारणाय अभावपदम्। विद्यासागरस्तु तदभाव इति पाठं धृत्वा तदन्योन्याभावेऽतिव्याप्तिवारणाय तदन्योन्याभाववानित्यस्य तेन प्रतियोगिना सह अन्योन्याभाववानित्यर्थः। नच अन्योन्याभावः प्रतियोग्यन्योन्याभाववान् अनवस्थापातादिति व्याचख्यौ। नास्त्येव तत् पदमिति तु वस्तुगतिः। **यथासम्भवमिति**। अभावत्वं भावभिन्नत्वञ्चेत् तदा अन्योन्याभावलक्षणमात्माश्रयग्रस्तम्। अथ भावत्वात्यन्ताभावत्वं तदा अत्यन्ताभावत्वस्य सदा[4] संसर्गाभावरूपत्वात् संसर्गाभावत्वस्य चान्योन्याभावाभावस्वरूपस्य अन्योन्याभावनिरूप्यत्वात् अन्योन्याश्रयः। यदि च अभावत्वं भावभिन्नत्वं तच्च भाववैधर्म्यं तच्च तदन्यवृत्ति[5]धर्मात्यन्ताभाववत्वं, तदन्यत्वञ्च तदन्योन्याभाववत्त्वमिति तदा चक्रकम्। यद्वा अन्योन्याभावस्यान्योन्याभावोऽस्ति नवा। अन्त्ये संसर्गाभावो मिथ्या स्यात्। आद्ये यदि स्वरूपात्मकः तदा अन्योन्याभावस्य स्वनिरूप्यत्वादात्माश्रयः। यदा परतस्तदा तस्याप्यन्योन्याभावो, यदि पूर्वः तदा अन्योन्याश्रयः। अथ प्रथमादन्य एव तदापि तस्याप्यन्योन्याभावो यदि प्रथमस्तदा चक्रकं यदि चान्यस्तदापि पञ्चमषष्ठादिकमभ्युपेत्य यदि परावृत्तिस्तदा पुनश्चक्रकम् अपरावृत्तौ अनवस्था उत्तरोत्तरेषामननुभवश्च। स्वप्रतियोगीत्यत्र स्वपदस्यान्योन्याभावपरत्वे आत्माश्रयः अथाभावमात्रपरञ्चेदनुभवविरोधः। न हि ययोस्तादात्म्यं तयोस्तदेव तदभाव इत्यनुभवः तथाभावस्य प्रतियोगिना स्वरूपसम्बन्धविशेषाश्रयेण सामानाधिकरण्यमित्येवार्थः तदा संयोगज्ञानादिसंसर्गाभावेऽतिव्याप्तिः यस्य व्यावृत्तेरभावस्य प्रतियोगिसामानाधिकरण्यमित्युच्यते तदाऽव्याप्यवृत्त्या अन्योन्याभावे अव्याप्तिः। स्वपदं तत्तद् व्यक्तिविशेषपरञ्चेत्तदा व्यक्त्यन्तरे व्यक्त्यन्तरसम्बन्धाभावात् अन्योन्याभाव-

१. प्रतियोगिसमापदम्। २. तादात्म्यप्रतियोगिकत्वात्।

३. समानकालीनोभव। ४. सदाचन।

५. धर्मात्वान्ताभाव।

**ननु संसर्गप्रतियोगिको निषेधः संसर्गाभावः, तादात्म्यप्रतियोगिकश्च तादात्म्याभाव इत्युक्त एव न मिश्रता तयोः यो हि संसर्गतादात्म्यस्य निषेधः, स संसर्गनिषेध एव न भवति तादात्म्यप्रतियोगिकत्वादिति। मैवम्, द्रव्यगुणकर्मणां समवायिकारणेषु हि तेषां प्रध्वंसा नैवं संसर्गाभावाः स्युः। संसर्गप्रतियोगित्वे तु संसर्गस्य समवायरूपतया समवायानित्यत्वप्रसङ्गात्।**

---

व्यवहाराभावप्रसङ्गः। यदि चान्योन्याभाव[1]शब्दोऽननुगतवाची अनेकार्थः। सोऽपि[2] न स्वपदस्य अभेदेषु अननुगमे तत्प्रतियोग्यवगमाननुगमप्रसङ्गः। अननुगमे च प्रतियोगिनिरूप्यान्योन्याभावस्य अवगम एव न स्यादिति कथं तत्र शक्तिग्रह इति भावः। यदि स्वपदमभावमात्रपरं तदा अव्याप्यवृत्तिसंसर्गाभावेऽतिव्याप्तिरिति। यस्मिन् विकल्पे यो दोषः सम्भवति स तत्र द्रष्टव्यो न त्वेक एवेत्याह—**यथासम्भवमिति**। अन्योन्याभावलक्षणखण्डनेनैव तद्घटितसंसर्गाभावलक्षणमपि खण्डितं भवतीति तत्र पृथक् खण्डितम्।

अत्र मिश्राः—अस्ति हि प्रतीत्योर्वैलक्षण्यं तच्च प्रत्येतव्यवैलक्षण्या विनाभूतं प्रत्येतव्यन्तु यद्यपि विलक्षणतया न शक्याभिधानं तथापि नानभिधानमात्रेण निवर्तते इक्षुक्षीरादि माधुर्यवत् प्रतीतिविशेष एव वा लक्षणमुभयोः। सम्भवति च तादात्म्यावच्छिन्नप्रतियोगिकत्वसंसर्गावच्छिन्नप्रतियोगिकत्वमुभयोर्वैचित्र्यमिति नेदं खण्डनं शोभते इति। तदत्यशुद्धम्। निर्वचनाशक्तौ परबोधनासामर्थ्यात् निग्रहापत्तेः। इक्षुक्षीरादिमाधुर्य्यमपि नानभिधेयम् अभिधेयत्वस्य भवन्मते केवलान्वयित्वात्। नाप्यनभिधेयं, विशेष इति शब्देनैवाभिधानात्। अभिधानानभिधानयोः दृष्टान्तत्वान्नुपपत्तेः। नापि प्रतीतिविशेष एव लक्षणं, प्रतीतिरिह प्रत्येतव्यभेदेन विना वैलण्याभावात् तया च सिद्धे तस्या वैलक्षण्ये लक्षणत्वं सत्त्वे तस्या लक्षणत्वे[3] प्रत्येतव्य-वैलक्षण्यमितीतरेतराश्रयत्वम्। यच्च तादात्म्यावच्छिन्नेत्यादि तदपि न। तादात्म्यस्य प्रतियोगितावच्छेदकानतिरिक्तत्वेन घटसंसर्गाभावेऽपि गतत्वात्। संसर्गीघटो नेत्यन्योन्याभावस्यापि संसर्गप्रतियोगितावच्छेदकत्वादतिव्याप्तेः। **यो हि संसर्गतादात्म्यनिषेध इति**। स्मृतित्वसंसर्गान्योन्याभाव इत्यर्थः। तथा च नातिव्याप्तिः स्मृतौ अनुभूतिलक्षणस्येत्यर्थः। तेषां प्रध्वंसा इति उपलक्षणं प्रागभावस्यापि। नास्त्येव वा प्रागभावः, नहि घटसंयोगयोर्घटो ध्वस्तः कपालसंयोगे नेष्ट इति ध्वंसप्रतीतिवत् कपाले घटप्रागभाव इति प्रतीतिरस्ति किन्तु कपाले घटो नास्ति संयोगोनास्तीत्येवमाकारा प्रतीतिः। सा तु घटत्वसंयोगत्वावच्छिन्नात्यन्ताभावावगाहिनी एव, यावद् घटसंयोगप्रतियोगिकत्वात्। **तेषामिति**। द्रव्यादिप्रतियोगिका हि ते न संसर्गप्रतियोगिकाः।

---

१. अनुगतवाची। २. सोऽपि। ३. वैलक्षण्ये।

**किञ्च—तर्हि संसर्गान्योन्याभावौ द्वावपि न घटादिप्रतियोगिकाविति घटादेः कालादिवन्निरवधित्वापातः। संसर्गतादात्म्ययोश्च अविशेषितयोर्निषेधे सामान्यत एव तयोरुच्छेदः स्यात्।**

**एवं यद्यदेव प्रतियोगि वाच्यं तत्तत्स्वरूपत एव न स्यात्। तस्यापि संसर्गं प्रति धावने च तदक्षतम्, संसर्गानवस्था, शेषोच्छेदात् पूर्वपूर्वोच्छेदो वा स्यात्।**

---

यत्तु समवायस्य नित्यत्वेऽपि द्रव्यादिनिरूपितः समवायः ध्वंसते विशिष्टस्यानित्यत्वादिति। तदसत्। समवायस्य नित्यत्वाभावप्रसङ्गात् ध्वंसाप्रतियोगित्वं हि तत्। नवा विशेषण नाश एव विशेष्यनाशः तयोरभेदप्रसङ्गात् समवायो न नष्टः किन्तु घंटादिकमिति विरोधिप्रत्ययाच्च।

**अविशेषितयोरिति**। यदि च विशिष्टयोर्निषेधः तदा तयोरपि स्वरूपसंसर्गः संसर्गी च द्वयमपि न स्यादित्यवधेयम्। दूषणान्तरञ्च स्वयमेव वक्ष्यति कालवदिति। यथा हि कालस्य कालतो देशतो वाऽवधिर्नास्ति इह देशे काल इति इह काले काल इति तथा घटोऽपि स्यात् क्वचिदपि देशेऽभावाभावात् विभुः। क्वचिदपि काले अभावाभावात् नित्यः स्यात् कालवदित्यर्थः। संसर्गान्योन्याभावावित्यत्र अन्योन्याभावपदं दृष्टान्तार्थम्। यद् वा घटवदन्योन्याभावस्य न घटवान् प्रतियोगीति सर्वोऽपि देशः घटवान् स्यादित्यर्थः। यथा तादात्म्यसंसर्गयोरुच्छेदः तथा घटादेरपि प्रतियोगित्वे घटादिस्वरूपमुच्छिद्येत। तादात्म्यवत् संसर्गवच्चेति सर्वद्वैताभावेऽस्माकमिष्टसिद्धिरित्याशयेनाह— **यद्यदेव प्रतियोगिवाच्यमिति**। यदि तादात्म्यसंसर्गयोः तादात्म्यान्तरं संसर्गान्तरञ्च निषिध्यते तदा प्रथमयोरक्षतिरित्याशयेन शङ्कते—यद् यदिति। अविशिष्टोपाधिना एकीकृत्य तस्येत्येकवचनप्रयोगः। संसर्गमिति सम्बन्धमित्यर्थः। तादात्म्यस्यापि सम्बन्धत्वात्। **तदक्षतमिति**। तादात्म्यसंसर्गयोरनिषेधे संसर्ग एव निरवधिः स्यादिति दूषणमक्षतम्। यद् वा-संसर्गस्वरूपमक्षतस्यादित्यर्थः। **शेषेति**। अनवस्थाभिया शेषस्य स्वरूपनिषेधे तत्पूर्वोऽपिस्वरूपेणैव निषेध्यः शेषस्य संसर्गस्याभावादित्येवं[१] तत्पूर्वपूर्वः [२]संसर्गो न स्यादिति संसर्गमात्रं लुप्तं स्यादित्यर्थः।

अथ संसृष्टो घटो यत्र निषिध्यते तत्र[3] संसर्गाभावः तथा च घटसंसर्गनिषेधान्तरीयको घटनिषेधः एवं तादात्म्याभावेऽपि बोध्यमिति चेत्तर्हि संसृष्टघटस्य स्वरूपं न स्यादित्युक्तत्वात्। तथापि घटस्वरूपं सदेवेति चेत् सत्यम्। परन्तु निरवधिस्यादित्युक्तम्।

---

१. प्रथमयो वक्ष्यति व इति ख पुस्तके।

१. तत्रेति रहितः पाठः क ख पुस्तके। २. न निषेध्य स्वरूपत्वं क ख पुस्तके।

३. सहत्वम् क ख पुस्तके।

**न प्रतियोग्यनुयोगिनोस्तथात्वं विरोधः, किन्तु सह भावाभावः, अतस्तन्मात्रं न स्यात्, न तु तन्मात्रमेव न स्यादिति चेन्न, अनुयोगिनि प्रतियोग्यापत्तेः। तथा प्रमाभावात् कथं तदास्तामिति चेन्न, तथा प्रमाभावमूलकस्य विरोधस्य सहानवस्थानस्य नियमनभङ्गात् प्रतियोग्यनुयोगिभावादन्यः कस्तयोर्विरोधः स्यात्।**

---

ननु घटतदभावौ द्वावप्यनुभवसिद्धाविति नाभावः तत्स्वरूपनिराकरणसमर्थः तर्हि अभावदेशेऽपि स्यादिति चेन्न। योग्यानुपलब्धिबाधादित्याशयेन शङ्कते—**न प्रतियोग्यनुयोगिनोस्तथात्वमिति**। प्रतियोग्यभावयोर्विरोधो न निषेध्य निषेधस्वरूपत्वं सहभावाभावो विरोधः सहभावः सहसत्वम् एकदेशकाले एकावच्छेदेन स्थितत्वं तदभाव एव विरोधः। तन्मात्रं=सहभावाभावमात्रं नतु तन्मात्रं प्रतियोगिमात्रं, तथाचान्यत्र सतारूपेण प्रतियोगित्वम् अन्यत्र चासतारूपेण अभावज्ञानविषयत्वमित्यप्रयोजकत्वं प्रतियोगिनोऽभावप्रतियोगित्वे स्वरूपोच्छेद इति भावः। **अनुयोगिनीति**। सहावस्थानाभावात्मकविरोधस्य एवमप्यभङ्गात्।

अथाभावे प्रतियोगिनो वृत्तिश्चेत्तदा सहावस्थानापत्तिः अभावेऽभावात् तदापत्तेः। न चाभावेनाभावः तथासति प्रतियोगिमत्तापत्तेरिति चेत्। सत्यम्। किन्तु अभावोनाभावाधिकरण इति न्यायटीकानुसारेणेदं दूषणम्।

अथाभावे प्रतियोगिनो घटादे[1]र्वृत्तिर्न सम्भवति संयोगसमवाययोर्भावधर्मत्वात्। यदि च विरूद्धावित्येव तदाश्रयत्वमापाद्यते, तदा रूपरसावविरूद्धाविति रूपरसयोरपि परस्पराश्रयाश्रयिभावापत्तिरिति मिश्राः। तन्न। संयोगसमावाययो[2]रप्यापाद्यत्वात् तयोः भावधर्मत्वमेव न स्यात् अप्रयोजकत्वात् आपादने आपाद्यभावस्य[3] अनुगुणत्वात्। रूपरसयोरपि परस्परानधिकरणत्वे प्रतियोग्यनुयोगिनोरिव परस्परविरुद्धस्वभावतायाः स्वीकारादेवेति न किञ्चिदेतत्। **तथाप्रमाभावमूलकस्येति**[4]। यथाहि अभाववति प्रतियोगिप्रमाविरहः स (त्व) हा[5]नवस्थानरूपविरोधे मूलं तथा अनुयोगिनि प्रतियोगिप्रमाविरहोऽपि प्रतियोग्यनुयोगिभावात्मकविरोधमूलक एव, सहानवस्थाननियमलक्षणस्य तत्राकिञ्चित्करत्वात्। तस्मिन् सत्यपि तत्प्रमाप्रसङ्गेन तन्नियमभङ्गात्। नहि यस्मिन्[6]सति यदापद्यते तदभावे तन्नियामकमिति भावः। प्रमाखाण्डनिके प्रमाभावेन तदभावसाधनं न युक्तमिति च बोध्यम्। अथ सहानवस्थानलक्षणविरोधस्य अनुयोगिवृत्तावसत्त्वेऽपि प्रतियोग्यनुयोगिभावोऽपरो विरोधः स्वीकार्य इति कुतः सह तद्वत्तया प्रमीयमाणत्वाभावरूपस्य विरोधस्य सम्भवात्। प्रतियोग्यनुयोगि-

---

१. घटादि। २. रप्यायाप्रत्वात्। ३. अपाद्याभावस्य। ४. तथाप्रमातारमूलकस्य।
५. सत्वानवस्थान। ६. यस्मिन् प्रतिपदापद्यते।

**तथा न प्रमीयमाणत्वमेव स इति चेन्न, अतिप्रसङ्गात्। नियमेनेति चेन्न,**

भावेऽस्य [1]तथात्वेऽपि एतदेव मूलमित्याशयेनाह—तथा न प्रमीयमाणत्वमिति। अतथा प्रमीयमाणत्वमित्यर्थः। सहाप्रमीयमाणत्वं विरोधः किं वानियमेनेति। आद्ये अतिप्रसङ्गात् रूपस्पर्शयोः पवने सहाप्रमीयमाणयोः घटेऽपि विरोधः स्यात्। द्वितीयेऽप्याह—व्यक्त्योरिति। नियमस्य अनुगतरूपनिष्ठत्वात् व्यक्त्यो[2]र्व्यावृत्तत्वात् नियमेन तथात्वं नास्तीति व्यक्त्योः विरोधो न स्यादित्यर्थ इति विद्यासागरः। तदाशयस्तु अनुभूतिस्वरूपेण आख्यातः—

यथा अग्नौ सत्येव धूम इति नियमग्रहणं सामान्योपाधावेव सम्भवति नैकस्यां व्यक्तौ व्यतिरेकाभावात्, रासभादेरपि[3] पूर्वक्षणे सत्त्वेन अन्वयसन्देहात्। तथाभावाभावयोरपि सामान्योपाधावेव सहाप्रमीयमाणत्वनियम ग्राह्य इति व्यक्तिस्वरूपेण अविरोधप्रसङ्ग इत्यर्थः।

तदुभयमप्यशुद्धम्। सामान्यपुरस्कारेण व्यक्त्योरपि व्याप्तिग्रहात्। नहि धूमत्ववह्नित्वयोरेव व्याप्तिः द्वयोर्व्यधिकरणत्वात् किन्तु धूमसामान्यं वह्निसामान्यव्याप्यम्। कोऽर्थः अप्रविष्टमहानसीयत्वादिति[4] विशेषो धूमो धूमत्वेन व्याप्यो नतु महानसीयधूमत्वेन, नवा वह्निरपि महानसीयवह्नित्वेन किन्तु वह्नित्वेन। तथाच यद्यपि विशेषयोर्नानुगमः शक्यते [5]ग्रहीतुं पर्वतीयवह्निमहानसधूमयोः सहानवस्थानात् तथापि वह्निसामान्यधूमसामान्ययोर्न विरुद्धत्वं, नहि धूमवति वह्निर्नेति कस्यापि प्रतीतिः। यथाहि महानसीयधूमवति पर्वतीयवह्निर्नेत्यस्ति तथा इत्येव निष्कर्षः। तथा च इहापि घटमात्रेण सह घटाभावस्य प्रतियोगितावच्छेदकघटत्वानुयोगितावच्छेदक घटाभावत्वपुरस्कारेण यत्र घटाभावः तद्देशे घटो नेत्येवं शक्यते एव ग्रहीतुम्।

अपि च अभावप्रतियोगिनोः सहावस्थाननियमवद् आधाराधेय[6]भावोऽपि नास्तीति वक्तव्यम्, अन्यथा प्रतियोगिनोऽनुयोगिवृत्तितापत्तेरिति ब्रुवाणस्य खाण्डनिकस्य पक्षे न सहाप्रमीयमाणत्वरूपस्य विरोधस्य [8]स्वीकारोऽपि दूषितः स्यात्। मास्तु सहप्रमीयमाणत्वम्, आधाराधेयभावस्तु स्यात् यदि प्रतियोग्यनुयोगिभावात्मकोऽपि विरोधो न स्यादिति हि तस्य मतं, तस्मात् तथा प्रमीयमाणत्वंमाधाराधेयभावेन अप्रमीयमाणत्वं विरोधो नतु प्रतियोग्यनुयोगिभावः कश्चित् विरोधः तन्निर्वाच्यस्य आवश्यकेन प्रमाणभावेनैवोपपत्तेरित्येव फक्किकार्थः।

---

१. भावेऽस्य सोरोप्येत इति क पुस्तके। २. व्यक्तौ आवृत्तत्वात्। ३. रासत्तादेः। ४. महानसीयत्वादिति विशेषः। ५. गृहीतुम्। ६. आधारोऽयं भावः ७. सहाप्रमीय मानत्व। ८. स्वीकारेऽपि।

**व्यक्त्योरविरोधापत्तेः । तथा न प्रमातुमनौपाधिको योग्यतेति चेत् ; सैव मेयगता योग्यता अनुयोगि प्रतियोगित्वादन्या का समर्थिता स्यात् ।**

---

मिश्रास्तु साहित्येन आधाराधेयभावेन चाप्रमीयमाणत्वमेव विरोधो नतु प्रतियोग्यनुयोगिभाव इति शङ्कार्थं इत्याहुः । परन्तु प्रतियोग्यनुयोगिभावादन्य इत्यनेनाक्षिप्तस्यान्यस्य[1] निर्वचने ग्रन्थस्य सामञ्जस्यं प्रतीयते ………। इदन्तु चिन्त्यं किं प्रतियोग्यनुयोगिभावो[2] नास्ति किं वा सन्नपि न विरोधः । उभयमप्ययुक्तं प्रमाणसिद्धत्वात् । अतएव तथा प्रमाणाभावेन अन्यथासिद्धयितुं न शक्यं त्रयाणामेव प्रामाणिकत्वादिति । तथापीदमुपेक्ष्य निर्वचनखण्डनेनैव निर्वचनयति **अतिप्रसङ्गादिति** । स्पष्टार्थम् । अथ यज्जातीययोर्न कदाचित् तथा प्रतीयमानत्वं रूपस्पर्शयोस्तु घटादौ तथा प्रमीयमाणत्वात् न विरोधः तत्राह—**व्यक्त्योरिति** । घटवृत्तिरूपव्यक्तिपटवृत्तिस्पर्शयोर्विरोधो न स्यात् । ओमित्युक्तौ च तयोराधाराधेयभावानुपलब्धिविरोधः ।

मिश्रास्तु ययोर्जात्युपग्रहो नास्ति यथा नित्यत्वानित्यत्वयोः भावत्वाभावत्वयोर्विरोधो न स्यात् । यद्वा नियमो यदि देशगर्भः तदा देशव्यक्त्योः यदि कालगर्भः तदा कालव्यक्त्योरतीतत्वानागतत्वयोर्विरोधो न स्यात् देशे देशस्य काले च कालस्याभावात् । जात्यवच्छेदेन विरोधोपसंहारे जात्योरेव विरोधः स्यात् नतु व्यक्त्योरिति वार्थ इति फक्किकार्थः इत्याहुः । तच्चिन्त्यम् । यद्गतधर्मावच्छेदेन तथा प्रमीयमाणत्वं नास्तीत्युक्तौ न प्रथमो दोषः देशे देशस्य काले च कालस्य स्वरूपसम्बन्धेन सत्त्वादन्यथा स देशः कालो वा मिथ्यैव स्यात् क्वचिदपि कदाचिदप्यभावात् । आकाशादिकमपि देशकालवृत्ति एव अन्यथा मिथ्यात्वापत्तेः प्रतीतिश्च । नापि तृतीयः जात्यवच्छेदेन तथाप्रमीयमाणत्वाभावस्य व्यक्तावपि सत्त्वादिति । नियमाघटितमेव विरोधलक्षणं निर्वक्ति—

**तथा न प्रमातुमिति** । तथा आधाराधेयभावेन प्रमातुं या योग्यता तस्याः स्वाभाविको विरहः । योग्यता फलोपधानम् । [3]पटे महारजनरूपस्य सहकारिणो विरहेण रक्तप्रमाविरहोऽस्ति नतु आधाराधेयभावाभावात्मको विरोध इत्यत उक्तम्—**अनौपाधिकीति** । पटे या रक्तप्रमायोग्यता सा सहकारिणा महारजनेन प्रयुक्ता अतः तद्विरहप्रयुक्त एव तत्र प्रमाविरहो, नतु घटाभावे घटप्रमाविरहः केनापि सहकारिविरहेण प्रयुज्यते कदाचिदपि तत्र घटप्रमानुदयात् किन्तु घटाभावत्वप्रयुक्त एवेति तयोर्विरोध इत्यर्थः ।

नन्वेतादृशफलोपधानाभाव आत्मन्यपीति तत्रातिव्याप्तेः प्रमात्मनोराधाराधेयभावाभावात्मकविरोधानङ्गीकारात् इत्यत आह—**सैवमेयगतेति** । आत्मनि या प्रमायोग्यता सा सहकारियोग्यतारूपा, न फलोपधानात्मिका सदैवं प्रमापत्तेः ।

---

१. असम्बद्धानि अक्षराणि । २. भावो वास्ति । ३. महारजत ।

**स्वरूपमेवेति चेन्न, मिथः सम्भेदाभ्युपगन्त्राऽपि तयोः स्वरूपोपगमात् । तथाभूतं स्वरूपमिति चेन्न, तस्यैव निर्वाच्यतापत्तेः ।**

**कश्च गोत्वाश्वत्वाभ्यां भावाभावयोरेवंविधविरोधे विशेषः स्यात् ? सत्याञ्च तयोः साहित्यप्रमा-ां प्रकारभेदेन व्यवस्थापना किमिति कार्या प्रमयैवाप्रमानुपगमादिति ।**

---

अत एव औपाधिकयास्तस्या सहकारियोग्यतायाः विरहो न विरोधः तस्य चेतनत्वेन कदाचित् प्रमाधारत्वस्यापि प्रमितेः सैव योग्यता केत्यन्वयः । घटवत्त्वप्रमाफलोपधानं घटवत्येव[1] । अनुयोगित्वप्रतियोगित्वयोः निषेधनिषेध्यभावादन्या का समर्थिता स्यात् तार्किकेण शक्तिरूपयोग्यतानङ्गीकारात् । अभावे प्रतियोग्याधारत्वप्रमायोग्यता, या निषेध्या सा प्रमैव फलतीत्यर्थः । ततश्च तद्विरहोऽपि विरोधरूपः प्रतियोग्यनुयोगिभाव एव अनुयोगिनोऽन्यत्र घटवति घटप्रमासत्त्वात् घटाभावे चानुयोगिनि तद्विरहो घटाभावत्वमेव पर्यवस्यतीति निष्कर्षः । यद्वा न प्रमातुं योग्यतेत्यस्य प्रमाभावजननयोग्यतेत्यर्थः ।

यद्यपि प्रतियोगिमत्त्वप्रमाभावो[2]ऽभावेऽत्यन्ताभावात्मको नित्य एवं तथापि अभावस्य विरोधिप्रमाजननसामर्थ्याधीनं तस्य प्रतियोगिप्रमाविरह[3]त्वमित्यर्थः ।

यद्वा न प्रमातुमित्यत्र नञ् अविरोधिनि, तेन विरोधिप्रमां जनयितुं योग्यतेत्यर्थः ! विरोधित्वञ्च प्रतियोगिप्रमायाः तथाच प्रतियोग्यनाधारत्वप्रमेत्यर्थ इति बोध्यम् ।

ननु भावाभावयोः स्वरूपमेव विरोधो नतु प्रतियोग्यनुयोगिभाव इति शङ्कते **स्वरूपमेवेति मिथ इति** । परस्परतादात्म्यमभ्युपगच्छता[4]बौद्धेन प्रभाकरेण च तयोः स्वरूपोपगमात् कथमन्यथा अभावोभाव एवेति ब्रूयात् । तथाभूतम् = आधाराधेयभावेन प्रमातुमित्यर्थः । तर्हि तदेव प्रमातुमयोग्यत्वमेवेत्यर्थः ।

यद्वा भावाभावयोः स्वरूपं यद्यपि विरुद्धं तथापि परस्परारूढत्वस्य विरोधी धर्मो न स्यात् । तथाभूतं स्वरूपमिति । यादृशस्वरूपज्ञानं प्रतियोग्याश्रयत्वज्ञानविरोधीत्यर्थः । **तस्यैवेति** । तदुक्तस्य प्रतियोग्यनुयोगिभावातिरिक्तस्य निर्वक्तुमशक्यत्वादित्यर्थः । एवं भवन्निरुक्तौ विरोधो गोत्वाश्वत्वयोरपि वर्तमानोऽपि यदि भावाभावयोरविलक्षणः तदा भावाभावयोः प्रतियोग्यनुयोगिभावो न गोत्वाश्वत्वयोरिति न स्यात् तथा चातिव्याप्त्यापत्तिरितिभावः ।

---

१. घटत्वच्चेव इति क पुस्तके । २. प्रमाभावो भावेत्यन्ताभावात्मकः ।

३. विरहवत्वमिति ख पुष्तके । नअविरोधिनि इति क ख पुस्तके ।

४. बोधेन ।

**अथ घटादिविशेषितयोस्तयोर्निषेधौ तौ, सविशेषणौ च विधिनिषेधौ न कथञ्चिद्विशेषणमनुपसङ्क्रम्य स्यातामिति ब्रूषे तदपि न, तर्हि विशिष्टस्य निषेधो विशेषणस्यापि भवतीति संसर्गान्योन्यनिषेधोऽपि संसर्गनिषेधः स्यादेवेति पुनः स प्रसङ्गो वज्रलेपायते।**

**अन्योन्याप्रतियोगिकः संसर्गप्रतिषेधस्तथा विवक्षितः, एवमन्योन्यनिषेधोऽपि संसर्गाप्रतियोगित्वेन निर्वाच्य इति चेन्न, एवं हि अन्योन्यसंसर्गाभावः संसर्गान्योन्याभावश्चापरा कोटिः स्यात्।**

---

यद्वा निरुक्तविरोधो यदि गोत्वाश्वत्वसाधारण एव भावाभावयोरपि तदा भावाभावरूपत्वमेव न स्यात्, सत्याञ्चेत्यादिना सहानवस्थाननियम, सहाप्रमीयमाणत्व, तथा प्रमातुमयोग्यत्वमितिलक्षणत्रये साधारणं दोषमाह-प्रकारभेदेनेति। अवच्छेदभेदेन व्यवस्था न कार्या संयोगतदभावादीनां प्रमादर्शनादेव तथात्वेन[१] प्रमाभ्युपगमेन तद्घटितस्य विरोधत्रयस्याभावात्। तस्मात् प्रतियोग्यनुयोगिभावात्मको विरोधो भावाभावयोरेव तथा च भावश्चेत् तर्हि प्रतियोगिव्यवहारोच्छेदः अभावश्चेत्[२] तर्हि कालवन्निरवधित्वापात इति।

असन्नेवभावोऽनाद्यविद्यया भासते इत्येव ज्यायो नतु वैपरीत्यमद्वैतश्रुतिविरोधादिति।

संसर्गतादात्म्ययोरविशेषितयोर्निषेधे स्यादेष दोषस्तर्हि विशेषितयोरेव निषेधोऽस्त्विवति प्रागुक्तदोषोद्धाराय शङ्कते—**अथ घटादिविशेषितयोरिति**। स प्रसङ्गः=स्मृतित्वसंसर्गान्योन्याभावात्मकं स्मृतिसंसर्गाभावमादाय स्मृतावपि अनुभूतित्वप्रसङ्गः।

यद्यपि विशिष्टस्य निषेधो नावश्यं विशेषणस्य दण्डवति भूतले दण्डी नास्तीति बुद्धौ व्यभिचारात्, तथाच स्मृतित्वसंसर्गवति स्मरणे स्मृतित्वसंसर्गान्योन्याभावः संसर्गाभावो न भवति किन्त्वन्योन्याभाव एव, तथापि स्मृतित्वसंसर्गान्योन्याभाव इत्युक्ते नान्योन्याभावमात्रं प्रतीयते अपितु संसर्गप्रतियोगिक एवेति भवति च सोऽपि निषेधश्च संसर्गप्रतियोगिकश्चेति संसर्गाभावस्य [१]कोटिर्नास्तीति भावः। तथासंसर्गाभावत्वेन[२]। **एवमिति**। अन्योन्याभावसंसर्गाभावेऽतिव्याप्तिवारणाय। अव्याप्तया लक्षणद्वयं दूषयति—**एवमिति**। तादात्म्यमिह नास्तीति प्रतीयमानः। अन्योन्यसंसर्गाभावो नान्योन्याभावो नवा संसर्गाभावोऽन्योन्यप्रतियोगिकत्वादित्यपरा कोटिः स्यात् नचैवमिष्यते, तथाच तस्य संसर्गाभावत्वमिच्छतो भवतः तत्र संसर्गाभावलक्षणाव्याप्तिः। अन्योन्याभावसंसर्गाभाव-

---

२. अप्रमामुपगमेन इति क ख पुस्तके पाठः। ३, भावश्चेत् इति।

१. कोशोनारित। २. तथात्वेन इति पाठो मूलाननुसारी।

**किञ्च एवं सति संसर्गाभावोऽन्योन्याभावो यो न भवति, स संसर्गाभावतया विवक्षित इत्युक्तं स्यात्। तथा च संसर्गविशेषणं व्यर्थमिति संसर्गाभावमर्थमधिकमाकाङ्क्षता त्वयाऽन्वर्थः संसर्गाभावशब्दोऽपि हारितः स्यात् [ यतोऽन्योन्याभावो यो न भवत्यभावः स संसर्गाभाव इत्युक्तम् ]।**

---

भिन्नाभावाङ्गीकारे च अभावविभाजकोपाधेर्न्यूनता। एवं संसर्गान्योन्याभावोऽपि घटो न संसर्ग इति प्रतीतिविषयः संसर्गप्रतियोगिकतया नान्योन्याभावः, संसर्गाभावत्वन्तु तस्य त्वयाऽपि नेष्यत इति तृतीयकोट्यापत्तौ अभावविभागव्याघातः, तद्भयादन्योन्याभावत्वाङ्गीकारे अन्योन्याभाव लक्षणाव्याप्तिः। न च[1] साक्षात् संसर्गप्रतियोगिकः संसर्गाभावः एवमन्योन्याभावोऽपि निर्वाच्य इति वाच्यम्। तादात्म्यं हि न स्वरूपातिरिक्तं तथा च संसर्गतादात्म्यनिषेधोऽपि साक्षात् संसर्गनिषेध एव, एवमन्योन्याभावसंसर्गस्यापि अन्योन्याभावानतिरिक्तत्वात् संसर्गनिषेधोऽपि साक्षादन्योन्याभावनिषेध इति नोक्तदोषोद्धारः।

अथान्योन्या[2]प्रतियोगिकः संसर्गनिषेधः तथा विवक्षितः इति [3]वाक्यस्य अन्योन्याभावादन्यः संसर्गनिषेधः संसर्गाभाव इति पर्यवसितोऽर्थं इति चेदत्रापि संसर्गपदवैयर्थ्यमित्याह—

**किञ्चेति**। त्यक्तव्यं तर्हि संसर्गपदमित्युक्तेऽपि न निस्तारः इत्याह— **संसर्गाभावमर्थमधिकमिति**। अन्योन्याभावादधिकं, संसर्गाभावशब्दस्याभिधेयमाकाङ्क्षता शब्दोऽपि=संसर्गाभावपदमपि, हारितम् अप्रस्तुत[4]भवदर्थे का प्रत्याशा।

ननु रूढमेव अन्योन्याभावभिन्नेऽभावे संसर्गाभावपदमस्तीति चेन्न। संसर्गस्याभावः संसर्गाभाव इत्यनुगतार्थमिति यौगिकमित्यर्थः। यौगिकोऽस्तु संसर्गाभावशब्दः तस्य चार्थोऽन्योन्याभावे संसर्गप्रतियोगिकेऽप्यस्तीति तद्व्यावृत्तये अन्योन्याभावभिन्नत्वं प्रयोगोपाधिरुच्चितः। यदि च लक्षणे संसर्गपदं न प्रवेश्यं तदान्योन्याभावभिन्नाभावत्वे एव रुढिरस्तु संसर्गप्रतियोगिकत्वस्याप्रतीतिरित्येव स्यात्, अधिकं धनमाकाङ्क्षता[5] अनुगतं=वंशानुगतं धनं नाशितमिति परिहासः। यौगिकत्वं हि संसर्गाभावशब्दस्य सर्वनैयायिकसम्मतम्। तच्च धनमिव नानाप्रयत्नेन रक्ष्यते[6] तदपि न शक्यं रक्षितुमिति महत् कौशलमिति। अनया वाचोभङ्गया= अन्योन्याप्रतियोगिक इति विशेषणगिरेत्यर्थः। कथमन्योन्याभावेऽन्योन्याभावभेद

---

१. स च। २. अन्योन्यप्रतियोगिकः इति क पुस्तके।
३. इति वाच्यस्था। ४. अस्तुगवदर्थे प्रत्याशा।
५. आकाङ्क्षाताम् अनुगतवशानुगतधनम्। ६. रक्षते।

इतीमां शङ्कामपनुदति—नहीति । यथा हि [1]संसर्गाभावेऽन्योन्याभावतादात्म्यानुपलम्भाद् अन्योन्याभावः सिध्यति तथा अन्योन्याभावेऽपि अन्योन्याभावतादात्म्यं नोपलभ्यते । तादात्म्योपलम्भो हि अन्योन्याभावोऽन्योन्याभावो भवतीत्येवमाकारः, स च न सम्भवति रूपभेदाभावेन सामानाधिकरण्याभावात् । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् ।

[2]तदभावात् = रूपभेदाभावात् । तदभावाद् अन्योन्याभावबोधकशब्दस्य सामानाधिकरण्याभावादेव न तथा अन्योन्याभावोऽन्योन्याभावो नेति संसर्गभावलक्षणमन्योन्याभावेऽप्रसक्तमित्यर्थः ।

ननु शब्दयोः सामानाधिकरण्यं मास्तु पौनरुक्त्यापत्तेः अन्योन्याभावे अन्योन्याभावत्वप्रमायां कथमशक्यत्वमिति ।[3]

यदि तु अन्योन्याभाव इति प्रथमज्ञाने यो विषयः स एव द्वितीयज्ञानेऽपि इति धारावाहिकमिव द्वितीयं ज्ञानं तादात्म्यं न विषयीकरोतीत्युच्यते तदालं सामानाधिकरण्याभावोपरक्तत्वेन ।

किञ्च धारावाहिकं नानाक्षणोपरक्तमेकं विशेष्यं गृह्णाति अन्यथा ग्रहीतग्राहित्वेन अप्रामाण्यापत्तेरिति चेत् । सत्यम् । परन्तु प्रथमज्ञानस्य यो विषयः स एव द्वितीयज्ञानस्येति प्रथमज्ञाने यथा अन्योन्याभावाभेदो न विषयः तथा द्वितीयेऽपीति[4], अन्यथा प्रथमेनैवाभेदसिद्धेः द्वितीयवैयर्थ्यम् । अथ प्रथमं ज्ञानं धर्मिण्यन्योन्याभावत्वं विषयीकरोति द्वितीयन्तु अन्योन्याभावत्वेन उपस्थिते अन्योन्याभावत्वमितिविशेष इति चेन्न । तथापि धर्मिणो धर्मस्य च विषयस्य न नानात्वमिति नेयं प्रमा द्वयोरप्येकविषयत्वादित्याशयेनाह—न शक्यं प्रमातुमिति । द्वितीयं ज्ञानमप्रमागृहीतग्राहित्वादिति भावः ।

अथ द्वितीयज्ञानमन्योन्याभावविशेष्यकमन्योन्याभावविशेषणकं च तादात्म्यसम्बन्धेनात्र अन्योन्याभावः, प्रकार इत्युच्यते तथा सत्यन्योन्याभावोऽन्योन्याभाव इति प्रयोगोऽपि स्यात् नतु तथा प्रयुज्यते घटो घट इतिवत् तेनेदमवगम्यते नात्र तादात्म्येन अन्योन्याभावः प्रकार एतदभिप्रायेणैव सामानाधिकरण्याभावदर्शनम् । सामानाधिकरण्यम् हि अर्थभेदव्यापकं तच्च नास्तीति व्यापकाभावादर्थभेदाभावः ।

किञ्च तव प्रमा तादात्म्यविषयिकास्तीति त्वया परो बोधनीयः स च न शक्यते तद्बोधकस्यान्योन्याभावोऽन्योन्याभाव इत्यात्मकस्य सामानाधिकरण्यव्याप्यस्याभावादितिभावः ।

---

१. संसर्गाभावोऽन्योन्याभावे तादात्म्यानुपलक्ष्या अन्योन्याभावः ।

२. क पुस्तके पाठस्त्रुटितः । ३. कथमशक्यत्वमिति । ४. द्वितीयोऽपीति ।

**किञ्च अनयाऽपि वाचा अन्योन्याभावनिषेधोऽभिधीयमानोऽन्योन्याभावेऽपि प्रसज्यते, न ह्यन्योन्याभावोऽन्योन्याभावो भवतीति शक्यं प्रमातुम्, समानाधिःकरण्यं हि प्रकारभेदे सति भवति, यथा नीलमुत्पलमित्यादि। ततस्तदभावादेव न तथेत्यतिप्रसङ्ग।**

---

अथ प्रथमोन्यान्याभावशब्देन रूपान्तरविशिष्टमन्योन्याभावमुद्दिश्य द्वितीयान्योन्याभावशब्देन अन्योन्याभावत्वं तद्गतं प्रतिपाद्यमिति नाशक्यं परस्यै प्रतिपादनमित्याशङ्क्याह—**अन्यश्च अन्योन्याभावेष्वेव निष्ठन्नेकः प्रकार इति।** प्रथम एवकारोऽन्ययोगव्यवच्छेदार्थः, द्वितीयो[१]ऽयोगव्यवच्छेदार्थः। उद्देश्यवच्छेदको धर्मो विधेयतावच्छेदकव्याप्यः तदिह स धर्मोऽन्योन्याभावत्वव्याप्यः अन्योन्याभावत्वादन्यो नास्ति। यश्च वर्तते अभावत्वाख्यः स न व्याप्यः, यश्च वर्तते इदन्त्वादिर्विशेषोऽन्योन्याभावत्वव्याप्यः तदवच्छिन्नेऽन्योन्याभावत्वविधौ व्यक्त्यन्तरे संसर्गाभावत्वाव्याप्तिरित्यन्योन्याभावेषु यावत्सु वर्तमानोऽभ्युपेयः स नास्तीत्यर्थः।

अयमाशयः स धर्मोऽन्योन्याभावत्वं वा, धर्मान्तरं वा। नाद्यः। स्वविशिष्टे स्ववृत्तेरसम्भवात् अंशत आत्माश्रयापत्तेः ज्ञानस्य विधानायोगाच्च। द्वितीयेन तत् किं यावदभाववृत्ति, अभावविशेषवृत्ति वा। **आद्ये-अतिप्रसङ्गादिति।** संसर्गाभावस्यापि तादात्म्याभावत्वप्रसङ्गात् इत्यर्थः। अन्त्ये व्यक्तिविशेषेषु वर्तमानमित्यर्थः। तच्च यदि अन्योन्याभावात्मके व्यक्तिविशेषे वर्तमानमिदन्त्वं तदा तदिदन्त्वाश्रये अन्योन्याभावत्वे विधीयमाने विशिष्टान्योन्याभावानां संसर्गाभावत्वप्रसङ्ग इत्यर्थः। तथा च अन्ययोगव्यवच्छेदोऽप्यादरणीयः इति भावः।

मिश्रास्तु "न शक्यं प्रमातुमित्यस्य उद्देश्यविधेयभावस्य प्रकारभेदनियतत्वादिति हेतुः सामानाधिकरण्यं हीत्यस्य च प्रवृत्तिनिमित्ताभेदात् न सामानाधिकरण्यमत एव च नोद्देश्यविधेयभावोऽपीति भावः।"**तदभावादेव न तथेति।** प्रकारभेदाभावान्न सामानाधिकरण्यम् उद्देश्यविधेयभावोवेत्यर्थः। अभावत्वेऽतिप्रसङ्गात्" =अभावोऽन्योन्याभाव इत्यभिधाने संसर्गाभावस्यापि अन्योन्याभावत्वापत्तिः।

यद्यपि नीलमुत्पलमित्यभिधाने न नीलमात्रस्य उत्पलत्वं प्रसज्यते, तथाप्युत्पलपदव्यपेक्षं प्रति तथा प्रयोगे प्रसङ्ग एव।[२]

---

१. योगव्यवच्छेदार्थः।

२. उत्पलपदे शक्तिमजानतो बालस्य उत्पलपदस्य शक्तिरिति व्युत्पित्सोः नीलमुत्पलमित्यभिधाने नीलमात्रस्य उत्पलत्वप्रसङ्ग इत्यर्थः। अप्रसङ्ग इति ख पुस्तके।

**अन्यश्चान्योन्याभावेष्वेव तिष्ठन्नेव कः प्रमेयो यद्वति तथा कथ्येत ? अभावमात्रे त्वतिप्रसङ्गात् । व्यक्तिविशेषे च शेषेष्वन्योन्याभावेषु संसर्गाभावत्वापत्तेः ।**

**एतच्च सर्वत्र तदन्यत्वेन व्यवच्छिद्यमाने द्रष्टव्यम् । तथा हि—**

**नातत्तन्मन्यसे तावन्न तत्तदपि मंस्यसे ।**
**सामानाधिकरण्यं हि रूपभेदमपेक्षते ॥२८॥**

---

ननु गुणान्योन्याभावत्वादिना उद्दिश्य अन्योन्याभावत्वं विधीयतामित्यत आह–**विशेष इति** । तथा च द्रव्यान्योन्याभावोऽन्योन्याभावो न स्यादिति व्याचक्षते ।

तदसत् उद्देश्यविधेयभावस्य शाब्दवोध एव अपेक्षितत्वेन । एतच्च सर्वत्रेति । तथा च संसर्गाभावो यो न भवत्यभावः, सोऽन्योन्याभाव इत्यत्राप्ययं दोषः प्रत्यक्षे तदभावेऽपि अक्षतेः । नापि सामानाधिकरण्यं प्रत्यक्षहेतुरित्युक्तम् ।

नन्वेकस्यान्योन्याभावत्वे प्रमितेऽन्यस्य संसर्गाभावत्वं कुतः । नहि घटो द्रव्यमित्युक्ते पटस्य द्रव्यत्वाभावोऽवगम्यत इति चेन्न द्रव्यत्वस्य घटलक्षणत्वेनोक्तौ एवमेव स्यात् नतु व्युत्पित्सुं प्रति सहि द्रव्यत्वं क्व वर्तते इत्यजानन् घटे द्रव्यत्वबुद्धचा न पटे द्रव्यत्वाभावबोधमर्हति संसर्गाभावस्य व्यवच्छेदको धर्मः क इति जिज्ञासमानं प्रति यदि गुणान्योन्याभावभिन्नत्वं धर्मः स इत्युच्यते तदा द्रव्यान्योन्याभावे संसर्गाभावलक्षणमतिव्यापकमेव स्यात् इति ।

**ताद्रूप्येणेति** । यद्रूपान्तरं तत् किं लक्ष्यालक्ष्यवृत्ति यथान्योन्याभावेभावत्वं, किं वा लक्ष्यविशेषवृत्ति यथा गुणान्योन्याभावत्वं, यद्वा वस्तुमात्रवृत्ति, पक्षत्रयेऽपि अतिव्याप्तिः स्यात् तद्रूपवत्त्वादित्यर्थः । तथाहि परामर्शजन्यं ज्ञानमनुमितिरित्यत्र पारमेश्वरपरामर्शजन्यजन्यत्वात् शाब्दबोधेऽतिव्याप्तिः तद्वारणाय शाब्दान्यत्वे विशेषणे दत्तेऽपि शाब्देऽतिव्याप्तिः, तथाहि शब्दः शब्द एवेति शाब्दान्यत्वाभावात् तत्र नातिव्याप्तिरितिभवदभिमानः । स न सम्भवति तथाहि– कः शाब्दत्वाश्रयः न तत्प्रत्यक्षादिकं तद् हि शाब्दत्वाश्रयो[1] नेति त्वयापि स्वीक्रियते शाब्दोऽपि शाब्दत्वाश्रय इति द्वयं मंस्यसे शाब्दे शाब्दत्वस्य बोद्धुमशक्यत्वात् । कुतोऽशक्यत्वमित्याशङ्कयाह–**सामानाधिकरण्यं हीति** । घटो घट इति प्रतीतिवच्छाब्दः शाब्द इत्यप्रतीतिः । अथ रूपान्तरेण शब्दजन्यज्ञानत्वेन शाब्दबोधमुद्दिश्य स शाब्द इति यद्युच्येत तदा शब्दप्रत्यक्षेऽपि शाब्दत्वापत्तिः । अथेदं ज्ञानं शाब्दमित्युच्यते तदापि शाब्दलक्षणमिदं शाब्दत्वं तच्च लक्ष्यतावच्छेदकव्याप्यमेव भवतीति । अत्र शाब्दत्वं नास्ति इति त्वन्मतं तच्च नान्यत्रापि ताद्रूप्यसत्त्वात् तथा चातिव्याप्तिः स्यात् तवेति भावः । तेन लक्ष्यविशेषमात्रवृत्तिधर्माभिधाने दोषः । अथ गुणत्वं तथावाच्यं तथाप्यतिव्याप्तमिदं तथा च शाब्दे शाब्दत्वस्य प्रमातुमशक्यत्वात् शाब्दभिन्नत्वमेवास्तीत्यतिव्याप्तिर्दुर्वारा ।

---

१. तद्धि शाब्दत्वात् कुतोऽशक्यत्वमित्येवं क पुस्तके पाठः । ख पुस्तकपाठस्तु मया अनुसृतः ।

**रूपान्तरेण निर्दिश्य तच्चेत्तदभिधीयते ।**
**ताद्रूप्येण तथाऽपि स्यात्सैव सव्यभिचारिता ।।२९।।**

**अपि च अन्योन्याभावस्य संसर्गाभावोऽप्येवं व्यवच्छिन्नः स्यात्, तस्यापि अन्योन्यप्रतियोगिकत्वात् ।**

**अथान्योन्याभावस्य संसर्गाभावो नाम अधिको नोपेयत एव, यमादाय तथा स्यादिति चेन्न, एवं तर्ह्यन्योन्याभावस्य अन्योन्याभावोऽपि नाधिकोऽभ्युपगन्तव्यः स्यादिति अन्योन्याप्रतियोगित्वेन व्यवच्छेदोऽपि संसर्गाभावस्य त्वदभिमतस्य कथं स्यात्, व्यवच्छेदस्य निषेधार्थत्वात् ।**

---

यद्यपि शाब्दे शाब्दत्वस्य अशक्यप्रमात्वात् शाब्दभेदसत्वादतिव्याप्तिरित्येव वक्तुमुचितं नत्वन्यत्र शाब्दभेदसाधनं, तथापि शाब्दः शाब्दभिन्नो गुणत्वादिति शाब्दभेदसाधनायेदमुक्तम् । अथवा यथा शाब्द इतरस्माद्भिन्नः तदात्मनाऽप्रतीयमानत्वात् तदिति तवाप्यभिमतं तथा शाब्दादपीति मंस्यसे सामानाधिकरण्यविरहात्, तत्र हेतुमाह—**रूपभेदाभावादिति** । रूपान्तरमुद्देश्यतावच्छेदकाभिन्नोपादेयतावच्छेदकाद् भिन्नं तावतैव प्रवृत्तिनिमित्तभेदसिद्धेः । तच्च लक्ष्यतावच्छेदकं यदि स्यात् तदा स्यादुक्तदोष इत्यन्यदेव वाच्यम् । तद् यदि अखण्डोपाधिरूपं जातिरहिते, जातिमति तज्जातिरूपमिति चेत्तर्हि लक्ष्यतावच्छेदकप्रकारेण भेदानवगमात् तेन[1] रूपेणातिव्याप्तिः । यथा गुणान्योन्याभावस्य अन्योन्याभावात्मनोऽन्यान्योभावभेदविरहेऽपि अन्योन्याभावत्वेन भेदासिद्धेः संसर्गाभावलक्षणमतिव्याप्तं, तथा शाब्दबोधविशेषे तेन रूपेण भेदवत्यतिव्याप्तिविरहेऽपि शाब्दत्वरूपेण शाब्दबोधमात्रे भेदसिद्धावतिव्याप्तिर्दुर्वारा: इत्याशयः संसर्गाभावलक्षणे अतिव्याप्तिमभिधाय अव्याप्तिमाह—

**अपि च अन्योन्याभावस्येति** । घटे घटान्योन्याभावसंसर्गो नास्तीति प्रतीयमानस्य घटान्योन्याभावो नास्तीत्येवमाकारप्रतीतिविषयस्य चेत्यर्थः । **अन्योन्यप्रतियोगिकत्वादिति** । यद्यपि अन्योन्याभाव एवात्र प्रतियोगी तथापि अन्योन्यविशिष्टस्याभावस्य प्रतियोगिकत्वे विशेषणस्यान्योन्यस्यापि प्रवेश इत्यर्थः । प्रतियोगिपदस्य निरूपकत्वाद् वा । भट्टमते अन्योन्यतदभावयोरेकत्वाद् वा । नामाधिक इति । प्रतियोगितावच्छेदकाद् घटत्वादेवेत्यर्थः । तथा च क्वाव्याप्तिरितिभावः । **कथं स्यादिति** । अन्योन्याप्रतियोगिकत्वेन विशेषणे नहि संसर्गाभावोऽन्योन्याभावात् व्यव[2]च्छिद्यते । सचान्योन्याभावान्योन्याभावः सचेदतिरिक्तो नास्ति कथं व्यवच्छेदः । अथ संसर्गाभावस्वरूपमेवान्योन्याभावव्यवच्छेद इति चेदन्योन्याभावसंसर्गाभावव्य-

---

१. नेन रूपे नातिव्याप्तिः ।

२. अन्योन्याभावाद्यवच्छियते ।

**अथ माभूदधिकोऽसौ, स्वरूपमेव तु तथेष्यत इति तदादायैव व्यवहार एष निर्दोष इति चेत्, तर्ह्यन्योन्याभावसंसर्गव्यतिरेकेऽपि तुल्यमेतत् ।**

**अपि च 'अन्योन्यप्रतियोगिको न भवत्यभावो यः स संसर्गाभावः, इति वदता त्वया अन्योन्यप्रतियोगिकेऽभावे निषिध्यमाने अन्योन्यात्मकोऽसौ अभावोऽभ्युपगतः स्यात्, द्वयोर्निषेधयोः सुन्दोपसुन्दतया अन्योन्यस्यैव स्थैर्यापत्तेः । तथा**

---

वहारहेतौ प्रतियोगितावच्छेदके अव्याप्तितादवस्थ्यमिति । अथ घटत्वादिस्वरूपमन्योन्याप्रतियोगिकमेव, निष्प्रतियोगिकत्वादिति नाव्याप्तिरिति चेत्तत्राह—**अन्योन्याभावसंसर्गाव्यतिरेकेऽपीति** । यदि स्वरूपेणैव अभावव्यवहारो निर्दोषस्तदा घटादेरन्योन्याभावः संसर्गाभावश्च न स्यात् विनाऽपि ताभ्यां तद्व्यवहारसिद्धेरित्यर्थः ।

अथाभावत्वप्रमात्वबोधेन तयोः सिद्धिस्तदा तुल्यमन्योन्याभावस्य संसर्गाभावेऽपि अभावत्वं प्रमासत्वात् ।

यद्यपि [१]अभावाभावस्य अतिरिक्तत्वे अनवस्था स्यादिति न तत् स्वीकारार्हः तर्हि घटात्यन्ताभावात्यन्ताभावात्यन्ताभावः क्लृप्तेनैव घटात्यन्ताभावेन अभावत्वप्रकारकप्रकारकप्रमोत्पत्तेरतो नानवस्था । द्वितीयस्त्वभावोऽधिकः स्यादेवेति । यदि चैवमेवेति ब्रूयात् तदा अन्योन्याभावसंसर्गाभावस्य अन्योन्यप्रतियोगिकस्य सिद्धेर्दुर्वारत्वात् तत्राव्याप्तिः दुर्वारैव । घटान्योन्याभावसंसर्गाभावस्य घटान्योन्याभावानतिरिक्तत्वादनवस्थाभयाभावात् । संसर्गाभावान्योन्याभावयोरभेदे अन्योभावस्यापि लक्ष्यान्तर्भावे तद्वारणार्थं विशेषणं [१]व्यर्थविशेषणमेवेत्याशयेनाह—**अपि चान्योन्यप्रतियोगिक** इति ।

सुन्दोपसुन्दतया यथाहि द्वौ [२]आदिदैत्यौ सुन्दोपसुन्दनामानौ परस्परं जघ्नतुः तथा द्वयोर्निषेधयोः परस्परविरोधितया अन्योन्यत्वमेव स्थिरीकृतम् ।

पूर्वं हि सुन्दोपसुन्दनामानौ दैत्यौ राजानौ[३] नर्मदातीरे [४]दुरभिसन्धिविशेषेण तपश्चरन्तौ दृष्ट्वा तयोस्तपो विघाताय काचिद् वाराङ्गना ब्रह्मणा प्रेषिता, तां दृष्ट्वा द्वावपि अतिकामुकौ ममेयं ममेयमिति कामसंतप्तौ परस्परं जघ्नतुरिति पुराणवार्ता । संसर्गाभावलक्षणेऽन्योन्यप्रतियोगिकोऽभावोऽन्योन्याभाव इत्यनूद्य तस्यान्योन्यप्रतियोगिकस्याभावस्य न भवतीति निषेधादन्योन्यप्रतियोगिकाभावाभावप्रतीतिः अन्यो[५]न्यात्मिकाप्रतीतित्यर्थः । द्वौ नञौ प्रकृतयर्थं गमयत इति न्यायेन

---

१. अन्योन्याभावाद्यवच्छिद्यते ।

१. व्यर्थविशेषणं व्यर्थविशेषणमेव २. द्वावादित्यौ । ३. दैत्यो राजानौ । ४. तुरवरभिमन्धि

५. अन्योन्यमिता इति क ख पुस्तके ।

**च सत्यन्योन्यस्मिन् निर्विशेषणे जगदेव प्रविष्टमिति संसर्गाभावत्वेन विवक्षितस्य जगदात्मतायां सिद्धचन्त्यामन्योन्याभावात्मताऽपि स्यादिति व्यर्थो विशेषणप्रयासो ह्रासायेति, सविशेषणेऽप्यविशेषणवत्प्रसङ्ग इति महत् कौतुकम् ।**

---

योऽभावोऽन्योन्यस्य सोऽन्योन्याभावः तस्याभावो न भवति सोऽन्योन्याभावः[१] । अत्र हि अन्योन्यस्याभाव इति एको नञर्थः न अत्रैव चापरः भवतीत्यस्य हि अभावो भवतीत्यर्थः । तथा च अन्योन्यस्याभावाभावोऽन्योन्यमेव घटाभावाभावो हि घट इति सर्वसिद्धमितिभावः। अत्र च घटादिविशेषितान्योन्याभावव्यतिरिक्तोभावः संसर्गाभाव इत्युक्ते पटान्योन्याभावेऽतिव्याप्त्यापत्तेः, निर्विशेषणान्योन्यमात्रप्रतियोगिकाभाव-निषेधो वाच्यः । एवञ्च निर्विशेषणान्योन्यस्मिन् विश्वमेव प्रविष्टमिति विश्वतद-भावव्यतिरेकेण कोट्यन्तरभूतोऽनात्मपदार्थो न सम्भवति। नहि अन्योन्यान्योन्याभ्या-मतिरिक्तं कोटयन्तर्गतमस्ति ततः फलितमाह **संसर्गाभावत्वेन विवक्षितस्येति** । जगद् आत्मा, स्वरूपं यस्य, अन्योन्यस्य तत्तदात्मा अन्योन्याभावात्मताऽपि स्यादिति । तथा चान्योन्याभावभिन्नत्वस्य विशेषणस्य व्यावर्त्याप्रसिद्धिरित्यर्थः ।

**व्यर्थेति** । तथा च विशेषणं न हातुं शक्यते अव्याप्तेः नप्युपादातुमव्यावर्त-कत्वादिति कष्टां दशामापन्नोसीत्युपहसति ।

अत्र मिश्राः—अन्योन्यप्रतियोगिको न भवत्यभावो य इति वाक्यस्य अन्योन्य-प्रतियोगिकत्वं धर्मो यस्मिन् अभावे नास्ति स संसर्गाभाव इत्येवार्थ इति भवति अन्योन्याभावव्यवच्छेदस्तस्य अन्योन्यप्रतियोगिकत्वादित्यप्रतीयमानार्थखण्डनमपि महत्कौतुकमित्याहुः । तन्न । घटः पटो नेत्यत्रेव संसर्गाभावाप्रतीतेः । अनुयोगिवा-चिपदे सप्तम्या अपि अपेक्षणम्[१] । न च तथाप्यन्योन्यप्रतियोगिकभिन्न इत्येव प्रतीति-रिति निषेधनिषेधो नास्तीति वाच्यम् । तथा सति अन्योन्यसंसर्गाभावाव्याप्तेः । यदि च अन्योन्यप्रतियोगिक इत्यस्य अन्योन्याभाव इत्यर्थः तथा च अन्योन्याभावो यो न भवति अन्यन्ताभावः संसर्गाभाव इत्यर्थः तदाप्यन्योन्याभावान्योन्याभाववानित्यर्थे निषेधद्वयघटनापत्तिः । [२]नचानयोः परस्परविरहपरत्वमितिचेत् तर्हि प्रतियोग्य-नुयोगिभावानुपपत्तेः ।

"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता[३]" इति कुसुमाञ्जलिविरोधः तस्मात् तादात्म्यावच्छिन्नं स्वरूपमेव अन्योन्याभाव इति सिद्धम् । द्वयोरेवाभाव-योर्भावाभावत्वमित्यतिव्याप्तिः सम्यक् चोक्तमन्योन्य इति ।

---

१. सोऽन्योन्या इति ।

१. अपेक्षिणम् । २. नानयोः । ३.......... ।

**ननु 'घटाभावो न भवति स्तम्भः' इत्युक्ते किं स्तम्भो घटात्मा विहितो भवति, तत्कस्य हेतोः ? तदा हि तथा स्यात्, यदि घटस्तदभावश्चेत्येव जगत् स्यात्, यदा तु स्तम्भादिरप्यपरा कोटिरस्ति तदा कथं तथा स्यादित्युक्तप्रसङ्गानवकाश इति ।**

**मैवम्, यथा घटतदभावाभ्यामन्या वस्त्रादिकमप्यस्ति कोटिस्तथाऽन्योन्यतदभावाभ्यां नान्या कोटिः सम्भवति, निर्विशेषणान्योन्यमध्ये जगत एव प्रवेशात् ।**

**तदात्मनोऽपि निषिध्यमानत्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात् । न हि 'घटः पटात्मे'त्यनेन पटस्वरूपादन्यस्तदात्मा विहितः स्यात् ।**

---

**ननु घटाभावो नेति** । यथाहि स्तम्भः घटाभावभेदाश्रयतया प्रतीयमानो घटाभावविरहरूपः, अभावाभावस्यातिरिक्तरूपत्वाभावात्, तथापि न घटात्मा प्रत्यक्षविरोधात् । तथा संसर्गाभावो नान्योन्याभाव इत्येव प्रतीयमानस्य संसर्गस्यापि नान्योन्यात्मत्वं किन्त्वन्योन्याभावानात्मत्वमेव प्रतीयते इति शङ्कार्थः ।

**मैवमिति** । यत्र प्रतियोगितदभावाभ्यामपरापि तृतीयाकोटिरस्ति तत्र तथाऽस्तु इतरकोटिकोटिप्रमाणेन विरोधात् नत्विह तथास्तीत्याशयः सिद्धान्तिनः ।

**अन्योन्यतदभावाभ्यामिति** ।[1] घटान्योन्याभावघटाभ्यामप्यपरापि कोटिः [2]घटाद्यात्मिका यद्यपि अस्ति तथापि संसर्गाभावलक्षणघटकान्योन्याभावो न घटादिप्रतियोगिघटितः पटान्योन्याभावादावतिव्याप्तेः किन्तु निर्विशेषणान्योन्याभावघटित इति भावः । **जगत एवेति** । तथाच जगत् प्रतियोगिकोटिरेव न तु प्रतियोग्यभावाभ्यां भिन्ना तृतीया । ततोऽपि किमित्यत आह—**तदात्मनोऽपीति** । तथाच संसर्गाभावस्य अन्योन्याभावत्वनिषेधे अन्योन्यत्वमेव परिशिष्यत इति भावः । तद् जगत् आत्मास्वरूपं यस्यान्योन्यस्य तस्यापि निषिद्धमानत्वे अन्योन्याभावपदेन अन्योन्याभावे बोध्यमाने पुनरन्योन्याभावो नेत्यत्र तस्यान्योन्यनिषेधस्यापि निषेधे आत्मास्वरूपं यस्य अन्योन्यस्य तत्र निषेधात्मके तस्मिन् तन्निषेधात्मके तस्मिन्नन्योन्यस्वरूपे जगत् प्रवेशात् जगदात्मत्वं संसर्गाभावस्य स्यादित्यर्थः ।

यद् वा तदात्मनोऽपि = अन्योन्यात्मनोऽपि जगतो, निषिद्धयमानत्वे[3] तन्निषेधात्मके तस्यान्योन्यात्मकजगतो निषेधरूपान्योन्याभावनिषेधात्मके तदात्मनि संसर्गाभावरूपे[4] जगत्प्रवेशात् संसर्गाभावस्य जगत्स्वरूपत्वं स्यादित्यर्थ इति विद्यासागरव्याख्यानं हेयम् । जगदात्मत्वं स्यादित्यध्याहारे अपिशब्दवैयर्थ्ययोगापातादिति । वस्तुतस्तु ननु नान्योन्यप्रतियोगिकोऽभावो निषिध्यते किन्तु

---

१. अन्योन्याभावाभ्यामिति । २. घटाद्यात्मिका इति ख पुस्तके ।

३. निषिध्यभावे । ४. संसर्गाभावरूप जगत् ।

**यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चिदिष्यते, स घटपटाद्यधिकरणतया निषद्धचते, तदा संसर्गाभाव एव स स्यात्। तस्मात् निर्विशेषणतादात्म्यान्तर्भूतं जगदिति कोटचन्तराभाव इति।**

**अपि च एवं तर्हि घटे निषिद्धचमाने घटाभावो विधीयते घटाभावे च**

---

संसर्गाभावेऽन्योन्याभावतादात्म्यं निषिध्यते तथा चान्योन्याभावतादाम्याभाववान् अभावः, संसर्गभावः, अन्योन्याभावात्मको यो न संसर्गाभाव इत्याशङ्कयाह— **तदात्मनोऽपीति**। अन्योन्याभावात्मको नेत्यस्यापि अन्योन्याभावभिन्न इत्यर्थः। तस्यापि अन्योन्याभावात्माऽभावो नेति, नचासम्बन्धे अन्योऽभावात्मेत्यर्थः पर्यवस्यति ततः संसर्गाभावोऽन्योन्यात्मेति फलितार्थः। अन्योन्याभावाभावस्य अन्योन्यपर्यवसितत्वात् तथाऽत्मनोऽन्योन्याभावात्मनो निषिद्धचमानत्वेऽन्योन्याभावो नेत्येव बोध्यमानत्वेन तन्निषेधात्मके तदात्मनि अन्योन्याभावात्मके तदात्मनि अन्योन्यात्मके जगतः प्रवेशात्। दृष्टान्तमाह—नहि [1]घटपटात्मेत्युक्ते विहितोऽज्ञातो ज्ञापितो भवति तस्मादन्योन्याभावाभावात्मा अन्योन्यात्मकः संसर्गाभावः। सचात्मा सर्वाभिन्नः संसर्गाभावः इत्युक्ते अन्योन्याभावात्मताऽपि दुर्वारा तस्यापि सर्वान्तःपातित्वादित्येव फक्किकार्थः।

इदन्तु चिन्त्यते यदि सर्वमन्योन्यपदार्थस्तदा तस्याभावोऽप्रसिद्धः कथं द्वितीया कोटिता स्यात्। नैवं, अस्ति तावदन्योन्याभावः संसर्गाभावश्चेति विभागः। अन्योन्याभावश्च यद्यपि अन्योन्यमध्यनिविष्टः तथापि अन्योन्याभावप्रतीतिविषयोऽपीति भावः।

ननु अन्योन्यस्य न जगतस्वरूपत्वं किन्तु जगद्धर्मत्वं तेन संसर्गाभावे जगद्धर्मतैव स्यात् न जगदात्मतेत्याशङ्कयाह—**न हीति**। घटः पृथिव्यात्मक इत्युक्ते न घटस्य स्वरूपादतिरिक्तं पृथिव्यात्मकत्वं प्रतीयते एवं जगदात्मत्वमपि जगत्स्वरूपमित्यर्थः इति विद्यासागराः।

ननु अन्योन्याभाव[2] इत्यत्र नान्योन्यप्रतियोगि किन्त्वन्योन्यतादात्म्यमेवेति कथमन्योन्यरूपता आपाद्यते इतिचेन्न। स्वरूपातिरिक्तस्य तादात्म्यस्याभावात्। **यदि च तादात्म्यमिति**। तथा च तादात्म्यनिषेधनिषेधः तादात्म्यमेवेति संसर्गाभावस्य विश्वरूपता न सिध्यतीतिभावः। **संसर्गाभावः स्यादिति**। अन्योन्यप्रतियोगिकत्वाभावादितिभावः। अत्रैव दूषणान्तरमाह—

**अपिचैवमिति**। एवमिति अन्योन्याभावस्य तादात्म्यप्रतियोगित्व इत्यर्थः भाव इति संज्ञामात्रम्। अन्योन्यप्रतियोगिकोऽभावोऽतो न[3] तन्निषेधोऽन्योन्यः

---

१. घटपटात्मा। २. अन्योभाव। ३. अन्यो न तन्निषेध इति क पुस्तके।

**निषिद्ध्यमाने घट इत्यपि न स्यात्, तृतीयस्य विद्यमानत्वात्। भवन् वा घटाभावः स्तम्भो न भवती'त्यत्रापि घटाभावत्वाविशेषाद् विशेषान्तरानिर्वचनाच्च घटः**

---

किन्तु तादात्म्यप्रतियोगिकोऽभाव इत्याशङ्क्याह—**तदात्मनोऽपि निषिध्यमानत्व इति।** घटः पटात्मा न भवतीत्येवमाकारेण अन्योन्याभावस्य प्रतीयमानत्वे इत्यक्षरार्थः। तदभावश्चेदन्योन्याभावः तदा सुन्दोपसुन्दोपन्यासः। नतु‥‥‥ संसर्गाभाव इत्युक्ते तच्छब्दस्य जगत्परत्वे संसर्गाभावो जगदात्म एव स्यात्। ननु नीलतदात्मनिषेधो नान्योन्याभावः किन्तु तादात्म्यनिषेध इत्याशङ्क्याह—**यदि चेति** आचक्षते।

तदसत्। [1]तादात्म्याप्रतियोगिकोऽभाव इति शङ्कयैव गतार्थत्वात् तदात्मनोऽपीति ग्रन्थेन चेत्तस्यानिरासः। एवं पुनरियं शङ्कानोदेतीत्यपव्याख्यानमेव तदिति।

घटो नास्तीत्यवगम्यमानस्य अभावस्य निषेधे घटरूपतामभ्युपगच्छता त्वया स्तम्भस्य[2] कुम्भस्य कुम्भाभाव निषेधे कुम्भात्मत्वमभ्युपेयमित्यापादयति—**अपि चेति** विद्यासागरः। तत्तु न युक्तं तथासति तद् ग्रन्थानन्तर्यमेव स्यादिति[3]‥‥। **तृतीयस्य विद्यमानत्वादिति।** घटः घटान्योन्याभावात्मकघटतादात्म्याभावः तदपरस्य घटतादात्म्यस्य विद्यमानत्वादित्यर्थः। घटतादात्म्या[4]भावाभावोऽपि घट एव तथा च घटस्तदन्योन्याभावश्चेति कोटिद्वयमेवेति शङ्कते—**भवन् वेति।**[5] **घटाभावत्वाविशेषादिति।** यथाहि घटान्योन्याभावस्य=घटतादात्म्याभावस्याभावो घट इति स्वीक्रियते द्वितीयकोट्यभावोपपत्तये तथा स्तम्भोऽपि घटाभावादन्यो घट एव स्यात् घटाभावनिषेधात् तथा घटाभावान्योन्याभावस्यापि घटाभावत्वाविशेषादिति घटान्योन्याभावत्वेनैव घटाभावाभावस्य घटत्वं नतु घटाभावान्योन्याभावत्वेन घटे वर्तमानस्याभावत्वस्य विशेषाभावात्। नहि भावाभावत्वं घटान्योन्याभावत्वं घटे वर्तमानं घटाभावाभावत्वं न घटत्वसाधकाद् घटान्योन्याभाववर्तिनोऽभावत्वाद् विलक्षणमित्यर्थः।

[6]ननु अभावाभावत्वं न भावत्वसाधकं स्तम्भकुम्भस्य प्रत्यक्षबाधात्। किन्तु अभावसंसर्गाभावत्वं तच्च अभावान्योन्याभावे नास्ति विद्यते चान्योन्याभावः संसर्गाभाव इत्याशङ्क्य परिहरति‥‥‥यदि अपसिद्धान्तभयाद् घटाभावनिषेधो

---

१. तादात्म्यप्रतियोगिकः इति ख पुस्तके।

२. कुम्भस्य क ख पुस्तके। ३. सुदभावाववोधापत्तेः इति क ख पुस्तके।

४. तादात्म्याभावो भावोपि इति क ख पुस्तके।

५. भवंत्विति। ६. ननु भावाभावत्वं भावत्वसाधकम् इति क ख पुस्तके।

**स्तम्भात्मेत्येवोक्तं स्यादिति त्वत्प्रसङ्गस्त्वयि निपतेत्। संसर्गान्योन्याभाववैचित्र्यमादाय हि स परिहार्यः, स एव च नाद्यापि व्यवतिष्ठते।**

**अत एव 'प्रतीतिबलादन्यदेव वैधर्म्यमनयोरुपेयमित्यपि निरस्तम्, प्रतिषेधप्रतिषेद्धव्यविरोधे हि प्रकारविशेषव्यवस्थानिरुक्त्यशक्तेरविशेषेण एकनिषेधे अन्यविधिध्रौव्यं भवदन्योन्याभावनिषेधेऽप्यन्योन्यविधये स्यात्।**

---

घट एवेष्यते तत्राह—**इत्यत्रापीति**[१]। यत्तादात्म्यं यदभावस्य निषिध्यते तदात्मत्वमभावप्रतियोगिनो यथा घटाभावो घटो नेत्येवं घटाभावे घटतादात्म्ये निषिध्यमाने तत्प्रतियोगिनो घटत्वं तथात्रापि स्तम्भः कुम्भः स्यात् घटाभावत्वाविशेषात्।

ननु घटाभावः स्तम्भो न भवतीत्यत्र घटाभावे स्तम्भसंसर्गो निषिध्यते घटाभावो घटो नेत्यत्र तु तादात्म्यमित्याशङ्क्याह—**विशेषान्तरानिर्वचनादिति**। तादात्म्याभावात् संसर्गाभावस्य विशेषान्तरानिर्वचनादिति त्वदीयः प्रसङ्गो [२]मां प्रत्युक्तोऽपि त्वय्येव निपतेदिति। एतदेव स्फुटयति —संसर्गेत्यादिना।

तच्चिन्त्यम्। स्तम्भस्य घटाभावत्वनिषेधेऽपि न घटत्वविधिः भूतलादौ घटाभावनिषेधे घटविधिरिति व्यवस्थादर्शनात् एतन्नीरजे जानीतः कोऽपि विशेष इति आशङ्क्याह—**विशेषान्तरस्येति**। तथा चान्योन्याभावत्वनिषेधेऽन्योन्यात्मविधौ स्तम्भस्य घटाभावत्वनिषेधे घटात्मत्वं स्यादिति त्वया आपादितः प्रसङ्गः तत्रैवानर्थः स्यात्। भूतले घटाभावो नेति घटाभावस्य संसर्गो निषिध्यते तेन तत्र घटविधिः स्यात् तु स्तम्भः कुम्भाभावोनेत्यत्र तु स्तम्भस्य कुम्भाभावतादात्म्यनिषेध इति नोक्तदोष इत्याशङ्क्य परिहारः—**स एवेति**। अयमेव हि तयोर्भेदपरीक्षाकाल इति कथमसिद्धेनासिद्धं साध्यत इति भावः विद्यासागरः। तदपि चिन्त्यमेव।

ननु संसर्गाभावान्योन्याभावौ विधर्माणौ विलक्षणप्रतीतिगोचरत्वाद् घटपटवदित्यनुमित्या पूर्वनिरस्तविशेषाद् विशेषान्तरमाश्रयणीयं[३] स्यादित्याशङ्क्याह— [४]**अतएवेति**। भेदासिद्धेरेव विलक्षणप्रतीतिविषयत्वासिद्धेरित्याशय इति विद्यासागरः वस्तुतस्तु [५]प्रागुक्तदोषादेवेत्यर्थः।

ननु अभावत्वस्याविशेषेऽपि अन्योन्याभावाभावत्वम् अभावान्योन्याभावत्वं चास्त्येव विशेष इत्याशङ्क्याह विशेषान्तरस्य चेति। अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति वदतो न्यायाचार्यस्य[६] त्वदुक्तमिदं द्वयविशेषत्व[७] भावत्वसाधकत्वेन

---

१. तद्भेदत्वेति। नैतादृशो मूले पाठः।

२. मां प्रयुक्तः। ३. दित्याशङ्क्षाह। ४. ततएव।

५. अर्थवैचित्र्यनिरसनादेव प्रतीतिवैचित्र्यासिद्धेरित्यर्थः।

६. न्यायाचार्य उदयनः। ७. त्वदुक्तमिदं द्वयविशेषत्वेन भावत्वसाधकत्वेन नाभिमत।

**मम चानिर्वचनीयतैव प्रतीतिव्यवहारव्यवस्थापर्यनुयोगबाणवारणाय वज्र-वारवाणायमाना विजयते। मम त्वेवं दर्शनम्—प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणं भवदपि जगत्तथा सत्त्वोपगमेऽपि बाध्यमानत्वादनिर्वचनीयमिति।**

---

नाभिमतमिति भावः। तमेव स्पष्टयति प्रतिषेध····· रुच्यते। अभावप्रतियोगिनोः सहावस्थानलक्षणादिरूपविरोधनिरूपणाशक्तिः भावाभावरूपयोरविरोधो वाच्यः ततश्च प्रतियोग्यविशेषितान्योन्याभावस्य संसर्गाभावनिषेधेऽन्योन्यमेव स्यादिति।

अयमाशयः अन्योन्याभावसंसर्गाभावयोर्वैधर्म्यं वदताऽपि त्वया अन्योन्याभावो न भवति संसर्गाभावः तद्वैधर्म्यादिति वाच्यं ततश्च अन्योन्याभावनिषेधात्मसंसर्गाभावो [१]भवन् अन्योन्यात्मक एव स्यादिति। कथं नायमश्वो नेहाश्व इति प्रतीतिव्यवहारौ भेदाभावव्यवहारे समर्थनीयावित्यत्राह—**मम चेति**। भेदज्ञानमाविद्यिकं न भेदमपेक्षते व्यवहारोऽपि भेदज्ञानमपेक्षते न भेदमिति प्रागुक्तं स्मारयति। **अनिर्वचनीयतैवेति**। प्रतीतिव्यवहारयोर्व्यवस्था कथमिति यः पर्यनुयोगः स एव बाणः तद्वारणाय वज्रोपममभेद्यं वारवाणं कवचं तद्वदाचरति इति वारवाणायमाना अनिर्वचनीयतैव विजयते इति सम्बन्धः।

अत्र नैयायिकानामनिर्वचनीयताखण्डनोद्धाराय तां निर्वक्ति ममत्वेवमिति। तथा च [२]ख्यातिविशेष विषयत्वे सति अबाध्यतानुपपत्तिरेवानिर्वचनीयता। तथाहि प्रपञ्चस्य खपुष्पसमत्वे अपरोक्षताऽनुपपत्तिः, आत्मसमत्वे[३] बाध्यतानुपपत्तिः, तथा च सद्विलक्षणत्वे सति असद्विलक्षणत्वमेवानिर्वचनीयतेति पर्यवसितम्। न च प्रपञ्चस्य सद्वैलक्षण्यं नैयायिकसम्मतं सत्त्वादेव, मम तु न तथा श्रुत्या प्रपञ्चस्य बाधात्। तर्हि असन्नेव स्यात् अन्यथा द्वैतापत्तिरिति चेत्। सत्यम् एतत्, किन्तु यादृशमसत्त्वं खपुष्पस्य तन्नास्ति, तद्धि न कदापि प्रत्यक्षं भवति इदन्तु इत्थं प्रत्यक्षेणापि विषयीक्रियते। यत्र तु अतीन्द्रियगुरुत्वादौ प्रत्यक्षं नास्ति तत्रापि गुरुत्वसाधकज्ञानगम्यत्वं खपुष्पाद् वैलक्षण्यमस्त्येव, लोकसिद्धप्रमाणविषयत्वमेव तत्। न च नैयायिकानामपीदमेव प्रपञ्चस्य सत्वमिति वाच्यम्। तेषामबाध्यमानत्वस्य स्वीकारात् इति।

इदं तु चिन्त्यते यथाहि सत्वाविशेषेऽपि किञ्चित् [४]प्रत्यक्षं तथा श्रुत्यवगतासत्वस्यापि प्रत्यक्षत्वमस्तु दर्शनस्य दुरपह्नवत्वात् न तु असद् विलक्षणत्वं श्रुतिबाधात्। खपुष्पवैलक्षण्यमस्त्येवेति चेत्। तावताऽपि नासत्वहानिरसद्विशेषत्वादेव, नहि खपुष्पशशशृङ्गयोरेकाकाराप्रतीतिर्जायते, तथा सति शब्द

---

१. त्नान्योन्यात्मकः। २. अख्याति विशेष इति ख पुस्तके।
३. आत्मसमयत्वे इति क पुस्तके। ४. प्रक्षणम्।

**अत एव प्रतीयमानत्वाद् वैचित्र्यमनयोर्घुष्यमाणमतिदूरनिरस्तम् । उक्त-प्रतियोग्यादिवैचित्र्यानुपपत्तितः प्रतीयमानस्यैव बाध्यताया एव कथनात् । तस्मात्—**

**अन्योन्याभावसंसर्गाभावभेदव्यवस्थितौ ।**
**सत्यां स्यात्तद्व्यवस्थेति स्वाश्रयं कश्चिकित्सतु ॥३०॥**

**अभाव एव यत्रेति सावधारणं वक्तव्यमिति चेन्न, एवकारेण किमधिकमभि-धीयते ? भावो निषिद्ध्यत इति चेन्न, तस्याभावपदेनैव लब्धत्वाद्, भावनिषेधोऽ-भाव इत्यनर्थान्तरमिदम् । भावसामानाधिकरण्यनिषेध एवकारार्थ इति चेन्न,**

---

विशेषान्वयव्यतिरेकौ न स्याताम् । तथाचासतोऽपि जनकत्वं तथा स्वयमुपपा-दितम् इति । तस्मादनिर्वचनीयतोक्तिरियमापातत एव बालकानां सन्तोषाय इति ।

ननु अनयोर्भेदानङ्गीकारे कथं विलक्षणप्रत्ययः इत्याशङ्क्याह—**अत एवेति** । प्रतीतिर्नापलप्यते किन्तु तस्याः [1]विषयोऽध्यस्तः तथा च सा प्रतीतिर्भ्रमः, तव देहात्मवादिनिराकरणवद् अस्माकमपि प्रपञ्चमध्यपातितदुभयप्रतीत्योर्भ्रमत्वा-ङ्गीकारः । **तस्मादिति** । अन्योन्याभावश्च संसर्गाभावश्च तयोर्भेदव्यवस्थितौ सत्यामन्योन्याभावो यो न भवति स संसर्गाभाव इति भेदव्यवस्था सिद्ध्यतीत्यात्मा-श्रयत्वम् यदि तु संसर्गेतरेतराभाववैलक्षण्यं प्रतियोगिवैलक्षण्यादित्युच्यते तदा परस्पराश्रयः अन्योन्याभावसंसर्गाभावयोर्भेदसिद्धावन्योन्यसंसर्गरूपप्रतियोगिनो-र्भेदः, सिद्ध्येत् सिद्धे च प्रतियोगिभेदे अभावयोर्भेदसिद्धिरित्ययमपि श्लोकः तत्र शक्ययोजनः । स्वाश्रयपदन्तु अन्योन्याश्रयेऽपि स्वाश्रयत्वमस्त्येवेत्याशयेन ।

स्मृतित्वसंसर्गस्य अभाव एव यस्यां बुद्धौ सा अनुभूतिरित्युक्ते स्मृतेर्नानुभूति-त्वप्रसङ्गः तत्र स्मृतित्वसंसर्गान्योन्याभावस्येव [2]संसर्गस्याप्यभवादित्याशयेना-शङ्कते—

**अभाव एवेति** । एवकारवैयर्थ्यात् तथापि अतिव्याप्तितादवस्थ्याच्च नेयमपि विवक्षायुक्तेत्याह—**एवकारेणेति** । **भाव** इति । स्मृतौ स्मृतित्वसंसर्गात्मकोऽन्योन्या-भावप्रतियोगी अस्ति इति नातिव्याप्तिरित्याशयः । तस्याभावपदेनैव स्मृतित्वसंसर्गस्य निषेधवान् स्मृतित्वसंसर्गाभाववानिति हि एक एवार्थ इत्यर्थः तथा च स्मृतित्वसंसर्गा-न्योन्याभाववति स्मृतित्वसंसर्गस्य अन्योन्याभावसत्वादतिव्याप्तिरस्त्येव । स्मृतित्व-संसर्गासमानाधिकरणः स्मृतित्वसंसर्गाभावोऽनुभूतावेव नतु स्मृतवित्याशयेन शङ्कते । **भावसामानाधिकरण्यनिषेध** इति । यत्र स्मृतित्वं संसर्गाभावोऽस्ति नतु स्मृतित्वसंसर्गं इत्युक्त्या स्मृतित्वसंसर्गाभावस्य स्मृतित्वसंसर्गसामानाधिकरण्याभावो व्युत्पत्तिवललभ्यः । यथेह घटाभावोऽस्ति नतु घट इति अन्यथा पौनरुक्त्य-

---

1. बाध्यः खपुस्तके । 2. संसर्गस्यापि भावात् इति ख पुस्तके ।

**उक्तेनैव गतार्थत्वात्। अन्योन्याभावस्य च तस्य स्मृतावपि सम्भवात्, न हि भावसामानाधिकरण्यं स्मृतिः। स्मृतौ च भावमभावं चैकत्र मन्यमानेन तस्याप्येष्ट-**

मिति। **उक्तेनैव** इति। द्वयोर्हि सामानाधिकरण्यं भवति ततश्च स्मृतित्वसंसर्गस्याभावो यत्रेत्युक्तेऽर्थतः सिद्धः स्मृतित्वसंसर्गस्य सामानाधिकरण्याभावः, तथाच अभावपदेनैव तल्लाभ इत्येवकारो व्यर्थ इत्यर्थः। अथान्योन्याभावभावयोः सामानाधिकरण्यदर्शनात् कथमर्थतः तल्लाभः। मैवम्। भेदतत्प्रतियोगिनोर्विरोधस्य पूर्वमुक्तत्वात् प्रतियोग्यनुयोगिभावो हि विरोधः इति।

यदि चार्थसिद्धस्यापि वाचकपदेनाभिधानं न पौनरुक्त्यमावहति अन्यथाऽद्वितीयपदार्थसिद्धस्य जगन्मिथ्यात्वस्य "वाचारम्भणं विकारो नामधेयमि" त्यादिना प्रतिपादनं व्यर्थं स्यादित्याशङ्क्याह—**अन्योन्याभावस्य च तस्येति**। भावसामानाधिकरण्यान्योन्याभावस्येत्यर्थः।

वस्तुतस्तु भावसामानाधिकरण्यनिषेध एवेत्यत्र निषेधपदं संसर्गाभावपरमभावमात्रपरं वा। आद्ये उक्तेनैवेति यस्मिन् ज्ञाने स्मृतित्वसंसर्गस्य भावः सत्ता नास्तीति हि तस्यार्थः। ततश्च नास्त्येव स्मृतावतिव्याप्तिरित्येवकारवैयर्थम्। द्वितीये त्वाह—**अन्योन्याभावस्य तस्येति**। भावसामानाधिकरण्याभावात्मनस्तस्याभावस्येत्यर्थः। क्वचित्तु अन्योन्याभावस्य च तस्येति पाठस्तदा स्मृतौ स्मृतित्वसंसर्गान्योन्याभावस्य भावसामानाधिकरण्यान्योन्याभावस्य च सत्त्वात्। भावसामानाधिकरणस्मृतित्वसंसर्गान्योन्याभावस्य कथं भावसामानाधिकरण्याभाव इत्याशङ्क्याह—**नहि भावसामानाधिकरण्यं स्मृतिरिति**। तथा सति भावसामानाधिकरण्यस्मृत्योरभेदापत्तौ तयोर्भेदग्राहि प्रमाणविरोधापत्तेः। स्मृतौ स्मृतित्वसामानाधिकरण्यनिषेधे सिद्धे स्मृतित्वसंसर्गभेदस्यापि स्मृतित्ववृत्तेः[1] स्मृतित्वसामानाधिकरण्यभिन्नस्मृतिवृत्तितया सामानाधिकरण्याभाववति[2] स्मररणे स्मृतित्वसंसर्गभेदस्य स्मृतित्वसंसर्गाधिकरणवृत्तित्वाभावः तदन्योन्याभावात्मकः सिद्ध इति। अभावे भावसामानाधिकरण्यनिषेधस्य अन्योन्याभावात्मनः सत्त्वादनुभूतित्वापत्तिरित्यर्थः।

यद्यपि स्मृतित्वभेदः[3] स्मृतित्वसामानाधिकरण्यान्योन्याभावात्मकनिषेधनिबन्धनश्चेदतिव्याप्तिः[4] तदा स्मृतावन्योन्याभावसाधनं व्यर्थं भेदनिष्ठसामानाधिकरण्यनिषेधस्य प्रकृतोपयोगित्वात् तस्य च स्मृताविव भेदेऽपि भेदो न भावसामानाधिकरण्यमिति प्रतीतिसिद्धेः तथापि भेदाधिकरणं चेद्

१. स्मृतिवृत्तेः इति ख पुस्तके। २. सामानाधिकरण्यभाववति इति क पुस्तके।
३. स्मृतित्वभेदे। ४. निबन्धना।

**व्यत्वात्, तयोः परस्परप्रतिक्षेपरूपत्वात् । न हि रूपरसयोरेकत्राभावेन तत्सामाना-धिकरण्याभावः स्यात् ।**

**समाविष्टयोर्भावाभावयोः परस्परप्रतिक्षेपात्मकतैव न सिद्धेति चेत्, तर्हि तथाविधयोर्भावतदभावपदसंकेतनं न रूपरसयोरिति रुचिस्ते प्रमाणम् ।**

---

भावसामानाधिकरण्याभावः तदा कुत्र तत्सामानाधिकरण्यमन्यत्र स्वस्यैवा-भावादित्याशयेन तु ग्रन्थः[१] । स्मृतौ स्मृतित्वसामानाधिकरण्यसंसर्गाभाव-स्तु विद्यमानोऽपि भेदो नास्तीति नोक्तम् । एवमन्योन्याभावमादाया-तिव्याप्तिरुक्ता अधुना भावसामानाधिकरण्यस्य संसर्गाभावविवक्षायामपि अति-व्याप्तिमाह—**स्मृतौ चेति** । तस्यापि सामानाधिकरण्याभावस्यापीत्यर्थः । हेतुमाह—**परस्परप्रतिक्षेपात्मकत्वादिति** ।[२] परस्पराभावात्मकत्वादित्यर्थः । अयं भावः भाव-सामानाधिकरण्यस्याभावो भावेन सहासामानाधिकरण्यं तद् यथा अनुभूतौ तथा स्मृतावपि अन्यथानुपपत्त्या अभ्युपेयः यतो भावाभावयोः परस्परप्रतिक्षेपात्मकतया स्मृतित्वसंसर्गाभेदे तत्र स्वीकृते स्मृतित्वसंसर्गस्तत्र नेष्टव्यः, अन्यथा परस्पर-प्रतिक्षेपकतायाः भङ्गापत्तेः । तथाच स्मृतावप्यभावस्य भावसामानाधिकरण्या-भावो दुर्वारः ।

यदि परस्परनिषेधरूपत्वादेवात्र स्मृतावपि सामानाधिकरण्यं नास्ति कथं तर्हि तदभावो निरूप्यः क्वचिदप्यदर्शनादिशङ्कयाह—**नहीति** । एकत्र वह्न्यादौ रूपरसयोरभावे तत्सामानाधिकरण्याभावो नहि=न स्यात् किन्तु स्यादेवेत्यर्थः । एकत्रासम्भवकारितत्वात् सामानाधिकरण्यनिषेधस्य, नहि वह्निगतरूपस्यैव [३]ऐका-धिकरण्यं क्वापि सम्भावितमित्यर्थः । **न [४]सिद्धेति** । तथा च यत्वयोक्तं सामाना-धिकरण्याभावोऽप्यभ्युपगन्तव्यः इति तन्न युक्तमिति भावः ।

यद् वा परस्परप्रतिक्षेपकत्वे न भावाभावत्वं प्रयोजकं किन्तु संसर्गाभावत्वं तत् प्रतियोगित्वम् अतोऽन्योन्याभाव तत्प्रतियोगिनोः परस्परप्रतिक्षेपत्वमसिद्ध-मिति । तथाविधयोः परस्परप्रतिक्षेपानात्मनोः अन्योन्याभाव[५]प्रतियोगिनोः ते रुचिः=स्वपक्षराग एव प्रमाणं नान्यदित्यर्थः ।

ननु अन्योन्याभावतत्प्रतियोगिनोः भावतदभावपदसङ्केतो नास्मदुक्तः किन्तु लोकव्यवहारसिद्धः[६] प्रथमं तु लोकव्यवहारादेव सङ्केतसिद्धिश्चेत्तर्हि तत एव पर-

---

१. इत्याशयेमनुग्रन्थम् ।

२. परस्परप्रतिक्षेपरूपत्वादिति मूलपाठः उपलभ्यते ।

३. सैकाधिकरण्यं । ४. न सिद्धयेत् इति एतादृशः पाठो मूले नास्ति ।

५. अन्योन्याभाव अप्रतियोगिनोः क ख पुस्तके । ६. प्रयस्तु ।

**रूपरसयोः परस्परप्रतिक्षेपानात्मकत्वात् तदभावे तयोः सामानाधिकरण्याभाव आस्ताम्, अत्र तु नैवमिति चेन्न, तथात्वस्य असामानाधिकरण्यप्रयोजकत्वे तद्व्यतिरेकः सामानाधिकरण्यप्रयोजकः स्यादिति रूपरसादीनामसामानाधिकरण्यापत्तिः, भावाभावयोरसामानाधिकरण्यानुपपत्तिश्च । असामानाधिकरण्यमेव यत्रेति विवक्षितमिति चेन्न, एवकारार्थदौस्थ्यतावदवस्थ्यात् ।**

**एतेन विलक्षण एवायमभावो भावसहासनानुपवेशी य एवकारसमभिव्याहारेणोच्यत इति निरस्तम्, तस्यापि वैलक्षण्यं प्रतियोग्याश्रयनिषेधतासाम्येऽपि सामानाधिकरण्यविरहादुन्नेयम्, तच्च तुल्यमभावान्तरेण ।**

प्रतिक्षेपकतापि अङ्गीकार्या घटात्यन्ताभावघटयोरिवेति भावः । संसर्गान्योन्याभावयोर्नाद्यापि सिद्धो भेद इति भावः ।

ननु सामानाधिकरणयोरपि रूपरसयोर्यदसामानाधिकरण्यं तत्र परप्रतिक्षेपानात्मत्वं प्रयोजकं भावाभावयोः परस्परप्रतिक्षेपकात्मत्वे कथमसामानाधिकरण्यम् तद्भावे=तयोरेकैकाभावे । **अत्रत्विति ।** भावाभावयोरित्यर्थः । तथा च स्मृतित्वतदन्योन्याभावयोरनुभूतावसामानाधिकरण्यमास्तां परस्परप्रतिक्षेपानात्मनोरेकस्याभावात्, स्मृतौ तु [1]स्मृतित्वतदन्योन्याभावयोः [2]परस्परप्रतिक्षेपकत्वं नास्ति[3] नवा एव एकस्याभावः, अतः परस्परप्रतिक्षेपानात्मकत्वेन सामानाधिकरण्यमत्र भविष्यतीति भावः । तथात्वस्य=परस्परप्रतिक्षेपानात्मकत्वस्येत्यर्थः । तद् व्यतिरेको=व्यापकीभूतस्य व्यतिरेकः परस्परप्रतिक्षेपात्मकमेवेत्युक्तं[4] स्यात् । प्रकृते चासामानाधिकरण्यप्रयोजकस्यैव सत्त्वेन[5] न रूपरसयोरसामानाधिकरण्यापत्तिः । तद्व्यतिरेकस्य तद्व्यतिरेकप्रयोजकत्वे भावाभावयोः परस्परप्रतिक्षेपात्मनोः सामानाधिकरण्यापत्तिः । अत्र यदि परस्परप्रतिक्षेपानान्यत्वमात्रेण रूपरसयोरसामानाधिकरण्यं तदा पृथिव्यामपि तन्न स्यादित्यपव्याख्यानम् । एकैकविरुद्धसहितस्यैव तत्प्रयोजकत्वात् । तर्हि एकैकविरह एव तत् प्रयोजकोऽस्तु अलं परस्परप्रतिक्षेपानात्मकत्वे नेति वाच्यम् । संयोगतद्भावयोरपि तदापत्तेः । सत्यपि विशेष्ये कथं तद्वारणमिति चेन्न । यस्मिन् सति यदुपलब्धिर्नेत्येव परस्परप्रतिक्षेपार्थः ।

**असामानाधिकरण्यमेवेति ।** स्मृतौ तु सामानाधिकरण्यमपीति नातिव्याप्तिरितिभावः । एवकारसमभिव्याहारो हि वैलक्षण्यस्य विद्यमानस्यैव बोधको

१. स्मृतितदन्योन्याभावयोः । २. परस्पर प्रतिक्षेपकत्वं नास्ति ।
३. तवाएकस्य । ४. प्रतिक्षेपात्मकरेरेत्कं स्या ।
५. सत्वेन रूपरसयोः इति ख पुस्तके ।

**सामानाधिकरण्याभावप्रत्ययेनेति चेन्न, प्रत्ययविशेषकस्यार्थस्य स्मृतावपि भावात्। 'अन्योन्याभावव्यतिरिक्तः स्मृतित्वाभावः' इत्युक्तौ च स्मृतिव्यतिरिक्त-पक्षोक्त एव दोषः। तदाऽऽस्तां विस्तरः।**

**नापि स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं तद्धीर्वेति पक्षः, अन्योन्या-भावेऽपि भवतामभावव्यवस्थायास्तादृशत्वेन उक्तप्रसङ्गस्य समानत्वात्।**

**अथान्यदेव किञ्चित्संसर्गाभावनिर्वचनं क्रियते। तथा हि—स्मृतित्वस्य यत्र संसर्गितया निषेधस्तत्र तदभावस्य संसर्गाभावत्वम्। यत्र तु तदात्मत्वेन, तत्र तद-भावस्य न संसर्गाभावता, किन्तु अन्योन्याभावत्वमेव। स च इह न विवक्षितः, पूर्वक एव तु संसर्गाभावो विवक्षित इति।**

---

नचेत्तदस्तीत्याह—**तस्यापीति**। तच्च वैलक्षण्यमित्यर्थः। **सामानाधिकरण्यविर-हादिति**। सामानाधिकरण्यविरह उपपादित एवेति भावः। अभावान्तरेण अन्योन्या-भावेन अत्यन्ताभावस्य सामानाधिकरण्याभावप्रत्ययोऽस्ति नान्योन्याभावस्य तस्य भावसामानाधिकरण्ये नैव प्रत्ययादित्याशङ्कते—**सामानाधिकरण्याभावप्रत्ययेनेति**। अर्थस्य सामानाधिकरण्याभावात्मनः तत्रापि सत्त्वेन तत्प्रत्ययप्रसङ्गात्।

वस्तुतस्तु सामानाधिकरण्याभावोऽप्युक्तरीत्या प्रतीयत एव। नच न्याय-कुशलैरेव प्रतीयते नतु लौकिकैरेत्येतावता कश्चिद् विशेषः। सामानाधिकरण्या-भावेत्यत्र [1]योऽभावप्रत्ययः तस्य योऽर्थः स एव अभावस्य विशेषक इत्यपि व्याचक्षते।

**इत्युक्ताविति**। अन्योन्याभावव्यतिरिक्तः स्मृतित्वाभावो यत्र ज्ञाने सा अनु-भूतिरिति लक्षणवाक्यार्थ इत्याशयः। **स्मृतिव्यतिरिक्तपक्षोक्त एव इति**। यत्किञ्चिदन्योन्याभावव्यतिरिक्तत्वं सकलान्योन्याभावव्यतिरिक्तत्वं वेत्यादि बिकल्पकवलितमित्यर्थः।

प्रभाकरसंमतमनुभूतिलक्षणं दूषयति—**नापीति**। स्मृतित्वं प्रतियोगि यस्य यत्स्वरूपं स्मृतित्वज्ञानेन ज्ञायते इति यावत्। तादृशत्वेन प्रतियोगिस्मृतिकालीनं धर्मि तज्ज्ञानं वा अभावमात्रव्यवहारहेतुत्वेनेत्यर्थः। **इहेति**। अनुभूतिलक्षणे। **पूर्वक एवेति**। स्मृतित्वस्य संसर्गितया [2]निषेधपूर्वकः संसर्गाभाव एव नान्यो-न्याभावः।

अनुभूतिः स्मृतित्वसंसर्गवती ज्ञानत्वात् स्मृतिवद् इत्यसम्भवं सम्भाव्य-संसर्गाभावत्वं[3] तदात्मत्वेन=धर्मिस्वरूपत्वेन, निषेध इत्यनुषङ्गः। इहानुभूतिलक्षणं

---

१. यो भावप्रत्ययः तस्य योऽर्थः स एव भावस्येति क ख पुस्तके।

२. निषेधपूर्वकः। ३. संसर्गाभावस्तु।

नैतद्विचारसहम् । 'संसर्गितया निषेधः' इति येयं तृतीया, सा लक्षणे वा ? सहयोगे वा ? कारकभेदे वा करणादौ ? नाद्यः, संसर्गितया लक्षितस्यैवान्योन्याभावमादाय प्रसङ्गात् । नापि द्वितीयः, तत्सहितस्यैवान्योन्यनिषेधस्य प्रत्याख्यातुमशक्यत्वात् । तृतीयस्तु न सम्भवति, अत्यन्तनिषेधस्यानुत्पत्तिधर्मकत्वात्, तस्य च प्रकृतोदाहरणत्वात् ।

प्रकारवाचिनीयं तृतीयेति चेन्न, प्रकारशब्दार्थस्याधिकस्य निर्वक्तव्यत्वापा-

---

वक्तुमिष्टं[२] तथा च अविद्यमानं न लक्षणं भवतीति न स्मृतित्वसंसर्गोऽनुभूतौ । अनुमानन्तु गृहीतग्राहित्वादुपाधिग्रस्तम् । न च तथापि धारावाहिके तत्त्वापत्तिः तत्रापि कालस्य अगृहीतस्य प्रतीतेः । **करणत्वादाविति** । आदिपदेन कर्तृत्वस्य परिग्रहः । **संसर्गितया लक्षितस्यैवेति** । स्मृतित्वं न स्मृतिरित्यन्योन्याभावमादाय स्मृतावतिव्याप्तिः नहि स्मृतित्वं संसर्गित्वेन लक्षितम् । **तत्सहितस्यैवेति** । संसर्गित्वसहितं स्मृतित्वं न स्मृतिरिति भेदप्रतीतेः । **तृतीयस्त्विति** । संसर्गिकरणकः तत्कर्तृको वा । स्मृतित्वाभावो नानुभूतेर्लक्षणमसम्भवापत्तेरित्यर्थः । अत्यन्तनिषेधस्य = अत्यन्ताभावस्य ।

ननु मास्तु अत्यन्ताभावो जन्यः ध्वंसस्तु संसर्गिताजन्यः भविष्यतीत्याशङ्क्याह—तस्य च = अत्यन्ताभावस्य च अनुभूतिलक्षणत्वात्, उदाह्रियते इत्युदाहरणं लक्षणमित्यर्थः[१] ।

अयमाशयः स्मृतित्वध्वंसस्य प्रागभावस्य चाप्रसिद्धस्य न [२]लक्षणत्वम् अत्यन्ताभावस्तु भवति लक्षणं परन्तु न जन्योऽतः सुतरां स्मृतित्वसंसर्गाजन्य इति ।

**प्रकारवाचिनीति** । शिष्यं पुत्रेण पश्यतीत्यत्रेव इत्थंभूतलक्षणे[३] तृतीया, तेन स्मृतित्वस्य संसर्गताप्रकारेण यो निषेधः स संसर्गाभावः । प्रतीयते हि घटो नेह संसृष्ट इति, तादात्म्याभावे तु नायं प्रकारः, पटसंसृष्टेऽपि घटे नायं पट इत्येव प्रतीतेरिति **अधिकस्येति** । संसर्गितां विहाय अधिकः प्रकारशब्दार्थो नास्तीत्यर्थः तथा च संसर्गिताप्रातिपदिकार्थे इयं तृतीया, तस्या अपि यदि संसर्गितैवार्थः तदा पौनरुक्त्यं प्रातिपादिकार्थस्य चाभिधाने तृतीया न स्यात्, स्याच्च प्रथमेति[४] । यदि चाधिकार्थोऽस्ति तर्हि कथ्यताम् इत्याशयः न तु तानि द्वैधं गुणप्रधानभूतानीति, शास्त्रे द्विविधं त्रिविधमित्यत्र च लोके प्रकारशब्दार्थः प्रसिद्ध एवेति तेन प्रकार-

---

२. इहानुभूतिलक्षणे वक्तुमिष्टः इति क ख पुस्तके ।

१. अनुभूतिरित्यर्थः २. नकाररहित पाठः ३. इत्यभूतलक्षणेपुरा ३।२१ इति सूत्रेण तृतीया इत्यभूतः प्रकारविशेषं प्राप्तः तस्य लक्षणो ज्ञानजनके इत्यर्थः ।

४. "प्रातिपदिकार्थ लिङ्गपरिमाणवचनमात्रे प्रथमे"ति २।३।४६ सूत्रेण ।

तात् । प्रकारः प्रकार एवेति चेन्न, अविदितलक्ष्यस्य लक्षणमनभिधाय इतरव्यवच्छेदेन तस्य दर्शयितुमशक्यत्वात् । अन्यथा सर्वत्र प्रष्टारं प्रति लक्षणानभिधानापातात् ।

'को घटः' इत्यादिपृष्टे 'घट एव घटः' इत्याद्येवोत्तरं सङ्गच्छेत । 'प्रकार एवेति पक्षो नोपपन्नः, सदोषत्वादि' ति वक्ता 'को दोषः' इत्यनुयुक्तः 'दोष एव दोषः' इत्यभिधायैव च निर्वृत्तो भवेदिति ।

## १५ स्मृतिलक्षणान्तरखण्डनम्

स्मृतित्ववत् 'स्मृतेर्लक्षणान्तरेण रहितत्वमनुभूतित्वमिति प्रत्युक्तं वेदितव्यम् ।

---

पदार्थस्य प्रकार एवेति निर्वचनं स्यादिति शङ्कते—**प्रकारः प्रकार एवेति।** सन्दिग्धः पदार्थो लक्षणतः सिद्ध्यतीत्यभ्युपगमात् सन्दिग्धाविदितप्रकारपदार्थस्य लक्षणमभिधानीयं स्यात् अन्यथा सजातीयविजातीयव्यवच्छेदकतया न[१] पदार्थः शक्यते दर्शयितुमित्याशयेनाह—**अविदितपदार्थस्येति** । अविदितं=न निश्चितं लक्षणं येन । तस्य=संदिग्धप्रकारपदार्थस्य चेत्यर्थः । प्रकारस्य लक्षणप्रश्ने तत्स्वरूपाभिधानमर्थान्तरग्रस्तमितिभावः ।

ननु लक्ष्यपदेनैव लक्ष्यज्ञानसिद्धौ व्यर्थं लक्षणाभिधानमित्याशङ्क्याह—**अन्यथेति** । स्वरूपकथनेनैव लक्षणमुक्तमिति भावोप्यन्यथेत्यनेनैव निरस्तः[२] । नवा स्वरूपकथनेनैव लक्षणकथनं तस्य लक्षणस्य स्वरूपतोऽन्यत्वात् स्वरूपस्य विनापि कथनं पूर्वमपि ज्ञातत्वात् चेति । सर्वत्र लक्षणाभिधाने[३]आपादितां रीतिमन्यत्र प्रसारयति—को घट इति प्रश्नस्य घट इत्येवोत्तरम् अन्यथा आम्रान् पृष्टः कोविदारान् आचष्टे इतिबत् प्रश्नाननुगुण्यं स्यादिति । अनिष्टान्तरमाह—प्रकारपक्ष इति । निर्वृत्ती[४]=चरितार्थः सुखी वा ।

नन्विदमनुपपन्नं नहीदं दोषलक्षणप्रश्नः किन्तु दोषस्वरूपप्रश्नः ततश्च दोषस्वरूपानभिधाने हेतुरेव नोपपादितः स्यादिति दोषस्वरूपाभिधानमावश्यकम् । दोष एवेत्यनेनैव स्वरूपमुक्तमिति चेन्न । कोऽयं दोष इति दोषविशेषस्य प्रश्ने सामान्येन उत्तरासम्भवात् इति चेर्तार्ह इहापि कः प्रकारपदार्थः इति विशेषप्रश्ने प्रकार एव प्रकार इति नोत्तरं विशेषानभिधानादिति भावः । स्मृतिलक्षणरहितत्वेति तृतीयविकल्पेऽपि स्मृतित्वातिरिक्तपक्षोक्तं दूषणमतिदिशति **स्मृतित्वेति** ।

---

१. व्यवच्छेदकतया पदार्थः शक्यते । २. निरसः । ३. लक्षणाभिधानरीतिं क ख पुस्तके । निर्वृत्तः इति पाठान्तरम् । ४. कोऽपि दोषः ।

**'गृहीतस्य हि ज्ञानं स्मृतिरि'ति च स्मृतिलक्षणे धारावाहिकज्ञानेऽतिप्रसक्तिः। सापेक्षज्ञानं स्मृतिः, सापेक्षता च स्वविषयनियमे समानविषयज्ञानापेक्षतेति चेन्न, प्रत्यभिज्ञायास्तत्ताभागस्य स्मृतित्वापत्तेः। एवमस्त्विति चेन्न, तर्हि प्रत्यभिज्ञायां स्मृत्यनुभवभागयोर्भिन्नविषयत्वव्यवस्थितौ तदभेदः केन गृह्यतेति पूर्वदोष आवर्तते।**

**संस्कारमात्रजं ज्ञानं स्मृतिरित्यपि न, सामग्रीतः सर्वसम्भवेन लक्षणस्यास-**

---

स्मृतेः स्मृतित्वमेकं लक्षणं तदपेक्षया लक्षणान्तरं गृहीतग्रहणत्वादिकं तत्रापि रहितशब्देन अभावमात्रविवक्षायामन्योन्याभावमादाय संसर्गाभावविवक्षायामपि संसर्गान्योन्याभावमादाय स्मृतावतिव्याप्तिः किञ्चित् स्मृतिलक्षणरहितत्वं स्मृत्यन्तरेऽतिव्याप्तं, यावत्स्मृतिलक्षणरहितत्वस्य अस्मादृशान्तु[1] ज्ञानाभावः, स्मृतिलक्षणान्तरानिरूपणाच्च एतल्लक्षणं दुष्टमित्याह—**गृहीतस्येति**। ज्ञानपदं संस्कारेच्छात्मादिवारणाय। धारावाहिकज्ञान इत्युपलक्षणमनुवादातिव्याप्तिरेव दोषः। भट्टमते धारावाहिनि[2] कालविशेषाणामगृहीतानामपि ग्रहात्। इदमपि लक्षणं चक्षुरादिसापेक्षे प्रमारूपेऽतिव्याप्तमिति। परिहरति[3] **सापेक्षतेति**। ज्ञानापेक्षत्वन्तु [4]लैङ्गिकज्ञानेऽपीत्यतः—**समानविषयेति**। तथापि पौरुषेयवाक्यजे[5] शाब्दज्ञानेऽतिव्याप्तिरिति **विषयनियम** इति। तत्तु वाक्यस्योपपत्त्यर्थमेव समानविषयकं ज्ञानमपेक्षते न विषयनियमाय अपौरुषेयवाक्यजज्ञानस्येव स्वत एव विषयनियमोपपत्तेः। विषयपदस्य सामान्यवाचित्वेन असम्भवः स्याद् अन्यविषयनियमे तथात्वाभावादिति स्वपदम्। स्मृतेः पूर्वानुभवजसंस्कारजन्यतया पूर्वानुभूतविषयत्वं, समुदायस्य जनकज्ञानविषयताप्रयुक्तविषयताकत्वमिति निष्कृष्टार्थः।

नन्वेवं धारावाहिन्यतिव्याप्तिः पूर्वज्ञाने विषयतानियामकादेव उत्तरज्ञानविषयतानियमोपपत्तेरितिभावः।

**तत्ताभागस्येति**[6]। तत्ताभागो विषयो यस्य तत्तांश ज्ञानस्येत्यर्थः। **भिन्नविषयत्वव्यवस्थिताविति**। यदि व्यवस्थितविषयता नाङ्गीकार्या तदा स इत्यंशेऽप्यनुभवत्वस्य अयमित्यंशे च स्मृतित्वस्यापत्तेरिति विशिष्टाभेदः। शालिकनाथोक्तं स्मृतिलक्षणमनूद्य दूषयति—**असम्भवादिति**। आत्ममनसोरपि तत्कारणत्वात्।

न किञ्चिदेकमेकस्मात्, सामग्र्याः सर्वसम्भवः इति हि न्यायः। मात्रपदानुपादाने तु प्रत्यभिज्ञायामतिव्याप्तिरिति भावः। सोऽहमिति प्रत्यभिज्ञानेऽप्यापत्तेः,

---

१. अस्मादश्यां तु ज्ञानत्वाभावः। २. धारावाहिमिकालवलामाम। ३. विषयनियम इति प्रतीकोपादानमनुचितम् पौनरुक्त्यापत्तेः। ४. लिङ्गिक ज्ञानेमी। ५. प्रमाणान्तर सापेक्षं पौरुषेयवाक्यजे इत्यर्थः। ६. प्रचलितपुस्तके नैष पाठो दृश्यते।

**म्भवात् । असाधारणतद्धेतुकधीत्वमिति चेन्न, आत्मप्रत्यभिज्ञानेऽप्यापत्तेः, आत्ममनोयोगस्य साधारण्यात् ।**

**कार्यैक्यानवधारणे च कारणत्वानवधारणात् । तदैक्ये च तदेव लक्षणं स्यात् ।**

**येन ज्ञानेनार्थो ज्ञाततात्मकः क्रियते, तदनुभवः । येन तु ज्ञानमेव तथा, तत्**

---

स्मृतित्वस्येति शेषः । **आत्ममनोयोगस्येति** । ननु आत्मप्रत्यभिज्ञायां मनस इन्द्रियत्वेन कारणत्वादसाधारण्यं तथा आत्मनश्च प्रत्यक्षविशेषे, तदात्मनोऽसाधारण्यमित्यस्वरदाह—**कार्यैक्येति** । स्मृतिगतानुगतरूपापरिज्ञाने[१] संस्कारकारणत्वं न शक्यमधिगन्तुं तदधिगमे च तदेव लक्षणमस्तु अव्यवहितप्रतिपत्तिकत्वादित्यपव्याख्यानम् । धूमालोकादावनुगतरूपाभावेऽपि वह्नेः कारणताग्रहात् व्यवहितप्रतिपत्तिकेऽपि संस्कारजन्यत्वे लक्षणत्वधर्मस्याभावसाधने बाधाच्च[२] ।

अत्राहुः संस्कारासाधारणकारणकत्वमित्यत्र असाधारणत्वं यदि तदितराजनकत्वे सति तज्जनकत्वं तदाऽसम्भवः संस्कारेण स्वध्वंसस्यापि जननात् । संस्कारविषयकज्ञानसहितेन संस्कारेण संस्कारस्यापि जननात् इति तु न युक्तम् । संस्कारज्ञानस्यैव तत्र हेतुत्वं सत्यपि संस्कारे तज्ज्ञानात् संस्कारोत्पत्तेर्व्यभिचारात् । सामान्यप्रत्यासत्तिविधया प्रत्यक्षस्यापि जनकत्वेन तदितराजनकत्वासिद्धेः । स्मृतित्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वमसाधारणत्वं वाच्यं ततश्च मात्रपदं व्यर्थं स्मृतित्वाद्यसिद्धौ तदसिद्धेः सिद्धौ च तद् विहाय तदधीनस्य ज्ञानस्य संस्कारमात्रजन्यत्वस्य लक्षणत्वेनाभिधानं दुर्बुद्धितामेवापादयति । आवश्यकतद्बुद्धित एव प्रमाणलक्षणनिर्वचनसिद्धिरिति ।

"पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते[३]" इति स्मृत्यधिकरणीयवार्तिकं दृष्ट्वा यत्केनचित् स्मृतिलक्षणमुक्तं तद्वैधर्म्येण चार्थसिद्धमनुभवलक्षणम् । तदनुवदति । **येन ज्ञानेनेति** ।

पूर्वस्य=ज्ञाततायाः प्राग्भाविनः ज्ञातताख्यधर्मस्य, ज्ञानं कारणीभूतं, यस्मात् धर्मात् ज्ञायते तत् पूर्वविज्ञानं ज्ञातताख्यो धर्मः तद्विषयकं ज्ञानं स्मृतिरित्यर्थः । तथा च ज्ञातताविषयकं ज्ञानं स्मृतिरित्यर्थः । ततश्चार्थसिद्धमिदं ज्ञातताख्यधर्माविषयकं ज्ञानमनुभव इति तयोः निष्कृष्टमर्थमाह—**येनेति** ।

भट्टमते ज्ञाततायाश्च अर्थेन सहाभेद एव सम्बन्धः इत्याशयेनाह—ज्ञाततात्मकः[४] । ज्ञानमेव तथा ज्ञाततात्मिका, ज्ञातताविशिष्टो ह्यर्थः स्मृतौ भासते इति

---

१. परिज्ञानसंस्कारकत्वं । २. विद्यासागरस्य ।
३. तं. वा. स्मृ. अधि ४. ज्ञानात्मकः ।

स्मरणमिति चेन्न। ज्ञातो ज्ञास्यते चेत्यनुमानादावप्यापत्तेः। ततश्च विषयतः स्मृति-विवेचनमन्ततो वाक्येनाप्यनुभाव्यत्वात् कार्यकारणाभ्यां चानुगतरूपस्य प्रागसिद्धेः, जातितश्च सङ्करप्रसङ्गादशक्यमिति।

## १६. अनुभवत्वचतुर्थविकल्पखण्डनम्

नापि चतुर्थः, यतः कार्यगतवैलक्ष्यानवगमे क्व कारणता? क्वासाधारण्यं वा ज्ञेयमिति?

न केवलं प्रत्येकं पदार्थस्य तद्व्यवच्छेदकत्वस्य चानुपपत्तिः, मिलितेऽप्यस्मिन् लक्षणे दूषणमुच्यते। तथा हि—'तत्त्वानुभूतिः प्रमे'त्यनेन काकतालीयमपि यथार्थ-ज्ञानं व्याप्यते। तद्यथा—पाणौ पञ्च वराटकान् पिधाय कश्चित् पृच्छति—'कति वराटकाः' इति। पृष्टश्च अजाकृपाणीयन्यायेन ब्रवीति 'पञ्चेति'। ततश्च पञ्चे'ति

---

ज्ञातता जनिका स्मृतिरित्यर्थः[१] ज्ञात इति। घटो ज्ञातो व्यवह्रियमाणत्वात् ज्ञास्यते व्यवहरिष्यमाणत्वात् इत्येवं प्रतिसन्धानजन्यानुमितौ आदिपदात् तादृशशाब्दाद-वित्यर्थः। स्मृतिलक्षणानुपपत्तिमुक्तामुपसंहरति। ततश्चेति।

विषयतः स्मृतिविवेचनमशक्य[२]मित्युत्तरेणान्वयः। स्मृतेर्विवेचनमनु-भवात् गृहीतविषयत्वेन विवेचनमेकं ज्ञाततविषयत्वेन चापरम्। तत्र द्वितीयेऽति-व्याप्तिं स्मारयति। विषयत इति। एतद्[३] ज्ञानं स्मृतिरिति एतल्लक्षणवत्त्वादित्ये-तल्लक्षणप्रतिपादकं वाक्यं स्मर्यमाणमगोचरीकृत्य लक्षणं न कश्चित् प्रतिपाद-यितुमीष्टे। ततश्च तद्वाक्यजन्यानुभवे अतिव्याप्तिः।

ननु वाक्यजन्यं ज्ञानं लक्षणमेव गोचरयति नतु तमर्थमित्यत आह—अन्तत इति। लक्षणविशेषणतयापि अर्थमपि गोचरयत्येवेति भावः। अनुभवत्वाख्यं कार्य-गतरूपं तत्कारणानामिन्द्रियसन्निकर्षपरामर्शपदज्ञानरूपाणामवगमात् प्राक् अवगतं नवा। अन्त्ये कारणत्वमेव दुरवधारणं तथा तद्गता साधारणत्वञ्च। आद्ये तु अस्य कार्यन्यूनवृत्तित्वे तदधीनज्ञानलक्षणाव्याप्तिः समव्याप्तित्वे तदेव लक्षणमस्तु नेतरदित्याह—यत इति।

---

१. भट्टमते धर्मधर्मिणोरभेदात् अर्थः ज्ञाततात्मकः येनज्ञानेन क्रियते स अनुभवः, स्मृत्या तु ज्ञातोऽर्थो ज्ञायते इति ज्ञाततैव ज्ञातात्मिका क्रियते इति भावः।

२. स्मृतिविरेचनम।

३. तत इत्यस्य स्थाने अन्ततः, अन्ततः इति पठितव्ये ततः क ख पुस्तके पाठः। एवमेतज् ज्ञानं स्मृतिः एतल्लक्षणवत्त्वात् एतल्लक्षणप्रतिपादकवाक्यं स्मार्यमगोचरीकृत्य कश्चित् इति।

**ज्ञानमस्ति वक्तुः श्रोतुश्च । दृश्यन्ते तावदेवंविधान्युदाहरणानि । तच्च ज्ञानं न तत्त्वपदेन व्यवच्छेत्तुं शक्यम्, वस्तुतस्तस्य पञ्चसङ्ख्यावच्छिन्नत्वेन अतथाभूतत्वाभावात् । नाप्यनुभवशब्दव्यवच्छेद्यम्, अननुभूतचरत्वेन स्मरणलक्षणोपेक्षणात् ।**

**न च वक्तुः संशय एव, निश्चायकाभावाद्; एकतरकोटिव्यवहारस्तु कृष्यादिप्रवृत्तिवदिति युक्तम्; तत्राप्याहाररूपैककोटिनिश्चयास्थानाद्, अन्यथा**

---

प्रतिभायामतिव्याप्तिमाह—**तथाहीति** । परिणततालपतनकाले यदा काकोऽपि तद्वृन्तमाश्रयते तदा तत्र काकसंयोगस्य अन्वयव्यतिरेकविरहिणः समकालतया पूर्ववर्तिताविरहिणश्च अकारणत्वेन यादृच्छिकः काकयोग इति तथा दैवाज्जातं विज्ञानं यादृच्छिककाकतालीयसममिति काकतालीयमित्युच्यते । स्तम्भादौ शिथिलबन्धे खड्गे ग्रीवाकण्डूयनाय छागी चेद् ग्रीवां प्रसारयति तदा ग्रीवाच्छेदो भवतीति तथाभूतो यो न्यायः स काकतालीयन्यायसमोऽपि अर्थपरिच्छेदकज्ञानस्य छेदकखड्गसाम्याधिक्येन दृष्टान्तितः । एतेन श्वो मे भ्राता आगमिष्यति इति कन्यकावचः, शालिवाहनो नाम राजा शृङ्गार[1] सरसीतीरे देव्या लीलावत्या सहातिमधुरं संगीतकमनुतिष्ठतीत्युदाहरणमित्याह—**दृश्यन्त इति** । वक्तुरिति[2] । यद्यपि वक्तुः स्ववाक्यजन्यं ज्ञानं नास्ति तथापि वाक्यप्रयोगमूलभूतं ज्ञानमस्त्येव, स्ववाक्यमपि स्वस्यबोधकम् । नचाकाङ्क्षाविरहः आनुपूर्वीविशेषस्य निराकाङ्क्षत्वात् श्रोतरि तदुच्चारणजन्यसंसर्गावगमप्रागभावरूपा तत्र आकाङ्क्षा तस्याः स्वरूपसत्याः शाब्दबोधे हेतुत्वात् आनुपूर्वीविशेषरूपायास्तु निश्चिताया एव हेतुत्वम् । दश रामशरा इत्यादि तद्विच्छेदज्ञाने सत्येव दशसंख्याविशिष्टरामशरज्ञानोत्पत्तेः । अत एव मीमांसकानामपि स्थाने न प्रकरणकल्पनेति सिद्धान्त इत्याशयेन वा वक्तुरित्युक्तिः । वक्तुः प्रयोगकारणीभूतं यज्जानं तन्निश्चयरूपमिन्द्रिय[3]सन्निकर्षादिरूपप्रमाणाजन्यत्वात् ततश्च श्रोतुरपि आप्तोक्तत्वसंशयेन तदाहितः संशय एव । [4]तथा च तत्वपदेन निरस्तत्वाद् व्यवच्छेद इत्यभिमानः ।

ननु वक्तुर्निश्चयाभावे कथं तथाभिवदनात्मको व्यवहार इत्याशङ्कामपनुदति—**एकतरेति** । वराटकाः पञ्च संख्यावच्छिन्ना नवेति संशये सत्यपि पञ्चेतिशब्दप्रयोगात्मको व्यवहारः कृष्यादिप्रवृत्तात्मव्यवहारवदुपपन्न इत्यर्थः । **आहाररूपेति** । आहरणमाहार उत्प्रेक्षारूपे निश्चय इत्यर्थः । प्रवृत्तेः स्वविषयनिश्चयं जन्यत्वेन तत्र फलावश्यकत्वसन्देहे सति आहार्यफलनिर्णयो वर्तत एवेत्यर्थः । प्रवृत्तेः स्वविषयनिश्चयजन्यत्वव्याप्तेरस्खलनात् तदभावे च व्यवहार एव नोपपद्यत इति ।

---

१. शृङ्गारसाधनीभूतपुष्करिणीतीरे इत्यर्थः । एतत्सर्वं प्रातिभं ज्ञानम् । २. वक्तुमिति । ३. तन्निश्चयरूपमिन्द्रियसन्निकर्षादिप्रमाणजन्यत्वात् । ४. तत्तपदेन निरतत्वावच्छेद इत्यभिमानः ।

**संशयस्य कोटिद्वयनिश्चयसमुच्चयतापत्तेः। न च प्रमैव तदित्युररीकरणीयम्, मध्येऽध्यक्षादिदुरन्तर्भावित्वात्।**

**अव्यभिचारिकरणजन्यत्वे सतीति विशेषणीयमिति चेन्न, तत्त्वपदवैयर्थ्यापातात्। न च काकतालीयसंवादमपि ज्ञानं व्यभिचारिसाधारणकारणसामग्रीजन्यमास्थातुमीशिषे; व्यभिचारिणोऽपि कारणाविशेषाद् यथार्थत्वप्रसङ्गात्।**

---

व्यवहारमूलतया पञ्चसंख्यावच्छिन्न[1]त्वकोटौ निश्चय एव स्यात् एवमन्यकोटावपि अविशेषात् तेन पञ्चैव नैवेति कोटिद्वयसमुच्चयोऽ[2]विरुद्ध आपद्येत तथा कृष्यादावपीत्यर्थः।

मैथिलास्तु[3] सहकारिसम्पत्तौ अवश्यं कृषेः फलमितिज्ञानमाहारः। **अन्यथेति।** एककोटिकज्ञानस्यापि संशयत्वे अन्योऽपि संशयः कोटिद्वयनिश्चयसमुदायात्मकः स्यादित्यर्थः। यद् वा यदि संशयोऽपि निश्चयव्यवहारजनकः स्यात् तदा कोटिद्वयनिश्चयात्मक एव स्यादित्यर्थः इति व्याचक्षते।

**मध्येऽध्यक्षादीति।** अध्यक्षादेर्मध्ये, मध्येऽध्यक्षादि। 'पारेमध्ये[4] षष्ठ्या वे" ति स्मरणात्। इन्द्रियसंयोगाजन्यत्वात् नाध्यक्षं, तद्विनाभूतलिङ्गाजन्यत्वात् नानुमानं, पञ्च वराटका इति शब्दस्यादर्शनात् नागमः, असादृश्यविषयत्वात् नोपमानं, करतले पञ्चकपर्दकव्यतिरेकेण अनुपपत्तिव्यतिरेकात्[5] नार्थापत्तिः, भावविषयत्वात् नानुपलब्धिरित्यर्थः।

**अव्यभिचारीति।** इदं तु ज्ञानं व्यभिचारिलिङ्गधीजन्यमित्याशयः। **तत्त्वपदवैयर्थ्यादिति।** न च अव्यभिचारिलिङ्गेन्द्रियादिकरणकानुभवस्यापि[6] न तत्त्वविषयत्वं गन्धप्रागभावावच्छिन्नपृथिवीपक्षकानुमितौ वह्निगुञ्जापुञ्जविशेष्यकज्ञानस्य त्वगिन्द्रियादिकरणस्य दृष्टमिति वाच्यम्। दोषायेत करणस्यैव तदर्थत्वात्। व्यर्थञ्चेदं विशेषणं काकतालीयसंवादज्ञानस्य वारयितुमशक्यत्वादित्याह—**काकतालीयेति।** पञ्च वराटका इति ज्ञानं व्यभिचारिभिः शुक्तिरजतादिप्रत्ययादिभिः साधारणी या कारणसामग्री तज्जन्यमास्थातुं न ईशिषे=शक्तो भवसीत्यर्थः। व्यभिचारिप्रत्ययस्य साधारणीकारणसामग्रीसाकल्यं यस्य कारणस्य तज्जन्यमिति वार्थः। सामग्र्या अकारणत्वात् व्यभिचारिणो रजतादिप्रत्ययस्यापि यथार्थत्वं स्यात् कारणस्य व्यभिचारिमात्रस्य अविशेषात्[7]।

---

१. पञ्च संख्यावच्छिन्नकोटिनिश्चयः। २. विरुद्धः। ३. शङ्करमिश्राः इत्यर्थः।
४. पाणिनि सूत्रम् २।१।१८ ५. अनुपपत्तिव्यतिरेकाभावार्थापत्तिः।
६. अनुभवस्यापि तत्त्वविषयत्वं क पुस्तके साधारणीयो करण सामग्री। ७. अभिचारात्।

**न ह्यहेतुकमेवास्य यथार्थत्वम्; नियामकाभावेन अतिप्रसङ्गापातात्। अवश्यमस्याव्यभिचारित्वे अव्यभिचारिनियतमेव करणं वक्तव्यम्।**

**किं तदिति चेत्, स्वात्मनैवात्र प्रश्ने दीयतामुत्तरं भवता, येन नियतेषु प्रमाराशिष्वेवेदं ज्ञानमन्तर्भाव्यम्, प्रमासामान्यलक्षणेन वा व्यवच्छेत्तव्यम्।**

**एवं लिङ्गाभासादिभ्योऽपि जातं लिङ्गिज्ञानं दैवगत्या स्थितलिङ्गलिङ्गिनि**

---

एतेन काकतालीयसंवादज्ञानं न व्यभिचारिकारणजन्यमित्युक्तम्। **नहीति**। ज्ञानस्य स्वरूपं नाहेतुकं कादाचित्काभावत्वात्। नापि तद्गतं यथार्थत्वं निर्हेतुकं तथा सति नियामकाभावेन भ्रान्तावपि यथार्थत्वापातात्। तस्मात् परिशेषादव्यभिचारिकारणजन्यत्वमित्याह। **अवश्यमिति**। अस्य = काकातालीयसंवादज्ञानस्येत्यर्थः। तथा च विमतमव्यभिचारिकारणकं व्यभिचारिसाधारणकारणाजन्यानीश्वरज्ञानत्वात् सम्प्रतिपन्नवदित्युक्तम्। अव्यभिचारीत्यस्य व्याख्यानं **नियतमिति**। अव्यभिचारिकारणम् अनुपलब्धिरहितमित्याशयेन पृच्छति—**किं तदिति**। **आत्मनैवेति**। तथा च प्रमाणवलादायाति नानुपलब्ध्या बाधमर्हति, न ममात्र निर्वक्तव्यमस्ति अनिर्वक्तव्यवादित्वादित्याशयः। स्वपक्षसिद्धि परपक्षं च प्रतिषेधता निरूपणीयमेव प्रमाणं सर्वविधिनिषेधानां प्रमाणाधीनत्वात् तत्किमिदमुच्यते स्वात्मनैवोत्तरं दीयतामित्याशङ्क्याह—**येनेति**। अपव्याख्यानं विद्यासागरस्य। येनेत्यस्य भवतेत्यर्थकेन नैयायिकस्य प्रत्युत्तरावगतेः स्वस्य प्रत्युत्तरप्राप्तेः। न च त्वदभिमत[१]प्रमाणवलेन त्वत्परिगणितप्रमाणविशेषेऽन्तर्भावणीयमन्यथा प्रमाणातिरेकापातात्। अप्रमात्वञ्चेत् प्रमाणलक्षणेन व्यावर्त्यमन्यथाऽतिव्याप्त्यापत्तेरितिभावः इत्यपि व्याख्यानम् न युक्तम्[२]। मम प्रमायाः प्रमाणानां [३]परिगणनाभावेन सप्तमप्रमाणेनापि उपपत्तेरित्यद्वैतखण्डनयुक्तित एव उत्तरदानात् नेहोत्तरणीयमित्येवमेव सर्वोपपत्तेः। अस्याप्रमात्वन्तु विषयाबाधान्न सम्भवति। न वा स्मृताविव प्रमाणविरहाविरहादिकं नैयायिकादीन् प्रत्येवाभियोगोऽयं सर्वथाऽपि अपसिद्धान्तापातादिति।

**एवं लिङ्गाभासादिक जातमिति**। आदिपदेन अर्थापत्त्याभासपरिग्रहः। ननु लिङ्गोपहितस्य लैङ्गिकस्य भानाङ्गीकारे तादृशानुमितिरप्रमैवेत्याशङ्क्याह—**दैवगत्या इति**। स्थिते लिङ्गलिङ्गिनी यस्मिन्। लिङ्गान्तरविरहिण्यपि केवल-

---

१. प्रमात्वाविशेष्यं तर्भावणीयमन्यथा प्रमातिरेक इति पाठः क ख पुस्तके।

२. नकाररहितः पाठः क ख पुस्तके।

३. अपरिगणनाभावेन क ख पुस्तके।

**लिङ्गिमत्येव वा यत् स्यात्तु यद्यपि लिङ्गाभासे न प्रमा, न वा तद्वति लिङ्गि-स्वरूपे, तथापि विशिष्टं तथाविधं गोचरयन्त्यास्तस्या बुद्धेर्लिङ्गान्तरवति केवले वा लिङ्गिनि वह्न्यादावप्यंशे विषये प्रामाण्यस्वीकारेण उक्तदोषापरिहारादिति।**

**आभासकरणजत्वात्तद्विषयस्य वस्तुभूतात् लिङ्ग्यादेरन्यत्वमेवेति चेन्न, विशेषस्यान्यत्वेऽपि तज्जातीयमात्रवत्तावभासांशे दोषापरिहारात्।**

---

लिङ्गिमति[1] एव वा प्रमितिर्विषयाबाधात् प्रमा तत्रेत्यर्थः। तद्वति लिङ्गिस्वरूपे लिङ्गाभासवद्विशेष्यकलिङ्गिस्वरूपे इत्यर्थः।

**तथाविधमिति**। लिङ्गविशिष्टं वह्निमन्तमित्यर्थः। लिङ्गाविषयिकायाः अपि तस्या वास्तववह्निमद्विषयत्वोपपादकतया पक्षे तु[2] लिङ्गवत्त्वाभिधानम्। **आभासकरणजत्वादिति**। आभासीभूतलिङ्गजन्यज्ञानविषयः पर्वतनिष्ठवह्नेरन्य आभासजन्यज्ञानविषयत्वात् प्रत्यक्षभ्रान्तिगोचरवह्निवत् अन्यथा अकारणकार्योत्पादापत्तेरित्यत्र तात्पर्यम्। न चैवं धूमजन्यज्ञानविषयस्यापि तथात्वापत्तिः, अत्र कारणबाधस्येव तत्र बाधकाभावादिति। **विशेषस्यान्यत्वेऽपीति**। [3]अभ्युपेत्य-वादः। दोषादेवारोपः, दोषस्तु साध्याभाववति लिङ्गज्ञानमिह तदस्ति। तज्जातीय-मात्रेति। अयं भावः व्यापकत्वविच्छेदरूपेण व्यापकभानस्वीकाराद् वह्नित्वेन वह्न्यन्तरस्यापि ज्ञानं प्रमैव स्यात्। तद् वह्नित्वेन हि तद्रहिते तज्ज्ञानं भ्रमः, अनुमितौ तु वह्नित्वेनैव भानमिति।

यद्वा यथा प्रमाकारणबाधाद् वह्न्यन्तरमेव तत्र विषय इत्युच्यते, तथा वह्नित्वप्रकारकतन्मात्रविषयकानुमिति कारणबाधोऽपि तन्मात्रविषयत्वे स्यात् व्यापकतावच्छेदकरूपेण[4] गृहीतस्य तथैव भानात् अन्यथात्विह हस्तव्यापित्वे-नापि भानं स्यात्।

यत्तु तथापि तत्र वह्निमत्वं तत्राबाधितमेवेति नत्वविशेषस्येति प्रत्युत अनुमित-वह्नेः प्रत्यभिज्ञानात् तद् व्यक्ति[5] विषयत्वेऽपि प्रामाण्यमेवेतिभावः इति व्याख्या-तम्। तन्न युक्तम्। विषयत्वस्य सोपपत्तिकस्य तदभिहित तथा वह्नित्वमात्रं तत्रा-बाधितमित्युक्तिर्निरूपपत्तिकाऽ[6]बाधिका अनुमितवह्नेः प्रत्यभिज्ञानं भ्रम इति च तेनाऽपि शक्यं वक्तुम्। अथ च वह्न्यनुमिति सामान्यसामग्री आभासीभूतज्ञानसा-मग्रीसहिता तत्र अनवस्थितविषयामेवानुमितिं जनयति वह्निप्रत्यक्षसामग्री च भ्रम-सामग्रीसहिता प्रत्यक्षभ्रमम् इत्याशयेन शङ्कते—**सामान्यसम्बन्धेति**। सामान्यतः सर्वं

---

१. केवललिङ्गि मत्येवपाममिति। २. पक्षस्तु। ३. त्यवादः दोषादेव।
४. व्यापकतावच्छेदकरूपेण गृहीतस्य। ५. व्यक्तिरेषयत्वेऽपि इति पाठः।
६. बाधिका।

**सामान्यसम्बन्धकोटिनिविष्टत्वाद् विशेषस्य, तस्य च तत्रानवस्थितस्यैव स्फुरणान्नैष दोष इति चेन्न, विशेषाप्रतिभासे सामान्यतस्तन्मात्रवत्ताप्रतिभासस्यापि अभ्युपेयत्वात्, देवदत्तयज्ञदत्तसम्बन्धिमासंशयेऽपि पुरुषसम्बन्धितानिश्चयवत् । सम्बन्धिविशेषस्य निर्लुठितविशेषरूपतया च प्रवेशे व्याप्त्यादेरननुगमप्रसङ्गात् ।**

एव विशेषाव्यापककोटिनिविष्टा इति नास्ति अन्यविशेषभानसामग्रीबाध इति भावः । स्थितविशेषभाने का विशेषसामग्री तत्प्रमाकारणबाध इति चेन्न । तत्प्रमासामान्यसामग्र्याः सत्त्वात् । यदि च सामान्यसामग्र्येव नास्ति तदाऽविद्यमानविशेषभानमपि न स्यादित्याशयेन समाधत्ते—**विशेषाप्रतिभासेऽपि** इति । विशेषाकारेणाप्रतिभासेपीत्यर्थः । तथा च प्रमासामग्रीसत्वात् प्रमा दुर्वारा । [1]**अनवस्थितस्येति** । भानसामग्री तु नास्त्येव प्रमाणाभावादितिभावः । अस्ति च सामान्याकारभानसामग्रीत्याह—**देवदत्तयज्ञदत्तेत्यादि** ।

ननु वह्निसामान्यानुमितिसामग्री बह्निव्याप्तिघटिता वाच्या सा च न सम्भवति वन्हिसामानाधिकरण्यैकस्याभावात् किन्तु तद्वन्हितत्तद्धूमयोरेव व्याप्तिरिति । तथा च वन्हिव्याप्यविरहिणि कथं वन्ह्यनुमितिरित्याशङ्क्याह—**सम्बन्धिविशेषस्य निर्लुठितविशेषरूपतयेति** । निर्लुठितञ्च विशेषरूपत्वं तत्तद्व्यक्तिरूपत्वम् । **व्याप्त्यादेरिति** । आदिपदेन पक्षधर्मतापरिग्रहः । पक्षधर्मताऽपि वह्निसमानाधिकरणधूमनिष्ठैव अनुमित्युपयोगिनीति पर्वतीयवह्निभानात् प्राक्तत तद्वृत्तिधूमे व्याप्त्यनवगमान्नानुमितिः स्यात् इति ।

अयमाशयः विशेषव्याप्तिरपि सामान्यात्मना [2]गृहीतैवाङ्गम् । तथा च यद्यपि तत्र वन्हिव्याप्यो नास्ति तथापि तत्र तद्भ्रमोऽस्त्येव तत एवानुमितिर्भविष्यतीत्यदोषः ।

विद्यासागरस्तु विशेषस्य पर्वतनिष्ठस्याभानेऽपि अन्यवन्हेर्भानस्य सामान्याकारत्वेनाभ्युपगमात् [3]सामान्यभावेन तत्त्वानुभूतिस्त्वं केन वारणीयमित्याह ।

सामान्यतः परमार्थत्वापरमार्थत्व[4] विशेषमपहायेति यावत् । **तन्मात्रवत्ताप्रतिभासस्येति** । अग्निजातिसंसर्गितया प्रतिभासस्येत्यर्थः । विशेषाप्रतिभासेऽपि [5]सामान्यप्रतिभासं दृष्टान्तेनाह **देवदत्तेति** । पथि शालिसम्पन्नं क्षेत्रं पश्यतः तस्य देवदत्तयज्ञदत्तसम्बन्धानिश्चयेऽपि यथा पुरुषसंसर्गित्वं निश्चिनोति तथा व्यापकविशेषाभानेऽपि तन्मात्रप्रतिभासात् तत्त्वानुभूतिः स्यादेव । किञ्च व्याप्यसामान्यस्य व्यापकसामान्येन व्याप्तिर्गृहीता, किं वा तद्विशेषस्य तद्विशेषेण ।

१. अस्थितमिति । २. गृहीतैवाँगं । ३. सामान्याभावेन ।
४. परमार्थत्वरूपमपहाय क ख पुस्तके । ५. तत्परतन्त्र सामान्यप्रतिमासम् इत्यर्थः ।

**सामान्यानुमानाभासे च संवादिनि विशेषान्यवत्ताकल्पनानवकाशात् । सामान्यसमवाययोरप्यन्ययोरेव प्रतिभासे अन्यथाख्यातिं विहाय असत्ख्यातिप्रवेशापातात् ।**

**तत्रत्यधर्मान्तरस्य जात्या तादात्म्यारोपस्तत्रेति चेन्न, तथापि धर्मिणि जातौ च प्रमात्वतादवस्थ्यात्; संसर्गारोपनिमित्ताच्च तादात्म्यारोपानुपपत्तेः ।**

---

आद्ये [1]धूमगृहीतधूलीपटलादिना अग्निमात्र[2]प्रतिभासः स्यादिति तन्मात्रे तत्त्वानुभूतित्वं दुर्वारम् । द्वितीयेप्याह—**सम्बन्धीति** । सम्बन्धिनौ व्याप्यव्यापकौ तयोर्विशेषस्य । **निर्लुठितविशेषरूपतयेति** । विमर्दित सामान्यासामान्यासाधारणरूपतयेति यावत् । महानसनिष्ठव्याप्तस्य तन्निष्ठव्यापकेन व्याप्तिग्रहणे विशेषतया प्रवेशे पर्वतादावभावः पर्वतनिष्ठयोर्व्याप्त्याधारतया प्रवेशे दृष्टान्ताननुगम इत्यर्थं इति व्याचष्टे । अतिव्याप्तिमुदाहरणान्तरेऽप्याह—**सामान्यानुमानाभासे चेति** । गोत्वस्य ग्राहके अनुमितिकारणे विषाणित्वे आभासात्मके संवादिनि तज्जन्यज्ञानस्य प्रमाणान्तरसंवादात् तस्यापि संवादित्वमिति । रूपादयः सामान्यवन्तः पदार्थत्वात् घटवदिति सामान्यग्राहकेऽनुमान इति । शिष्यहितैषिण्याम् । **विशेष्यान्यवृत्तीति** । गोत्वसमवायं विद्यमानं विहाय अन्य एव आरोपितः सम्बन्धविशेष इति कल्पनायामशक्तः । **तत्रत्यधर्मान्तरस्येति** । गौरित्यनुमितौ गोवृत्तिसास्ना गोत्वात्मना भासते इत्यर्थः ।

अयं भावः गोत्वस्य व्यञ्जकः सास्नादिरवश्यं भासमानो व्यङ्ग्याकारेण धर्मिणं बोधयति । अत एवाह—**तत्रेति** । गवीत्यर्थः । **धर्मिणि जातौ चेति** । सास्ना हि गोत्वात्मनैव गवि भासते चेत्तर्हि गौरित्येव ज्ञानाकारः तत्र च प्रमात्वं दुर्वारं सास्नांशे यद्यप्यारोप इत्यर्थः । **तथापि इति** । अपिशब्दद्योतितामरुचिमाह—**संसर्गारोपेति** । नायमारोपः तादात्म्यगोचरः संसर्गारोपनिमित्तजन्यत्वात् प्रतिवादिप्रयुक्तप्रयोगाभासजन्यभ्रमवत् । स्वार्थानुमाने कदाचित् तादात्म्यारोपसम्भवेऽपि परार्थानुमाने परोपस्थापितसमस्तरूपोपेतलिङ्गभ्रमात् पक्षे साध्यसंसर्ग एव सिद्धिमर्हतीत्याशयेन परार्थानुमाने हीत्याह । संसर्गारोपनिमित्तादेव कदाचित् तादात्म्यारोपः किन्न स्यादित्याशङ्क्याह **तन्नेति** । यत्र संसर्गारोपनिमित्तं तत्र तादात्म्यारोपश्चेत् तदा शुक्तिरजतादौ संसर्गभ्रम एव । दूरस्थवनस्पत्योः तादात्म्यभ्रम एवेति योऽयं नियम स न स्यादिति विद्यासागरस्य अपव्याख्यानम् ।

अन्यस्य कारणादन्यकार्यस्योत्पत्तौ व्यभिचारापत्तेः, भ्रमनियमस्य निष्प्रमाणकत्वादिति ग्रन्थासङ्गतेश्च ।

---

१. धूमगृहीत इत्यस्य धूमत्वेनगृहीत इति भावः ।

२. अग्नित्वमात्रप्रतीत प्रतिभासः स्यात् ।

**परार्थानुमानाभासे हि प्रतिपादितपदार्थसंसर्गारोपकारणसम्भवात्; तथापि तत्र तादात्म्यारोपकल्पने च तथाभ्रमनियमस्य निष्प्रमाणकत्वात् ।**

**कस्यचित्तत्र जातसंवादजातिसंसर्गभ्रमस्य मितौ का गतिः ? का वा गतिः सिद्धसाधने ? तत्राप्यन्यत्वकल्पनायां सिद्धत्वव्याघातात् । तथात्वे च हेत्वाभास-**

---

यच्चानुमानात् संसर्गारोप एवेत्युक्तं तच्च न युक्तम् । लिङ्गवतोऽभेदभ्रमे लैङ्गिकवदभेदभ्रमस्याऽपि सम्भवात् । प्रमायामपि लिङ्गवत् तादात्म्यपरामर्शात् लैङ्गिकवत्तादात्म्यप्रमा लिङ्गसंसर्गप्रमातो लैङ्गिकसंसर्गप्रमा ।

यच्च विद्यासागरेणोक्तं परवाक्यप्रतिपन्नपदार्थानां संसर्गायोग्यानां प्रतिपादनात् न्यायाभासात् संसर्गारोप एवेति तदपि न । संसर्गस्य तादात्म्यस्यापि सम्भवात् । तस्मादेवं व्याख्येयम् न तादात्म्यारोप एवेति नियमः प्रमाणाभावात् संसर्गारोपस्यापि कारणसम्भवात् । तत्प्रदर्शनं परार्थानुमानाभासे यदि च तत्रापि तादात्म्यारोपकारणमस्तीत्युच्यते तथापि तथा भ्रमनियमे प्रमाणं नास्तीति । यदा संसर्गारोप एव जातः तदा का गतिः । अतएव यत्र संसर्गारोपे संवादोऽस्ति न तादात्म्यारोपे तत्रातिव्याप्तिमाह—

**कस्यचिदिति ।** जातःसंवादो=गोत्वजातिसंसर्गभ्रमो यस्य च पुंसः[१] गोत्वसंसर्गो मया अनुमितो नूनं स एवायं त्वया प्रत्यक्षेणाप्यनुभूयत इति प्रतिसंदधानस्य पुरुषस्येत्यर्थः ।

ननु जातिसंसर्गभ्रमस्य मितावित्यनुपपन्नं संसर्गस्य भ्रममितित्वासम्भवादिति चेन्न । संवादेन जातिसंसर्गप्रमिते सतीत्यर्थः । तथा च संसर्गारोपो नास्तीति यत्त्वयोक्तं तदशुद्धम् । आरोपरूपता च तस्य आभासकरणजन्यत्वेन तवाभिमता ननु गवि गोत्वसंसर्गधीः आभासहेतुजन्याऽपि प्रमेवेति भावः । अतिव्याप्त्यन्तरमाह— **का वा गतिः सिद्धसाधने** इति । तत्र सिद्धसाधनहेतुजन्यानुमिति विषयेऽन्यत्वकल्पनायां पारमार्थिकपक्षनिष्ठभेद[२] कल्पनायां सिद्धत्वव्याघात इति । प्रमाणान्तरेण पक्षनिष्ठतया निर्णीतस्य साध्यस्य साधनं हि सिद्धसाधनं, तत्कथमविद्यमानस्य अधुनैव भासमानस्य स्यात् । **तत्त्वे चेति ।** सिद्धसाधनस्थलीयज्ञानविषयस्य पक्षनिष्ठत्वे चेत्यर्थः । हेत्वाभासस्यापि सिद्धसाधनस्य यथार्थज्ञानजनकतया अन्यत्राप्याभासे व्यभिचारिणि[३] प्रतिभासकल्पनाया निर्निमित्तत्वात् इत्यन्यव्याघातादित्यनुषक्तः शेषः । आभासस्य न तत्त्वानुभूतित्वमिति स्ववचनविरोधः

---

१. परा । २. पक्षनिष्ठाभेद ।
३. व्यभिचारिणि निर्णिमित्तत्वादित्यन्यत्र व्याधातादित्यनुषक्तः ।

**स्यापि यथार्थग्राहितया उक्तनिमित्तस्य व्यभिचारेणाप्यन्यत्राभासे अन्यप्रतिभास-कल्पनाया निर्निमित्तत्वात्; सिद्धसाधनमितेरेव वा व्यवच्छेदात् ।**

## १७. यथार्थानुभवप्रमात्वखण्डनम्

**यथार्थानुभवः प्रमेत्यप्यलक्षणम् । यथार्थत्वं हि तत्त्वविषयत्वं वा ? अर्थसदृशत्वं वा स्यात् ? नाद्यः, पूर्वं निरस्तत्वात् । नापि द्वितीयः, व्यभिचारिणोऽपि प्रमेयत्वादिना अर्थसादृश्येन प्रमात्वापातात् ।**

---

इत्यर्थः । कल्पनायाः निर्निमित्तत्वमित्यत्र हेतुरुक्तः—निमित्तस्य व्यभिचारेणेति कथितम्, यन्निमित्तभासजन्यत्वम् अतत्त्वानुभवत्वस्य व्याप्यमिति तस्यात्रैव व्यभिचारेण निमित्तत्वाभावादित्यर्थः ।

अथ सिद्धसाधनं न हेत्वाभासः स्वरूपसत्प्रतिबन्धकत्वात् । अनुमितिकारणीभूत[१]यथार्थज्ञानप्रतिबन्धकविषयस्यैव हेत्वाभासत्वात् । तथा च हेत्वाभासजन्यत्वस्य न अतत्त्वानुभूतित्वव्यभिचार इत्याशङ्क्याह—**सिद्धसाधनमितिरेवेति** । अव्यवच्छेदादेवेत्यन्वयः । सिद्धसाधनस्थली या अनुमितिः गृहीतग्राहिणीति न प्रमा स्मृतिवत्, तथा च तत्त्वानुभूतित्वमस्तीत्यतिव्याप्तिः । चकारः क्वचित् पठ्यते । **साध्यसाधनमितेरेव चेति** चकारादितरत्राव्याप्तहेतुजन्यातिव्याप्तिः दुष्परिहरेति व्याचक्षाणस्य विद्यासागरस्य च असौ सम्मतः ।

अत्र नैयायिकाः[२] । सिद्धसाधनस्थले अनुमितिरेव नास्ति क्वातिव्याप्तिः । कथं नानुमितिरिति चेत्, सत्यां सिद्धौ पक्षताया अभावेन हेतौ पक्षधर्मताज्ञानस्य अनुमितिकारणस्याभावादित्येके । तन्न । सिद्धेः प्रतिबन्धकत्वे तदभावस्य पक्षतात्वं, तदेव तु नास्ति । धारावहनधियः प्रत्यक्षायाः स्वीकारे तद्वदेवानुमितिधाराया अपि सत्यां सामग्र्यामिष्टत्वात् । वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्यनुमितिधारा नोच्छिद्येते इति सिद्धेः प्रतिबन्धकत्वमित्येके । तदपि न तादृशधारा नास्तीत्युभयसिद्धमतस्तदनुरोधेन[३] सिद्धेः प्रतिबन्धकत्वं वा कल्प्यम्, धारावाहिकयामनुमितौ पूर्वपूर्वज्ञानस्य उत्तरोत्तरस्यां विशिष्य हेतुता वा कल्प्या । तत्रान्त्यः प्रकार एवोचितः तेन यत्र उत्तरोत्तरानुमितिः प्रमाणसिद्धा तत्र अपूर्वज्ञानादेव तदुत्पत्तिः । यत्र तु न[४], तत्र तत्कालोपधायिकाऽपि नास्ति प्रमाणाभावात् । विद्यमानैव किमिति उत्तरां न जनयतीत्यपि न देश्यम् । उत्तराया अप्रमितेरेवेति दिक् । तस्मादस्त्येवानुमितिः किन्तु न प्रमेति तत्रातिव्याप्तिः स्यादेवेति । इति आद्यप्रमालक्षणखण्डनम् ।

---

१. यथार्थ ज्ञानविषयस्य इति क ख पुस्तके । २. शङ्करमिश्रा इति ।
३. तदनुबोधेन । ४. नुनु ।

**ननु ज्ञानविषयीकृतेन रूपेण सादृश्यमिदं विवक्षितम् । न च प्रमेयत्वादिरूपस्य व्यभिचारिण्यपि प्रकाशनसम्भवेन तथाप्यतिप्रसङ्ग इति वाच्यम्, प्रमेयत्वाद्यंशे प्रकाशमाने विषयीभूतधर्मान्तरापेक्षया व्यभिचारिणोऽपि प्रमात्वाभ्युपगमादिति । न तद्युक्तम् प्रकाशमानेन रूपादिसमवायित्वेन रूपेण ज्ञानस्य अर्थसादृश्यानभ्युपगमेऽपि तत्र तदीयप्रमात्वाङ्गीकारादिति ।**

**प्रकाशमानेन रूपेण विशेषणभावादर्थसादृश्यमनुभवस्य विवक्षितम् । अर्थस्य हि यथा समवायाद्रूपं विशेषणीभवति, तथा विषयभावाद् ज्ञानस्यापि तद्विशेषणं भवत्येवेति चेन्न, एवं हि पुरोवर्तित्वादिना रूपेण तथाभावसम्भवात् । पुरोवर्तिनीं शुक्तिं रजततयाऽवगाहमानं ज्ञानं प्रमा स्यात् ।**

यथाशब्दस्य[1] पदार्थानतिवृत्तिपरतामादायाह **तत्त्वविषयता** वेति । व्यभिचारिणो भ्रमस्येत्यर्थः । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचार्यव्यपदेश्यं व्यवसायात्मकं प्रत्यक्षमिति न्यायसूत्रे अव्यभिचारिपदस्य प्रमायां प्रयोगात् । **व्यभिचारिणोऽपि**[2] इति । विषयतासम्बन्धेन यत्रास्ति भ्रमः शुक्तिकायां तत्र रजतत्वाभावसामानाधिकरण्याभावाद् रजतत्वम् ।

**ज्ञानविषयीकृतेनेति** । प्रकृतज्ञानविषयीकृतेनेत्यर्थः । तेन यत् किञ्चित् ज्ञानेन विषयीकृतस्य प्रमेयत्वस्य व्युदासः । **प्रमेयत्वादिरूपस्येति** । इदं रजतं प्रमेयं सदभिधेयमिति ज्ञाने अतिव्याप्तिरित्यर्थः । **प्रमेयत्वाद्यंश इति** । प्रकाशमाने प्रमेयत्वाद्यंशे प्रमाभ्युपगमादित्यन्वयः । धर्मान्तरं रजतसंसर्गादि । **रूपादीति** । रूपसमवायी घटः द्वौ घटौ शुक्लाविति प्रमायां वा ।

**प्रकाशमानेनेति** । प्रकाशमानेन रूपेण यदनुभवस्य अर्थसादृश्यमर्थगतधर्मः स विशेषणत्वेन विवक्षित इत्यर्थः । एतदेव व्याचष्टे–**अर्थस्य हीति** । विशेषणत्वं विशेष्यसम्बन्धमात्रमपेक्षते सम्बन्धस्तु अर्थे समवायः ज्ञाने विषयतेति भावः । एवं सतीत्यस्य पुरोवर्तिनीं शुक्तिं रजततयाऽवगाहमानं ज्ञानं प्रमास्यादित्यनेनान्वयः । **एवं हीति** । यदि विषयतया विशेषणेन सादृश्यं विवक्षितमित्यर्थः । पुरोवर्तित्वादिना तथाभावस्य=तथात्वस्य प्रकाशमानत्व[3]रूपेण विशेषणतया अर्थसदृशत्वस्य सम्भवादिति हेतुः ।

ननु अनुभूतिः प्रमेतिलक्षणमख्यातिनये शोभते नतु अन्यथाख्यातिनये इत्याशङ्क्याह—**सर्वेति** । प्रमायामेवानुभवस्य स्थैर्यादित्यनुभवत्वं प्रमायामेव स्थिरं प्रमात्वव्याप्तमित्यर्थः । अनुभवे प्रमात्वस्य स्थैर्यादिति अपव्याख्यानं मैथिलानां ग्रन्थविरोधाद् हेयम् । उक्तदोषादिति । धर्म्यंशेऽतिव्याप्तिरित्यर्थः ।

१. योग्यता, वीप्सा, पदार्थानतिवृत्ति, सादृश्यानि यथार्थाः । एषु पदार्थानतिवृत्तिरूपमर्थमादाय व्याचष्टे । २. व्यभिचरति भ्रमः । ३. प्रकाशमानरूपेण इति ।

**न च वाच्यमिष्यत एव सा प्रमाऽपीति न व्यभिचारचोदनेयं युक्तमतीति; यथार्थताविशेषणवैयर्थ्यप्रसङ्गात्। 'अनुभूतिः प्रमे'त्युक्त एव हि तावन्नास्त्यतिप्रसङ्गः; सर्वस्य व्यभिचार्यनुभवस्य (अन्ततोऽन्यथाख्यातिवादिनये) धर्मिण्यपि प्रमात्वसम्भवेन प्रमायामेव अनुभवत्वस्य स्थैर्यात्। यदि तु अंशतोऽपि व्यभिचारिण्यां मा लक्षणं गमदिति चेतसि निधाय यथार्थत्वं विशेषणं प्रयुक्तम्; तदा न युक्तम्, उक्तदोषात्।**

**अथोच्यते प्रकाशमानेन रूपेण सर्वेण विशेषणभावाद् यस्यानुभवस्यार्थसादृश्यं सा प्रमा। न च तावता धर्मिणो धर्म्यविशेषणतया दोषः, तस्यापि तद्विषयान्तरव्यवच्छेदकत्वादिति।**

**तर्हि व्यभिचारिज्ञानं धर्मिण्यपि प्रमा न स्यात्, सर्वात्मना सादृश्याभावात्। अव्यभिचारिणं चांशमननुरुद्धच तदीयाप्रमितिकोटिनिक्षेपसाहसिक्यादविभ्यता**

---

**सर्वेणेति।** न चेदमतिव्याप्तं रजतादिभ्रमस्य [1]पुरोवर्तित्वादिना अर्थसादृश्यं सत्यपि ज्ञानबिशेषणीभूतस्य रजतादिसंसर्गस्य पुरोवर्तिविशेषणत्वाभावात्[2]। यस्यानुभवस्य येनार्थेन सादृश्यं सा तत्र प्रमेति शेषः रूपसमवायी घट इति ज्ञाने घटो विषयतया विशेषणं न तु घटे, स्वस्य स्वविशेषणत्वे आत्माश्रयापत्तेः (तथा) अनभ्युपगमादिति। प्रमालक्षणाव्याप्तिमाशङ्कच परिहरति—**नच तावतेति।** अयं भावः यस्य ज्ञानस्य यावानर्थो विषयः तावतोऽर्थस्य तज्जान[3]विशेषणत्वे सति तद्विषयविशेषणत्वं विवक्षितं घटस्य घटविशेषणत्वाभावेऽपि घटस्य रूपमिति प्रतीतेः पटादिरूपाद् व्यावर्तकतया [4]विशेषणत्वमस्तीति नासम्भवो लक्षणस्य। एवमयं घट इति प्रमाविषयेण घटेनापि अन्यगतिता व्यावर्तनाद् भवति विशेषणं तथेदन्ताऽपि तज्ज्ञानविषयस्य घटस्य, परन्तु प्रमेयोऽभिधेय इति प्रमायामव्याप्तिः प्रमेयत्वे प्रमेयत्वमित्यत्रापि तेन विशेषणता इह तदुपरक्तबुद्धिजनकस्य वर्तमानता विवक्षिता। सा च ज्ञाने विषयतासम्बन्धेन विषये तु [5]समवायस्वरूपादिनेत्यवधेयम्।

ननु तज्ज्ञानं यावत्यंशे प्रमा तावत्यंशे अर्थसादृश्यमस्तीति चेन्न। अन्यथाख्यातिवादिनये ज्ञानस्यैक्यात्। धर्म्यंशे प्रमात्वाभावे इष्टापत्तिमाशङ्कच विनिगमनाविरहमाह। **अव्यभिचारिणश्चांशमननुरुध्य**=अकिञ्चित्करीकृत्य [6]**तदीया**प्रमीया या अप्रमितिकोटिस्तत्र **निक्षेपः**। अर्थादव्यभिचार्यंशस्य तदेव **साहसिक्यं**=सहसा बलेन यः करोति स साहसिकः, तस्य कर्म साहसिक्यं दस्युकर्मेति। यथा हि दस्यवः

---

१. प्रमावर्तित्वादिना।
२. पुरोवर्तिविशेषत्वाभावात्।
३. तज्ज्ञानं विशेषणम्।
४. रूपस्य घटविशेषणत्वमिति भावः।
५. समवायरूपादिना।
६. अप्रमाया इति मध्ये पाठ अधिकः प्रतिभाति।

**किमव्यभिचार्यंशानुरोधेन व्यभिचार्यंशस्यापि प्रमाकोटिनिवेशनमेव नाध्यवसीयते भवता ? शक्यन्ते ह्यनुभूतित्वज्ञानत्वादयस्तादृशाभिप्रायाविरोधिनो लक्षणीकर्तुम् ।**

**यदि च बाध्यार्थांशा धीरबाध्यार्थांशेऽप्यप्रमैव, तदा सौधाग्रकुम्भादिवद्**

---

परस्वं बलात्कारेण नीत्वा क्वचित् निःक्षिपन्ति तथा भवानपि अव्यभिचारांशमपहृत्य व्यभिचारकोटौ निःक्षिपति अतो भवता साहसिक्याद[1] विभ्यता = भयहीनेन। अमीयो योऽव्यभिचारोंऽशो वर्तते तदनुरोधेन व्यभिचारोंशापहार एव किमिति न क्रियते। तथा च [2]तदीयकोंशोऽपहार्यः को वा न इत्यत्र विनिगमनाविरह इति भावः। तदीयोऽव्यभिचारांशो निःक्षिप इति वा व्याख्येयम्। साहसिक्यादारभ्य भवता किं नाध्यवसीयत इति योजना।

ननु तर्हि सर्वं ज्ञानं प्रमा चेत् तर्हि तस्याः किं लक्षणं स्यात् त्वया सर्वलक्षणस्य दूषितत्वादतोऽविज्ञप्तलक्षणमवस्त्वेव स्यादित्याशङ्क्याह—**शक्यते** इति। अनुभूतित्वमपेक्ष्य सामान्यतया ज्ञानत्वमेव शास्त्रमर्यादा··· ··· । आदिपदात् विशिष्टज्ञानत्वपरिग्रहः इति मैथिलाः। विद्यासागरस्तु परोक्षत्वापरोक्षत्वान्यतरत्वमादिशब्दार्थः।

अथवा अपरोक्षत्वमस्तु लक्षणमव्याप्तेर्दोषताया धर्मिप्रमाण एव त्वयानङ्गीकारात्। **तादृशाभिप्राया विरोधिनेति**। व्यभिचार्यंशज्ञानस्य प्रमाकोटिनिवेशाभिप्रायोऽविरोधिना भवतेत्यनुषज्यते। अनुबोधिनेति पाठः सुगमः।

ननु भ्रमस्य सर्वांशप्रमात्वे रजतांशे बाधो न स्यात् इत्येव विनिगमकं तस्मादेकमपि ज्ञानमंशभेदेन प्रमा च अप्रमाचानुभवस्य दुरपह्नवत्वादिति चेत्। सत्यम्। केवला [3]प्रमाऽत्र लोकविरोधमप्याह—**यदि चेति**।

बाध्योंशोऽस्याः बाध्यार्थांऽशेत्यपि क्वचित्। सा बाध्यांशेऽप्यप्रमैव। अरुचिद्योतनार्थोपि। एवकारः अंशतोऽपि प्रमात्वाभावार्थः।

तुहिनद्युतिविद्युदाद्यवयविनमल्पपरिमाणमुल्लिखत् प्रत्यक्षमप्रमास्यादिति योजना। अल्पपरिमाणग्रहे हेतुस्तावत् परिमाणाग्रहः[4], तत्र हेतुः परभागाग्रहः, तत्र हेतुः दूरत्वमिति। अत्र दृष्टान्तः सौधाग्रकुम्भवदिति। यथा दूरत्वदोषेण प्रसादशिखरस्थकुम्भो महानपि स्वल्पपरिमाणतया प्रतीयते, यथा चन्द्रमण्डलं धरणीतोऽप्यधिकपरिमाणमल्पपरिमाणतया प्रत्यक्षमित्यर्थः। यच्च यथार्थत्वं निरूपितं यावज्जाति [5]विषयविशेषणकार्थकत्वमिति तत्रासम्भवमाह—**क्वचेति**। मैथिलाः।

---

१. साहसिक्यां भयहीनेन। २. साहसिक्यादारभ्यता। ३. केवला प्रमाते।
४. तावत् परिमाणग्रह इति क ख पुस्तके। ५. प्रत्येक देशकालसम्बन्धादिज्ञानस्य विषयः तावदेवार्थप्राप्तिकाले यज्ज्ञानीयार्थस्य विशेषणं तज्ज्ञानमित्यर्थः।

**दूरत्वात् तुहिनद्युतिविद्युदादिपरभागाग्रहणादवयविनं च तावत्परिमाणाग्रहणादल्प-परिमाणमुल्लिखत् प्रत्यक्षं प्रमात्वेन लोकप्रसिद्धमप्रमा स्यात्। क्व च लभ्यं देश-कालालोकादिव्यक्तिसहितजलादिज्ञानस्य समस्ततावदर्थप्रवृत्तिसामर्थ्योदाहरणम्, येन तत्प्रामाण्यं मन्यसे।**

**यदि च बाध्यार्थांशे बाधादबाध्येऽप्यंशे तद्बोधमिथ्यात्वं समर्थयसे, तदा यदर्थजातीयं बाध्यं तदर्थजातीयमबाध्यमपि मिथ्येति मन्यमाने किमुत्तरं ते स्यात्, अन्यत्र लोकप्रसिद्धप्रमोदाहरणत्यागात्।**

---

विद्यासागराश्च—वस्तुतस्तु बाध्यांशा धीरप्रमेति वदता सर्वथैव[१] अबाध्यत्वेन प्रमात्वं वाच्यं तच्चोदाहर्तुमशक्यमित्याशयेनैवेदं प्रकृतं सङ्गतम्। तत्र देशकाल-योरप्रत्यक्षत्वात् न तत्संयोगग्रहणे[२] प्रत्यक्षं समर्थम्। आलोकव्यक्तिः व्यावृत्ता कथ्यते व्यावृत्तिश्च न प्रत्यक्षा ततः परस्मिन्[३] देशे सालोकं जलादिविद्यते इत्यादि ज्ञानानां समस्ते तावत्यर्थे प्रवृत्तिसामर्थ्यस्योदाहरणं तत् क्वापि देशे काले वा सम्भावयितुं शक्यमित्यर्थः।

अयमाशयः—एतज्ज्ञानानां सर्वांशाबाध्यत्वं प्रवृत्तिसंवादे ग्राह्यं न चेत्तादृ-शज्ञानस्य विषये प्रवृत्तिसंवादः सम्भवति देशकालयोरप्रत्यक्षत्वेन प्रवृत्त्यविषय-त्वात्। आलोकव्यक्तेश्च तज्ज्ञानविषयीभूतायाः प्रवृत्तिकाले नष्टत्वात्। अतएव देशकालयोः प्रत्यक्षत्ववादिनामपि मते तयोरनुपादेयत्वात् प्रवृत्तिविषयता दूरापास्ता। यद् वा विद्युत्प्रदीपसलिलादिज्ञानस्य विषयीभूतानां क्षणिकानां प्रवृत्तिकाले विद्यमानत्वाभावात्। प्रवृत्तिविषयाणां चैषां प्रथमज्ञानागृहीतत्वात् न प्रवृत्ति[४] संवादेन सर्वांशाबाध्यत्वं ज्ञानस्य शक्यज्ञानमित्यर्थः। सर्वांशाबाधस्य प्रामाण्यप्रयोजकत्वे सर्वज्ञानानामप्रामाण्यापत्तेः सर्वज्ञानविषयाणां बाध्यत्वसम्भा-वना स्यादिति।

दूषणान्तरमाह—**यदि च बाध्यार्थांशे इति। अबाध्यमपीति।** रजतं सर्वज्ञाने बाध्यं शुक्तिज्ञाने बाध्यत्वादित्यपि स्यादिति। तर्हि किं तत्रोत्तरमिति चेत्, लोकसिद्धप्रमाणपरित्यागापत्तिरेव तत्रोत्तरम्। तच्च भवता नाशितमित्याह—**अन्यदिति।** लोकसिद्धप्रमाणपरित्यागादन्यन्नोत्तरमस्तीत्यर्थः। तस्माद् बाध्या-र्थांशापि धीः प्रमैवेति व्यर्थं सर्वेणेति विशेषणमिति स्थितम्। न देयं तर्हि विशेषणं भ्रमातिव्याप्तिस्त्वन्यथा वारणीयमिति शङ्कते—**अथेति।** येनार्थेन विशेषणा-भावेन, सादृश्यमनुभवस्य तत्रैव प्रमात्वमित्यत्र दोषमाह—**मैवमिति।**

---

१. सा वाधत्वेन। २. अप्रत्यक्षत्वात् प्रत्यक्षग्रहणे।
३. यस्मिन्देशे स लोकं। ४. प्रवृत्तिसर्वांशाबाध्यत्वम् इति क पुस्तके।

**अथोच्यते—प्रकाशमानेन रूपेण विशेषणतया यदर्थसाम्यमनुभवस्य तत्र प्रमात्वमिति विषयविशेषनियमेनैव प्रमात्वं लक्षणीयमित्येतदर्थमेव यथार्थविशेषणोपादानमिति । मैवम्, विशेष्यांशेऽप्यनुभूतिरेव प्रमा न स्यादिति ।**

**व्यवच्छेदकत्वम् विशेषणत्वमभिमतं धर्म्यपि च स्वसम्बन्धाद्धर्मं विशिनष्टीति नोक्तदोष इत्युक्तमेवेति चेन्न, विशिष्टे प्रमात्वाभावापत्तेः । अपि च एवं तर्हि रजतत्वादिकमपि व्यवच्छिनत्त्येव शुक्तिकाम्—या रजततया प्रकाशिता शुक्तिव्यक्तिः सेयमिति ।**

**ननु साक्षाद्विशेषणत्वं विवक्षितम्, रजतत्व तु ज्ञानद्वारा शुक्तिविशेषणमिति नातिप्रसङ्गः । मैवम्, तर्हि 'दीर्घदण्डः पुरुषः' इत्यादौ ह्रस्वदण्डादिभ्यो वैलक्षण्ये विशेष्यस्यानुभूयमाने अनुभूतेर्न प्रमात्वं स्यात्, दीर्घत्वादेर्दण्डादिद्वारा विशेषणत्वादिति । ज्ञानरूपद्वारानपेक्षतया विशेषणत्वमिष्टमिति चेन्न, 'साक्षात्कृत' इत्याद्यवगमानामप्रमात्वापातात् ।**

---

प्रमेयोऽभिधेय इत्यत्राव्याप्तौ[1] सत्यामव्याप्त्यन्तरमाह—**विशिष्टे** इति । रूपवान् घट इति यद्विशिष्टं प्रतीयते तस्य विशेषणत्वाभावात् तत्राप्रमात्वापात इत्यर्थः । नहि विशिष्टे विशिष्टं विशेषणं स्वस्य स्वाव्यवर्तकत्वात् विशेषणविशेष्यतत्सम्बन्धानां विशिष्टतायामपि अंशतः स्ववृत्त्यापत्तेः । न च गौरिति ज्ञाने गोत्वमिव गौरपि गोत्वस्य विशेषणम्, अन्यथा सर्वज्ञानानां प्रकारांशे निर्विकल्पकत्वापत्तिरिति वाच्यम् । तथा सति सुतरां गवांशे गोरव्यावर्तकतया अव्याप्त्यापत्तेः । अतिव्याप्तिमाह—**अपि चेति** ।

ननु रजतत्वं शुक्ताववर्तमानं कथं [2]तद्व्यवच्छेदकमित्याशङ्क्य शुक्तेर्व्यवच्छेदिका या प्रतीतिः तद्व्यवच्छेदकतयेत्यनुभववलमालक्ष्याह—**रजततया प्रकाशितेति** । दीर्घदण्डः पुरुष इत्यादावादिपदेन रक्तपटो मस्करी कृष्णाजिनो ब्राह्मणब्रह्मचारीत्यनयोः परिग्रहः ।

नन्वत्र दीर्घत्वादिकं न पुरुषस्य व्यवच्छेदकं किन्तु दण्डः, दण्डादिकन्तु पुरुषस्य साक्षादेव विशेषकमित्याशङ्क्याह—**ह्रस्वदण्डादिभ्य** इति । अयं भावः । यस्य पुरुषस्य ह्रस्वदण्डादिः ततो व्यवच्छेद इह प्रतीयते नतु दण्डरहितमात्रात् ततः दीर्घत्वादेरपि अस्त्येव विशेषकत्वं तथाच दीर्घत्वांशप्रमायामव्याप्तिरेव । **दण्डादिद्वारेति** । दण्डस्य विशेषणीभूयेत्यर्थः । द्वारत्वस्य तज्जन्यत्वे सति तज्जन्यजनकत्वात्मनो बाधात् । **ज्ञानरूपद्वारानपेक्षमिति**[3] । ज्ञानाविशेषणीभूतं सद् व्यावर्तक-

---

१. व्याप्तौ सत्यां व्याप्त्यन्तरमाह क ख पुस्तके ।

२. कथं न तद्व्यवच्छेदकम् ।

३. ज्ञानरूपद्वारानपेक्षतयेति मूल पाठः ।

**तज्ज्ञानप्रकाशितरूपेण विशेषणत्वमिष्टमिति तु दूरं तुच्छम्, रूपादेः समवायेन ज्ञानाविशेषकत्वात् ।**

**अर्थविशेषणत्वेऽयं नियमो यत्तज्ज्ञानप्रकाशितेन रूपेणेति, न तु ज्ञानेऽपीति चेन्न तज्ज्ञानव्यक्तेरन्यत्र असम्भवेनासाधारण्याद् अव्यापकत्वादित्यलम् ।**

## सम्यक्परिच्छित्तिप्रमात्वखण्डनम्

**सम्यक् परिच्छेदः प्रमेत्यपि न युक्तम् । न खलु सम्यक्त्वं तत्त्वविषयता, याथार्थ्यं वा सम्भवति, उक्तदोषात् ।**

**ननु सामस्त्यं सम्यक्त्वमिष्टम् । अभिधीयते हि लोके—'न मया सम्यक् दृष्टम्, सामान्याकारेण तु उपलब्धमि'मि । तदिह समीचोऽर्थस्य परिच्छेदः सम्यक् परिच्छेदः, सम्यगर्थविषयत्वाद्वा सम्यक्शब्दः परिच्छेदसमानाधिकरण एवायमिति । मैवम्, सामस्त्यमर्थस्य किं सर्वावयवसहितत्वम् ? अथवा सर्वधर्मसहितत्वम् ? नाद्यः, अनवयवपदार्थपरिच्छेदस्येव सावयवपदार्थपरिच्छेदस्यापि मध्यभागाद्यविषयस्य अप्रमात्वापातात् । नापि द्वितीयः, असर्ववित्परिच्छित्तीनां सर्वासामप्रमात्वापत्तेः ।**

---

मित्यर्थः । रजतत्वं तु ज्ञाने विशेषणीभूय तथा नतु दण्डत्वादिकमिति भावः । ज्ञानप्रकाशितेति । यस्मिन् ज्ञाने योऽर्थो यथा प्रकाशते, तेन रूपेण विशेषणत्वमव्यवधानार्थो नतु ज्ञानानन्तरितत्वमित्यर्थः ।

रजतत्वादिकं समवायितया पुरोवर्तिनि प्रकाशते नतु तेन रूपेण पुरोवर्तिनो विशेषणमिति नातिव्याप्तिरित्यर्थः ।

**दूरं तुच्छमिति** । अति तुच्छमित्यर्थः । ज्ञानप्रकाशित[1]रूपेण विशेषणं ज्ञानं प्रति अर्थं प्रति, वा । आद्ये यद्यपि भ्रमे नातिव्याप्तिः, ज्ञाने रजतत्वस्य समवायित्वाभावात् तथापि रूपवान् घट इत्यत्राव्याप्तिरित्याह- **रूपादेरिति** । आदि पदेन घटत्वस्य परिग्रहः । अन्त्यमालम्ब्यशङ्कते—**अथेति** ज्ञानप्रकाशितरूपेणेत्युक्त्या परम्परासम्बन्धेन विशेषणताया निरासान्नातिव्याप्तिः । ननु **ज्ञानेऽपीति** । भवदुक्ताव्याप्तिरेवेति भावः । यदि चार्थं प्रतीत्यावश्यकं तदा वैयर्थ्याच्चेतिभावः । तद्=ज्ञानव्यक्तिरिति । यस्मिन्[2] ज्ञाने इति ज्ञानव्यक्तिघटितमिदं लक्षणं ततश्च घटोऽयमिति ज्ञानप्रकाशितरूपस्य घटत्वस्य पटोऽयमिति ज्ञानस्य विषयविशेषणत्वाभावे नाव्याप्त्यापत्तिरित्याशयः[3] । असाधारण्यात्=व्यावृत्तत्वादित्यर्थः ।

---

१. ज्ञानप्रकाशितप्रकारेणेत्यर्थः ।  २. यस्मिन् इति पाठो नास्ति ।

३. नाव्याप्त्यापत्तेः ।

अथ मन्यसे—सम्यक्शब्दः सविशेषार्थः। यद्यपि लोकेऽभिधीयते 'न मया सम्यक् दृष्टम्, तस्यापि न मया विशेषतो दृष्टमित्यर्थः। तस्माद्विशेषसहितधर्मिपरिच्छित्तिः प्रमेत्युक्तं भवति। विभ्रमादयो हि विशेषमपश्यतो जायन्त इति तद्व्यावृत्त्यर्थं विशेषणमिदम्। विशेषाणां च सर्वेषां विशेषान्तरानभ्युपगमेऽपि स्वरूपमेव केषाञ्चिद्विशेष इति।

नैतद्युक्तम्, विशेषपदेन विशेषमात्राभिधाने रजतत्वादिना विशेषेण सहैव शुक्तिव्यक्त्यादेर्भ्रमेणावगाहनात् तस्यापि प्रमात्वं स्यात्। प्रत्यर्थं व्यावृत्ताकाराणां च विशेषाणामुपादाने अननुगमप्रसङ्गात्, सामान्यतश्चातिप्रसङ्गाद्, उभयथाऽप्यसङ्गततापत्तेः। विशेषस्य च भवतु स्वरूपमेव विशेषः, तथाऽप्यभेदादेव विशेषसहितत्वं नास्तीत्यव्याप्तेरपरिहारात्।

यत्तु कश्चिदवोचद्—विशेषशब्देन तेऽभिधीयन्ते यददर्शने भ्रमसंशया-

---

यदि तु यच्छब्दघटितं न लक्षणं किन्तु ज्ञानप्रकाशितविशेषणकत्वं तदा रजतत्वप्रकारकज्ञानविषयीभूता या शुक्तिव्यक्तिः सेयमित्येवं प्रकारेण रजतत्वस्यापि शुक्तिविशेषणत्वादतिव्याप्तिः ज्ञानप्रकाशितेत्यत्र तत्काले ज्ञानप्रकाशितत्वोक्तावव्याप्तिः अन्यथा तु व्यर्थत्वं ज्ञानाप्रकाशितस्य भावात्। किञ्च तज्ज्ञानप्रकाशितरूपेणेत्यत्र रूपपदस्य प्रकारपरत्वे निर्विकल्पकेऽव्याप्तिः स्वरूपपरत्वे घटोऽयमिति ज्ञानविषयस्य घटस्य घटेऽव्यावर्तकत्वादित्यादि दूषणमस्त्येवेत्याशयेन उपसंहरति इत्यलम् इति द्वितीयस्य प्रमालक्षणस्य खण्डनम्।

कुसुमाञ्जलौ न्यायाचार्यैरुक्तं लक्षणमनुवदति। सम्यगिति।[1] **तस्यापीत्यतः** पूर्वमिति शब्दोऽध्याहार्यः। **केषाञ्चिदिति**। अन्त्यविशेषाणामित्यर्थः। यत्र यो वर्तते स इत्यर्थः तथाच नातिव्याप्तिरितिभावः। विशेषाक्रान्तपरत्वं तर्हि अस्तु इत्याशङ्क्योक्तमतिप्रसङ्गं स्मारयति—**अतिप्रसङ्गादिति**।

यद्वा विशेषमात्राभिधान इत्यत्र विद्यमानत्वात्मकविशेषणरहितपरं विशेषमात्रपरं प्रत्यर्थव्यावृत्तेत्यत्र तत्तद्विशेषपरं सामान्यतश्चेत्यत्र विशेषत्वाक्रान्तपरमतो न पौनरुक्त्यम्। उक्तमेव संकलय्य स्मारयति—**उभयथापीति**। सामान्यतो विशेषतो वाऽभिधाने अतिव्याप्त्यव्याप्त्योः प्रसङ्गादित्यर्थः।

विद्यासागरस्तु कतरः पक्षोऽत्रोपादेय इति चेन्नोभयथाऽपीति व्याचष्टे। **अभेदादिति**। साहित्यस्य भेदगर्भत्वादिति भावः। विशेषपरिच्छितिः प्रमेत्युच्यते इति चेत्तर्हि विशिष्टप्रमायामव्याप्तिः सविशेषपरिच्छितिश्चेदस्त्वेवं तथापि विशेष्यप्रमायामव्याप्तिः। विशेषपदस्य तत्तद्विशेषपरत्वेऽननुगमताऽस्त्येव। **यद्दर्शनेति**।

---

१. मितिरिति।

**वकाशः, यद्दर्शने च बाधाबाधव्यवस्था तदनभ्युपगमे तत्त्वातत्त्वविभागो न स्यात् । भवितव्यञ्च तेन, अन्यथा व्याघातादिति ।**

**तदयुक्तम्, न तावदेवंविधो विशेषोऽभिधातुं शक्यो यदवगमस्य न भ्रमत्वादिसम्भवः, स्वप्नदृशः सर्वविशेषोपलम्भात् । न च व्याघातदण्डभयमात्रा-**

---

भ्रमस्य बाधे पुरुषोऽयं न स्थाणुरेककोटौ असंशयस्य व्यवस्था=एक कोटि-निश्चयः पुरुष एवेत्याकारः । अथ ग्रहणस्मरणाविवेकातिरेकेण भ्रमसंशयौ न स्तः कुतः तवानुक्तरूपे । विशेष इत्यत आह—**तदनभ्युपगम इति** । भ्रमादिगोचरोऽ-तत्त्वं तदितरस्तत्त्वमिति स्थितिः, सैव न स्याद् भ्रमाद्यनभ्युपगमे, भ्रमाद्यसाधारणत्वे नहि अविवेकः सिद्धयति । तदभावे कस्य कारणत्वेनाभावः सिद्धचेत्[१] । नवा अविवेकस्याभावस्य साधारणकारणत्वं सिध्यति तथाच इयं व्यवस्था नोपपद्येत ।

यद्वा प्रमाविषयत्वतद्विषयत्वयोरेव[२] तत्त्वातत्त्वपदार्थत्वादुक्तविशेषानभ्युपगमे तद्व्यवस्था न स्यादिति । तथाभूतविशेषाभ्युपगमे तत्त्वातत्त्वव्यवस्थैव मानम् । यद् वा । भ्रमबाधौ न स्तः इति कुतः तत्त्वावस्थापकतया विशेषसिद्धिरित्याशङ्क्याह—**तदनभ्युपगम** इति । भ्रमबाधयोरनभ्युपगमे बाध्यमतत्त्वं तत्त्वमबाध्यमिति विभागो न भवेदित्यर्थः । माभूदयं विभाग इत्याशङ्काचाह—**भवितव्यञ्चेति** । तत्त्वातत्त्वविभागोऽस्तीति । मदीयज्ञानस्य तत्त्वविषयत्वे विभागसिद्धिः अतत्त्व-विषयत्वे मदीयज्ञानविषयोऽतत्त्वं विभागो नास्तीति तावकीनज्ञानविषयस्तत्त्वमिति तत्सिद्धिरित्यर्थः । **व्याघातादिति** । तत्त्वातत्त्वविभागो नास्तीति वदतः किं सर्वज्ञानं तत्त्वं किमतत्त्वम्[३], आद्ये परपक्षानुवादतः परपक्षसिद्धौ तत्खण्डनानु-पपत्तिः, अननुवादे च सुतराम् । नहि अननूद्य खण्डनं शक्यम् । द्वितीये त्वद्वचनस्य अतत्त्वविषयतया अनवधेयतापत्तिः[४] ।

किञ्च तवानिश्चयवतः प्रवृत्तिव्याघातः, ततश्च जीवनमपि न स्यादिति च । **स्वप्नदृश** इति । नहि स्वप्नदृशः सामान्यस्य भानमस्ति असन्निकृष्टत्वात् । नवा विशेषसहिताविषयकं स्वप्न उपलभ्यते इत्यर्थः । तर्हि भ्रमविरोधित्वेन विशेषो न निर्वाच्यः किन्तु प्रकारान्तरेणैवेति चेन्न । तस्य निर्वक्तुमशक्यस्य मां प्रति बोधना-शक्तेरिति ।

अथ दुर्वचस्यापि विशेषस्य व्याघातदण्डभयादवश्यमभ्युपेयता तत्राह—**नचेति** । ननु स्वप्ने ये भासन्ते ते न विशेषा भ्रमाविरोधित्वात्, अनुभूयन्ते हि ते स्वप्ने, किन्तु जाग्रति ये भासन्ते त एव विशेषा स्वप्नविरोधित्वादित्याशङ्क्य

---

१. सिद्धचेत वा ।
२. प्रमाविषयत्व त्वदविषयत्व ।
३. तत्रातत्त्वम् ।
४. अनधेयतापत्तिः ।

**दसौ उपपादयितुमशक्योऽपि अभ्युपगन्तव्य इति युक्तम्, तदुपदर्शनाशक्यत्वेन व्याघातपरिहार एव कश्चिदन्यो निर्वक्तुमशक्योऽस्तीत्येव तदा किं न व्यवस्थाप्यते ?**

**न हि परिदृश्यमानपदार्थगोचरं तदस्ति किञ्चिदनुभूयमानं यत्स्वप्ने वा वाक्याभासे वा प्रतिपत्तुमशक्यमिति प्रतिपत्त्यारूढतया येयमप्रतीयमानकल्पना, ततो वरमनुपलभ्यमानस्य व्याघातपरिहारस्यैव कल्पना भद्रा । बहुशश्च व्याघातोद्भावनविभीषिकामुन्मूलयिष्यामः ।**

**ननु न ब्रूमो विशेषेण सहोपलम्भो विशेषसहितोपलम्भ इति । किं नाम ?**

---

स्वप्नेऽपि जाग्रदवस्थाप्रतीता विशेषा एव भासन्ते ततश्च न तेषां भ्रमविरोधित्वमित्याह—**नहीति** । ननु अन्य एव हि ते स्वप्ने, नहि जाग्रदवस्थानुभूतानां स्वाप्नभानं सम्भवति अन्यथा जाग्रत्यपि स्वप्नापत्तिर्विषयाणामविशेषादिति चेन्न । अन्यथाख्यातिवादिनस्तव तथा वक्तुमशक्यत्वात्, क्वचित्प्रमितानामेव क्वचिदारोपात्, तथा च तेषां प्रमाविषयाणामेव स्वप्ने भानमित्यैकप्रकारतया विशेषविषयता दुर्वारा ।

अनिर्वचनीया एव स्वप्ने विषयाः, असन्त एव वेति मते विशेषनिरुक्तिः शक्यैवेत्याशङ्क्याह—**वाक्याभासे वेति** । नदीतीरे पञ्चफलानि सन्तीति वाक्याभासादाप्तवाक्यसमानाकारबोधोऽनुभूयते ईषदपि वैलक्षण्याननुभवात् । नहि नदीतीरत्वफलत्वानि [1]सामान्यान्यानि येन तद्विषयको बोधो (न) विशेषः आप्तवाक्यस्यापि तादृशस्य अप्रामाण्यापातादिति । तथापि व्याघातपरिहारः अप्रतीयमानः कल्पितविशेषो वा तादृश इत्यत्र किं विनिगमकमित्यत्र विनिगमकमाह—**प्रतिपत्त्यारूढतयेति** । अप्रतीयमानानां विशेषाणां कल्पना प्रतिपत्त्यारूढत्वेन ततो वरं व्याघातपरिहारस्य कल्पनेति सम्बन्धः ।

अयं भावः—कल्प्यमाना विशेषा अनुपलभ्यमाना अपि प्रतीत्यारूढत्वेन कल्प्या अन्यथा तदनुभवाद् भ्रान्तिबाधानुपपत्तेः । अतोऽनुपलभ्यमाना बुद्ध्यारूढा इति व्याघाते व्याघातपरिहारकल्पनायां तु नैवं कश्चिद्दोषोऽस्ति इति । अस्य परिहारस्य सत्त्वे द्वैतापत्तिः न चेद् व्याघातो निष्प्रत्यूहकत्वादित्याशङ्क्याह—**बहुशश्चेति** । **उन्मीलयिष्याम** इति । तुरीयपरिच्छेदे इति भावः ।

विषये विशेषसाहित्यमपेक्षितं ननु ज्ञाने न च शुक्त्यादिकं रजतत्वादिविशेषसहितमिति नातिव्याप्तिरिति **शङ्कते**—

---

१. सामान्यन्यानि ।

**विशेषेण सहितस्य पदार्थस्योपलम्भः। तथा च न शुक्तौ रजतत्वं विशेषोऽस्ति। तत्कथं रजतभ्रमेऽपि तत्प्रसङ्ग इति ?**

**मैवम्; उक्तदोषेणैव निरस्तत्वात्। यदि हि विशेषस्य सामान्यतोऽभिधानम्, तदा पुरोवर्तित्वादेः सत्वान्न प्रसङ्गनिवारणम्। विशेषेण तदभिधाने तु अननुगम इति।**

**'बाधाबाधव्यवस्थाहेतुरस्ति विशेषः' इति पक्षं यस्तु जडतरो न जहाति, स 'आप्तानाप्तवाक्याभ्यां नदीतीरे पञ्च फलानि सन्तीत्येवंरूपाभ्यां प्रतिपाद्यमानेऽर्थे स्थितं किं विशेषमेकत्र पश्यसि, यमपरत्र न पश्यसी'ति पृष्ट्वा प्रतिबोधनीयः। तथाप्यनुपजातप्रबोधस्तु जडतमः कश्चिद्यदि स्यात्, स एवं प्रबोध्यः—'ये ते विशेषान्तरप्रवाहस्वीकारेऽनन्तविशेषापत्तिभयात् त्वया स्वत एव विशेषरूपा इति स्वीकृताः, तेषां स्वरूपं तावत् परस्परव्यावृत्तम्, अतोऽनुगतैकरूपाभावाद् अव्यापकत्वं स्यादि'ति।**

**बाधव्यवस्थाहेतुत्वादेव अनुगतिरिति चेन्न, क्वाचित्कबाधव्यवस्थाहेतोर्भ्रमेऽपि प्रकाशात्। तत्र तस्येति चेन्न; व्यावृत्तेः। बाधस्य च तद्विपरीतार्थप्रमात्वेन तदर्थाननुगमात्, प्रमायाश्च अद्याप्यव्यवस्थापनादिति।**

**शङ्कान्तराणि चात्र अतः पराणि याथार्थ्यविशेषणदूषणदूषितान्येव उपनिपतन्तीति द्विरभिधानभयान्नोक्तानि।**

---

**नन्विति।** विशेषेण सहोपलम्भे विशेष सहोपलम्भः। इति पदमध्याहार्यं[1] वाक्यार्थकर्मकत्वात्। अत्र शुक्तेरपि शुक्तित्वविशेषसाहित्यादव्याप्तिरित्याशङ्क्याह—**नचेति**। तथा प्रतीयमानविशेषसहितत्वं विवक्षितमितिभावः **उक्तदोषेणेति**। प्रथमविवक्षायामुक्तस्य दोषस्यात्रापि सत्त्वात् इत्यर्थः। उक्तदोषं विशदयति—**यदीति**। एकाकारज्ञानगोचरयोरेकस्य प्रमारूपतया तत्त्वविषयत्वम् अपरस्याप्रमारूपतया अतत्त्वविषयत्वमिति विभागदर्शनादस्ति कश्चित् विशेषः (स[2] स एव लक्षणे प्रवेश्य इत्याशयः। **कं विशेषमिति**। तथा चानुपलब्धिबाधितं विशेषस्वरूपमितिभावः। कथं तर्हि तत्त्वातत्त्वविषयत्वं विशेषः) कार्ययोरिति चेत्। वाक्यस्याप्तोक्तत्वानाप्तोक्तत्वाभ्यां नतु विशेषदर्शनभावाभावाभ्याम्। न च तयोरेव विशेषपदेनाभिधानं, प्रत्यक्षप्रमायामव्याप्तिः। न च तदुभयं विषयनिष्ठं किन्तु कारणनिष्ठमेव। अत एवोक्तं—**प्रतिपाद्यमान** इति। उक्तखण्डनाविवेचकत्वं जडतरत्वम्। असकृदुक्ताविवेचकत्त्वं जडतमत्वम्। जडतमत्वेनाप्यसौ[3] नोपेक्ष्यः किन्तु प्रकारान्तरेण बोधनीय इत्याह—**स** इति। प्रमासिद्धौ तद्विपरीतार्थकप्रमात्मकबाधसिद्धिः सिद्धे च बाधे बाधव्यव-

---

१. क्वचित् पुस्तके इतिशब्द घटितः पाठोऽस्त्येव।

२. ( कोष्ठान्तर्गतः पाठः क पुस्तके त्रुटितः। ३. जडतमत्वेनाप्यसौपेक्ष्यः क ख पुस्तके।

**किञ्च—तर्कज्ञानमाहार्यौ च संशयविपर्ययौ परिदृश्यमान एव विशेषे भवन्तीति तैरतिप्रसङ्गः स्यात्। न चाऽऽहार्ययौ तौ नाभ्युपगन्तव्याविति युक्तम्। विप्रलम्भकस्य वाक्यप्रयोगमूलतया आहार्यभ्रमस्य ज्ञाततत्त्वस्य च गुरोः शिष्यप्रबोधार्थं विचारं प्रवर्तयतश्च आहार्यसंशयानां भवत एव शास्त्रेऽनुमतत्वात्।**

**परिच्छेदशब्दश्च अनुभूतिपर्यायोऽनुभूतिदूषणं नातिक्रामतीत्यलम्।**

## अव्यभिचारिज्ञानप्रमात्वखण्डनम्

**नापि अव्यभिचार्यनुभवः प्रमेति युक्तम्, अव्यभिचारिपदस्य यदि तत्त्वविषयाद्यर्थत्वम्, तदा दूषणान्युक्तान्येवानुवर्तन्ते।**

**अथैवमुच्यते अव्यभिचारित्वमर्थाविनाभूतत्वम्, तदा प्रष्टव्यं कोऽस्यार्थः—**

---

स्थाहेतुविशेषसहितोपलम्भरूपायाः प्रमायाः सिद्धिरित्याशयेनाह—**प्रमायाश्चेति**। सम्यक्त्वं विशेषनिष्ठप्रकारकत्वं विशेष्यनिष्ठविषयत्वं भ्रमभिन्नं वा इत्येव लक्षणे शङ्कान्तराणि तानि याथार्थ्ये दूषितान्येवेति न पुनरुट्टङ्कितानि।

तत्र आद्यं मध्यञ्च भ्रमे धर्म्यंशे तादृशप्रकारवत्वादतिव्याप्तं तस्य लक्ष्यत्वे परिच्छितिरित्येवास्तु। विशेष्यत्वं प्रकारत्वञ्च नैकमस्तीति तद्विशेष्यत्वघटितलक्षणनिर्वचनेऽतिव्याप्तिः। तृतीयं तु धर्म्यंशे प्रमायामव्यापकं, भ्रमत्वस्य तत्पदार्थघटितस्य भेदोऽपरभ्रमेऽपि इत्यतिव्याप्तिः। यावद् धूमानामस्मादृशैराकलयितुमशक्यतया[१] तावत्प्रतियोगिकानां तावद्भेदानां लक्षणे [२]प्रवेशोऽसम्भवीत्यादयो दोषाः याथार्थ्यलक्षणेऽपि निविष्टाः अत्राप्यापतन्ति इति। विशेषानुभूतिः प्रमेति विवक्षायामतिव्याप्तिरपि दोष इत्याह—**किञ्चेत्यादिना**।

**ताविति**। संशयविपर्ययौ। नदीतीरे पञ्चफलानि सन्तीति वाक्यं कदाचिद् विप्रलम्भमूलं[३] भवति। विप्रलम्भश्च अन्यथा संविदानस्य अन्यथा विरोधप्रतिपिपादयिषा। तथा च तद्वाक्यवक्तुर्ज्ञानेऽतिव्याप्तिमाह—**विप्रलम्भकस्य वाक्यप्रयोगेति**। वाक्यस्यानुपूर्वीज्ञानादेव श्रुतस्यारोपोपपत्तेर्विप्रलम्भस्याकारणत्वेऽपि तत्पूर्वकत्वेन मूलत्वोक्तिरविरुद्धा[४]। आहार्यसंशयानामित्युपलक्षणम् आहार्यपूर्वपक्षभ्रमस्यापि विचारं प्रवर्तयितुमिष्टत्वात्। **नातिक्रामतीति**। अनुभूतित्वस्य जातेः उपाधेर्वा खण्डितत्वादितिभावः।

चतुर्थप्रमाणलक्षणे प्रत्यक्षसूत्रेऽव्यभिचारिपदोक्तं खण्डयति—**नापीति**। तत्त्वविषयत्वादीत्यादिपदेन याथार्थ्यसम्यक्त्वयोः परिग्रहः। शिंशपात्वस्य कक्षत्वा-

---

१. राकस्तपितुम्। २. प्रवेशः सम्भवी।

३. विपुलं भवति विप्रलम्भश्च अन्यथा संविदानस्य अन्यथा विरोधयिषा।

४. मूलेत्वोक्तिरविरुद्धा।

**किं यदैवार्थस्तदैव ज्ञानम् ? उत यत्रार्थस्तत्रैव देशे ज्ञानम् ? अथ यादृगर्थस्तादृगेव ज्ञानं यत्तत्प्रमितिरिति ?**

**नाद्यः, अतीतानागतानुमित्याद्यव्यापनात् । न च द्वितीयः, ज्ञानसमानदेशार्थप्रमितीनामव्यापनात् । ज्ञानसमानदेशमर्थमन्यत्र आरोपयतोऽप्यनुभवस्य प्रमात्वापत्तेः । नापि तृतीयः, ज्ञानार्थभेदवादे सर्वाकारेण तत्साम्यानुपपत्तेः । अभेदवादे तु भ्रमस्याऽपि तदभ्युपगन्तव्यत्वप्रसङ्गेन विशेषणवैयर्थ्यापातात् ।**

**तैस्तैश्च विशेषैः सादृश्यस्य विवक्षितत्वे यथार्थताप्रस्तावोक्तान्येव दूषणानि आवर्तन्त इति ।**

---

व्यभिचारिणः तत्तादात्म्यं दृष्टमित्यवष्टम्भेनाह—**अथ यादृगर्थस्तादृगेवज्ञानमिति ।**

यद्यपि नेयमव्यभिचारिनिरुक्तिः तथापि यदि तथा विवक्ष्यते तदा एवमिति । वस्तुतस्तादात्म्यसम्बन्धेनाविनाभावे ज्ञानस्य बाधित इति ज्ञानमर्थस्य सदृशरूपेणार्थात्मकमित्यर्थः । भवति हि स्वसदृशयोरिदमेतदात्मकम् । यथा वा सिंहत्वं माणवकस्य गौणं रूपं तथा ज्ञानमर्थात्मकमेवार्थस्य गौणं रूपम् । यदर्थसदृशत्वेन तदात्मकमेवेत्यर्थः ।

**ज्ञानसमानदेशार्थप्रमितीनामिति ।** घटप्रत्यक्षवह्न्यनुमिति प्रमादीनामित्यर्थः । आत्मसमवेतसुखादिप्रमायां नाव्याप्तिः सम्भवतीति ज्ञानसमानदेशेत्याह । ज्ञानसमानदेशमर्थमित्यात्मत्वमित्यर्थः । अन्यत्र देहादौ आरोपयतः अहं मनुष्य इत्येवं भ्राम्यतः तथाच देहात्मभ्रमेऽतिव्याप्तिरित्यर्थः । **सर्वाकारेणेति ।** घटत्वज्ञानत्वद्रव्यत्वगुणत्वादीनां महावैलक्षण्यात् न सर्वात्मना साम्यमित्यर्थः । **ज्ञानात्मनोरभेद** इति । योगाचारो हि ज्ञानमेव बाह्याकारेण भासते इति वदति तन्मत इत्यर्थः । **अभ्युपगन्तव्यत्वप्रसङ्गादिति ।** ज्ञानभिन्नस्यार्थस्यासत्त्वात् तद्भानानुपपत्तेः ज्ञानमेव बहिर्वदवभासते इति भ्रमेऽपि अर्थाभेदे सर्वसाम्यस्य अभ्युपगन्तव्यतया अतिव्याप्त्यापत्तिरिति तद्वारणाय विशेषणमसमर्थमित्यर्थः[१] । प्रकाशमानरूपेण अर्थसाम्यमनुभवस्य विशेषणतावति पक्षो यद्याश्रीयते तदाह—**तैस्तैरिति ।** प्रकाशमानतया प्रसिद्धैरित्यर्थः । विशेषमात्राभिधाने भ्रमेऽप्यतिव्याप्तिः विशेषव्यक्त्यभिधानेऽननुगम इत्यादि याथार्थ्यखण्डनानि प्रसज्यन्ते इत्यर्थः । चकारात् सत्त्वप्रमेयत्वादिना सादृश्याद्भ्रमस्यापीत्यतिव्याप्तिरिति सूचितम् ।

ननु व्यभिचारिणोऽर्थस्य अनुभवः प्रमेत्येव लक्षणवाक्यार्थः । अथ अव्यभिचारस्तु यत्र ज्ञानं तत्रार्थः इति चेन्न । धर्मिणि अप्रमात्वापत्तेः । अर्थपदस्य यत्किञ्चिदर्थपरत्वे भ्रमे[२]ऽतिव्याप्तिः तदर्थपरत्वेऽननुगमः ।

---

१. यथार्थेति विशेषणमिति भावः । २. प्रमे ।

## अविसंवाद्यनुभवप्रमात्वखण्डनम्

अविसंवाद्यनुभवः प्रमेत्यपि न युक्तम्, अविसंवादित्वं हि ज्ञानान्तरेण तथैवोल्लिख्यमानार्थत्वं वा ? ज्ञानान्तरेण विपरीततया अप्रतीयमानार्थत्वं वा ? प्रतीयमानव्याप्यविषयत्वं वा ? अन्यदेव वा किञ्चित् ?

न प्रथमः, धारावाहिनो भ्रमस्य प्रमात्वप्रसङ्गात्। न च प्रमाभूतं ज्ञानान्तरं विवक्षितमिति वाच्यम्, प्रमाया एव लक्ष्यमाणत्वात्।

नापि द्वितीयः, अजातबाधभ्रमव्यापनात्, स्वस्थदशोत्पन्नस्य शुक्लशङ्खज्ञानादेः दुष्टेन्द्रियदशोत्पन्नतत्पीतिमज्ञानाद्युल्लिखितविषयवैपरीत्यस्य अप्रमात्वप्रसङ्गाच्च। प्रमित्यानुल्लिखितार्थवैपरीत्यभावविक्षायां तु प्रमाया एव लक्ष्यमाणत्वादित्युक्तमनुषजति।

अदुष्टकरणकज्ञानेनाबाधितत्वं विवक्षितमिति चेत्, तदेव तर्हि प्रमालक्षणमस्तु। किञ्च—दुष्टत्वनिरूपणमन्तरेण अदुष्टत्वस्य दुर्निरूपत्वात्।

ननु किमेतावता ? दुष्टत्वं विपरीतज्ञानप्रयोजकस्तद्धेतुगतो विशेष इति सुवचमेवेति। न, विपरीतपदव्यवच्छेद्याप्रमितौ तदुपादानवैयर्थ्यात्। तदनुपादाने

---

प्रमायाः लक्षणं पञ्चमं बौद्धनिरुक्तं दूषयति—**अविसंवादीति**। विसंवादः संवादराहित्यं तदभावः संवाद इत्याशयेनाह—**ज्ञानान्तरेणेति**। यदि विसंवादो बाधः तद्धीनत्वमविसंवादत्वं तदा ज्ञानान्तरेण विपरीततया प्रतीयमानार्थत्वं पूर्वप्रतीतरूपाद् रूपान्तरेणाप्रतीयमानार्थत्वमित्यर्थः। प्रतीयमानव्याप्यविषयत्वं संवाद इति केषाञ्चिन्मतम्। प्रतीयमानो व्याप्यो यस्य व्यापकस्य तद्विषयत्वं प्रतीयमानो यो व्याप्यस्तद्विषयत्वमितिवार्थः। अर्थक्रियाकारिवस्तुविषयत्वं संवाद इति।

पक्षान्तरमाह—**अन्यदेवेति**।

**अजातबाधेति**। यद्यपि पुरुषान्तरेण विपरीततया प्रतीयमानत्वं तत्राप्यस्ति तथापि यत्र कस्यापि न बाधस्तत्रातिव्याप्तिः। **शङ्खज्ञानादेरिति**[1]। आदिपदेन स्थाणौ स्थाणुरिति बुद्धेर्दुष्टदशोत्पन्नपुरुषज्ञानबोधितविपरीतत्वेन[2] अप्रमात्वप्रसङ्गः परिगृह्यते। **दुष्टत्वमिति**। विशेष इत्युक्ते कारणसमवेतत्वरूपकार्यगतविशेषेऽतिव्याप्तिरिति हेतुपदम्। तावन्मात्रे कारणगतकार्यजननशक्तावतिव्याप्तिरिति। तत्पदम् विपरीतज्ञानपरम्। तावदपि चक्षुष्येव गतमतो ज्ञानप्रयोजकमिति। तच्च न ज्ञानप्रयोजकं व्यभिचारात् तथापि गुणेऽतिव्याप्तिरिति विपरीतपदम्। विपरीतज्ञानप्रयोजकमितीन्द्रियस्वरूपे अतिव्याप्तमिति[3] तद्धेतुगत इति विशेषणम्। तावदपि एकदेशकालावस्थानात्मके मेलनेऽतिव्याप्तमिति विशेषपदम्[4]।

---

१. शङ्खज्ञानादेवेति। २, बोधितार्थत्वेनेतिशेषः। ३. अतिव्याप्तिः। ४. विशेषणपदम्।

च ज्ञानजनकत्वमात्रं दुष्टत्वमिति अदुष्टकरणजं ज्ञानं नास्त्येवेति स्यात् ।

विपरीतपदव्यवच्छेद्या प्रमैवेति चेन्न, तस्या एव लक्ष्यमाणत्वात् । तदीयस्वरूपस्येतरव्यावृत्तस्य अद्याप्यप्रतीतेः कुतो व्यवच्छेदः प्रत्येतव्य इति व्यवच्छिन्नतज्ज्ञानमन्तरेण व्यवच्छिन्नतज्ज्ञानमशक्यमिति आत्माश्रयान्योन्याश्रयौ अनवस्था वा ।

**एकोऽनेकविशेषेऽर्थे विशेषो यत्र लक्ष्यते ।**
**तद्विशेषान्तरान्यत्वाद् दोषस्तत्रैव धावति ।। ३१ ।।**

---

नच मेलनं विशेषः सकलकारणसाधारणत्वात् **अदुष्टकारणजमिति** । तथा च प्रमा न स्यादिति गुणेऽपि दोषत्वमतिप्रसक्तमितिभावः । लक्षणप्रतीतेः प्राक् प्रमायाः अप्रतीतेस्तद्धर्मकस्तत्प्रतियोगिको वा व्यवच्छेदो न प्रमातुं शक्यत इति परिहरति—**नेति** । स्वरूपसत्या[1] एव प्रमाया व्यवच्छेद्यत्वं कुतो न स्यादित्यत आह—**तदीयस्वरूपस्येति** । प्रमास्वरूपस्य अप्रमाव्यावृत्तस्य अद्याप्यसिद्धत्वादप्रमायाः कुतः प्रतियोगिनो व्यवच्छेदः प्रत्येतव्यः न यतः कुतश्चिद् आत्मनोऽपि तत्प्रसङ्गात् इति । नच भेदः सत्तामात्रेण प्रतियोगित्वोपयोगी दूरस्थवनस्पत्योः भेदाप्रतीतौ प्रतियोगित्वाप्रतीतेरित्याशयः । ततः फलितमाह—**इतीति** । व्यावृत्तप्रमाज्ञानाभावे अदुष्टकारणकज्ञानेनाबाधितत्वमित्यादिलक्षणाधीनव्यावृत्तप्रमाज्ञानसिद्धिरिति स्वसिद्धौ स्वसिद्धिरित्यात्माश्रयः । प्रमासिद्धया लक्षणसिद्धिरतो नात्माश्रय इत्यत आह—**अन्योन्याश्रयाविति** । प्रमासिद्धया लक्षणं सिद्धयति अप्रमाव्यतिरिक्तमेवाविपरीतज्ञानं विपरीतपदव्यवच्छेद्यं तर्हि तदपि अविपरीतज्ञानं विपरीतज्ञानव्यवच्छेदेन लक्ष्यं तस्यापि विपरीतज्ञानस्य एव निरूपणमविपरीतज्ञानान्तरव्यवच्छेदेन एवं तस्य तस्यापीत्यनवस्था ।

यदि चाप्रमाव्यावृत्तत्वेन अदुष्टकारणकत्वज्ञानं तेन च प्रमानिरूपणं तेन[2] चाप्रमानिरूपणं तदा चक्रकं स्यादिति । विशेषान्तरप्रवेशे[3] न तत् इत्यनवस्थैवोक्ता । उक्तखण्डनं शिष्यहिताय अन्यत्राप्यतिदिशति—**एकोनैकेति** । यत्रानेकविशेषेऽर्थे एको विशेषो लक्ष्यते तद्गतविशेषान्तरव्यवच्छेदेन तत्रात्मश्रयादिर्दोषो धावत्येव । तत्रैव धावति यथापूर्वं वेति वार्थः । सचासौ विशेषान्तरेभ्योऽन्यश्च तत्त्वादित्यर्थः । तथाहि ज्ञानादौ धर्मिणि स्मृतित्वाऽनुभवत्वादयोऽनेकेधर्माः सन्ति । तत्र एको विशेषः स्मरणमनुभवो वा यत्र लक्ष्यते स्मरणान्यत्वेन अनुभवान्यत्वेन वा लक्षणात् ।

यद्वा । अनेकविशेषेऽर्थे नवविधे द्रव्यपदार्थे यदा जलादिव्यावर्तनेन पृथिवीद्रव्यं लक्ष्यते गन्धवत्वादिना तदा व्यावृत्तपृथिवीज्ञानं विना तद्व्यावृत्तजलादिज्ञाना-

---

१. स्वरूपसतः । २. तेन च प्रमानिरूपणम् । ३. आन्तराणि का परप्रवेशेन ।

**नापि तृतीयः, व्याप्यशब्देन व्याप्यमात्रम्, तद्विशेषो वा कश्चिदभिप्रेतः स्यात् ? आद्ये सधूमाग्निविषयस्य स्वप्नज्ञानस्य अनाप्तवाक्यजबोधस्य वा नाप्रमात्वं स्यात् । नापि द्वितीयः, स ह्यर्थक्रिया वा ? सामग्री वा ? उभयत्रापि पूर्वदोषानिवृत्तेः ।**

**एकदा च सर्वत्र प्रमाणासम्भवेन क्रमाश्रयणे तत्तदर्थक्रियातत्तत्सामग्रीपरम्परा-**

---

सम्भवात् व्यावृत्तपृथिवीसिद्धौ तद् ( जलादि ) व्यावृत्तपृथिवीसिद्धिरित्यात्माश्रयादि स्यादित्यर्थः ।

इदमाहृतम्—घ्राणग्राह्यगुणत्वं गन्धत्वं तत्र गुणत्वादित्युक्ते जलादावतिव्याप्तिः स्यादिति घ्राणग्राह्यत्वं विशेषणं वाच्यं, ततश्च व्यवच्छेद्याप्रतीतौ विशेषणवैयर्थ्यं प्रतीतौ च स्व स्वरूपेण प्रतीतिरप्रयोजिकेति व्यवच्छिन्नप्रतीतिर्वाच्या ततश्च व्यवच्छिन्नपृथिवीसिद्धौ व्यवच्छिन्नजलादिव्यवच्छेदेन पृथिवीसिद्धिरित्यात्माश्रयः । एवमन्योन्याश्रयाद्यपि सुसम्पादमिति दिक् ।

स्वप्नान्यप्रतीतिविषयव्याप्यविषयत्वं[१] विवक्षितमित्याशङ्क्याह—**अनाप्तेति** । वस्तुतो निर्धूमाचलविषयकस्य सधूमेऽचले वह्निर्ज्वलतीति वाक्याभासजबोधस्येत्यर्थः । अर्थः=प्रयोजनं वह्न्यादेः दाहपाकादि तदेव क्रिया । यद्वा, अर्थस्य वह्न्यात्मनः प्रार्थनीयस्य, वह्नेः क्रिया । वह्निसामग्री वा । सामग्री हि न कार्यं व्यभिचरतीत्यवश्यं तस्यां सत्यां वह्निः तिष्ठतीत्याशयः । **पूर्वदोषेति** । दाहपाकविशिष्टस्य कृशानोः स्वसामग्र्याश्च स्वप्नविषयत्वसम्भवादनाप्तवाक्यजन्यदुर्बोधस्य वा तथाविधस्य[२] अप्रामत्वं न स्यादित्याशयः । व्यापकविषयस्य व्याप्यविषयत्वमविसंवादः[३], किं वा व्याप्यविषयप्रत्ययः तदनन्तरोत्पन्नव्यापकविषयस्य अविसम्वादः । तत्र नाद्यः । कार्यकारणयोरयौगपद्यात् । यौगपद्ये कार्यकारणभावभङ्गापत्तेः । नापि द्वितीयः । भिन्नविषयस्य प्रत्ययस्याविसंवादित्वायोगात् ।

अथ व्याप्यविषयः प्रत्ययो व्यापकप्रत्ययं जनयति । स च व्यापकप्रत्ययो व्याप्यमपि विषयीकरोति सामग्रीसत्त्वादिति मतम् । तदपि न । वह्निज्ञानस्य वह्निव्याप्यविषयत्वं सम्वादः । व्याप्यज्ञानस्य च स्वव्याप्यविषयत्वं तत्त्वं तथा तस्य तस्यापीति वाच्यं तत्राह—**एकदा च सर्वत्र प्रमाणासम्भवेनेति** । एकदा सार्वज्ञ्यं विना तावतां व्याप्यानां ज्ञानासम्भवे क्रमाश्रयणं, तथात्वे यदा यस्य व्याप्यस्य ज्ञानसामग्री तदा तद्व्याप्यं ज्ञायते इत्यसार्वज्ञ्येऽपि[४] नानुपपत्तिरित्याशयेनाह—**क्रमाश्रयणे चेति** । तथा चास्तु ज्ञानं परन्त्वनवस्था, अन्तिमस्य यस्याप्यज्ञानाद् असंवादादप्रामाण्यापातो वेत्याह—**एकदात्विति** ।

---

१. अविसंवादित्वं विवक्षितमितिभावः । २. विशिष्टकृशानु विषयस्येत्यर्थः । तथाविधस्य दुर्वारत्वात् इति पाठः । ३. असंवादः । ४. आसार्वज्ञोपि ।

वगमनियमाभ्युपगमे एकस्मिन्नेव विषये पुरुषायुषः पर्यवसानसङ्गात्। विच्छेदाभ्युपगमे त्वन्तिमावगमस्याप्रामाण्याद् आप्रथममप्रमात्वापत्तेः। वास्तवतदर्थक्रियात्वस्य च दुर्निरूपत्वेन व्यवहारानर्हत्वात्। तथाप्रतीतिमात्रस्य अप्रमासाधारण्यात्।

नन्वेवं चतुर्थः पक्षोऽस्तु। तथा हि—अर्थक्रियाकारिविषयत्वं वाऽविसंवादित्वमिति। यथाऽऽह—'प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिश्चाविसंवादः' इति।

न, सामान्यतो विवक्षायां भ्रान्तावपि प्रसङ्गात्। प्रतीयमानरूपेणार्थक्रियाकारित्वमर्थस्य विवक्षितमिति चेन्न, दुरवधारणत्वात्। तदर्थक्रियादर्शनात्

---

किञ्च प्रतीयमानवास्तवार्थक्रियालक्षणव्याप्यविषयत्वमविसंवादः उत वास्तवत्वादिविधुरप्रतीयमानार्थक्रियाविषयत्वमिति विकल्प्य अन्त्येऽसम्भवमाह—**वास्तवेति**। [1]प्रमितत्वव्यतिरेकेण वास्तवत्वासिद्धेः। अद्यापि प्रमितेरसिद्धेः वास्तवत्वासिद्धेः। ततश्च प्रतीयमानव्याप्यविषयत्वानुभवात् प्रमेति व्यवहारः स्यात्। तत्त्वतश्चाप्रमायामपि तदस्तीत्यतिव्याप्तिरित्यर्थः। तथाह—इत्यत्र धर्मकीर्तिरिति शेषः। अर्थक्रियास्थितिरिति अर्थक्रियासत्त्वं तच्चार्थक्रियाकारित्वमिति यावत्। न च स्मृतावतिव्याप्तिः स्मृतेस्तन्मते विसंवादाभावात् प्रत्यभिज्ञावत्। न च [2]तृतीयविकल्पेनास्य पौनरुक्त्यं तत्र व्याप्यत्वपुरस्कारेणोद्भावनम्, इह अर्थक्रियात्वेनेति भेदः। **सामान्यतः** इति। भ्रमविषयः शुक्त्यादिरपि शुक्तिप्रभृतिकार्यकारीत्यर्थः। अथ शुक्तित्वादिना तथात्वेऽपि प्रतीयमानेन रूपेण रजतत्वेन अतथात्वात् नातिव्याप्तिरित्याशङ्क्य निषेधति—प्रतीयमानेति। मितभाषिणां तु सामान्यतो रजतत्वादिना अर्थक्रियाक्षमत्वम्।

यद्यपि शुक्तिरजतस्याप्यस्ति तथापि प्रतीयमानेन शुक्तिसंभिन्नरूपेण क्रियाद्यर्थक्षमता नास्तीति चेदित्थं—तस्य अर्थ इत्युक्तम्। तच्चिन्त्यम्। प्रतीयमानं रूपं रजतं तदर्थक्रियासमर्थमेव शुक्तित्वादिना तथात्वेऽपि नहि शुक्तिसंभिन्नं तत् कदापि, अन्यथाख्यातिमात्रस्वीकारात्। यदापि अनिर्वचनीयख्यातिस्तदापि संभेदोऽनिर्वचनीय एव ननु विद्यमानोऽपि भ्रमस्य प्रमात्वापत्तेः बाधानुपपत्तेश्च:। विषयस्य विशेषदर्शनजन्मना ज्ञानेन ध्वंसेन इह रजतमिति तदाकारो न स्यात्, स्याच्च रजतं ध्वस्तमिति। **दुरवधारणत्वादिति**। अर्थक्रियाशक्तिरतीन्द्रिया फलैकोन्नेया कथं फलात् प्राक् प्रमातुं शक्येति भावः। दृष्टाप्यर्थक्रियाङ्गुरीयकाद्यात्मिका किं रजतत्वादिरूपेण अन्येन वेति दुरवधारणमिति मैथिलानामपव्याख्यानम्। तदर्थक्रियादर्शनादित्युत्तरशङ्कानुपपत्तेः। फलैकोन्नेयायास्तस्याः फलेनैव प्रमितिरस्त्विवति तदर्थः। अन्वयव्यतिरेकाभ्यां रजतत्वादिरूपेण तदवधा-

---

१. प्रतीतत्व। २. तृतीयविकल्पो नास्य।

**तदवधारणमिति चेन्न, विनाप्यर्थक्रियां तद्दर्शनसम्भवात् । अर्थक्रियाप्रमितिरभिधित्सितेति तु दूषितमेव, प्रमाया एव निरूप्यमाणत्वात् ।**

**अभिप्रायाविसंवादात प्रमायां सर्वमुच्यत इति चेन्न, तदा अभिप्रायाविसंवादस्य स्वप्नादिप्रत्ययेऽपि सम्भवात् । कालान्तराविसंवादस्य च दुरवधारणत्वात् ।**

**एतेन प्राप्त्यादियोग्यता अविसंवादार्थ इत्यपि निरस्तम् । दुराबाध इव चायं धर्मकीर्तेः पन्था इत्यवहितेन भाव्यमिहेति ।**

## अबाधितानुभवप्रमात्वखण्डनम्

**अबाधितानुभूतिः प्रमेत्यपि निरस्तम्, तदानीं बाधाविरहस्य अतिप्रसञ्जकत्वात्; कालान्तरेऽपि च बाधाविरहस्य दुर्निरूपत्वात् । स्वतो बाधाविरहस्य अति-**

---

र्येमिति तु तस्यार्थो न श्रौतः । **विनाऽप्यर्थक्रियामिति** । फलं ह्यव्यभिचारिशक्तिनिर्णये स्वप्नादौ सत्यपि फलज्ञाने शक्तेरभावात् । [१]घटेनोदकमाहरिष्यामीत्यभिप्रायो नास्ति तथापि तदभावयुक्तौ विसंवादाभावोऽस्त्येव ।

अथवा अभिप्रायइष्टसाधनत्वादिना ज्ञानमुदकाहरणादौ ततः पिपासाऽपि तज्ज्ञानरूपपिपासोपशमज्ञानमित्येतत्परोऽयं ग्रन्थः । स्वप्नस्य जागरे विसंवादोऽस्तीति चेदिहापि स्वप्ने विसंवादोऽस्त्येव वैदिकास्तत्वं प्रत्ययेन नेति भावः । अर्थप्राप्तियोग्यत्वमर्थस्याविसंवादः तद्गोचरानुभूतिः प्रमेत्याशङ्क्याह—**एतेनेति** ।

स्वप्ने प्राप्यते भोज्यं तदनुभोजनं तदनुसुखमित्यर्थः । सा प्राप्तिर्या भ्रमात्मिकेति चेत्तुल्यं जागरेऽपि । न च प्रमात्मिका प्राप्तिरपेक्षिता तस्या अद्याप्यनिर्वचनात् । आदिपदेन प्रवृत्तियोग्यता[२]परिग्रहः··· सैवाविसंवादः इति ।

यदि धर्मकीर्तिबौद्धविशेषो ब्रूयात् तदा क्षणभङ्गोन्मूलनेन उन्मूलनीयोऽयमपि पक्षः विशेषश्च क्रमत्रिषयव्यावृत्तो दुर्निरूप इत्याशयेनाह—**दुराबाध इवेति** । न तु वस्तुतः ।

षष्ठं प्रमाया लक्षणान्तरम् अबाधितानुभूतित्वम् । इदञ्च निर्विकल्पेऽप्यस्ति धर्म्यंशे ज्ञानान्तरमेव प्रमारूपम्, भ्रमस्तु बाधितविषयकोऽन्यत्र वा । **तदानीमिति** । भ्रमकालीनभ्रान्तो न विषयाभावं पश्यतीति भ्रमेऽतिव्याप्तिरित्यर्थः । **स्वत इति** । स्वस्य द्रष्टुरित्यर्थः ।

---

१. घटेनोदकमाहरिष्यामीत्यनन्तरं ख पुस्तके एवं पाठ उपलभ्यते ।

इत्यभिप्रायस्य तत्र बाधोनास्तीत्यबाधिताभिप्रायस्य तत्र बाधो नास्तीत्यबाधिताभिप्रायविषयत्वमेव विसंवाद इति कस्यचिन्मतं दूषयति—तदाभिप्रायाविसंवादस्येति । स्वप्ने यद्यपि अभिप्रायो नास्ति तथापि तद्भावप्रयुक्तो विसंवादाभावोऽस्त्येव ।

२. योग्यता परितत्पाद विशेष प्राप्तियोग्यता ।

**प्रसञ्जकत्वात् । सर्वजनबाधाविरहस्य च दुरवधारणत्वादिति ।**

## तर्कादिभिन्ने प्रमात्वखण्डनम्

**तर्कसंशयविपर्ययस्मृतिव्यतिरिक्ता प्रतीतिः प्रमेत्यपि न, स्मृतिव्यतिरिक्तत्वखण्डनन्यायेन निरस्तत्वादिति ।**

## प्रमात्ववति प्रमात्वखण्डनम्

**जातिसङ्करमिच्छतश्च प्रमात्वलक्षणजात्यभिसम्बन्धात् प्रमेत्यपि दुर्लक्षणम्, अस्याज्ञातस्य तद्व्यवहारजनकत्वे प्रमायामप्रमाभ्रमसंशयौ न स्याताम् । दोषाभाव-**

---

नच भ्रान्तिरपि विशेषदर्शनदशायां स्वस्य बाध्येति वाच्यम् । अजातबाधस्यापि [1]मरणोपलम्भात् । **सर्वजनेति** । सर्वजनाज्ञाने सर्वजनबोध्यत्वं न शक्यं ज्ञातुमित्यर्थः । न चेदं ज्ञानं यदि बाधितविषयकं स्यात् तदोपलभ्येतेति योग्यानुपलब्ध्या बाधसामान्याभावो ज्ञातुं शक्य एवेति वाच्यम् । एतस्य विषये परबाधस्यायोग्यत्वात् ।

प्रमायाः सप्तमं लक्षणमनूद्य दूषणातिदेशेनैव दूषयति—**तर्केत्यादि** । **दुर्लक्षण**मित्यन्तेन अष्टमं प्रमालक्षणम् । प्रमात्वं जातिरित्यत्र यद्यपि जातिसाङ्कर्यं साक्षात्वेन तद्धि साक्षात्कारिणि भ्रमे प्रमात्वपरिहारेणानुमितौ तु साक्षात्वपरिहारेण प्रमात्वं वर्तमानं साक्षात्कारिप्रमायां संकीर्यते इत्यशुद्धम् । जातेर्व्याप्यवृत्तित्वानियमेन धर्म्यंशे भ्रमस्यापि प्रमात्वेन साक्षात्कारित्वस्य तत्परिहारेणावृत्तेः, तथापि निर्विकल्पकं प्रमाबहिर्भूतमेवेति मतेन सांकर्याभिधानम् । यदि च जातेर्व्याप्यवृत्तित्वनियमः तदा अस्तु साक्षात्वेन साङ्कर्यम् । मतान्तरेऽपि परोक्षत्वेन वा । परमिदं लक्षणं न भट्टाभिमतं, तैः स्मृतित्वानुभूतित्वयोः भ्रमे एव सांकर्यात् अव्याप्यवृत्तित्वं तयोरिष्टेरित्यवधेयम् ।

यत्तु मितभाषिण्यां प्रमात्वाप्रमात्वयोरसाङ्कर्यमवश्यमेष्टव्यमन्यथा भ्रमेऽतिव्याप्त्यापत्तेरित्युक्तम् । तत्रेष्टापत्तौ को दोषः । व्यवस्थापितं हि धर्म्यंशे प्रमात्वं ततः तत्रापीति न शङ्कनीयम् । तथा सति अनुभवत्वेन सहान्यूनानतिरिक्तवृत्तितया प्रमात्वं न जातिः स्यात् । तस्मात् प्रमात्वं जातिमिच्छतः प्रमात्वं नास्त्येव भ्रमे इत्येव मतम् । अस्मिन् दोषे सत्यपि दोषान्तरमाह—**अस्येति** । **भ्रमसंशयाविति** ।

यद्यपि तौ न व्यवहारौ इति तज्जनने न किञ्चित् बाधकं तथापि अभिज्ञापि अभिवदनवत् व्यवहारपदार्थ इति मतेनेदम् । भ्रमजन्यव्यवहारपरो वा ग्रन्थः ।

---

१. मरणस्य वा । २. अस्पष्टान्यक्षराणि ।

**सहकृतस्य तथात्वे च अजायमानभ्रमसंशयप्रमादिव्यवहारे ज्ञानमात्रावगमोदाहरणेऽपि तदापत्तेः ।**

**ज्ञातेनानेन लक्षणेन व्यवहारे च कथमिदमेव ज्ञातव्यमिति वक्तव्यम् । न तावत्प्रत्यक्षेण मानसेन, तथा सति क्वचिज्ज्ञातायां प्रमायामप्रमाविपर्ययसंशयानवकाशादि स्याद्, धर्मिवत् मनसैव निर्णीतत्वात् ।**

**चिह्नान्तरसापेक्षेणैव मनसा संवेदनचिह्नेनैव वा तेनैव लक्षणीभूय ज्ञापनमित्यपि प्रत्याशामात्रम्, तच्चिह्नेनैव प्रमात्वजातिकल्पनाप्रतिक्षेपापत्तेः ।**

**तेषां नानात्वे च कानि तानीति वक्तव्यं स्यात् । तच्चिह्नानां यथोपन्यासं सर्वेषामेव दूषितत्वात् । प्रामाण्यपरतस्त्वव्युदस्तिप्रस्तावे च विस्तरेण दूषयिष्यामः।**

---

**अजायमानभ्रमसंशयप्रमाव्यवहार** इति । दोषे सत्यवश्यं भ्रमसंशयौ स्याताम् । सत्यां सामग्र्यां कार्योत्पादात् । न च जायत एव तत्र प्रमात्वनिश्चय इत्याशङ्क्याह—यत्र प्रमाव्यवहारोऽपि न जायते किन्तु ज्ञानमात्रं ज्ञायते इत्यनुभवसिद्धम् । अत्र च परतः प्रामाण्याप्रामाण्यवादिनो नैयायिकाः अपि साक्षिणः तर्हि जानामीत्येवं प्रत्यक्षजं ज्ञानमेवोदाहार्यम् । ज्ञानस्यातीन्द्रियतया तद्गता जातिर्न योग्येति चेन्न । मुरारिमते ज्ञानस्य प्रत्यक्षत्वात् तन्मतमेव दूष्यते । नैयायिकवैशेषिकयोः जातिसाङ्कर्यस्य [1]जातिबाधकत्वात् । प्रभाकरस्य गुणे जात्यनङ्गीकारात् ।

**धर्मिवदिति** । प्रमात्वाश्रयवदित्यर्थः । अथ स्वतत्त्ववत् चिह्नसहकृतं मनोज्ञेयं प्रमात्वं तदज्ञानान्न ज्ञायते इति न संशयाद्यनुपपत्तिः । अस्तु वा चिह्नैरनुमेयमेव तद् योगवृत्तिजातेः[2] प्रत्यक्षत्वं नियमानङ्गीकारात् प्रमाया अतीन्द्रियत्वस्वीकाराद् वा । यस्यां व्यक्तौ ज्ञातायामपि प्रमात्वसंशयादिः सा न योग्याज्ञानस्य प्रत्यक्षयोग्यतायामपि विषयान्तरसञ्चाराभावप्रसङ्गेन कस्यचित् ज्ञानस्यायोग्यत्वमित्याशयेनाशङ्का । **चिह्नान्तरसापेक्षणेति** । लक्षणीभूय व्याप्यीभूय स्थितेन ज्ञापनमनुमितिजननमित्यर्थः । तच्चिह्नमनुगतञ्चेत्तर्हि तस्यापि ज्ञायमानस्य प्रमात्वव्यञ्जकत्वेन एव इयं प्रमा इयं प्रमेत्यनुगतबुद्ध्युपपत्तेः प्रमात्वं न जातिः । अननुगतत्वे तु आह—**तेषामिति** । कानि तानि नानारूपाणि तत्त्वानुभूतित्वादीनि ।

अथ भ्रमप्रमयोः कार्ययोः वैलक्षण्यात् विलक्षणकारणजन्यत्वमवश्यं वाच्यं ततश्च यस्माद् यस्मात् कारणगुणात् प्रमायाः जन्म तज्जन्यत्वमनेकरूपमेव तच्चिह्नमित्याशङ्क्याह—**प्रामाण्यंपरतस्त्वे इति । दूषयिष्यमाणत्वादिति ।** ईश्वराभिसन्धौ इति शेषः ।

---

१. जाति वाचकत्वात् क ख पुस्तके । २. योग्यवृत्तिजातिः प्रत्यक्षत्व इति क ख पुस्तके ।

**एतेन शक्तिविशेषः प्रमात्वम्, तद्योगः प्रमालक्षणमित्यपास्तम्। दुरवधारणत्वात्। यच्च किञ्चित्प्रमाया लक्षणमुच्यते, तदज्ञातं ज्ञातमात्रं वा? यदि तत्त्वव्यवहारकम्, तदा अत्यापत्तिः। प्रमितञ्चेति, प्रमानवधारणे तद्दुरवधारणता।**

**माऽवधारि वस्तुतस्तु तथेति चेन्न, वस्तुतो न तथैव किं नेति वादिन्यनुत्तरापत्तेः, प्रमात्वनिरूपणवैयर्थ्यापाताच्च। वस्तुतस्तु प्रमयैव घटादितत्त्वव्यवहारोऽपि तर्ह्यस्तु इत्यास्तां विस्तरः।**

## करणत्वलक्षणखण्डनम्

**एवं प्रमितेरनिरुक्त्या प्रमाकरणं प्रमाणमित्यप्ययुक्तम्, करणार्थानिरुक्तेश्च।**

**(१) ननु कारकान्तरेऽचरितार्थस्य हेतुत्वं करणत्वम्। कर्तुर्हि करणं**

---

गुणस्य प्रमाहेतुत्वे मानाभावात्। दुष्टकारणात् कुतो न प्रमेति चेत्। दोषेण प्रमाजननशक्त्युत्सारणात्। अदुष्टे हि कारणे प्रमाशक्तिस्तिष्ठति। तत् किं प्रमाशक्तिर्ज्ञानमात्रशक्तितोऽन्या आद्ये स एव गुण इति चेन्न। गुणो हि प्रामाण्यहेतुरिति भवन्मतम्। शक्तिस्तु कारणतेति महतो विशेषात्। विनापि च गुणं प्रामाण्यस्य ईश्वरज्ञाने सत्त्वात्। जन्यज्ञानप्रामाण्यं गुणजन्यमिति चेन्न। तद्वदेव दोषवत्कारणाजन्यज्ञानवृत्तितायाः प्रामाणिकत्वेन भ्रमे तस्या अभावसिद्धिरित्याशयेनाह—**विस्तरेण चैतदिति।**

नवमं प्रमाया लक्षणं शक्तिविशेष इत्यनूद्य दूषयति—**एतेनेति।** वक्ष्यमाणेन दुरवधारणत्वहेतुनेत्यर्थः। विशेषः समर्थप्रवृत्तिजनकत्वम् अज्ञातज्ञापनशक्तिरिति तु मितभाषिण्याम्। **दुरवधारणत्वादिति।** अनुगतरूपं विनाशक्तिः परिज्ञातुमशक्या, यदि च अनुगतं रूपं शक्यं वक्तुं तदा तदेव लक्षणमस्तु न च शक्यं तद्वक्तुं सर्वस्य दूषितप्रायत्वादितिभावः।

अथ प्रमात्वमखण्डोपाधिः अज्ञातार्थपरिच्छित्तिर्वा। सच प्रवृत्तिसामर्थ्यादिना ज्ञायते इत्याशङ्क्य सर्वप्रमालक्षणानां साधारणदोषमाह—**यच्च किञ्चित् इति।**

**वस्तुतो न तथेति।** प्रमालक्षणं न प्रमितमिति। **वादिनीति।** स्वरूपतः प्रमितिरिति वक्तुमशक्यत्वादित्यर्थः। वैयर्थ्यमाह—**वस्तुत** इति। लक्षणं व्यतिरेकिलिङ्गत्वात् कथं स्वरूपतः[१] प्रमितमित्यादि बहु वक्तुं शक्यमपि नोच्यते एव। तदभिप्रेत्योपसंहरति—**आस्तामिति।**

इति प्रमाणलक्षणखण्डनानि!

---

१. स्वरूप सद्गतिकमित्यादि। २. तवभियत्युपसंहरति।

**निष्पादयतः कारकान्तरे चरितार्थत्वम्, स्वरूपतोऽनिष्पादनेऽपि व्यापारवत्तया निष्पादनात् । तादृशस्य च तस्य करणत्वात् ।**

**एवं कर्मापि करणनिष्पादने चरितार्थम् । करणव्यापारो हि कर्मविषयो भवति, कर्माभावे विषयाभावात् करणव्यापार एव न निष्पद्यत इति तन्निर्वाहे तस्यापि चरितार्थत्वमिति । एवमधिकरणस्यापि करणव्यापारनिर्वाहकत्वम् । सम्प्रदानापादानयोश्च असार्वत्रिकत्वम् । करणं तु सार्वत्रिकमेवेति कारकान्तरेऽचरितार्थः सार्वत्रिको हेतुः करणमिति ।**

हेतुत्वं कीर्तयति । **अयुक्त**[1]**मिति । कारकान्तरेऽचरितार्थस्येति ।** अन्तरपदानुपादाने कर्तरि अपि कारके स्वस्मिन् चरितार्थता[2] नास्तीति कारकाचरितार्थ[3]हेतुत्ववारणाय इत्यन्तरपदम् । कर्तृकारकं हि स्वातिरिक्ते करणकारके जाते चरितार्थं=कृतकार्यं फलायोदासीनमिति यावत् नतु करणं कारकान्तरमुत्पाद्य चरितार्थं तस्य साक्षादेव फलहेतुत्वात् । एतावता फलानुकूलकारकाजनकत्वं करणत्वमित्युक्तं भवति । तच्चाकाशादावपीति हेतुत्वं विशेष्यमितिभावः ।

ननु तथापि कुठारादिरूपकरणनिष्पादकत्वं कर्तुर्न सिद्धं तस्य कर्तुर्व्यापारात् प्रागेव सत्त्वादित्याशङ्क्याह—**तादृशस्य च तस्य करणत्वादिति** । तथाच विशेषजननद्वारा विशिष्टस्यापि कर्ता जनकः विशिष्टस्यातिरिक्तत्वादिति भावः । विशिष्टस्यानतिरिक्तत्वे तु कारकान्तरव्यापाराजनकत्वमेव कथयिष्यति । तदभावे हि करणव्यापार एव न निष्पद्यते । **करणव्यापारो हीति** । उद्यमननिपातनादेश्छेद्यविषयत्वादित्यर्थः । एवमन्वयमभिधाय व्यतिरेकमाह—**कर्माभाव** इति । यद्यपि च उद्यमननिपातने कुठारक्रिये न सविषये न वा तयोश्छेद्यं कर्म कुठारस्यैव तत्त्वात् । नहि वृक्षमुद्यच्छति निपातयतीति कथयति अपि तु कुठारमेव तथा निर्दिशति । तथापि तदुद्देश्यकोऽयं व्यापारश्छिदेरर्थः । उद्देश्यता व्यापारोद्देश्यतैव व्यापारविषयतोच्यते तत्कर्मैव व्यापारकर्मेति ।

यद्यपि च इच्छाऽपि न कर्मजन्या किन्तु तज्ज्ञानजन्या तथापि विषयस्यापि विशेषणतया जनकत्वं वैशेषिकसम्मतम् । तथा च गुणभाष्यं—सुखमिच्छा दुःखं द्वेषः[4] प्रयत्नं स च क्रियामिति । **एवमधिकरणस्यापीति** । कर्तृकर्मणोः करणव्यापारनिर्वाहकयोः स्थितिसम्पादतया देशकालरूपमधिकरणं कारकान्तरे चरितार्थं स्थालीरूपमधिकरणं तु कर्ममात्रास्थित्वादेवेत्यर्थः ।

सम्प्रदानेत्यादि दानविश्लेषक्रियैव सम्प्रदानापेक्षा । यस्मै सम्यक् प्रदीयते तत् सम्प्रदानं, विश्लेषावधिरपादानमिति तयोस्ताभ्यामन्तरेणानिष्पत्तेः ननु सर्वा

१. व्याप्तमिति । २. अतिचरितार्थंवा । ३. हेतूत्वकरणापरेत्यन्तरपदम् ।
४. तो प्रयत्नं सच क्रियामिति ।

**नैवम् ; अस्तु तावदविचारितरमणीयमिदं व्याख्यानम् । अन्तरशब्दो यदि विशेषमात्रवचनस्तदा न व्यवच्छेदकः, न हि विशेषमपास्य कारकमात्रं केनचिज्जन्यं ते यद् व्यवच्छिद्येत ।**

**नापि चान्तरशब्दोऽन्यवचनः, तथा सति 'कस्मादन्यदि'ति विशेषानिर्देशे 'करणादि'ति समभिव्याहारात् लभ्येत, यथा 'अन्य आत्मा शरीरमन्यद्' इत्यादौ ।**

---

क्रिया । एतावता निर्व्यूढं लक्षणमाह—**कारकान्तर** इति । इदं लक्षणं न युक्तं कर्त्रादिव्यापारस्यापि फलपर्यन्त[1]स्थायित्वानुभवान्न तस्य कारकान्तरे चरितार्थत्वव्याख्यानं युक्तम् । तथाहि—देवदत्तः पलाशं छिन्नतीति देवदत्तस्य कर्तृतया तस्य पूर्वक्षणे अवश्यं व्यापारितया अवस्थितिरेष्टव्या तल्लक्षणत्वात् हेतुत्वस्येति विद्यासागरः । तन्न युक्तम् । करणव्यापारनिष्ठाद्यनन्तरं तद्व्यापारस्यानुपलब्धिबाधितत्वात् । करणव्यापार एव तद्व्यापारोऽस्तीति चेत्तथापि तस्य कारकान्तरव्यापारजनकत्वमव्याहतमेवेति कथमतिव्याप्तिः ।

मैथिलास्तु कारकान्तरपदस्य करणपरत्वे आत्माश्रयः तथा सार्वत्रिकत्वञ्च[2] तस्य[3] न व्यक्त्यभिप्रायेण बाधान्नापि करणत्वेन तदनिरुक्तेरिति । तच्चिन्त्यम् । कारकान्तरपदस्य कर्तृकर्मभिन्नकारकपरत्वात् । सार्वत्रिकत्वञ्च सम्प्रदानापादानेतरत्वमिति न द्वितीयोऽपि । एतेन यथा विषयतया कर्मकरणे चरितार्थं तथा करणमपि कर्तृव्यापारविषयतया कर्तरि चरितार्थमित्यसम्भव इत्यपास्तम् । तथापि कर्तृकर्मभिन्ने चरितार्थत्वाभावादेवेति ।

अत्र ब्रूमः कर्मकरणव्यापारेण चरितार्थता या उक्ता सा न युक्ता लिङ्गकरणता दोषदुष्टत्वात् । किञ्च कुठारकर्तृकायामुत्पत्तौ कुठारस्यासिद्धतया व्यापाराजनकतया करणतापत्तौ कुठारेण भवतीति स्यात् । सिद्धकर्तृकक्रियाहेतुत्वस्य विवक्षायां मृदा घटो भवतीत्यत्राव्याप्तिः । किञ्च कारकान्तरे चरितार्थस्य हेतुत्वलक्षणवाक्यस्य नेदं व्याख्यानं व्याख्येयस्य सार्वत्रिकपदस्य इहाभावात् तथा लक्षणवाक्यान्तरमेवेदमित्याशयेन ग्रन्थः । **व्याख्यानमिति** । पदपदार्थानां विविच्य कथनं हि व्याख्यानम् उच्यते । अनयोरन्तरं महदित्यादौ अन्तरशब्दस्य विशेषो वाच्यः । स चेदिह विवक्षितः तदा न व्यवच्छेदको न व्यावर्तक इत्यन्तरशब्दस्य वैयर्थ्यमित्याशयेनाह—**अन्तरशब्द** इत्यादि । कारके अचरितार्थं इत्युक्त एव हि कारकविशेष्य[4]जन्यता लभ्यते । नहि करणादिविशेषमपास्य कारकसामान्यं केनचिज्जन्यते यन्निषेधेन विशेषणमर्थवत् स्यादित्यर्थः । **अन्यवचन** इति । दृष्टो हि पीतघटाद् घटान्तरमित्यादौ तत्र प्रयोगः । **समभिव्याहारादिति** । करणत्वमिति-

---

१. फलपर्यन्तस्यापि । २. सार्वज्ञकत्वम् । ३. करणस्येत्यर्थः । ४. विशेषजनता ।

**तथा सति करणव्यतिरिक्तकारकाभिप्रायेण प्रयुक्तः स्यात् । तच्च न; करणस्यैव अद्यापि निरूप्यमाणत्वादतिव्याप्तेश्च ।**

**नापि कर्तृकर्मणोः स्वरूपोपादानपरोऽयमन्तरशब्दः, ताभ्यामेवातिव्याप्त्यापत्तेः । नापि कर्तृकर्मणी अपेक्ष्यान्यदन्तरशब्दार्थः, वैयर्थ्यापातात् । कारकेऽचरितार्थत्वमेवोच्यताम् ।**

**नाप्यनधिकार्थं एवायमिति न प्रयोक्तव्योऽन्तरशब्दः, तथा सति करणजनकं हस्तादि न करणं स्यात् । व्यापारवद्धि कारणं करणमुच्यते । अस्ति च स्थाली-**

---

लक्ष्यपदेनेति शेषः । इत्यादावित्यादिपदेन गोलकमन्यदित्युक्ते[१] इन्द्रियादिति उक्तं भवति । अतिव्याप्तेश्चेति । कर्ता हि करण एव चरितार्थो ननु तदतिरिक्त इत्याशयः । **स्वरूपोपादानपर** इति । तत्तत्स्वरूपपर इत्यर्थः । अन्तरशब्दोऽन्यमात्रवाच्यपि, तदुभयात्मकान्यमात्रपरम् । नचात्रान्यात्माश्रयः करणान्यत्वेनाबोधनादिति । **ताभ्यामेवेति** । न कर्ता कर्म वा स्वस्मिन् अन्योन्यस्मिन् वा चरितार्थ इति तयोरेवातिव्याप्तिरित्यर्थः । **नापि कर्तृकर्मणी** इति । अत्रापि अन्यमात्रवाच्यपि तदुभयप्रतियोगिकभेदाश्रयपर इत्यर्थः । अत्र कारकान्तर इत्यस्य कर्तृकर्मभिन्न इत्यर्थः । सचाधिकरणादिकारकात्मको यद्यपि तथापि कारकत्वरूपेण लक्षणेऽप्रवेशात् न व्यर्थत्वशङ्का । नहि कारकेऽचरितार्थत्वमित्येवं प्रतीतिः कर्तृकर्मव्यतिरिक्तेऽचरितार्थत्वमिति । **अनधिकार्थ** इति । यद्यपि तथापि अन्तरशब्दस्य कारकशब्दसमभिहारावश्यकत्वे तत एव सर्वसामाञ्जस्ये अधिकशब्दप्रयोगोऽनुचित इत्यभिप्रायेणाह--**न प्रयोक्तव्य** इति । **तथासतीति** । तथा सत्यपीत्यर्थः । तथाचान्तरशब्दसहितेऽप्ययं दोषोऽस्त्येवेति ध्येयम् । **हस्तादीति** । तथा च देवदत्तो हस्तेन अग्निना पचतीति अत्र हस्तेनेति तृतीया । आदिपदात् ग्राह्यश्च पद्भ्यामुपानद्भ्यां यातीति गृह्यते[४] । **व्यापारवद्धिकारणमिति** । व्यापारवतः कुठारस्य पच्यादौ[५] करणकारकत्वनिरासाय कारणपदम् । तत्रापि तत्रेति शेषपूरणेन तन्निराकरणं बोध्यमिति विद्यासागरः । तदसत् । तज्जन्यत्वे सति तज्जन्यजनकत्वव्यापारस्य पचिं प्रति कुठारेऽभावात् ।

परे तु कारणपदं स्वरूपकथनपरम् । यद्वा दण्डघटाविति प्रत्यक्षे घटोऽपि व्यापारः स्यादिति कारणपदम् । तच्च व्यापारिणो यद्रूपावच्छिन्नं प्रति जनकत्वं विवक्षितम् । नच दण्डत्वावच्छिन्नं प्रति घटकारणत्वमिति तद्व्यावृत्तिः । अग्नेः कारकत्वे तज्जनकत्वेन हस्तेऽव्याप्तिः स्यात्तदेव तु नास्तीत्याशङ्क्याह—**अस्ति चेति** ।

---

१. इन्द्रियमित्यत्रेवेत्युक्तं भवति । २. तत्तत् पर्यंक इत्यर्थः । ३. असमानाधिकरेति ।
४. इति च न प्रयुज्यते । ५. पत्यादौ कारकत्वनिरासाय कारकपदम् । ६. दण्डप्रत्यत्वावच्छिन्नं प्रति ।

संयोगादिव्यापारवतोऽग्न्यादेस्तथात्वम्। अस्ति च हस्तादेस्तज्जनकत्वम्। न च हस्ताद्यकरणमेवाभ्युपेयम्, व्यापारतः करणत्वेन तत्कारकत्वस्यावश्याभ्युपेयत्वात्। कर्त्रादिषु दुरन्तर्भावत्वात्, सप्तमकारकस्वीकारापत्तेः।

न च व्यवधानात् अहेतुत्वमेव तेषाम्, किं नाम हेतुहेतुत्वमिति। कर्तुरप्येवं प्रसङ्गात्, पुंव्यापाराद् देहस्पन्दादिस्तेन कुठारक्रियादिस्ततश्छिदेति परम्पराव्यवधानात्। सर्वेयं कर्तृव्यापारपरम्परा न तस्य हेतुता हन्तीति चेत्, तुल्यम्। तस्मात् करणत्वेन अवश्याभ्युपगन्तव्यहस्ताद्यव्यापकत्वादलक्षणमिदम्।

एतेनाऽपि कारकान्तरशब्दः कर्तृकर्मव्यतिरिक्तवचन इति पक्षो व्युदास्यः।

(२) कर्तृव्यापारविषयः करणमित्यपि न। शरीरचालनाय प्रयतमानस्य निष्पाद्या शरीरक्रिया, क्रियाविशिष्टं वा शरीरं प्रयत्नलक्षणकर्तृव्यापारविषयी-

---

यथा चक्षुषोऽर्थे संयोगो व्यापारः तथा अग्नेः स्थालीसंयोगो व्यापारः। अन्यथा अग्निना पचतीति प्रयोगाभावप्रसङ्गाद् इति भावः। आदिपदात् ऊर्ध्वज्वलनमवयवसंयोगः[१]। परम्परया तण्डुलोदकसंयोगोऽपि परिगृह्यते। तत्र हेतुत्वमेव तेषामिति। तथा च कारणविशेषः कारकं तद्विशेषः करणमतः कारकत्वाभावात्तद्व्याप्यस्य करणत्वस्याप्यभाव[२] इत्याशयः। हस्ताद्यन्वयव्यतिरेकौ अन्यथासिद्धौ न कारणताग्राहकौ इत्याह—हेतुहेतुत्वमिति[३]। हेतुहेतुविषयावित्यर्थः। देहस्पन्दादिरित्यादिपदात् करचालनम्। कुठारव्यापार उद्यमननिपतने। आदिपदेन तस्य कर्मणि संयोगः परिगृह्यते। पूर्वोक्त व्यर्थत्वदूषणेऽनुशयवान् अव्याप्तिप्रसङ्गात् अव्याप्तिमाह। एतेनापीत्यपि शब्दः पक्षपदानन्तरं योज्यः। अग्निर्हि कर्तृकर्मव्यतिरिक्तो हस्तादिजन्य इति हस्तादावकरणत्वप्रसङ्ग नेत्यर्थः।

न्यायभाष्यवार्तिकटीकानिबन्धे तु सप्तधा निरुक्तस्य साधकतमं करणमिति पाणिनिसूत्रगततमपोऽर्थस्य आद्यर्थं दूषयित्वा द्वितीयं दूषयति। कर्तृव्यापारस्य ज्ञान[४]-विषये घटादावतिव्याप्तिरित्याह—कर्तृव्यापारेति। तथापि करणव्यापारविषये कर्मण्यतिव्याप्तिरिति कर्तृपदं तेन हस्तादावतिव्याप्तिः परिहृता। क्रियायाः प्रयत्नविषयताप्रदर्शनाय निष्पाद्यत्वं विशेषणम्। प्रयत्नसाध्यत्वात् प्रयत्नविषयत्वमित्यर्थः। अमुकविषये प्रयत्न इति साध्यविषयता प्रयत्नस्य अनुभवसिद्धेतिभावः। यदि च शरीरमेव प्रयत्नविषयः क्रिया तु नान्तरीयकतया उत्पद्यत इत्युच्यते तदाह—प्रयत्नविशिष्टं वा शरीरमिति विद्यासागरः।

---

१. ऊर्ध्वंत्वलनावयवसंयोग। २. करणत्वव्याप्यभावः। ३. हेतुहेतुत्वं हस्तादीनामिति पाठः। परमीदृशः पाठो मूले नोपलभ्यते। ४. कर्तृव्यापारोऽज्ञातविषये घटादावतिव्याप्तिः।

**भवतीति तस्यां क्रियायां करणं स्यात्। न चैतत् शक्याङ्गीकरम्, भविष्यतः स्वं प्रति च कारकत्वानुपपत्तेः।**

**न च साक्षात्कर्तृव्यापारविषय इति विशेषोपादानेऽप्यस्य परिहारः, साक्षाद् व्यापार्यमनःप्रभृतिक्रियायां प्रसङ्गतादवस्थ्यात् अव्यापकत्वाच्च।**

---

तदस्मच्छरीरस्य सिद्धत्वेन पुरुषा साध्यत्वेन च प्रयत्नागोचरत्वात् स्वव्यापारे एव हि पुरुषः प्रवर्तते। चेष्टावत्वेन तस्यापि साध्यत्वं चेष्टासाध्यत्वं पर्यवसितमेवेति। तदसाध्यत्वेन तत् कथं स्यात् तस्मात् चेष्टायाः साक्षात् प्रयत्नसाध्यतया प्रयत्नविषयतयोक्ता। यदि प्रयत्नः प्रयत्नवदात्म संयोगसमवायिकारणमासाद्य चेष्टां जनयदपि चेष्टासमवायिकारणं शरीरमपेक्ष्यैव जनयति अन्यत्र तदनुपलब्धेस्तदा शरीरमपि क्रियाविशिष्टं प्रयत्नेन जन्यते क्रियात्मकविशेषणजन्यत्वादित्युच्यते तदपि क्रियाविशिष्टं तत् साध्यमिति तत्रातिव्याप्तिरित्याशयः। भविष्यतः क्रियाप्राक्कालेऽसतः कारकत्वाभावात्। तथा च तद्विशेषः करणत्वं कथं स्यात्। अथ क्रिया क्रियातः प्रागसती, मास्तु कारणं [1]शरीरन्तु तत्प्राक्काले सत् कारकं स्यादेवेत्याशङ्क्याह–**स्वं प्रति चेति**। अयं भावः केवलं शरीरं कारकमिष्यते परन्तु चेष्टां प्रति कर्त्रैवतत् न तु करणं प्रयत्नागोचरत्वात्। क्रियाविशिष्टं तु प्रयत्नविषयी भवति।

यद्यपि स्वरूपतः प्राक् सत् तथापि क्रियाविशिष्टमात्मानं जनयद् आत्माश्रयापत्तेर्न जनयितुमर्हति। क्रियाविशिष्टस्यात्मनः क्रियातः प्रागसत्वात् सत्वे च क्रियाविशिष्टस्य निष्पन्नत्वेन निष्पाद्यत्वाभावात् इत्येवं व्याख्याने आत्माश्रयस्य दोषान्तरतानुपपत्तेः।

त यं निष्कर्षः—येनात्मना सत्वान्तररूपेण न प्रयत्नविषयत्वमित्यकारणत्वं येन च विशिष्टात्मनाप्रयत्नविषयत्वं तेनात्मना न स्वस्य जनकं क्रियात एव क्रियाविशिष्टस्योत्पत्तेः। यदि च क्रियाविशिष्टं क्रियाविशिष्टजन्यं स्यात् नोत्पद्येतैव क्रियाविशिष्टस्य सत्त्वादेव असत्त्वे कारणतैव न स्यात् स्वरूपासतो मिथ्यात्वादिति। अस्य अतिव्याप्तिदोषस्य यद्यपि शरीरक्रिया मनोव्यापारव्यवधानेन चेतनव्यापारविषय इति तत्र नातिव्याप्तिः, तथापि मनःक्रियायामतिव्याप्तिरित्याह—**साक्षादिति**। चेतनेन कर्त्रा साक्षादेव मनश्चाल्यते न तु शरीरमिव मनश्चलनद्वारा, निश्चले हि मनसि संकल्पहीने शरीरक्रियाया अदर्शनात्। संकल्पश्च हितसाधनतानुसंधानम् इच्छा वा। सा यद्यपि मनोवृत्तिर्न भवति तथापि मनोधीनतया तथोच्यते। मनोधीने संकल्पे नात्मनः तादृशं कर्मान्तरमपेक्ष्यमिति साक्षाद् व्यापार इत्युच्यते। नहि मनसः क्रियान्तरं सम्भवादपि न संकल्पमपेक्षते इति शक्यते वक्तुं तथा च संकल्प एवातिव्याप्तिरित्यर्थः।

---

१. शरीरस्तु तत्प्राक्काले सत।

अथ तत्क्रियाहेतुस्तत्क्रियाकर्तृव्यापारस्य विषयस्तत्क्रियाकरणमिति मन्यसे। मैवम्, अनीश्वरवादे अङ्कुरादीनामकरणकत्वप्रसङ्गात्। सुषुप्त्यनन्तरभा-

---

यद्वा जीवनयोनियत्नजमनः प्राणनादिक्रियामित्यर्थः। साक्षात्वे विशेषणे कुठारावतिव्याप्तिश्चेत्याह—**अव्यापकत्वाच्चेति**। नहि हितसाधनतानुसन्धानचिकीर्षे विना[1] कुठारे कर्तृव्यापार इति भावः। अव्याप्तिनिरुक्त्या नासम्भवः मनःक्रियायां मनसो विवक्षितकरणत्वसम्भवात्।

यत्तु कुठारगोचरा क्रिया शरीरव्यापारत एव। तत्र च देवदत्ताद्यात्मकं शरीरमेव कर्तृ। तच्च न संकल्पं मनोव्यापारमपेक्षते इति न कुठारादावव्याप्तिरिति।

तन्न तथा सति तत्तत् क्रियायामेवातिव्याप्तितादवस्थ्यादिति। न चाचेतनो देवदत्तादिः कर्तेति नैयायिकानां मतम्। तदनुमतकरणत्वे दूषणञ्चेदमिति। शरीरक्रियायामतिव्याप्तिवारणाय तत्तत् क्रियाहेतुरिति। तत् पदानुपादाने क्रियाविशिष्टशरीरेऽतिव्याप्तिस्तस्य क्रियान्तरहेतुत्वात्। तत् क्रियाविशिष्टं तु तत् क्रियाहेतुर्न भवत्यंशतः आत्माश्रयापत्तेः। केवलं शरीरन्तु करणतया लक्ष्यमेव। नचैवं क्रियाविशिष्टस्य क्रियाहेतुत्वाभावादेव नातिव्याप्तिः क्रियावति क्रियानुपपत्तेरिति किं तच्छब्देनेति वाच्यम्। येषां मते कर्मवत्यपि कर्मान्तरोत्पत्तिस्तन्मतेन तदुपादानात्। यदा तु न, तदा क्रियाकर्तृव्यापारगोचरे परश्वादौ पाकक्रियाकरणतातिप्रसङ्गवारणाय तत्पदम्। कर्तरि अतिव्याप्तिवारणाय तत् क्रियाकर्तृव्यापारस्य विषय इति। अत्र कर्तृपदानुपादाने करणव्यापारविषये कर्मण्यतिव्याप्तिः स्यात्। तत्पदानुपादाने[2] ईश्वरस्य सर्वकर्तुः व्यापारगोचरे अधिकरणादावतिव्याप्तिरिति तत्पदम्। तदुपादानेन अनावरणकर्तृव्यापारविषयत्वं विवक्षितम्। अत्र कुठारादेः पठिक्रियाकरणताप्रसक्तिं निवारयति—**तत्क्रियाकरणमिति**। यद्वा पचिक्रियाकरणेऽव्याप्तिवारणाय इदम्। तथा च न करणमात्रमिह लक्ष्यं किन्तु विशेष इति नाव्याप्तिः। **अङ्कुरादीनामिति**। तथा बीजेन अङ्कुरं जातमिति प्रयोगो न स्यात्। तथा कार्यं करणपूर्वकमिति व्याप्तिभङ्गे रूपादिज्ञानलिङ्गेन चक्षुराद्यनुमानं न स्यात्। सति हि ईश्वरे तत्कृतिगोचरतया बीजादीनां कदाचित् कारणता स्यात्, यदि असाधारणकर्तृघटितं करणलक्षणं न भवेदिति। अनीश्वरवादे दूषणान्तरमाह—**सुषुप्त्यादाविति**। सुषुप्तौ चेतनावतः कर्तुरभावात् तद्व्यापारविषयस्य करणस्याभावे सुषुप्त्यनन्तरभाविन्या प्रमाया अकरणत्वप्रसङ्गः। तथा च रूपकारणाजन्यत्वात् ताः प्रमाः परिगणिताभ्यः षट्प्रमाभ्यो बहिर्भूताः स्युः न चैवमिष्यते। तस्मात् तासां करणमस्ति, तच्च प्रत्यक्षादिकमेव तत्र लक्षणमिदमव्यापकमिति

---

१. दिना। २. तत्पदानुपादानुपादाने।

**विन्याः प्रमायाः परिगणितकरणोपाधिभेदपरिसङ्ख्यातेषु प्रमाराशिषु बहिर्भाव-प्रसङ्गात् । अचेतनस्यापि कर्तृत्वे चातिप्रसङ्गात् ।**

**सेश्वरवादे तु ईश्वरव्यापारविषयः सर्वं कारणमिति नाकरणं कारणं स्यात् । ओमित्यभिधाने च अकारणमात्रं व्यवच्छेद्यमिति कारणं करणमित्येवोच्यताम्, बृथा विशेषणपूरणप्रयासः ।**

---

भावः । परिगणितानीन्द्रियादीन्येवोपायः तद्भेदेन संख्यातेषु प्रत्यक्षादिषु षट्स्वि-त्यर्थः । एतद्दोषभिया यदि चेतनभोक्तृशरीरमेव कर्तृप्रमायां स्वीकार्यं ततो नाति-व्याप्तिरित्याशयेनाह—**अतिप्रसङ्गादिति** । सुषुप्तावपि कर्तृसत्त्वे अङ्कुरादावपि सकर्तृकत्वप्रसङ्ग इत्यर्थः इति विद्यासागरस्यापव्याख्यानम् । अनुवादे च चेतन-कर्तृकत्वस्य तैरभ्युपगमात् । बीजेनाङ्कुरः कृत इति प्रयोगात् तेषां मते सुषुप्तौ जीव-नयोनियत्नवतः कर्तुः तत्प्रयत्नगोचराणां चक्षुरादीनामेव प्रमाणत्वान्न प्रमाया बहिर्भावस्तस्मात् करणलक्षणं यदि चेतनकर्तृघटितं तदा मीमांसकमतेऽव्याप्तिः । अथ नेदं लक्षणं मीमांसकानां किन्तु न्यायविदामेव तथा च नाङ्कुरकरणाव्याप्तिः । नवा असाधारणकर्तृघटितं[1] करणलक्षणम् अधिकरणादेरपि स्थाल्या पचतीत्यादि प्रयोगात् करणत्वमिष्टमेव ।

यदि क्रिया कर्तुर्व्यापारविषयः कुठारोऽपि पाके करणं स्यादिति तत्क्रिया-कर्तुरिति, न कुठारस्य तत्क्रियाहेतुत्वाभावादेवातिप्रसक्तिर्नेति वाच्यम् । कालोपाधि-धिया कुठारस्यापि तत्क्रियाहेतुत्वात् । तत्राव्याप्तिमाह—**सुषुप्त्यादाविति** । नैयायिकमते जीवनयोनियत्ने मानाभावात् । नचेश्वरकृतिगोचरतयैवेन्द्रियाणां करणत्वं, सुषुप्तावपि प्रत्यक्षापत्तेः । नच कारणान्तरविरहात्तत्र कार्यानुत्पादः सति कारणे फलावश्यं भावापत्तेः । तस्मात् फलसमानाधिकरणाकृतिरेव इन्द्रियाणां वाच्या सा च नास्तीत्यव्याप्तिः स्यादेव । मिश्रवादेत्विति दूषणान्तरमेव । न च भोक्तुरदृष्टद्वारा चक्षुरादि क्रियां जनयतीति कर्तृव्यापारगोचरत्वं चक्षुरादेरिति वाच्यम् । अचेतनस्य क्रियाकाले चैतन्यरहितस्यापि कर्तृत्वे सुषुप्तावपि चक्षुरादि-क्रियाजननप्रसङ्गः इत्यर्थः । तस्मात् चैतन्यकालीनाकृतिरेवापेक्षिता नच सास्तीत्य-व्याप्तिरेवेति । **नाकरणं कारणं स्यादिति** । कारणमपि अकरणं न स्यात् । सर्वमेव कारणं [2]करणं स्यादित्यर्थः । ईश्वरप्रयत्नगोचरस्य बीजावयवस्याङ्कुरे करणत्व-मिष्यत एवातो नातिप्रसङ्ग इत्याशयेन ओमित्यभिधाने=अनुमतिवाचकशब्दा-भिधाने इत्यर्थः । **वृथा विशेषणपूरणप्रयास** इति ।

नन्वेवं शरीरक्रियादि शरीरक्रियाकारणं स्यात् तस्या अपि विभागादिकारण-त्वात् । नच क्रियाकारणत्वमेव तर्हि तथास्तु तत्पदं व्यर्थमिति वाच्यम् । तथा सत्यपि

---

१. स्याद्यसाधारण । २. कारणं कारणं स्यात् ।

**अथ मन्यसे—न धर्म्यन्तरव्यवच्छेदाय विशेषणानि, किन्तु एकस्यापि धर्मिणो रूपभेदेन करणपदाभिधेयतोपदर्शनायेति। एवं तर्हि एतद्रूपालिङ्गितस्य करणत्वात् लक्षणोक्तिप्रवृत्तेन त्वया लक्ष्यमात्रमुक्तं भवेत्। न च लक्ष्यपदप्रवृत्तिनिमित्तमेव लक्षणार्थः, गन्धवत्त्वादेः पृथिव्याद्यलक्षणत्वापत्तेः।**

**अपि चैवं वस्तुमात्रं करणमित्यभिधायैव किं न करणपदप्रवृत्तिनिमित्तमुपादर्शि ? स्यादेवं यदि सर्वत्र वस्तुनि करणव्यवहारः स्यादिति चेत्, तर्हि त्वदुक्तलक्षणमपि भवेद् यदि सर्वत्र कारणे करणव्यवहारः स्यादित्यपि पश्य। न हि कर्तरि कर्मणि वा कस्यचित्करणव्यवहारः।**

---

छिदाकरणस्य भिदाकरणता पटकरणता च स्यात् इति तत्पदमावश्यकम्। एवं लक्ष्यमपि तत्तत्करणमेव अन्यथा अव्याप्त्यापत्तेः। कर्तरि अतिव्याप्तिवारणाय व्यापारविषयपदम्। करणव्यापारविषये कर्मणि अतिव्याप्तिवारणाय कर्तृपदमित्युक्तम्। तस्य विशेषणं तत्पदं व्यर्थमित्येतत्परम् अवशिष्यते[1]। तदपि सार्थकमिति चेन्न। इदं हि तत् तत् क्रियाकरणस्य विशेषस्य लक्षणञ्चेत् तदा क्रिया सकरणिकेति व्याप्तिभङ्गः अनुगतस्य व्यापकतावच्छेदकस्याभावात्[2]। अतः क्रियाकरणत्वं सामान्यलक्षणमवश्यं वाच्यम्। ततश्च विशेषलक्षणमपि तत्क्रियाकारणत्वमेवास्तु तत् कर्तुरपि तत्क्रियाकरणत्वे क्षत्यभावात्। कर्मण्यतिव्याप्तिस्तु वारयितुं [3]शक्यैव नेश्वरव्यापारविषयत्वात्। तथा कर्तुरपि भगवत्कृतिगोचरता मन्तव्या तदीयज्ञानसुखादेः कर्तृजन्यतोपपत्तये इति तत् कर्तृव्यापारविषय इति विशेषणं व्यर्थमितिभावः।

**लक्ष्यमात्रमिति**। तथाचार्थान्तरमितिभावः। **लक्षणार्थ** इति। लक्षणपदस्यार्थः। **गुणवत्वादेरिति**। पृथिवीत्वादिजातिमपेक्ष्य तस्योपाधितया गुरुत्वेन प्रवृत्तिनिमित्तत्वाभावादितिभावः। ननु पदप्रवृत्तिनिमित्तं[4] लक्षणमेवेति। तदुक्तौ तज्ज्ञानादेवं वदतस्तव निरनुयोज्यानुयोग इति चेन्न। लक्षणत्वे कर्तृकर्मातिव्याप्तेरुक्तत्वात्। तथा चास्य लक्षणत्वासम्भवात्। पदप्रवृत्तिनिमित्तत्वमेवेत्यर्थान्तर-[6] तादवस्थ्यमितिभावः। उक्तलक्षणस्य प्रवृत्तिनिमित्तत्वमपि नास्त्येवाकरणे कर्तरि कर्मणि च गतत्वात्। यदि च तयोरप्येतादृशधर्मस्य प्रवृत्तिनिमित्तत्वात् करणपदवाच्यता तदा वस्तुत्वं करणपदप्रवृत्तिनिमित्तमभ्युपेत्याकरणस्यापि करणपदवाच्यत्वमेवास्ताम् इत्याह—

**अपि चैवमिति**। प्रवृतिनिमित्तमपि व्यवहारानुसारि वाच्यं नतु यत् किञ्चित्

---

१. अविशिष्यते २. व्यापकतावच्छेदकभावात्। ३. शक्यमेव न।
४. विशेषणं वार्थमिति। ५. पदवृत्तिनिमित्तम्। ६. अर्थान्तरं तावत्तादवस्थ्यम् इति क पुस्तके।

**कर्तरि तावदस्ति लोके 'प्रमाणमिह देवदत्तः, इति। शास्त्रेऽपि 'मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्याद्' इतीति चेन्न, किमयं माणवकेऽग्निव्यवहार इव गौणो मुख्य एव वेति संशये यदि त्वत्परिकल्पिताग्निमित्तात् मुख्यः स्यात्ततः कर्मण्यपि स्यात्तत एव निमित्तादिति बाधकदर्शनेन पारिशेष्याद् गौणतयैव तद्व्य-वस्थापनाया युक्तत्वात्।**

**अस्त्येव कर्मण्यपि तेन रूपेणेति चेन्न, न तावदयं शक्योपदर्शनोदाहरणः शास्त्रलोकयोः क्व दृश्यते 'घटं पश्यती' त्यर्थे 'घटेन पश्यती'ति ? यदि तु त्वच्चेतसि केवलं स्यात्, तत्र च नादरं विधातुमुत्सहामहे। प्रमेयमात्रं करणमिति वदतो वामबुद्धेर्मनसि विपरिवर्तमानं प्रमेयमात्र एव करणव्यवहारास्तित्वमेवमनुरोद्धव्यं स्यादिति।**

---

इत्याशयेन शङ्कते—**स्यादिति**। सन् घट इति ज्ञानतोऽपि च्छिदाकाले[१] सन्निहितोऽपि घटेन छिनत्तीति व्यवहाराभावादित्याशयेन। हि=यदि सर्वत्र वस्तुविकरणव्यहारः स्यात्। स्यादेवमिति सम्बन्धः। त्वदुक्तलक्षणमपीत्यत्र प्रवृत्तिनिमित्तमितिशेषः। **सर्वत्र कारण** इति। त्वदुक्तनिमित्तस्य सर्वकरणवृत्तित्वात् इति। **कर्तरि तावदिति**। तावच्छब्दः कर्मापेक्षया। तथा च कर्तरि करणव्यवहारेऽपि सिद्धे कर्मण्यपि कारण-त्वलिङ्गेन करणव्यवहारः सेत्स्यतीतिभावः।

आप्तप्रामाण्यादित्यक्षचरणसूत्रे प्रमाणपदं वेदकर्तरि प्रयुक्तमितिभावः। **वाम-बुद्धेरिति**। यदृच्छया व्यवहारोपपादकत्वं वामबुद्धित्वमिति मिश्राः। वामबुद्धिः कोमलबुद्धिः तव बुद्धिर्वा[२] उभयोरपि विजिगीषया भ्रान्त्या च तदभिधानसम्भवात् इति विद्यासागरः। वामे प्रतीपे=प्रतिकूले वामा वा बुद्धिर्यस्य परोक्त प्रतिक्षेपे बुद्धिर्यस्येत्यर्थः। लाक्षणिकं लक्षणं=सूत्रं तत् सिद्धम्। 'कर्तृकरणयोस्तृतीयेति'[३] सूत्रेण प्राप्तमित्यर्थः। लोपः शाकल्यस्येति लक्षणसिद्धस्यापि यथा गताय इति। तच्च[४] कर्तरि अतिव्याप्तमिति अयोगव्यवच्छिन्नत्वं विशेषणम्। क्रियापदे इत्यादा-वेव प्रयोगः यथा हन् हिंसागत्योरिति गतावनुशिष्टो हन्तिः केवलो हन्तिर्यथा न ग्रामं गच्छतीतिवत् प्रयुज्यते तथा इहापीत्यर्थः।

शङ्करमिश्राणान्तु यद्यपि करणपदप्रवृत्तिनिमित्तवत्तया न लाक्षणिकत्वं तथापि तथा प्रयोगाविषये प्रयुज्यमानत्वमेव इह लाक्षणिकत्वं विवक्षितमित्यज्ञानकृतं व्याख्यानं हेयम्। किञ्च तथा प्रयोगाविषये प्रयुज्यमानत्वञ्चेत् लाक्षणिकपदार्थः तथा प्रयुज्यमानं न प्रयुज्यत इति व्याहतम्। तदभावे=प्रयोगाभावे। **तेषामिति**।

---

१. ज्ञानतोपीछाकाले इति क पुस्तके।

२. चतुरबुद्धिरिति विद्यासागर्यां धृतः पाठः। ३. २।३।१८ पाणिनि सूत्रम्। ४. ८।३।१९ पाणिनि सूत्रम्।

'घटेन पश्यती'त्याद्यनभिधानवशान्न प्रयोगः, न हि सर्वं लाक्षणिकं प्रयुज्यत इति चेन्न, माऽस्तु, तदभावे कोऽन्योऽस्ति तेषु करणव्यवहार इति वक्तव्यः स स्यात् ? न चासौ शक्यदर्शन इति ।

क्रियया अयोगव्यवच्छेदेन सम्बन्धि करणमित्यपि न, तथा हि—अयोगव्यवच्छेदो योग एव पर्यवस्येदिति सम्बन्धेन सम्बन्धीत्युक्तं स्यादिति पौनरुक्त्यम् ।

यदा सम्बन्धीत्यनेन कालविशेषनियतसम्बन्धिता अभिधीयते, ततोऽन्यस्मिन्नपि काले सम्बन्धिता अयोगव्यवच्छेदपदेन विवक्षितेति चेन्न, सम्बन्धीत्यनेन न कालविशेषनियता सम्बन्धिताऽभिहिता, येन कालान्तरेऽलब्धसम्बन्धिताभिधानाय पदान्तरमुपादीयेत ।

---

व्यक्तिबहुत्वाभिप्रायेण बहुवचनम् । कर्मणि करणव्यवहारः प्रयोगातिरिक्तो न शक्यवचनः । स चेह त्वयैव अनभिधाननिरस्तः । तथा च प्रवृत्तिनिमित्तत्वं तत्राति-प्रसक्तमिति भावः ।

तृतीयं करणलक्षणमनुवदति—अस्तु तर्हीति । सम्बन्धिकरणमित्युक्ते गुणेऽति-व्याप्तिरिति क्रिययेत्युक्तम् । तच्च प्रधानक्रियापरं कारकमात्रस्यैव व्यापारो योगव्यवच्छिन्नत्वात् । सत्यपि हि कर्त्रादौ यावत्करणं न व्याप्रियते तावत् क्रियाया अयोगस्तिष्ठति । व्याप्रियमाणे तु करणे क्रियाया अयोगः[१]व्यवच्छिद्यते । जायते एव क्रियेत्यर्थः । योगः सम्बन्धः तदभावोऽयोगस्तस्य व्यवच्छेदः अभावस्तथा चायोगव्यवच्छेदशब्देन सम्बन्ध उक्तः । तथा च क्रियया सम्बन्धीत्येतावतैव सम्बन्धेने[२]त्यर्थ-लाभात् सम्बन्धिनेति पुनरुक्तम् । नच तृतीयार्थस्य करणत्वस्य लाभाय सम्बन्ध-प्रातिपदिकमितिवाच्यम् । सम्बन्धस्य जन्यत्वे इह सम्बन्धो नास्ति अभेदात् निषेध-द्वयसमभिव्याहारात् सार्वदिकः सम्बन्धो लभ्यत इत्याशयेन शङ्कते—यदेति । सामान्याभिधानसामर्थ्यादेव विवक्षितसिद्धिरित्याशयेन परिहरति—नेति । सामान्यं यत् किञ्चित् विशेषमादायैव चरितार्थमितिभावः । निषेधद्वयस्थले नैवमित्याशयेन शङ्कते—अथेति । स्वाभिप्रायं विशदयति । सम्बन्धीत्यस्य इत्यादि । खाण्डनिकोऽपि स्वाभिप्रायमाविष्करोति—मैवं तर्हीत्यादिना । इति मैथिलाः ।

अथवा सम्बन्धीत्यादिग्रन्थस्य सम्बन्धोऽस्यास्तीति इन् प्रत्ययो वर्तमाने सम्बन्धे प्रयुज्यते तेनाभिधानक्षणे वर्तमानसम्बन्धसत्वसम्बन्धीत्यर्थो[३] लभ्यते । क्षणान्तरे[४] सम्बन्धिनाऽपीति तदयोगव्यवच्छेदाय विशेषणं सार्थकमित्यर्थः । सूत्रे लिङ्गं कालः संख्या चातन्त्रमिति स्मरणात् । सम्बन्धमात्रमेव प्रत्ययार्थः इत्याह—न कालविशेष सम्बन्धिताभिहितेति ।

---

१. क्रियासम्बन्धि, करणमिति लक्षणमितिभावः ।

१. क्रिया अयोगे व्यवच्छिन्नत्वे जानता हि क्रमेदौ यावत्करणं न व्यापिपर्त्तीत्यर्थः ।
२. त्यस्य अर्थलाभात् । ३. त्यलोलभ्यते । ४. लक्षणान्तरे ।

**अथोच्यते—सम्बन्धीत्यस्य सामान्यतोऽभिधायिनः कालविशेषनियतं सम्बन्धमादायापि पर्यवसाने सार्थकत्वं भवत्येवेति कालान्तरेऽसम्बन्धितया व्यवतिष्ठमानं कर्त्राद्यपि करणं प्रसज्येत, तद्व्यवच्छेदाय कालान्तरे सम्बन्धिता पदान्तरेणाभिधीयत इति। मैवम्; तर्हि तेनापि क्वचिदेव कालान्तरे सम्बन्धिताऽभिधीयेत, तदापि तस्य सार्थकता सम्बन्धिपदन्यायेन सामान्याभिधायिनो भवेदिति ततोऽपि कालान्तरे असम्बन्धव्यवच्छेदाय विशेषणान्तरमपि निवेशनीयं स्यात्।**

**अथ यदा कदाचिदपि योऽयोगस्तस्य सर्वस्य व्यवच्छेदो विवक्षित इति, तर्हि सम्बन्धिपद एवैषा विवक्षाऽस्तु, कृतमधिकमुपादाय तद्विवक्षया। निषेधव्यवच्छेदेन सार्वत्रिकत्वलाभ इति चेन्न, निषेधव्यवच्छेदस्य विध्यनतिरेकार्थत्वेनाविशेषात्।**

---

अथ न्यायवलात् वर्तमानकालसम्बन्धलाभ इत्याशङ्कते—**अथोच्यते** इति। सम्बन्धसामान्याभिधायिनोऽपि प्रत्ययस्य यं कञ्चिद् विशेषमादाय पर्यवसानमिति कालविशेषनियतसम्बन्धपर्यवसाने सति यस्मिन् कस्मिश्चित् क्रियाकाले वर्तमाने क्रियाकर्त्रादावतिव्याप्तिवारणाय पदान्तरमुपादेयमिति भावः।

**मैवमिति**। अयोगव्यवच्छेदस्यापि यत् किञ्चित् कालायोगव्यवच्छेदपरत्वे नैवोपपत्तौ न सर्वकालायोगबाधपरत्वमिति कर्त्रादावतिव्याप्तितादवस्थ्यमिति भावः।

अयमिह खण्डननिष्कर्षः। सम्बन्धयोगव्यवच्छेदपदाभ्यां कालद्वयसम्बन्धित्वं लभ्यते तच्च कर्त्रादावप्यस्तीति पुनरपि कालान्तरीयासम्बन्धव्यवच्छेदाय विशेषणं देयं पुनस्तत्रापि तथैवातिप्रसङ्ग इति विशेषणानन्त्येऽनवस्था। यदि सम्बन्धिपदाक्षिप्तायोगपदाक्षिप्तकालान्यकालासम्बन्धित्वावच्छिन्नसामान्याभावपरम् अपरं विशेषणम्। [1]सम्बन्धिपदप्रतिपाद्यातिरिक्तकालव्यवच्छेदपरं वा अयोगव्यवच्छेदपदं तदा हेत्वन्तरं नाम निग्रहस्थानमित्यर्थः। कृतमित्यलमर्थे। नायमर्थो विवक्षावललभ्यः किन्तु शब्दलभ्य एवेत्याशयेनाह—**निषेधव्यवच्छेदेनेति**। निषेधो योगस्य तद्व्यच्छेदेन। तथा च तद् व्यवच्छेदपदार्थ एव। तथाहि नेह घट इत्युक्ते घटत्वावच्छिन्नप्रतियोगिताकाभावलाभः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वात्। अन्यथा नीलघटत्ववति पीतघटाभाववत्यपि तादृशप्रयोगापत्तेरिति भावनिष्कर्षः। यत्र भावप्रतियोगिताकोऽभावः प्रतीयते तत्रास्त्वेवं यत्र तु अभावाभावः प्रतीयते तत्र नैवं युक्तं तस्य सप्रतियोगिकत्वाभावात्। नहि घटाभावाभावोस्तीत्युक्ते घटातिरिक्तं किञ्चित् प्रतीयते तद्वदिहापि योगमात्रं प्रतीयते न तु तद्गतं सार्वदिक्त्वम् अन्यथा तद्घटाभावो नास्तीत्यत्र तद्घटस्य सार्वदिक्-

---

१. सम्बन्धिपद प्रतिपदप्रतिपाद्य।

तद्धर्मिकं सम्बन्धस्य असम्बन्धासामानाधिकरण्यम् 'अयोगव्यवच्छेदेने' त्यनेनोच्यत इति चेन्न, तस्यापि सत्त्वकाले तत्रासत्त्वोपगमात्। सर्वदेति चेन्न, यद्येवं तत् किं करणासत्त्वकालेऽपि योग एव करणेन क्रियायाः?

यावत्सत्त्वमिति चेत्, तर्हि सम्बन्धीति व्यर्थम्, यावत् सत्त्वमयोगव्यवच्छेदेन यद्विशिष्टमुपलक्षितं वा तत्करणमित्येवास्तु, सम्बन्धीत्येव वा तथा विवक्ष्यतामित्युक्तमेव।

---

त्वमपि सिद्ध्येदित्याशयेनाह—**निषेधव्यवच्छेदस्येति**। **अविशेषादिति**। सम्बन्धिपदादयोगव्यवच्छेदपदस्येत्यर्थः। यत्र धर्मिणि प्रधानक्रियासम्बन्धस्य तदसम्बन्धसामानाधिकरण्यं नास्ति तत्करणं कर्त्रादौ तु नैवमिति शङ्कते—**तद्धर्मिकमिति**। अयोगव्यवच्छेदपदेनोच्यते इति। न विद्यते योगो यत्र सोऽयोगस्तन्निष्ठात्यन्ताभावप्रतियोगिकत्वं तदभाव इत्यर्थः। तेन नायं निषेधप्रतियोगिको व्यवच्छेद इति नोक्त दोषः। नवा विवक्षालब्धोऽयमर्थं इति भावः। कर्त्रादौ तु प्रधानक्रियाभावसमानाधिकरणप्रधानक्रियासम्बन्धसत्त्वान्नातिव्याप्तिरित्यर्थवद् अयोगव्यवच्छेदपदमिति। **तस्यापीति**। तस्य = सामानाधिकरण्यस्य सम्बन्धकाले सम्बन्धाभावस्याभावादेव [१]सम्बन्धस्वीकारात् कर्त्रादावतिव्याप्तिरित्यर्थः—**यावत्सत्त्वमिति**। यद्यपि एतल्लक्षणप्रविष्टपदार्थ इति हेत्वन्तरं निग्रहस्थानं तथापि अप्रतिभयैवायं निग्राह्यो नान्यथेति तदुपेक्षते **तर्हीति**। न चायोगव्यवच्छेदेनेत्यस्यानन्वयः सम्बन्धिपदत्यागे स्यादित्यतः तदुपात्तमित्याशङ्क्य सम्बन्धिपदोपात्तं धर्मिस्वरूपमेव विशेष्यमस्तु सम्बन्धपदं त्यज्यतामित्याशयेन। तदेव प्रकटयति—**यद्विशिष्टमिति**। **उपलक्षितमिति**। यद्यपि विशेषणत्वसम्भवे न उपलक्षणत्वं न्याय्यं तथापि तृतीया इयं विशेषणे उपलक्षणे वा उभयथा उपपदविभक्तिः। प्रकृते च विशेषणत्वमसम्भवि प्रथमक्षणसत्ताविशिष्टे क्रियासम्बन्धाभावात् सत्ताविशिष्टे कारणताया एव खण्डितत्वेन तद्विशेषकरणतामुपपत्तेरित्युपलक्षणपक्ष आश्रितः। उपलक्षणतावच्छेदकं तु नानैव व्यापारवत् कुठारत्वादिकमेवेति ध्येयम्। अयोगव्यच्छेदोपलक्षितधर्मित्वापेक्षया लघुलक्षणमाह—**सम्बन्धीत्येव वा इति**। तथा = यावसत्त्वं क्रियासम्बन्धित्वेनेत्यर्थः। तथा च क्षीरिणो वृक्षा इतिवन्नित्ययोगे मत्वर्थीयविधानादेवायमर्थो लभ्यत इति भावः।

ननु गुरोरपि लक्षणत्वं न दुष्टं वस्तुतो यथा सन्निवेशेन वैयर्थ्यम् अन्यद्[२] यावत्सत्त्वं क्रियासम्बन्धित्वम् अन्यदयोगव्यवच्छेदेन सम्बन्धित्वम्। अस्तु वा सम्बन्धिपदम्। सम्बन्धमात्रपरम्। अयोगव्यवच्छेदेनेत्यस्य यावत्सत्त्वमिति ततश्च बिशिष्टमेव लक्षणं यावत्सत्त्वं क्रियासम्बन्धित्वमित्याशङ्क्याह—[३]**अयमेवार्थ इति**।

---

१. असम्बन्ध इति ख पुस्तके। २. अन्यधियारसत्त्वं क्रिया सम्बन्धित्वं अन्यदायोग इति।
३. अयमर्थ इति।

**अयमेवार्थः कयाऽपि कुसृष्टया सम्बन्धिपदसार्थकतामुपपाद्य यदि विवक्षितस्तदाप्युच्यते–कृत्तिकोदयक्रियायां रोहिण्यासत्तिरप्येवं करणं स्यात् अनन्तरभाविनश्चतुर्दशस्य नक्षत्रस्योदयं प्रति पूर्वभाविचतुर्दशसङ्ख्यनक्षत्रास्तमयस्य च करणत्वं स्यात् ।**

**न चैवमेव युक्तम्, योगपद्येन कारणत्वानुपपत्त्या कारकत्वस्य दुर्निरस्तत्वेन करणत्वस्य सम्भावनाऽनारोहात् ।**

**न च तत्र सम्बन्ध एव नास्ति, व्याप्तेः स्वभावसम्बन्धात्मिकाया दुरपह्नवत्वात् । अथ कार्यकारणभावः सम्बन्धो विवक्षितः । न, सामग्र्याः करणत्वापत्तेः । ओमिति चेत्, तत्किमोमित्यभिधायैव निर्वृत्तो भवान् ? आकलितं किलास्माभिः सामग्र्यपि करणमित्यत्र न श्रद्दधतः प्रणवपूर्विकां श्रुतिमेव काञ्चित्पठित्वा श्रद्धापयिष्यति भवानस्मानिति ।**

---

निषेधसमभिव्याहारलभ्येऽप्यर्थे समभिव्याहारलभ्याभिमानत्वरूपया कुसृष्टया इत्यर्थः । **एवमिति** । रोहिण्यासत्तेः कृत्तिकोदयक्रियया अयोगव्यवच्छेदेन सम्बन्धित्वादित्यर्थः । अतिव्याप्त्यन्तरमाह—**अनन्तरेति** । पूर्वभाविनश्चतुर्दशनक्षत्रस्यास्तमयोऽनन्तरभाविनश्चतुर्दशनक्षत्रस्योदयं प्रति कारणं स्यादिति सम्बन्धः । एतदुक्तं भवति अभिजिता सहाष्टाविंशतिनक्षत्राणि । तत्र सपादं नक्षत्रद्वयमेकैकस्मिन् राशौ गच्छति । उदयराशिमारभ्यषष्ठराश्यंशेऽस्तमयः । एवं षट्सु राशिषु चतुर्दशचतुर्दशनक्षत्राणि अस्तं यान्ति । अनन्तरराशौ[1] पञ्चदशसंख्यावच्छिन्ननक्षत्रस्योदय इति एककालीनयोस्तयोः कार्यकारणभावेऽपि करणत्वं स्यात् ।

**स्वभावसम्बन्धात्मिकाया** इति । अनौपाधिकसम्बन्धरूपायाः कालिकी हि तत्र व्याप्तिः सर्वैरेवेष्यते इत्यर्थः ।
यथाहुर्भट्टचरणाः—

> यो यथा नियतो येव यादृशेन यथाविधि ।
> स तथा तादृशस्यैव तादृशोन्यत्र बोधकः ॥

अयमर्थो यो भावो येन यादृशेन यद्देशकालवर्तिना यथा येन प्रकारेण संयोगसमवायैकार्थ समवायकार्यकारणभावादिना केनापि सम्बन्धेन साक्षात् परम्परया वा नियतत्वेन दृष्टान्तधर्मिष्ववगतः स तादृशो धर्म्यन्तरेषूपपलभ्यमानः तादृशेन देशकालवर्तिनं तथाविधसम्बन्धेन सम्बन्धिनमनुमापयति । यथा धूमः शिखरवृत्तिरुद्गच्छन्नतिदूरवर्तिना वह्निना नियतः तथैव तमनुमापयति । नदीपूरस्त्वधुनातनोभ्यासगतश्चातिदूरवृत्तिं वृष्टिम् । उदयस्तु चन्द्रगतः समुद्रगतां तत्कालवृद्धि

---

१. अनन्तराशौ ।

**न सामग्री कारणम्, किन्तु तदेकदेशो नानाभूतः प्रत्येकं तथा। सामग्री तु 'यदनन्तरं कार्यं' भवत्येवेत्येतावन्मात्ररूपेति चेन्न, एतादृशस्य सामग्रीलक्षणस्य**

तस्यैव नभोमध्यस्थितिः तामेव पञ्चदशनाडिकातिक्रान्तां[1] तादृश्या तया तस्या नियतत्वादिति। एवं कृत्तिकोदयरोहिण्यासत्त्यादेरपीत्यस्त्येव स्वभावसम्बन्धः। सम्बन्धपदं सामान्यशक्तमपीह विशेषपरमित्याशयेनाह—**अथेति**। निर्वृत्तः दोषोद्धारप्रयासाभावात् स्वस्थ इत्यर्थः।

ननु सा सामग्र्यपि कारणमित्यस्माभिः करणलक्षणवादिभिः स्वगुरुमुखादाकलितम्। गुरवस्तु श्रद्धेयवचसो भवन्तीति चेत्तर्हि श्रद्धया भवता इदं गुरुगृहे प्रतिपन्नम्। अस्माभिस्तु यदा सभामध्ये तस्याः करणत्वाभावो व्यवस्थाप्यते तदा नैवं शक्यं वक्तुं मद्गुरवोऽस्मिन्नर्थे प्रमाणं प्रतीतस्य आप्तत्वासिद्धेः। अतः प्रकरणपूर्विकां श्रुतिं परमेश्वरवाक्यं किञ्चित् पठित्वा त्वं गुरूक्ते श्रद्धां जनयिष्यसि संवादेन प्रामाण्यव्यवस्थापनात्। न चैतादृशं वेदवाक्यमस्तीति भावः। हन्तेति खेदे। किमर्थं परिहससि तत्रातिव्याप्तिसम्भावनैव कुतः। कारणताया एवासत्त्वेन सत्यप्ययोगव्यवच्छेदे विशेष्याभावाद् विशिष्टं लक्षणं नास्ति। सामग्री हि कारणानां मेलकरूपा कारणन्तु समवाय्यसमवायिनिमित्तरूपेण प्रसिद्धम्।

ननु तर्हि का सामग्री समग्राणां कारणानां मेलिका[2] इत्यसम्भवि। अन्ततोऽदृष्टजनकस्य चिरध्वस्तस्य कारणान्तरेण मेलकासम्भवादित्याशङ्क्य सामग्रीं निर्वक्ति—**यदनन्तरमिति**। कर्तरि अतिव्याप्तिवारणाय भवति एवकारः।

अत्र विद्यासागरः - करतलानलसंयोगादिरूपसामग्र्यां सत्यामपि दाहप्रतिकूलमन्त्रादिसद्भावे, न कार्यमुत्पद्यत इत्यव्यापकमिदं लक्षणम्। न च प्रतिकूलमन्त्राभावात्मककारणाभावात् सामग्र्यभाव इति वाच्यम्। प्रतिबन्धकाभावो न कारणं प्रतिबन्धकाभावत्वात् प्रतिबन्धकान्योन्याभाववदिति चेत्सत्यम्। अस्त्येवाव्याप्तिः तथाप्यतिव्याप्त्यात्मकं दूषणान्तरमाह—**एतादृशस्येति**। तदसत्। प्रतिबन्धकाभावस्य अकारणत्वे कार्योत्पादस्य दुर्वारतापत्तेः[4]। न च प्रतिबन्धकस्य कार्यस्य च विरोधादेव न प्रतिबन्धकसत्त्वे कार्योदय इति वाच्यम्। प्रतिबन्धस्य विरोधे किं मूलमित्यस्यैव चिन्त्यमानस्य कारणाभावं[5] विना अन्यस्य वक्तुमशक्यत्वात्। गोत्वाश्वत्वयोरपि विरोधे गवाश्वसामग्र्योर्विरोध एव मूलम् अविरोधे करम्बितकार्यापत्तेः।

यत्तु प्रतिबन्धकाभाव कार्योत्पादयोः समसमयत्वात् न कार्यकारणभाव इति कश्चिदाह। तदसत्। असिद्धेः प्रतिबन्धककाले च कुतो न कार्यमित्यत्र उत्तरा-

१. पञ्चदशानाडिका। २. मेलकम्। ३. अन्ततोऽदृशजनकस्य।
४. दुर्वारापत्तेः। ५. कारणाभावं नान्यस्यवक्तुम्।

**करणेऽपि सत्त्वात् करणस्यापि सामग्रीत्वापातात्, क्रियाया विभागादौ विभागस्य च संयोगनाशादिं प्रति तथात्वापत्तेः ।**

**यच्च प्रतिसामग्र्येकदेशं नियतप्राग्भावादि कारणलक्षणमिष्यते, तत्सामग्र्यामपीति कथं तदकारणता ?**

**प्राक्कालमन्तर्भाव्य सामग्री, तादृश्याश्च तस्याः प्राक्सत्त्वमेव नास्तीति चेन्न, तत एव प्राक्कालस्याकारणत्वात् कारणसामग्र्यां तदनिवेशात् ।**

**अपि चैवं विवक्षितमपि करणं न स्यात् । न हि यावत्सत्त्वं व्यापारवतोऽपि**

---

दानाच्चेत्यास्तां तावत् । तस्मान्नाव्याप्तिरिति । **क्रियाया विभागादाविति ।** [१]क्रियाविभागादेरपि विभागसंयोगनाशकसामग्रीत्वापत्तेः । न चेष्टापत्तिरेकस्य सामग्रीत्वे सामग्रीपदस्य रूढत्वापत्तेः । क्रियाविभागस्य विभागः संयोगनाशस्य सचोत्तरसंयोगस्य सामग्री स्यात्[२] नतु क्रियापि ※ क्रियया विभागः ततः विभागात् पूर्वसंयोगनाशः संयोगान्तरं सामग्र्यां स्यात् नतु क्रियापि ※ तथाच "संयोगविभागयोरनपेक्षकारणं कर्म" तिसूत्रविरोध इति भावः ।

**प्रतिसामग्र्येकदेशमिति ।** सामग्र्या एकदेशान् प्रति प्रतिसामग्र्येकदेशमिति अव्ययीभावः । **तदकारणतेति ।** तथा च सामग्र्यां करणलक्षणातिव्याप्तिः । **प्राक्कालमिति ।** यावतां कारणानामेककालसम्बन्धः सामग्रीत्यर्थः । तादृश्याश्च= प्राक्कालघटिताया इत्यर्थः । प्राक्कालस्य यतः प्राक्कालसत्त्वं नास्ति आत्माश्रयापत्तेः अतः सामग्र्या अपिप्राक्कालसत्त्वात्मकं कारणत्वं नास्तीति कथं सामग्र्यां करणलक्षणातिव्याप्तिरिति शङ्कितुर्भावः । **तत एवेति ।** कारणं हि सामग्र्यामन्तर्भवति प्राक्कालस्तु न कारणं तथा च सामग्रीमध्ये निवेशिनः[३] सर्वस्यैव कारणत्वात् तद्घटितयोः प्राक्सत्त्वगर्भं कारणत्वं दुर्वारमिति सामग्र्यामतिव्याप्तिः स्यादेवेति भावः । अथैकदेशैककालावस्थितानि कारणान्येव सामग्रीति न सामग्रीलक्षणं, यावतां कारणानामेकदा एकदेशेऽसम्भवात्[४] । कतिपयानां तत्त्वस्य चातिप्रसक्तत्वात् किन्तु प्रागभावेतरकादाचित्क[५] यावत् कारणप्राग[६]भावानाधारः क्षण एव सामग्री । क्षणत्वानुपादाने प्रहरादावतिव्याप्तिः, क्षणस्तु न जनकः कार्याधारस्य क्षणस्य पूर्ववृत्तित्वाभावात् । पूर्ववर्तिनस्तु कार्यानाधारत्वात् कालोपाधीनामविकरणीभूतानामेव कारणत्वादित्यस्वरसादाह—**अपि चैवमिति ।** यावत्सत्त्वं करणमिति विवक्षायां कुठारादावव्याप्तिरिति व्यापाराविष्टं सत् यावत्सत्त्वं क्रियाजनकमिति विवक्षितमपि करणं न स्यात् व्यापारवतः कुठारादेरपि क्रियायाः प्राक्काले क्षणं

---

१. क्रियाविभागादेरपीत्यारभ्य रूढत्वापत्तेरित्यन्तं द्विवारमुपलभ्यते । २. क ख पुस्तकयोः पाठभेदः । ※चिह्नानुसारी पाठः ख पुस्तकस्य । ३. निवेशिनं ।

४. सम्भवात् । ५. प्रागभावेन व । ६. प्रागभावाधारणः क्षण इति पाठः ।

**तस्य क्रियाजनकत्वम्, क्रियाकाले लक्षणमपि तदनुवृत्तिनिषेधे प्रमाणस्य दुरुपन्यासतया संशयेनापि लक्षणासिद्धेः। प्रत्युत चिरस्थिरकरसंयोगे स्पृश्ये स्पर्शप्रमाकरणस्पर्शनेन्द्रियसंयोगस्थैर्यस्य मन्तुमुचितत्वात्।**

---

सत्त्वात् उद्यमननिपतनविशिष्टे कुठारादौ प्रथमक्षणे छिदासम्बन्धोऽस्तीत्यत्र प्रमाणाभावात् सन्देह इत्यर्थः

ननु क्षणं तस्याननुवृत्तौ नियतप्राक्सत्त्वाभावेन अकारणस्य तस्य कारणत्वाभावे करणतैव न स्यादित्यवश्यमेकक्षणं व्यापारविशिष्टस्य क्रियानुपहितस्य सत्वेन लक्षणमसम्भव्येव स्यादिति चेन्न। कुठारस्य क्रियायाः प्राक्काले सत्त्वादेव नाकारणत्वं व्यापाराविशिष्टस्य अव्यापारावेशकाले क्रियायोगनियमे क्रियाव्यापारयोर्यौगपद्येऽपि न क्षतिः। नहि व्यापारोऽपि क्रियाकारणमित्यभिमानेन। यदिच्छिदाव्यापारयोर्यौगपद्यमङ्गीकृत्य लक्षणं लक्ष्ये संगम्यते तदा प्रमाणाभाव इत्यर्थः। वस्तुतो व्यापारस्याकारणत्वे ततोऽपि प्राक्क्रियापत्तिः। न च कारणतावच्छेदकः सः तथाप्यस्यास्तथात्वे तद्दोषतादवस्थ्यम्। ततस्तथात्वे तस्यापि प्राक्सत्त्वमावश्यकमवच्छेदकहीनस्य अवच्छेद्याभावापत्तेः। कदाचिदवच्छेदकवतोऽप्यवच्छेद्यसत्त्वे स एव दोष इति।

अथवा क्रियायाः छिदात्मिकायाः स्थितिकालेऽपिच्छेद्यसंयुक्तः कुठारोऽस्त्येव छेद्यनाशोत्तरमेवच्छेद्यसंयोगस्य कुठारनिष्ठस्य नाशात्।

ननु लक्षणभङ्गपक्षे संयुक्तकुठारः कार्योत्पत्तिक्षणे एव नंक्ष्यतीत्याशङ्क्याह— **क्रियाकाले** इति। क्रियोत्पत्तिक्षणे यदि तस्य नाशः[२] तदा क्षणमपि तस्यानुवृत्तिनिषेधे अननुवृत्तभावे (अनुवृत्तभावे) यत्प्रमाणं क्षणिकवादिभिरुपन्यस्यते तत एव तत्सिद्धिर्भवेत्। नच [३]तथाभूतनिष्पत्तिरपसिद्धान्तापत्तेः। नच तादृशं प्रमाणं [४]सदुपन्यासं भवति अपितु दुरुपन्यासं सत्त्वक्षणिकत्वयोरेकस्मिन् धर्मिणि ग्रहणासम्भवात्। तद्धि यदि प्रत्यक्षेण ग्राह्यं तन्न युक्तं धर्मयोरनुगतयोर्मिथ्याभूतयोः प्रत्यक्षासंस्पर्शात्। धर्मिस्वरूपात्मकयोस्तु स्थिरवादेऽपि क्षत्यभावात्। यदि चात्रापि निर्दोषं किञ्चित् प्रमाणं सम्भाव्यते तदापि लक्षणं सन्दिग्धाव्यापकत्वेन इतरभेदसाधकमेव। सन्दिग्धां व्याप्तिमुक्त्वा निश्चितां व्याप्तिमाह— **प्रत्युतेति**। व्यासङ्गदशायां करस्पृष्टे धरणीपाषाणादौ त्वगिन्द्रियसंयोग एवानुवर्तते नतु तदभावो मन्तुमुचितः। यदि तु तदभावो मन्तव्यः तदा मनः संयोगस्य विभुपक्षेऽप्यभावात् तत एव ज्ञानानुत्पत्तिसम्भवे मनसो नु कल्पना न प्रामाणिकी स्यात् इति भावः। असम्भवमपि अत्र लक्षणे कथयति। यावत् सत्त्वञ्च [५]करण-

---

१. सत्त्वे लक्षणसम्भव्येव स्यात्। २. तस्य नाशदा। ३. तथाभवति ष्पत्तौ अपसिद्धान्तापत्तेः।
४. तदुपन्यासम्। ५. कारणमिवि।

**यावत्सत्त्वं च करणमिति भाषायां सर्वस्मिन् तत्सत्त्वकाले करणत्वमित्यर्थः। न च कारणत्वस्य नियतपूर्वकालसम्बन्धात्मकस्य क्वचित्काले सत्त्वम्, कालं प्रति कालान्तराभावादिति।**

**अथ क्रियया अयोगव्यवच्छेदेन सम्बन्धीत्यस्यायमर्थो यस्मिन् सति भवत्येव क्रियेति। कोऽस्यार्थः—किं यस्मादनन्तरं क्रियोत्पद्यत एव? उत यस्मिन् वर्तमाने क्रियोत्पद्यत एव? उत यस्मादनन्तरं क्रिया तिष्ठत्येव, उत यस्मिन् वर्तमाने क्रिया तिष्ठत्येव?**

---

मिति भाषायां वाक्ये इत्यर्थः। यावच्छब्दस्य कृत्स्नवाचिनः सहशब्देन सम्बन्धस्य कारणत्वात्मकसम्बन्धेन योजनया सर्वस्मिन् कारणसत्त्वकाले कारणत्वं यत्र वर्तते तत् [1]करणमिति वाक्यस्यार्थ इत्यन्वयः। **क्वचिदिति**। किमुत सर्वस्मिन्निति भावः। कारणसम्बन्धकाले कारणत्वस्य वृत्तौ आत्माश्रयापत्तिस्तदा स्यात् यदि कारणताघटककाल एव कारणता वर्तेत नत्वेवं किन्तु कालान्तरमेव कारणताघटकात् कारणताया आश्रय इत्याशङ्क्याह—**कालं प्रतीति**। नियतकालसम्बन्धात्मकस्य कारणत्वं स्यादन्तर्भूतकालादन्यस्मिन् कारणकाले[2]भावादित्यर्थः। **अयमर्थ** इति। सम्बन्धीत्यनन्तरं भवति तिष्ठति वेत्यवश्यमध्याहार्यं शब्दसाधुत्वाय। तथा च कात्यायनः। यत्र क्रियापदं न श्रूयते तत्रास्तिर्भवतीति परः प्रथमपुरुषे अप्रयुज्यमानेऽप्यस्तीति। अस्तिरसूधातुः सत्तात्मकधातूपलक्षणम्। भवतीति परो लट्परः। सम्बन्धीत्यस्य विशेष्यं यत् तत् पदमध्याहार्यं तेन यदा अयोगव्यवच्छेदेन क्रियायाः सम्बन्धी भवति तिष्ठति चेति पर्यवसितं वाक्यम्। तत्र प्रथमे कल्पे क्रियाया अयोगव्यवच्छेदेन विशिष्टं यत् सम्बन्धि जायते तत्करणम्। द्वितीये तु तादृशं यत् तिष्ठति तत्तथेति। इदमुभयमपि कर्तरि अतिव्याप्तं कादाचित्कायोगव्यवच्छेदस्य तत्रापि सत्त्वादिति। [3] **भवत्येव क्रियेति**। अयोगव्यवच्छेदपदेन क्रियाव्याप्तिः कालिकी विवक्षिता तत्रापि द्वयोर्नैककालसम्बन्धरूपा सा विवक्ष्या किन्तु आनन्तर्यरूपा ततश्च यत्फलितं तदाह—**यस्मिन्सतीति**। निमित्तसप्तमीयम्। निमित्तता च भूतस्यैव मुख्येति भावेन व्याचष्टे—**यस्मादनन्तरमिति**। सम्बन्धी हि क्रियायोगव्यवच्छेदविशिष्टं तदा भवति यदि तदनन्तरं क्रियोत्पद्यते इति भावः। चिरातीतस्य निमित्तता सम्भवति व्यापारद्वारा परन्तु न तावता कालिकी व्याप्तिर्लभ्यत इत्यत आह—**यस्मिन् विद्यमान** इति। **सामग्र्या** इति। नहि कारणत्वघटितमिदं लक्षणमिति भावः। एतेन [4]स्वाश्रयाव्यवहितोत्तरक्षणे जायमानक्रियाकारणं करणमिति प्रथमविकल्पार्थः इति विद्यासागरव्याख्यानमपास्तम्।

---

१. कारणमिति। २. कारणकालेऽभावादिति ख पुस्तके

३. यदि क्रिया। ४. एतेन अव्यवहितोत्तर उत्तरक्षणजायमान।

**नाद्यः, सामग्र्याः करणत्वप्रसङ्गात्, हस्तादीनामकरणत्वप्रसङ्गाच्च, सुख-दुःखादेः प्रमेयस्यापि प्रमाकरणत्वप्रसङ्गाच्च। न च प्रमेयमपि प्रमायाः करणं स्यादेवेति वाच्यम्, तत्र तथाव्यवहारस्य कस्यचिदप्यसिद्धेः।**

**नापि द्वितीयः, स्पृश्येन सह स्थिरसंयोगस्य स्पर्शनेन्द्रियस्याव्यापनात्, तत्सत्त्वेऽपि व्यासक्तौ तेन प्रमानुत्पादनात्। नापि तृतीयः, सामग्र्यादेः करणत्व-प्रसङ्गात्, उत्पत्तेः, स्थिरे करणत्वप्रसङ्गाच्च। नापि चतुर्थः, सहस्थायिनां करणत्व-प्रसङ्गात्।**

---

यच्च सामग्र्यनन्तरं द्रव्यादि व्यक्तय एव जायन्ते न क्रिया इत्याशङ्क्य तथापि क्रियासामग्र्यामतिव्याप्तिर्बोध्या। अथवा द्रव्याद्युत्पत्तिरपि क्रियैवेत्याशये नेदम् नच तस्या न जन्मास्ति किन्तु घटादेरेवेति वाच्यम्। तथासति जनेरनिष्प-न्नत्वेन अनादितया तदाश्रयघटादेरप्यनादितापातात्। न च जनिर्न क्रिया किन्तु कारणसमवाय इति वाच्यम्। ध्वंसजन्मनि अव्याप्तेरिति विद्यासागरवचनं [1]लवणोदसमं रोचकं नतु पेयम्। आद्यक्षणसम्बन्धस्य [2]जन्मपदार्थतैव श्रुतत्वात्। तदाहुः न्यायाचार्याः।

अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मतेति। अथ कारणत्वेन विशेषणा-न्नातिव्याप्तिरिति चेन्न। तस्याः कारणतायाः अनुपदमावेदितत्वात्। क्षणात्मक-सामग्रीपक्षस्तु प्रागभावघटिततया तस्याप्रामाणिकत्वेनैव निरस्तः।

किञ्च कार्याधिकरणं कालोपाधिरेव कारणमित्यपि श्वासमयसन्तमसाच्छा-दितनेत्राणामेव तेषामिति ध्येयम्। सुखदुःखादेरित्यादिपदेन ज्ञानव्यक्तिविशेषस्य परिग्रहः कस्यचिदपीति। सुखमनुभवतः सुखेनानुभवामीतिव्यवहारादर्शनात्। सुख-निर्विकल्पके व्यापारशून्यस्य तस्य अकारकतया तद्व्याप्यकरणत्वव्यवहारस्य सर्वाननुमतत्वात् प्रमाणप्रमेयव्यवहारोच्छेदापत्तेश्च। सामग्र्यादेरित्यादिपदेन सुखो-त्पत्त्यनन्तरं [3]तत्प्रमा तिष्ठति तत्रातिव्याप्त्यापत्तिरिति बोध्यम्। एवं कर्मशब्दादा-वपि उत्पत्तेः। स्थिर इति। स्थिरपक्षे इत्यर्थः। घटोत्पत्तेरनन्तरं घटस्य सत्त्वात् उत्पत्तावतिव्याप्तिरित्यर्थः। नचेष्टापत्तिरुत्पत्तेर्निर्व्यापारत्वेनाकारकत्वात् क्षण-भङ्गस्थितेरभावात् किं प्रति करणत्वमायास्यति स्थिर इत्युक्तेः।

विद्यासागरस्तु—स्थिरो बुद्ध्यादिव्यतिरिक्तो घटादिः तस्योत्पत्त्यनन्तरं[4] स्थितिनियमात् स्थितिक्रियां प्रति तद्विशिष्टं घटं प्रति च करणत्वं स्यादित्यर्थः। [5]उत्पत्तेः स्थितेः करणत्वप्रसङ्गादिति क्वचित् पाठः। तदा [6]उत्पत्तेः स्थितिं प्रति स्थितेः

---

१. वचनलवणोदसरोचनकं तु पेयम्। २. जन्मपदार्थस्य तैव श्रुतत्वात्। ३. तत्प्रतिमा। ४. उत्पत्त्यनन्तरस्थितिनियमा। ५. उत्पत्तिस्थितिरिति। ६. तत्पत्तौ स्थितिं स्थितिं प्रति स्थितिः तदुत्तरभाविना श्रुत्यादि।

अथ क्रियया अयोगव्यवच्छेदेन सम्बन्धित्वं करणत्वमित्यस्यायमर्थः—व्यापारवतः फलाव्यभिचारित्वमिति। मैवम्, हस्ताद्यव्यापनात्।

## २५. व्यापारलक्षणखण्डनम्

कश्चायं तद्व्यापारो नाम—किं तज्जन्यं कारणम्, उत तदाश्रयं कारणम्? नाद्यः, लिङ्गपरामर्शे तदसम्भवात्।

पक्षे प्रथमधूमादिदर्शनस्य व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शव्यापारं जनयतः करणत्वमेष्टव्यम्। एवञ्च परमार्थतो व्याप्यस्य स्वरूपेण प्रमितिर्द्वितीयव्याप्ततत्परामर्शव्यापारिका अनुमानमिष्यत इति चेन्न, अन्यतो जाताग्निधूमादिव्याप्तिस्मृतौ सत्यां पक्षगतप्रथमधूमादिदर्शनस्य तद्व्यापारकत्वासिद्धेः।

---

तदुत्तरभाविनाशादिक्रियां प्रति करणत्वं स्यादित्यर्थः। सहस्थायिनामिति। रूपरसादीनां सहस्थायिनामन्योन्यं करणत्वापत्तेरित्यर्थः[१]। नच तेषां क्रियात्वाभावात्कथमतिव्याप्तिरिति वाच्यम्। क्रियाशब्दस्य कार्यमात्रपरत्वात् अन्यथा कार्यं करणपूर्वकमिति व्याप्तिभङ्गापत्तेरिति। यद्वा कुठारक्रियया सह कुठारसमवेतानां रूपादीनामित्यर्थः। व्यापारवतः इति। सामग्रचा निर्व्यापारत्वात् न तत्रातिव्याप्तिरित्याशयः! नचैवं फलाव्यभिचारित्वमिति व्यर्थमिति वाच्यम्। तथासत्यसम्भवापत्तेः। नच व्यापारवतोऽव्यभिचरित्वमित्येवास्तु तथासति कार्यान्तरनिरूपितव्यापारवतो व्यभिचारशून्यस्य दण्डस्य पटेऽपि करणत्वापत्तेरिति। फलपदन्तु प्रकृतफलपरमित्यदोषः। हस्ताद्यव्यापनात् इति। [३]सत्यामपि हस्तस्य पाकानुगुणकिञ्चिद्व्यापारदशायां पाकानुत्पादादकरणत्वप्रसङ्गादित्यर्थः। अथ फलाव्यभिचारित्वं यद् व्यापारवतः[४] तद् व्यापारवत्वे सतीति वाच्यमेवं तथासति फलाव्यभिचारिव्यापावत्वस्यैव सम्यक्त्वात् तच्चाग्रे दूषयिस्यते इति।

किञ्च फलाव्यभिचारो दैशिकश्चेत् तदा ज्ञानकरणाव्याप्तिः ज्ञानस्य आत्मवृत्तित्वेन देहादिदेशवृत्तिना सदेशत्वाभावात्। कालिकाव्यभिचारस्तु हस्ताद्यव्यापक इत्यपि बोध्यम्। तद् व्यापार इति।

तस्य व्यापारवतो विशेषणीभूतो व्यापारपदार्थः कः इत्यर्थः। तेन करणेन जन्यः इत्युक्ते क्रियायामतिव्याप्तिरिति कारणपदम्। तच्च तज्जन्यस्य विवक्षितमन्यथा क्रियाया अपि स्वप्रत्यक्षादिकारणतया अतिव्याप्ति तादवस्थ्यम्। कारणमिमित्युक्ते कर्त्रादावतिव्याप्तिरिति जन्यत्वं विशेषणम्। तदाश्रय इति। तत् कारणमाश्रयो यस्येत्यर्थः। शङ्कते—पक्षे प्रथमेत्यादि इष्यते इत्यन्तेन।

---

१. करणउत्पत्तेः। २. यद् व्यापारवतस्तद् व्यापारवतः तद्व्यापारवतः तद्व्यापारवतः तद्व्यापारवत्वेसतीति वाच्यम्। ३. सत्यपि। ४. सादेश्याभावात्।

**तत्राप्युभयकर्मजसंयोगवत्तदपि कारणमिति चेन्न अभावादिसापेक्ष-विशिष्ट-प्रतिपत्तिवत् प्रागुपजातवह्निव्याप्तधूमस्मृतेः प्रथममपि 'योऽसौ वह्निव्याप्तः सोऽयं धूमः इति परामर्शोपपत्तेः।**

**नित्यसापेक्षेऽर्थेऽस्तु तथा, नान्यत्र प्रथमं तथेति चेन्न, प्राक् तत्कारणोपपत्तौ नान्यत्रैवमिति नियमे प्रमाणस्याभावात्। तस्य व्यापाराभावात् नानुमित्युत्पादकत्वमेवेति चेत्, स्यादप्येवं यदि व्यापारवतः करणत्वमित्येव सिद्धं स्यात्।**

---

तथा च व्यापारशून्यः परामर्शः करणमेव नेति क्वाव्याप्तिरित्याशयः। प्रथमस्य पक्षनिष्ठलिङ्गदर्शनस्यापि अनुमितिकारणत्वात्। तत्र च व्यापार-विरहिणोऽपि तस्यैव कारणत्वमेष्टव्यमित्याशयेन परिहरति—**अन्यत** इति। अदृष्टस्य संस्कारोद्बोधकतया विनाऽपि प्रथमलिङ्गदर्शनं व्याप्तिस्मृतिसम्भवान्न प्रथमं पक्षीयलिङ्गज्ञानं परामर्शहेतुरिति भावः।

**तत्रापीति**। अदृष्टोद्बोधितसंस्कारजस्मृतावपि प्रथमलिङ्गदर्शनमपि कारणम्। नचादृष्टादेव स्मृतिसम्भवे प्रथमलिङ्गदर्शनस्य कारणत्वे गौरवमिति वाच्यम्। सदृशदर्शनत्वेन प्रथमदर्शनस्यापि क्लृप्तकारणभावात् किं किमन्यथासिद्धमिति वक्तुमशक्यत्वादित्याशयेन दृष्टान्तं दर्शयन्नेव शङ्कते—अभावो भेद इत्ययं पदार्थो नित्यं धर्मिप्रतियोगिधीसापेक्षप्रतीतिः यथाधर्मिग्रहणे प्रतियोगिस्मरणे च सति प्रथममभावाज्ञानेऽपि पटाद् भिन्नो घट इत्येवमाकारा जायते तथा इहापि न प्रथमतादृशपरामर्शः सम्भव इत्यर्थः। सत्तावादिधर्मिप्रतियोगिसापेक्षस्य तद्विशिष्टतया प्रतिपत्तिरिति योज्यम्। अभावादेर्धर्म्यादिप्रतीतिसापेक्षस्य[1] भाननियमात्। प्रतियोग्याद्यज्ञाने तद्ग्रहणायोगात्। प्रथमत एव प्रतियोग्यादिविशिष्टप्रतीतिरस्तु लिङ्गस्य व्याप्त्यादिस्मृतिव्यतिरेकेणापि प्रतीतेः। प्रथमतो लिङ्गस्य स्वरूपतः प्रतीतिरस्तु ततो व्याप्तिस्मृतिद्वारा विशिष्टपरामर्श इत्यर्थः। **प्राक्कारणोत्पत्ताविति**। पक्ष-निष्ठलिङ्गज्ञानात् प्रागेव व्याप्तिस्मृतौ=तत्सहितलिङ्गेन्द्रियसन्निकर्षात्मककारण-सम्पत्तौ। **नान्यत्रैवमिति**। नित्यसापेक्षेतरः प्रथमत एव विशिष्टज्ञानं न जायते इति वक्तुं न शक्यमित्यर्थः। अनुमित्युत्पादकत्वं नानुमितिकारणमित्यर्थः। अन्यथा अनुमितिप्रागभावबाधाभावादौ व्यभिचारापत्तेः। **एवेति**। यद्यपि निर्व्यापारे कारकत्वाभावात् तद्विशेषः करणत्वं बाधितं तथापि कारकताऽपि न व्यापार-घटिता अस्तु। किं वा तेन जन्मैव विषये बुद्धिव्यापार इत्यत इति भट्टमतमेवाव-लम्ब्यतां कारणव्यवहारानुरोधादित्याशयः।

---

१. परंपरमेव।

**तत्र धूमादिनिर्विकल्पकस्य तद्व्यापारस्य करणत्वमिति चेन्न, नित्यसङ्घटितार्थवद्विनापि निर्विकल्पकं सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे प्रमाणाभावात् ।**

**नित्यसङ्घटितेऽपि निर्विकल्पकं मंस्य इति चेन्न, कारणान्तरादेव तदुपपत्तौ तत्र निर्विकल्पककल्पनायां प्रमाणाभावात् । प्रत्युत तत्सङ्घटनस्य स्वभावानतिरेकोपगमात् ।**

---

**तद्व्यापारकस्येति ।** स परामर्शो व्यापारो यस्य तस्येत्यर्थः । परामर्शो हि धूमत्वविशिष्टज्ञानतया निर्विकल्पकजन्य इति भावः । **नित्येति ।** नित्यं धर्मिप्रतियोगिघटितोऽर्थो विषयो यस्य सविकल्पकस्येत्यर्थः । कर्मधारय एव वा । विशेषणज्ञानान्तराभावे हि निर्विकल्पककल्पना प्रकृते तु व्याप्तिस्मृतिरेव विशेषणज्ञानमिति किं निर्विकल्पककल्पनया इत्याशय इति मिश्राः । तन्न । तथासति नित्यं संघटितेऽपीति ग्रन्थेन व्यभिचारोद्धारानुपपत्तेः । तस्मात् परामर्शस्य सविकल्पकत्वेन हेतुना निर्विकल्पकजन्यत्वे साध्ये ससम्बन्धिकसविकल्पके व्यभिचारे दत्ते । **नित्यसंघटितेऽपीति ।** तेनापि प्रतियोग्यादि निर्विकल्पकत्वेन व्यभिचाराभावमाशङ्क्याह—**कारणान्तरादेवेति ।** प्रतियोगिस्मृत्यादेरेव[1] भावादभावस्य सविकल्पकोपपत्तेरित्यर्थः । निर्विकल्पककल्पनां प्रमाणाभावान्निरस्य अपसिद्धान्तापत्त्या निरस्यति । **प्रत्युतेति ।** विपरीतमित्यर्थः । निर्विकल्पकं न कल्पनीयमेवेति यावत् । अभावादीनामिदमेव स्वाभाव्यं यद्विशिष्टज्ञानमात्रविषयत्वमिति त्वयाऽभ्युपगमादित्यर्थः इति मैथिला व्याचक्षते ।

विद्यासागरस्तु—निर्विकल्पकविषयत्वे[2] सविकल्पकं प्रमाणमेव न स्यात् प्रमेयस्याधिकस्याभावात् । प्रतियोग्यभावो यदि निर्विकल्पकेन गृहीतः तदा तयोर्वैशिष्ट्यं सविकल्पकेन ग्राह्यमिति वाच्यम् । तच्च न सम्भवति विशेषणविशेष्यस्वरूपानतिरेकाभ्युपगमाद् वैशिष्ट्यस्येति व्याचष्टे । तत्र नाद्यः । अभावत्वांशे[3] निर्विकल्पकत्वेऽपि प्रतियोग्यंशे सविकल्पकैकरूपत्वात् । नापि द्वितीयः । घटस्याभाव इति षष्ठ्यर्थस्य निर्विकल्पकाविषयस्य सविकल्पे भानात् । तच्च अभावाभावत्वमतिरिक्तमेव वेत्यन्यदेतत् ।

अत्र क्रमः सविकल्पकत्वेन प्रतियोगिनिर्विकल्पकजन्यतासाधनमशक्यं तस्य प्रतियोगिसविकल्पकजननेन अन्यथासिद्धेः । यदि च निर्विकल्पके जन्यत्वमात्रं साध्यते तदा—**प्रत्युतेति ।** अभावत्वविशिष्टज्ञानस्य निर्विकल्पकजन्यत्वस्य बाधितत्वात् । अभावत्वे वैशिष्ट्यविषयकाभावज्ञानस्य निर्विकल्पकात्मनोऽभा-

---

१. व्यभिचारो दत्त इति युक्तम् । स्मृतिरेवभावादि अभावस्य ।

२. न निर्विकल्पकविषयत्वे इति उभय पुस्तके । ३. अभावाभावत्वंशे ।

**तथापि यत्किञ्चित्तज्जनकं तदेव तत्रानुमितिकरणमास्तामिति चेन्न, तथेन्द्रियादेरनुमितिकरणत्वापत्तेरिति अलमतिप्रसरेणेति।**

**शब्दश्रोत्रसन्निकर्षस्य च श्रोत्राव्यापारत्वप्रसङ्गात्। अन्यथा श्रोत्रस्य शब्दप्रतिपत्तावकरणत्वप्रसङ्गात्। सन्निकर्षो हि इन्द्रियव्यापार उच्यत इति व्यापारा-**

वात्। नहि अभावेन सह अभावत्वस्य स्वरूपातिरिक्तः सम्बन्धोऽस्ति। न च निर्विकल्पकस्य अभावत्वं न विषय इति।

यद्यपि सविकल्पकं निर्विकल्पकपूर्वकमिति व्याप्तेः निर्विकल्पकजन्यत्वेऽपि न भङ्गः तथापि तत्रानुकूलतर्काभावः निर्विकल्पकस्यानङ्गीकारेण [1]तादृशव्यापकघटकत्वाभावाच्च। मास्तु निर्विकल्पकस्य[2] परामर्शो व्यापारः तथापि न क्वापि परामर्शकरणिकानुमितिर्येनाव्याप्तिः स्यादित्याशयेनाह—**यत् किञ्चित्तज्जनकमिति**। परामर्शस्य जनिका व्याप्तिस्मृतिः। क्वचित् प्राक्तनपरामर्शजः संस्कारः परामर्शप्रागभावो वा। तथेति=परामर्शजनकत्वेनेति। इन्द्रियादेरित्यादिपदेन अदृष्टादि परिग्रहः। तथा च प्रत्यक्षाद्यनुमित्योर्भेदो न स्यादिन्द्रियजन्यत्वादितिभावः।

मैथिलास्तु—अनुमितित्वप्रत्यक्षत्वसाङ्कर्यापत्तिरित्याशयः। तदसत्। इन्द्रियत्वेन जनकतायामेव प्रत्यक्षत्वात्। नवा द्वयोरभेदापत्तिरपि दोषः परामर्शजन्यत्वेन अनुमितेः कारणभेदेन भेदात्। अत्राहुः तथा करणत्वे प्रमाणाभावः जनकजनकत्वेन अन्यथा सिद्धिश्च। तस्मात् लिङ्गमेव कारणमस्तु तस्यैव परामर्शो व्यापारोऽस्त्वित्याशङ्क्याह—**अलमतिप्रसङ्गेनेति**। तथासति पटज्ञाने दण्डः करणं घटो व्यापार इत्यपि स्यादिति भावः। तस्मादतिप्रसङ्गाभावेन लिङ्गपरामर्शः करणं ततश्च एवं व्यापारलक्षणे तद्घटितकरणलक्षणाव्याप्तिरिति प्रघट्टकार्थः तत्तुल्यं [3]तज्जन्यं कारणं व्यापार इत्यत्र जन्यत्वांशप्रयुक्तमव्याप्त्यन्तरमप्याह—

**शब्दश्रोत्रसन्निकर्षस्य चेति**। अत्र नाद्य इत्यनुषज्यते। तेन श्रोत्रसन्निकर्षस्य अव्यापारत्वप्रसङ्गाच्च नाद्य इत्येव पर्यवसितं वाक्यम्। तस्य अव्यापारत्वेऽपि करणलक्षणे को दोष इत्यत आह—**तथाचेति**। **क्वचित्तु अन्यथा श्रोत्रस्येति**। सन्निकर्षो हि प्रत्यक्षापेक्षितो न तु व्यापारोपीत्याशङ्क्याह—**अकरणकत्वप्रसङ्गात्** इति। सत्यपि सन्निकर्षे निर्व्यापारत्वेनेति शेषः।

न चास्तु तर्हि सन्निकर्षोऽतिरिक्त एव तस्य व्यापारः चक्षुषो यथा उन्मीलनं भट्टानामित्याशङ्क्याह—सन्निकर्षो हि इन्द्रियव्यापार इति। [4]इति नोन्मीलन-

१. तादृशव्यापकघटत्वाभावाच्च। २. निर्विकल्पकस्य परामर्शाव्यापारकस्य न न क्वापि।
३. तत्तुल्यं कारणं व्यापार इत्यत्राजन्यः। ४. इति रहितः पाठो द्वितीय पुस्तके।

**न्तरञ्च तस्य क्षणिकमसिद्धम्, स्थिरे चोक्त एव दोषः ।**

**शब्द एव तद्व्यापारः किन्न स्यादिति चेन्न, तस्य कर्मत्वेन करणकोटिबहिर्भावात् । क्वचित्तयोरेकत्वेऽपि का क्षतिरिति चेन्न, शब्दबुद्धौ कार्यायामुपधायकत्वेन प्रविष्टस्य शब्दस्य करणव्यापारतया कारणकोटावपि, प्रवेशनेंऽशतो नियम्यनिया-**

---

मिन्द्रियव्यापारो विप्रकृष्टस्यापि ग्रहापत्तेः । विप्रकृष्टमयोग्यमिति चेत्तर्हि समीपगमनानन्तरमप्यप्रत्यक्षतापातः ।

अथ चक्षुषः संयोग एव व्यापारः श्रोत्रस्य तु सन्निकर्षस्य समवायस्य व्यापारत्वासम्भवात् व्यापारान्तरमेव करणतोपपत्तये कल्प्यतामित्याशङ्क्याह—**क्षणिकमसिद्धमिति** । तद्धि [1]परिस्पन्दरूपं चेत् तन्न श्रोत्रस्य विभुत्वात् । स्थिरञ्चेत् तन्न श्रोत्रजन्यं समवायवदित्यर्थः । **किन्न स्यादिति** । स्यादेवेत्यर्थः । सहि श्रोत्रेणाकाशात्मना जन्यः श्रोत्रजसाक्षात्कारजनकश्चेति तस्य व्यापारत्वं दुर्वारमित्यर्थः । शब्दनित्यत्ववादिनां तु वायुकर्णशष्कुलीसंयोग एव । यद्वा न्यायमते एव इदं दूष्यते इत्यदोषः । शब्दो न श्रोत्रव्यापारस्तद्विषतत्वात् यदेवं तदेवं यथा रूपादि । यद्वा श्रोत्रं न स्वविषयव्यापारकं करणत्वात् चक्षुरादिवदिति भावेन परिहरति—**नेति** । तस्य शब्दस्येत्यर्थः । कर्मतया श्रोत्रजन्यज्ञानं प्रति इति शेषः । करणकोटिः करणांशः । शब्दादिर्विषयः श्रोत्रव्यापारतया करणकोटौ प्रविशेत् तदा विषयी भवेत् । व्यापारानुबन्धितयेति । तच्चानुपपन्नमिति तर्कोऽनुग्राहकोऽनुमानस्योक्तः । शब्दस्य श्रोत्रव्यापारतया शब्दजन्यज्ञानं प्रति करणत्वं तत्प्रयुक्तव्यवहारविषयतया कर्मत्वमप्यस्त्विति तर्कोऽप्यप्रयोजकइत्याशयेनाह—

**क्वचिदिति** । उभयनिमित्तसमावेशादित्यर्थः । विपक्षबाधकमूलकोऽयं तर्क इत्याह—**एकस्यामिति** । श्रोत्रकार्यायां शब्दबुद्धौ उपधायकतया विषयतया व्यावर्तकत्वेन प्रविष्टस्य शब्दस्य करणीभूतश्रोत्रव्यापारतया करणकोटावपि प्रविशतोंऽशतः[2] ( शब्दस्य ) नियम्यनियामकत्वविरोध आपद्येत । व्यापारविशिष्टस्य करणतया तद्व्यापारत्वात् । करणत्वं तस्यैव पुनः कार्यबुद्धिविशेषणतया कार्यत्वमापद्येत । तच्च विरुद्धम् [3]नियतोत्तरभावस्य कार्यत्वादिति । एकस्यां क्रियायां कार्यत्वं[4] करणत्वञ्च क्वापि न दृष्टमित्यर्थः ।

ननु घटादिबुद्धावप्ययं दोष आपतेत् यतो घटबुद्धिजन्यो घटेन्द्रियसन्निकर्षो जनक इति घटस्य जन्यजनककोटावन्तर्भावादिति परिहरति—**किमिति** । नास्माकं किञ्चिद् निर्वाह्यमस्ति । तथा च तदपि दुष्टमिति नास्माकं किञ्चिदनिष्टमापद्यत

---

१. तद्धि परिष्टं वेकरूपञ्चेत् तत्र श्रोत्रस्य विभ्रमात् ।

२. प्रविष्टशतः । ३. मियतोत्तरभावस्य । २. कार्यं कारणत्वञ्च ।

मकत्वविरोधापत्तेः। घटादिबुद्धौ चक्षुरादेश्चक्षुर्घटादिसंसर्गव्यापारकत्वेऽपि सममिदमिति चेत् किन्न स्यात्। तथा च—

बाधेऽदृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥३२॥
तथा हि मिथिलानाथो मुमुक्षुर्निर्ममः पुरा।
आहेदं मिथिलादाहे न मे किञ्चन दह्यते ॥३३॥

इति भावः। बाध इति। नियम्यनियामकत्वरूपो यो बाधो बाधको यो मयोक्तः स यदि अदृढः प्रशिथिलमूलत्वदोषेण दुष्टः तदा अन्यसाम्योक्त्या अलं[१], तदुपजीव्यं प्रशिथिलमूलत्वं तदेवोद्भाव्यताम्। यदि दृढः=प्रशिथिलमूलत्वादिहीनः तदा प्रतिवन्दिमूलमपि बाध्यताम्। नचैवं तर्हि तव स्वपक्षोऽपि न सिद्धयेत् ततश्च जात्युत्तरताऽपि स्यादिति। यतो मुमुक्षूणां क्व ममता मम स्थाप्यपक्ष एव नास्ति अद्द बाधया जात्युत्तरता स्यादिति। मुमुक्षूणां [२]स्वपक्षक्षतावपि निर्विकारतया अवस्थानम्। प्रतिवन्दीखण्डनाय संग्राहकश्लोकं लिखति— तथा चेति।

पुरावृत्तकथनेन निर्णाययति। तथाहीति —मिथिलानाथो राज्यविशेषस्य राजा जनकः—आह इदं किं मिथिलानगरीदाहे। याज्ञवल्क्येन जनकस्य वेदान्तश्रवणयोग्यतापरीक्षार्थी मायावह्निना मिथिलायां प्रदीप्तायां[3] ममकाराभावात् न मे किञ्चन दहतीत्याहेति। आदेहं मिथिलादाहे इति पाठे तु तथाहीत्यत्र तथाहेति पठनीयम्।

अत्र वदन्ति। शब्दस्य कार्यतावच्छेदककोटिप्रविष्टस्य करणव्यापारतया करणताघटकत्वेऽपि न करणत्वमिति कुतः एकस्यां क्रियायां कर्मकरणत्वयोर्विरोधः। न चांशतः शब्दस्य नियम्यत्वे नियामकत्वे च विरोधः। शब्दप्रत्यक्षस्य करणताघटकव्यापारीभूतशब्दनियम्यत्वेऽपि शब्दस्य शब्दानियम्यत्वात्। किं च शब्दप्रत्यक्षे शब्दस्य कारणत्वं श्रोत्रस्य च शब्दजनकत्वं स्वीक्रियत एव अन्वयव्यतिरेकाभ्यामतः तस्य सिद्धे श्रोत्रव्यापारत्वे तद्वतश्च श्रोत्रस्य तत् साक्षात्करणत्वात्। श्रोत्रस्य करणता प्रमाणसिद्धा चेत् कथं विरोधः। अथ एवं सत्यपि न कारणता तस्या अन्यथा निर्वाच्यत्वादित्युच्यते। तत्र तथापि लक्षितव्यापारतायाः सिद्धेः तत्त्वतः कारणताया अपि दुर्वारत्वात्। किञ्च[२] शब्दप्रत्यक्षं शब्दनियम्यमेव तेन विना

१. अलं तदुपजीव्ययति। १. स्वपक्षतावपि इति पाठः।
२ अनन्तमेव मे वित्तं यस्य मे नास्ति किञ्चन।
मिथिलायां प्रदाह्यायां न मे किञ्चन दह्यते॥ इति महाभारतीयं पद्यमेतस्य मूलम्।
३. शब्दप्रत्यक्षं शब्दप्रत्यक्षं।

तदनुपपत्तेः । सत्यम् । व्यापाररूपशब्दनियम्यं शब्दस्य व्यापारत्वेन नियामकता नास्तीति चेत् । मास्तु व्यापारत्वेन नियामकता परन्तु नियामकत्वं व्यापारत्वं च नास्तीति न शक्यं वक्तुम् । अयं न शब्दः स्वसाक्षात्कारणं किन्तु श्रोत्रमेव करणतया तत्सन्निकर्षमपेक्षते । सन्निकर्षस्तु शब्दसमवाय इत्यपेक्षः शब्दो न कारणतयेति चेन्न । श्रोत्रकरणतावच्छेदकस्यापि कारणतायाः प्रमाणसिद्धत्वात् ।

अत्र ब्रूमः । शब्दोपलब्धिः सकरणिका क्रियात्वात् छिदावदिति परिशेषात् श्रोत्रस्यैव तत्त्वे सिद्धे तत्सन्निकर्षः शब्दसमवायः इत्यपि सिध्यति नतु शब्दस्य प्रत्यक्षकारणताऽपि तथा सति तस्यापि निर्विकल्पकव्यापारस्य शब्दसविकल्पकात्मकप्रमाकरणतापत्तेः । एवं चक्षुः संयोगोऽपि सन्निकर्षतया सिद्धः संयोगस्य कारणतां गमयति ।

किञ्च प्रत्यासत्त्या चक्षुः करणमित्यर्थात् सिद्धः सन्निकर्षः । ततश्च तद्घटकतया घटादेर्न प्रमाणता । आधारः कः इत्यपेक्षायां न कोऽपि इत्येव ज्यायः । व्यापारवतः एव करणत्वमित्यस्यासिद्धेः । तथाच शब्दस्य न व्यापारत्वमिति साधूक्तम् ।

किञ्च शब्दप्रत्यक्षस्य करणनियम्यताया उभयसिद्धाया रक्षार्थं शब्दस्य व्यापारता खण्ड्या, अन्यथा तस्यापि करणकोटिनिविष्टस्य करणतापत्तिः । नियामकता तु नियतप्राक्कालता सा व्यापारस्यापीति । व्यापारवत एव करणतोपगमात् शब्दस्य व्यापारत्वे श्रोत्रस्येव शब्दस्यापि करणता स्यात् । नवा शब्दप्रत्यक्षे शब्दस्य नियामकत्वं शब्दस्य प्रत्यक्षविशेषतया शब्दस्यापि प्रत्यक्षपूर्ववर्तित्वात्[१] स्वं प्रति तथात्वापत्तेः । अंशतः इत्यस्यापि शब्दांश इत्यर्थः । नच शब्दप्रत्यक्षे शब्द उपलक्षणम् उपलक्ष्यतावच्छेदकान्तराभावात् । न च श्रोत्रप्रत्यक्षत्वं तथा शब्दत्वेऽपि सत्त्वात् ।

यत्तु सन्निकृष्टः शब्दोऽपि कारणं विनिगमकाभावादिति । अन्यथा भूतभाविघटानां घटत्वप्रत्यासत्त्या प्रत्यक्षत्वं न स्यात् । तस्माद् यस्य प्रत्यासत्तिरस्ति स भासते अन्यथा शब्दस्य भूतस्य भाविनः प्रतियोगिप्रत्यक्षविषयताऽपि न स्यात् । अतएव लौकिकसन्निकर्षस्थले शब्दस्य विद्यमानस्याप्यन्यथासिद्धता प्रत्यासत्तेरन्यत्र क्लृप्तायां एव कार्योपपत्तेरिति ।

दृढे तदपि बाध्यतामिति । चक्षुरादिसंयोगोऽपि न व्यापारः, किन्तु करणस्य सन्निकर्ष एवोक्त युक्तेः । व्यापारलक्षणञ्च न तज्जन्यजनकत्वघटितं किन्तु अनुकूलत्वघटितं शक्त्यादेरपि यागादिद्वारतया भट्टैः स्वीकृतत्वात्, अन्यथा सिद्धत्वघटिततया गुरुत्वाच्चेति दिक् ।

---

१. पूर्ववर्तितावत् । २. व्यापारं व्यापारं विकल्प्य ।

नापि द्वितीयः, लिङ्गपरामर्शस्यानुमितौ अकरणत्वप्रसङ्गात् । निर्विकल्पकस्यापि तस्योपगमे सविकल्पकानाश्रयत्वात् । अतद्धेत्वाश्रयस्य तद्धेतुव्यापारत्वे चात्यापत्तेः ।

## २६. फलाव्यभिचारित्वखण्डनम्

किञ्च फलाव्यभिचारित्वं किं तस्मिन्न काले फलस्य सत्त्वनियमः ? उत तदनन्तरं फलसत्त्वनियमः ? नाद्यः, कारणस्य पूर्वभाविताया अवश्यं वक्तव्यत्वात् ।

न द्वितीयः, आनन्तर्यं यद्यव्यवहितानन्तर्यं विवक्षितं तदा यत्किञ्चिद्व्यापारवतः करणत्वपक्षे हस्तादेरकरणत्वापत्तेः । आफलव्यापारवतस्तथात्वे कर्त्रादिष्वतिव्याप्तिः ।

---

**लिङ्गपरामर्शस्येति** । लिङ्गपरामर्शस्य अनुमितिकरणस्य अनुमितिकारणाधारत्वादित्याशयः । लिङ्गं सविकल्पकं नानुमितिकरणं किन्तु लिङ्गं निर्विकल्पकमेवेति । सविकल्पकस्य कारणानाश्रयत्वेऽपि न क्षतिरित्याशङ्क्याह—**निर्विकल्पकस्यापि तस्येति** । निर्विकल्पकस्यापि करणस्याभ्युपगमे । वस्तुतो निर्विकल्पकं विनाऽपि सविकल्प उपपादितोऽतः करणमेव । तन्न[1] । न चास्ति प्रमाणाभावादिति ।

ननु निर्विकल्पकं यद्यपि साक्षात् सविकल्पकाश्रयो न भवति, तथापि एकात्मवृत्तितैव तस्य करणाधारतास्त्वित्याशङ्क्याह—**तद्धेत्वाश्रयस्येति** । स चासौ हेतुश्चेति तद्धेतुः । करणे साक्षादाश्रितस्यैव करणव्यापारत्वम्, अन्यथा अनुमिति —प्रागभावस्य तथा पक्षतादेरपि व्यापारतापत्तेरित्यर्थः ।

विद्यासागरस्तु—तस्याः प्रधानक्रियाया हेतुमन्याश्रयतोऽपि व्यापारत्वे सर्वं य व्यापारत्वप्रसङ्ग इति व्याचष्टे । व्यापारानिरूपणेन लक्षणं दूषयित्वा फलाव्यभिचारानिरूपणेनापि दूषयति—

**किञ्चेति** । दैशिकी व्याप्तिरसम्भविनीति कालिकीं शङ्कते–**किमिति** । स्थूलकालमादाय व्यभिचार इति लक्षणमादाय दूषयति—**कारणस्येति** । तथाच फलप्राक्काले व्यभिचार इति भावः । अव्यवहितव्यापारवतः करणस्य [2]प्राक्कालीनमानन्तर्यं व्यापारस्य अव्यवहितत्वन्तु फलापेक्षया अतो नाव्यवधानानन्तर्ययोः पौनरुक्त्यम् । **यत्किञ्चिद् व्यापारवत** इति । फलाव्यवहितव्यापारवतः । अनन्तरफलव्यभिचारिव्यापारवत इत्यर्थः । काष्ठसंयोगादिव्यापारवतो हस्तादेः पाककरणतयेष्टस्य तस्यानन्तरं पाकानुत्पत्तेः करणत्वं न स्यादिति भावः । **अफलव्यापारवतः** इति । अफलं यस्य व्यापारः किं वा फलाव्यभिचारी यो

---

१. खण्डितः पाठः प्रतिभाति । द्वितीयपुस्तकस्यात्र द्वे पत्रे खण्डिते ।

२. कालीनं यं व्यापारस्य ।    ३. पाककरणतया इष्टः तस्यानन्तरं ।

**अथ व्यवहितस्यापि आनन्तर्यं विवक्षितम्, तदाऽपि यत्किञ्चिद्व्यापाराभिप्राये अन्तरायसम्भवात् हस्ताद्यव्याप्तिः । आफलव्यापाराभिप्राये च व्यवधानासम्भवात् कारकमात्रं करणमित्युक्तं स्यात् ।**

**व्यापारवतश्च फलाव्यभिचार इति किं तद्व्यापारस्य फलाव्यभिचारित्वम् ? व्यापारविशिष्टस्य वा ? नाद्यः, हस्ताद्यकरणत्वापातात् । अत एव न द्वितीयः, यागादेः स्वर्गाद्यकरणत्वापातात् । अपूर्ववाक्यार्थत्ववादिनाऽपि चरमयागस्य फलकरणत्वाभ्युपगमादिति ।**

---

व्यापारस्तद्वतः इत्यर्थः । कर्त्रादेरित्यस्यापि फलपर्यन्तव्यापारस्य एष्टव्यत्वात् अन्यथा अकारणत्वापत्तेरिति । अथ व्यवहितस्येति । व्यापारस्येति शेषः । आनन्तर्यमात्रं विवक्षितं नत्वव्यवहितत्वेन विशेषितमिति विद्यासागरः । तन्न । व्यवधानासम्भवादिति ग्रन्थस्य कर्त्रादिष्वपि व्यवधानासम्भवादतिव्याप्तिः स्यादित्येवं साध्याहारव्याख्यानस्य व्यवहितस्येत्यस्य त्यागापत्तेश्चेति । आनन्तर्यस्य पूर्वक्षणेऽपि सत्त्वेन प्रागुक्तदोषानुद्धारे फलोत्पत्तिपर्यन्तं परत्वस्येति यावत् । नच व्यापारविशेषणमपि व्यर्थमेवेति वाच्यम् । व्यापारवतः इत्यत्र व्यापारपदं फलाव्यवहितपरं व्यवहिततत्परं वेति विकल्पस्य विना तेनानुपपत्तेरिति ।

वस्तुतस्तु तदनन्तरं फलसत्त्वमित्यत्रानन्तरपदमुत्तरकालपरमन्यथा पूर्वक्षणस्यापि अव्यवहितात्मकानन्तर्यसत्त्वात् तत्फलासत्त्वेन व्यभिचारापत्तेरिति । न द्वितीय इत्यत्र आनन्तर्यपदमुत्तरत्वपरत्वमादाय विकल्पयति— आनन्तर्यमुत्तरत्वम् । तच्च अव्यवहितस्य व्यापारवतः उत त्वव्यञ्चेत्तदापि व्यापारपदं व्यवहितसाधारणव्यापारपरं व्यापारविशेषपरं वेति पक्षद्वयेऽपि दूषणमुद्भाव्य व्यापारवतो व्यवहितस्योत्तरत्वपक्षं परिगृह्य तस्मिन्नपि पक्षे व्यापारं विकल्प्य व्यापारमात्रपक्षे हस्ताव्याप्तिमुद्भाव्य फलपर्यन्तव्यापारपक्षे तादृशव्यापारवतो व्यवधानासम्भवाद् विकल्पोऽनुपपन्न इति दूषणमिति व्याख्यानमेव युक्तम् । **कारकमात्रेति**[1] । आकालव्यापारवतः फलाव्यभिचारित्वमिति लक्षणं कर्त्रादावतिव्याप्तमित्यर्थः कारकमात्रस्यैव फलपर्यन्तव्यापारत्वाक्षितिभावः । तद्व्यापारस्य यस्य कस्यचिदिति शेषः । **हस्ताद्यकरणत्वापातादिति**[1] । काष्ठसंयोगवति हस्ते फलव्यभिचाराभावादिति भावः । **यागादेरिति** । स्वर्गादिकाले यागादेर्विनष्टत्वेन सत्यपि व्यापारे विशिष्टाभावादित्याशयः । इदं दूषणं नैयायिकस्य भट्टस्य च मते । प्रभाकरमते तु नायं दोषः तस्य यागकरणतादभ्युपगमे अपूर्वस्य वाक्यार्थतानुपपत्तेरित्याशङ्क्याह--**चरमेति** । अपूर्वोपस्थित्यनन्तरमित्यर्थः ।

यद्यपि प्रथमं क्षणिकस्य यागस्य कालान्तरभाविफलकरणता न शक्यते बोद्धुं भावस्य अपूर्वस्यानुपस्थितेस्तथापि स्वर्गकामस्य यागविषयकं कार्यमिति वाक्यार्थ-

---

१. कालिक मात्रेति ।

**अथोच्यते—यद्वानेव करोति तत्करणम्, यद्वानेव प्रमिमीते तत्प्रमाणम्। मैवम्, आत्मधर्मप्रध्वंसादीनामकरणानां प्रमाणत्वप्रसङ्गात्।**

**येन क्रियाकारणेन युक्त एव प्रमिमीत इति चेन्न, सुखादिप्रमितौ करणव्यापारस्यापि करणत्वप्रसङ्गात्। ओमिति चेन्न, अव्यापारतयाऽकारकत्वेन तद्विशेषकरणभावानुपपत्तेः।**

**व्यापारवताऽपीति चेन्न, एवं हि व्यापारवत एव करणत्वं न स्यात्, न हि व्यापारवतस्तस्य व्यापारान्तरवत्ताऽस्ति।**

---

बोधे सति [1]औपादानिकफलकरणताज्ञानं नासम्भवि। अत एव यागे रागाधीनाप्रवृत्तिः काम्यसाधनताज्ञानादिति तन्मते ज्योतिष्टोमेन स्वर्गकामो यजेतेति करणतृतीयाऽपि संगच्छते। इदमजानत एव पूर्वसंस्कारसहितस्य पूर्वपूर्वयागजन्यावान्तरापूर्वसहितस्य वा चरमयागस्य परमापूर्वक्षणे[2] फलविषयतया करणत्वमुपगम्यते। काम्यस्य वा स्वर्गादौ तन्न स्यात् यागस्य स्वयं व्यापारात्मकस्य व्यापाराभावादित्यर्थं इति मितभाषिणीकृतः।

विद्यासागरस्य व्याख्यानं प्रभाकरमतविरुद्धं हेयम्। चतुर्थं करण**लक्षणं** न्यायवार्तिकोद्योतकरीयं शङ्कते—अलङ्कारादावतिव्याप्तेराह—**यद्वान्**[3] एवेति। अत्र यच्छब्देन किमुच्यते। करणञ्चेदात्माश्रयः। अथाकरणं तदा व्याघातः। तथा विशेषाभिधानेऽननुगमः[4] सामान्यन्तु असिद्धमेव यच्छब्दवाच्यमित्यपि दूषणं बोद्धव्यम्। आत्मधर्माः[5] क्षणिकाबुद्धयादयः। **प्रध्वंसादीनामिति**।[6] उत्पद्यमान प्रागभावस्यादिपदेन परिग्रहः। **प्रमाणत्वप्रसङ्गादित्युक्त्या** करणलक्षणमपि दूषितम्।

**करणव्यापारस्येति**। आत्ममनः संयोगस्येत्यर्थः। येन व्यापारवता करणेन युक्त एव प्रमिमीत इति। न च कारणपदं व्यर्थं व्यापारवतः कारणत्वनियमादिति वाच्यम्। मनः संयोगात्मककार्यान्तरव्यापारवतो मनःकर्मणोऽपि करणतायाः प्रमाणतापत्तेः। कारणपदस्य प्रकृतक्रियाकारणपरतया तस्य च प्रमाकरणत्वाभावान्नातिव्याप्तिः। **एवं हीति**। पूर्वं निर्व्यापारेऽतिव्याप्तिरुक्ता[7] अधुना सव्यापारे[8] एवं स्यादित्यर्थः। **नहीति**। व्यापारवति व्यापारानुत्पत्तेश्च[9] अनुभवबाधितत्वाच्च। [10]व्यापारान्तरस्य स्ववृत्तावात्माश्रयापत्तेश्च। व्यापारवतो निर्व्यापारतया कारकतानुपपत्तेः करणत्वाभावाच्च बोध्यम्। व्यापारो न विशेषणं किन्तूपलक्षणमिति

---

१. उपादानिकफलकरता ज्ञानम् इति। २. परमापूर्वलक्षणे इति द्वितीय पुस्तके।
३. पदमिवेति। ४. विशेषाभिधानं नुगमः। ५. आत्मधर्मि। ६. प्रशंसादीनामिति पुस्तकद्वये। ७. व्याप्तिरुक्ता। ८. सव्यापार एवमास्यादित्यर्थः।
९. परानुत्पत्तेश्च।, १०. व्यापारान्तरस्य स्वस्ति स्ववृत्तौ।

**अथ व्यापारवतो व्यापारांशमपहाय करणत्वम्, तत्र चास्त्येवेदं लक्षणम्। यस्य करणत्वमस्ति तस्य व्यापारवत्त्वमप्यस्तीति व्यापारवत् करणमुच्यत इति न, पटमुद्यम्य निपात्य च प्रक्षालयतः स कर्मैव हि करणं स्यात्।**

**किं च किं तस्य करणत्वमिति लक्ष्यीभूतस्य अवश्यवक्तव्यत्वात्। यद्युक्त-लक्षणवत्त्वमेव तत् स्यात्, तदाऽऽत्माश्रयापातः स्यात्। स्वरूपमिति चेन्न. स्वरूपस्य प्रतिकरणं भिन्नतया एकपरित्यागेन अपरत्र लक्षणं गतमित्यतिव्यापकं स्यात्, न हि चक्षुषः स्वरूपं श्रोत्रस्येति।**

**किञ्च—एवमिन्द्रियादेः प्रमाणत्वं न स्याद्, अतद्वतोऽप्यनुमात्रादेः प्रमातृत्वात्। नासौ प्रत्यक्षमिति चेन्न, नेदमपि हि प्रत्यक्षमात्रस्य लक्षणं भवता क्रियते।**

**ननु यद्यपीन्द्रियादेर्विशेषतो व्यावृत्तिस्तदपि तज्जातीयकरणमात्रतया तज्जातीयमात्रस्य अव्यावृत्तिरेव। न ह्यनुमित्यादावपि अकरणजातीयवान् प्रमिमीते इति। न, करणतया साधारणभावस्यात्राऽपि निर्णेतुमशक्यत्वात्।**

---

शङ्कते—**अथेति**। लक्षणमेव निष्कर्षयति। यस्य करणत्वमिति। तथाच व्यापार-समानाधिकरणं कारणमेव करणं [१]प्रमेयत्वातिव्याप्तिवारणाय करणत्वोपादानम्। उद्यम्य निपात्य च पटं प्रक्षालयतो रजकस्य प्रक्षालनक्रियायां पटस्य करणतापत्तिः पटवत एव प्रक्षालनकर्तृत्वात्। उद्यमननिपातनकेत्यनेन पटवत्ता कर्तुरुक्ता। सकर्मैव, वस्तुगत्या स पटः कर्मैव तल्लक्षणेन तदपि करणं स्यादित्यर्थः। लक्ष्यताव-च्छेदका परिचये लक्ष्यमुद्दिश्य लक्षणविधानमशक्यमिति तस्य निर्देशोऽवश्यमपेक्षितः। केनरूपेणेत्याशयेनाह—**तस्येति**। लक्ष्यतावच्छेदकाश्रयस्य करणत्वमिदमित्याकारो लक्षणाभिधानस्येत्यर्थः। लक्ष्यतावच्छेदकेनानुगतो धर्मो लक्ष्यः अननुगतो वा स्वरूपेण। आद्ये यदीत्यादि तथाच लक्षणतो लक्षणमिदमित्यलक्षणवति लक्षणं वर्तेत इत्यर्थपर्यवसानादाह—आत्माश्रयापत्तेः। अथ कुठारादेरिदं लक्षणमिति वाच्यम्। तन्न। आदिपदार्थाज्ञानात्। अथ कुठारस्वरूपं करणमिति वाच्यम्। तदा कुठार-स्वरूपस्यैव लक्षणत्वे करणं लक्षणमग्निना पचतीत्येवं प्रतीयमानेऽतिव्याप्तिरित्याह—**स्वरूपस्येति**।

ततश्चक्षुषः करणत्वेन लक्ष्यस्य, लक्षणं श्रोत्रेपि गतं तस्यापि करणत्वधर्म-वत्वात् अलक्ष्यत्वाच्चातिव्याप्तिरित्याशयः।

ननु स्वरूपाणामनुगमकं स्वरूपमेव लक्ष्यतावच्छेदकं स्मृतिलक्षणतो भिन्नमतो नात्माश्रय इति चेत् तर्हि तदेव लक्षणमस्तु अलं यद्वा नवेत्यादिना।

---

१. प्रमेयत्वात् व्याप्तिवारणाय इति प्रथम पुस्तके।

**अथ यां प्रमां यद्वानेव जनयति, तस्यां तत्करणमिति। मैवम् कौपीनाच्छादनादेरपि करणत्वप्रसङ्गात्। यज्जातिकामिति चेत्, मैवम्, परोक्षत्वजातिकां प्रमां लिङ्गवानेव शब्दवानेव वा जनयतीति नियमाभावात् तस्याकरणत्वप्रसङ्गात्।**

**साक्षात्कारित्वानुमितित्वादयो जातिभेदा विवक्षिता इति चेन्न, प्रत्येकमुपादाने अंशाव्याप्तेः। सम्भूयोपादाने सर्वाव्याप्तेः। अनियमेनोपादाने च लक्षणाननुगमापातादिति।**

**यदभावात् कर्तृकर्मणी क्रियां न जनयतः, तत्करणम्। तेन यदभावात् प्रमातृप्रमेये प्रमां न जनयतः, तत्प्रमाणमिति लक्षणमित्यपि न युक्तम्, किं प्रमातृप्रमेये सती यत्र न जनयतः उताऽसती अपि? आद्ये अतीतानागतानुमानादिकरणाव्याप्तिः। नापि द्वितीयः, प्रमातृप्रमेययोरपि प्रसङ्गात्। यथा हि तत्र चक्षुराद्यभावात् प्रमा न जायते, तथा प्रमातृप्रमेययोरप्यभावात्, अन्यथा तयोः कारणत्वमेव न स्यात्।**

---

**कौपीनाच्छादनादेरिति।** कौपीनं गुह्यं तदाच्छादनं पटः। परोक्षत्वं न जातिः किन्तु साक्षात्त्वादय इति त एव विवक्षिताः इत्याह—**साक्षादिति।** प्रत्येकमुपादानं, यद्वा नैव साक्षात् प्रमां जनयतीत्येवमाद्याकारेण संभूय उपादानं, यद्वानेन साक्षात्कार्यादि सर्वप्रमां जनयति इति एवं यस्य कस्य यदा कदाचिदुपादानमनियमः। प्रत्येकोपादानपक्षे तु सर्वेषामेव तद्रूपेणेति विशेषः। तेन यद्वानेन साक्षात्कारिप्रमां जनयति इति कदाचित् एवं यद्वानेवानुमितिप्रमां जनयतीति कदाचित् एवमनियमेऽपि प्रमाणसामान्यस्य लक्ष्यत्वादव्याप्तिरित्याह—**अनियमेति।**

**यदभावादिति।** यदभावात् कर्मक्रियां न जनयतीत्युक्ते[१] कर्तरि अतिव्याप्तिरिति कर्तृपदम्। न च कर्तुः नित्यत्वात् तदभावोऽसिद्धः। कर्तृपदेन प्रयत्नविशिष्टस्याभिधानात् तद्व्यतिरेकस्य[२] क्रियानुत्पत्तिप्रयोजकत्वात्। एवं कर्मपदानुपादाने कर्मणि[३] अतिव्याप्तिरित्युभयोपादानम्।

यदभाव इति पाठो विद्यासागरेण धृतः। यदभावं निमित्तीकृत्य[४] प्रमां न जनयतः इत्यर्थः। निमित्तसप्तमीयमिति व्याख्यातम्। इदञ्च करणं सम्प्रदाने गतं, दानकर्ता, दानकर्म च हिरण्यं तदभावज्ञाने[५] क्रियां यतो न जनयति इति यद्यपि प्रमाणलक्षणघटकमिदमिति ध्येयम्। अत एव प्रमाणलक्षणमेव दूषयति किमित्यादिना। असती अपीति। ...... ... **प्रमामिति।** प्रमेयसत्त्वं प्रमाणलक्षणान्तर्गत-

---

१. कर्म क्रियां जनयति।
२. तद्व्यतिरेकक्रियानुत्पत्ति।
३. कर्मपदानुपादाने कर्मणीभ्युभयोपादनम्।
४. कर्तृकर्मणी प्रमां न जनयत इतिभावः
५' सम्प्रदानकारकाभ वे इति तात्पर्यम्।

**एतेन सामान्यतोऽभिधानं प्रयुक्तम् अस्मदादिकर्तृसापेक्षेश्वरकर्तृके च अस्मदादिज्ञाने अस्मदादिकर्तृकरणतापत्तेः । एवञ्च सति प्रकारभेदेनापि प्रमाणप्रमात्रादिव्यवस्थासमर्थना कृता न स्यात्, येनैव रूपेण कर्तृत्वादिना तस्य प्रमायामन्वयस्तेनैव तद्व्यतिरेकस्य प्रमानुत्पत्तौ प्रयोजकत्वादिति ।**

**चरमव्यापारवत्त्वं करणत्वमित्यपि न, व्यापाराभावात् लिङ्गपरामर्शस्याकरणत्वापातात् । न च सविकल्पकव्यापारवतो निर्विकल्पकस्य तत्र प्रामाण्यम्,**

---

मित्याद्यविकल्पार्थः । अतीतानागतानुमानयोः नदीपूरपूरणे अतीतवृष्ट्यनुमानकरणे, विशिष्टमेघोदपाद्[1] भविष्यद्वृष्ट्यनुमितिकरणे इत्यर्थः । तत्र प्रमातुः सत्त्वेऽपि प्रमेयासत्त्वाद् उभयासत्त्वम् ।

यद्वा प्रमायाः करणात् प्रागसत्त्वेन सर्वत्रैव प्रमातुरप्यसत्त्वमिति । अनुमानादीत्यादिपदेन तादृशप्रमाकरणे शब्दे । अतीतानागतादीति पाठे तु कर्तुर्भानेऽप्यभावानुमानम् । यथा कदलीपक्वेऽपि क्षाराभावानुमानमिति विद्यासागरः ।

ननु यदभावात् प्रमा न जायते इत्येव लक्षणं न तु तयोः सत्त्वमसत्त्वं वा विवक्षितमित्याशङ्क्याह – **एतेनेति** । प्रमातृप्रमेययोरतिव्याप्त्या[2] इत्यर्थः । इदमुपलक्षणं कारणमात्रेऽतिव्याप्तिः । अतिव्याप्त्यन्तरमाह—अस्मदादिर्यः कर्ता आश्रयः तत् सापेक्ष्य ईश्वरः कर्ता यस्य तादृशि अस्मदादेः कर्तुराश्रयस्य इति यावत् ।

ननु प्रवृत्तिनिमित्तभेदादस्मदादेर्ज्ञातृत्वं ज्ञानकरणत्वं चास्त्वित्याशङ्क्याह—**एवञ्चेति** । व्यतिरेकद्वारा करणतावधारणे सतीत्यर्थः । ननु स्वातन्त्र्यं कर्तृत्वं, कर्तृनिष्टप्रमाव्यतिरेक[3]प्रयोजकव्यतिरेकप्रतियोगित्वं तु करणत्वमित्यास्ति प्रवृत्तिनिमित्तभेद इत्याशङ्क्याह—**येनैवेति** । येन रूपेणास्मदादेः[4] प्रमायामन्वयः प्रमासमवायित्वं तेनैव रूपेण प्रतियोगितानिरूपितस्य व्यतिरेकस्य प्रमानुत्पत्तिप्रयोजकत्वात् साङ्कर्यं स्यादित्यर्थः । ननु रूपान्तरेण तथात्वे प्रमाणाभावादितिभावः ।

षष्ठं करणलक्षणमनुवदति—**चरमेति** । चरमो व्यापारो यस्य स तथा तद्भाव इत्यर्थः । चरमत्वञ्च सकलकारकव्यापारोत्तरकालभावित्वम् । व्यक्तिर्वाच्या

---

१' विशिष्टमेवोदश ।

२, अतिव्याप्तिरूपदोषेण इत्येवं वक्तुमुचितमन्यथा "एतेने" त्यतेन सह भिन्नलिङ्गतयाऽनन्वयापत्तेः ।

३. प्रतियोजक इति । ४. कर्तृत्वादिना इतिभावः ।

**केवलविकल्पनीयलिङ्गविषये तदनुपपत्तेः । संस्कारादिपर्यन्तानुसरणे चानुमितेस्तज्जन्यत्वे प्रमाणाभावात्, कार्याहेतोश्च कारकाव्यापारत्वात्, अपि चाज्ञातकरणत्वापातात् ।**

**न च लिङ्गमेव परामर्शव्यापारवत्तया करणमिति युक्तम्; अनुमितानुमानादौ परामर्शस्यालिङ्गजत्वेन तद्व्यापारवत्त्वानुपपत्तेः । आप्तोक्त्यादिभिः तत्रासीद् धूमः इति प्रतीत्य 'तदा तत्र वह्निरप्यासीदि'ति यदनुमानं तत्रासत्त्वाद् धूमस्य परामर्शव्यापारवत्तया करणताया दूरनिरस्तत्वात् ।**

**किञ्च यत्किञ्चिदपेक्षया चरमव्यापारवत्त्वस्य सर्वकारकसाधारण्यात्, सर्वकारकापेक्षया चरमव्यापारवत्त्वस्य स्वापेक्षया चरमत्वानुपपत्त्या सर्वत्रासिद्धेः ।**

---

प्रमेयत्वात् जातिप्रमेयसामान्यवदित्यत्र[1] प्रमेयपरामर्शेऽनुमितिकरणेऽव्याप्तिरित्याह—**केवलेति** ।

ननु परामर्शस्य संस्कार एव ध्वंसो व्यापारोऽस्त्वित्याशङ्क्याह—**संस्कारादीति** । नहि तज्जन्यत्वमात्रं व्यापारलक्षणं किन्तु तज्जन्यजनकत्वसहितम् । न च संस्कारादेर्जनकत्वे मानमस्ति तत्समकालत्वादनुमितेः परामर्शस्य चरमकारणत्वव्याघातश्च स्यात् । स्वोत्तरभावि भावभूतकारणानपेक्षत्वं (चरमत्वम्) । परामर्शस्य करणत्वेऽनुमितेः[2] प्रत्यक्षतापात इत्याशयेनाह—[3]**किञ्चेति** । अज्ञातकरणत्वं प्रत्यक्षत्वं, तदापातोऽनुमितेरिति[4] शेषः । **अनुमितानुमानादाविति** । रूपोपलब्ध्या चक्षुरादिकमनुमीयते । तेन[5] च करणप्रेरकाधिष्ठितत्वमनुमीयते तत्रानुमितस्य चक्षुषः स्वविषयपरामर्शाजनकत्वान्नास्ति तत्र लिङ्गजः परामर्श इत्यर्थः । यदि चक्षुरादिकर्मकः परामर्शोऽपि कर्मजन्य एव अन्यथा तस्य कर्मतानुपपत्तिरिति । तदाह—**आप्तोक्त्यादिभिरिति** । अनुमित्यनुमानादावित्यत्रादिपदग्राह्यमप्येतदेव । इदमित्यादिपदस्य गृहधूमसम्बन्धजनकं विशेषानुपपत्तिरूपार्थापत्तिरूह्या ।

ननु तत्र धूमध्वंस एव लिङ्गमस्तु आसीदिति बोधे तस्यापि भानात् । तस्य च ततः परामर्शेऽपि कारणत्वात् धूमात्यन्ताभावाभावत्वेन वह्न्यनुमित्यव्यभिचाराच्चेत्याह—

**किञ्चेति** । **स्वापेक्षयेति** । यद्यपि स्वापेक्षया स्वव्यापारोऽपि चरमो भवत्येव तथापि व्यापारविशिष्टस्यैव करणविवक्षया इदमुक्तम् । न च स्वेतरसकलकारक-

---

१. प्रमेयत्वं प्रमाविषयत्वं तदप्रत्यक्षत्वात्, केवलं विकल्पगोचरप्रत्यक्षविषयत्व एव निर्विकल्पनियमादतश्च अव्याप्तिरित्याशयः । २. अज्ञातकरणतया इत्यति शाङ्कर्याम् । ३. अपिचेति मुद्रितपुस्तकेषु पाठः । ४. तदापातोऽनुमितिः । ५. नच ।

**कर्त्रपेक्षयेति चेन्न, कर्तृधर्मिमात्रापेक्षया विवक्षितत्वे कर्तरि प्रसङ्गतादवस्थ्याद्, व्यापारवत्कर्त्रपेक्षाभिप्राये च कर्तरि स एव प्रसङ्गः। एकव्यापारवत्कर्त्रपेक्षया अपरापरकर्तृव्यापारस्य चरमभावित्वात् यावद्व्यापारवत्कर्त्रपेक्षापक्षे तु विवक्षितमपि करणं न स्याद्, आफलसिद्धेः कर्तृव्यापाराविरामात्। व्यापारस्य विच्छेदे तद्धेतुलक्षणक्षीणतापत्तेः।**

---

व्यापारापेक्षया चरमत्वं विवक्ष्यमिति वाच्यम्। स्वस्याद्याप्यनिरुक्तेरात्माश्रयापत्तेः। कर्तृस्वरूपमात्रापेक्षया चरमत्वं कर्तृव्यापारस्यैव[1] तस्य तज्जन्यत्वादतो व्यापारवति कर्तरि अतिव्याप्तिरित्याह—**कर्तरीति**। प्रसङ्गमुपपादयति–एकव्यापारवदिति। एको व्यापारस्तदपेक्षया उत्तरव्यापारश्चरम इत्यर्थः। **व्यापारस्य हि विच्छेद** इति। यदि हि कर्ता करणं तद्व्यापारं वोत्पाद्य विच्छिन्नव्यापार इत्यर्थः। **तद्धेतुलक्षणेति**। तस्य कर्तुः हेतुलक्षणमनन्यथासिद्धनियतपूर्ववर्तित्वं तस्य क्षीणतापत्तिः। तथा च कारणताहीनस्य तद्विशेषकर्तृत्वायोग इति भावः **कर्तृव्यापारविरामादिति**। ईश्वरस्य कर्तुः व्यापारः प्रयत्नात्मकस्तस्य नित्यत्वात् कारकान्तरव्यापारस्य तदानन्तर्याभावाद्[2] ईश्वरस्य कर्तुरपि करणतापत्तिरित्यर्थः।

अयमाशयः, सर्वं हि कारकमीश्वरप्रयत्नकाले एव व्याक्रियते ननु [3]तदनन्तरकाले। यथा किञ्चित् प्रयत्नोत्तरकाले तन्तुस्तथा नेह उत्तरकालताया जन्मघटिताया वा ईश्वरप्रयत्ननिरूपिताया अभावादिति भावः। यदि च तत्क्षणध्वंसानधिकरणतत्क्षणाधिकरणवृत्तित्वमानन्तर्यं तदा सुतरां, सर्वक्षणानां ध्वंसाधिकरणत्वात्।

मैथिलास्तु [4]अत्यन्ततन्तुसंयोगात्मकव्यापारस्यापीश्वरजन्यतया ईश्वरीयत्वं तदनन्तरञ्च कारकान्तरं न व्याप्रियते इतीश्वरस्य करणतापत्तिरित्यर्थः इत्याहुः। तन्न। अविरामोक्तेः प्रकृताननुगुणत्वात्। आनन्तर्यस्य विशेषणस्य सिद्धेः तदसिद्ध्यभिधानम् असम्बद्धव्यापारान्तराभावश्च वक्तव्यो नोपात्त इति सर्वासङ्गतिः।

अक्षयोगः संयोगः। आदिपदेन संयुक्तसमवायादयो गृह्यन्ते। यथा अक्षसन्निकर्षाख्यस्य अक्षव्यापारस्य अनन्तरं ज्ञानजननाय कारकान्तरं न व्याप्रियत इत्यक्षकरणं तथा कर्मापीति। तदपि करणं स्यादित्यर्थः। [5]करणमात्रस्य लक्षणेऽतिव्याप्तिमाह—**छेद्यादेर्हीति**।

न च करणमात्रमेवेह लक्ष्यं न तु प्रमाणमिति व्याप्त्यभिधानेऽर्थान्तरतेति वाच्यम्। प्रमाणलक्षणेनैव करणलक्षणस्य निर्वाचनं वार्तिकादौ इति तद्दूषणस्यैव प्रकृतत्वात्।

---

१. कर्तृप्रायवस्यैव।

२. तदानन्तर्याद्। ३. तदनन्तर काले। ४. अन्त्यतन्तु संयोग इति युक्तः पाठः।

५. करणमात्रप्रमाणलक्षण इति व्याप्ति करणमात्रस्य लक्षणेऽतिव्याप्तिमाह।

**यद्व्यापारानन्तरं कारकान्तरं न व्याप्रियते, तत् चरमव्यापारमिष्टमिति चेन्न, सेश्वरपक्षे कर्तृव्यापाराविरमात्, तदानन्तर्यासिद्धेस्तत्करणत्वापातात्। अनीश्वरपक्षे चाक्षसंयोगादिभिरेव सव्यापारे कर्मण्यपि प्रसङ्गात्। छेद्यादेर्हि करणसंयोगादिव्यापारश्चरम एवेति कुतस्तद्व्यवच्छेदः। हस्ताद्यव्याप्तेश्चेति।**

**अनन्तरफलं करणमित्यपि न, अविशेषितानन्तर्यस्य सर्वकारणसाधारण्यात्। अव्यवहितानन्तर्यस्य व्यापार्यपेक्षस्य यागाद्यव्यापनात्। व्यापारापेक्षस्य च हस्ताद्यव्यापनात्। व्यापारपरम्परापेक्षस्य सर्वकारकव्यापनात्।**

**किञ्च तत्कार्यो यदि क्रियाहेतुस्तद्व्यापार इष्टः, तदा इन्द्रियकार्यो लिङ्गपरामर्शोऽनुमितिक्रियाहेतुरिति इन्द्रियकरणिकाऽनुमितिः प्राप्ता।**

---

मैथिलास्तु—न केवलं ज्ञानकर्मणि किन्तु छिदादिक्रियाकर्मण्यप्यतिव्याप्तिरिति—**छेद्यादेरिति**। आदिपदेन पाकादिकर्म तण्डुलादिकमपि गृह्यते। **हस्तादीति**। हस्तादिव्यापारानन्तरं काष्ठादीनां व्यापारादितिभावः।

सप्तमं करणलक्षणमनूद्य दूषयति—**अनन्तरफलमिति**। सामग्र्यतिव्याप्तिस्तु[1] नाशङ्क्यते—तस्याः फलाभावात्। सामग्रीध्वंसस्तत्कार्यः। इति चेन्न। स हि प्रागभावध्वंसः पटादिरूपः पर्यवसितः। स च न प्रागभावानन्तरभावी प्रागभावस्य अन्त्यतन्तुसंयोगात् प्रागपि सत्त्वात्। अन्त्यतन्तुसंयोगध्वंसस्तु नानन्तरभावी न वा सामग्रीध्वंसः सत्यपि तस्मिन् पटोत्पत्तिक्षणे एव सामग्रीध्वंसोत्पत्तेः। अनन्तरमेव फलं यस्येति हि समासार्थः। कर्त्रादौ नास्तीति नातिव्याप्तिः। तत्रानन्तर्यं यद्यव्यवहितत्वमात्रं तदा परामर्शोत्पत्तिक्षणे परामर्शेऽव्यवहिते फलाभावात् अव्याप्तिः स्यादिति आनन्तर्यमुत्तरत्वं विवक्षितं, तच्च सर्वकारकाणामस्ति कारणत्वादित्याह—**अविशेषितामिति**। अव्यवहितत्वेनाविशेषितमुत्तरत्वमित्यर्थः। चिरविनष्टकरणमात्रस्योपलक्षणम्। नहि स्वर्गो यागस्याव्यवहितोत्तरक्षणोत्पत्तिरिति भावः। **व्यापारापेक्षस्येति**। यद्यपि अनन्तरफलमित्यत्र व्यापारो न श्रुतस्तथापि यच्छब्दार्थो योऽन्यपदार्थः स व्यापारविशिष्टो व्यापारोपलक्षितो वाच्यः आद्ये—**यागादीति**। अन्त्ये यस्य व्यापारानन्तरफलमिति पर्यवसितम्। तत्राह—**हस्ताद्यव्यापनादिति**। आदिपदेन यागस्यापि परिग्रहः। नहि सत्यपि अपूर्वे तदानीमेव फलम्। **व्यापारपरम्परेति**। कर्त्रादेरपि फलपर्यन्तं व्यापारसत्त्वात्। तत्परम्परापेक्षया अनन्तरफलकत्वमस्त्येव। कर्त्रादिरपि फलानन्तर्यवान्। नहि स्वव्यापारः स्वस्य व्यवधायकः। तथा च फलाव्यवहितपूर्ववर्तित्वं क्वचित् स्वतः कुत्रचिद् व्यापारद्वारा इत्याशयः।

---

१. सामग्र्यपि व्याप्तिः।

**अथ हेतोः सतः कार्यः क्रियाहेतुस्तद्व्यापारः, तथा सति अनुमित्यहेतोरिन्द्रियस्य कुतः करणत्वं स्यादिति। मैवम्, किं तद्धेतुत्वं यन्नास्त्यनुमितौ इन्द्रियस्य।**

**नियतपूर्वभावित्वमिति चेत्, अस्ति तावत् पूर्वभावित्वम्। नियतत्वमपि यदि कारणतायां प्रयोजकमिच्छसि, तदा भवतैव यतितव्यं केनचिद्रूपेणेन्द्रियादेर्नियत्वं प्रति। अन्यथा लिङ्गेन्द्रियादेः परस्परव्यभिचारादकरणिकैव प्रमा स्यात्। मनःसंयोगादेरेव तथात्वे चाऽप्रमासाधारण्यम्।**

---

**हेतोः सतः**। तथा च तज्जन्यजनकत्वघटितं व्यापारत्वमित्यर्थः। आत्मनो व्यापारत्ववारणाय तज्जन्य इति विशेषणम्। **अस्ति तावदिति**। अनन्यथासिद्धत्वे सति पूर्वभावित्वमेव कारणत्वम्। नच रासभेऽतिव्याप्तिः। अन्यत्र क्लृप्तपूर्ववर्तिसहभावित्वेन तस्यान्यथासिद्धत्वात्। नियतत्वमपि तद्व्यक्ति प्रति तस्यास्त्येव। घटत्वावच्छिन्नं प्रति नियतत्वं विवक्षितमिति चेन्न। यदा पटस्तत् प्राक्काले रासभ इति नियमस्यापि सत्त्वात्। यत्र घटस्तत्र पूर्ववर्तिताऽभिमता[1] इति नियमो विवक्षित इति चेत्। सत्यम्। किन्तु तद्वारणीयस्य रासभस्यान्यथासिद्धपदेन वारणाद् वैयर्थ्यम्। **केनचिदिति**। तच्च रूपं नेन्द्रियत्वादिकं न्यूनवृत्तित्वादितिप्रमाकरणत्वं वाच्यम्। तथा च प्रमात्वावच्छिन्नकार्यं प्रति तेनरूपेण इन्द्रियस्यापि प्रमाजातीये नियतपूर्ववर्तित्वं त्वयैव उपपाद्यमिति विद्यासागरस्यापव्याख्यानम्। तथा करणतायामननुगमतादवस्थ्यात् नहि घटपटप्रमात्वमनुगतम्। घटप्रमात्वमनुगतमिति चेन्न। तस्यापि प्रकारत्वघटिततया तस्य च तज्ज्ञानव्यक्तिगर्भस्यात्यन्तमननुगतत्वात्[2], निर्विकल्पकेऽसत्त्वाच्च निर्विकल्पके करणे पञ्चमप्रमाणतापत्तेश्च। भ्रमभिन्नानुभवत्वञ्चेत्तथापि तादृशधर्मेण कारणतायाः (यां) किं मानम्। जन्यप्रमा सकरणिका क्रियात्वात् सम्मतवदित्यनुमानमेव परिशेषेण तन्न प्रमाणमिति चेन्न। प्रमाकरणत्वे सिद्धे, तेषामनेन रूपेण नियततावच्छेदकत्वे सिद्धे च, तस्यावच्छेदकत्वे विभिन्नरूपेण नियमसिद्धिरित्यन्योन्याश्रयः। अदृष्टविशेषत्वमेव तथेति चेन्न। असिद्धेः। धर्मत्वाधर्मत्वाभ्यां साङ्कर्यापत्तेर्न सा जातिस्तदन्यो विशेषस्तु दूरत एव। शक्तिविशेषस्तथेति मीमांसकानामेव शोभते। अन्यतरत्वमेव तथेति तु न्यायमतम्। नचैवं व्यभिचारिणामन्तर्भाव्यापि कारणता स्यादिति नियतपदं कारणतालक्षणे व्यर्थमेव स्यात्। व्यभिचारिणोऽप्यन्यतरत्वेन नियमसम्भवादिति वाच्यम्। अतएव प्रकारान्तरेण [3]सिद्धेकरणे एव तद्रक्षार्थमन्यतर एवोपात्त इत्याकलय। एतेनैवाखण्डो-

---

१. अभिमत इति पाठः। २. अत्यंमनुगतत्वाम्।

३. सिद्धकुरणेन एव तद्रक्षार्थमन्यतरदेवोपात्याकलय।

**अपि चाक्षादेरकरणत्वापातः, यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषस्यैव तद्विशेषे प्रयोजकत्वनियमदर्शनात्। ततो येन केनापि रूपेणेन्द्रियस्य प्रमायां नियतत्वमुपपाद्यते, तेनैव रूपेण प्रसङ्गोपपत्तिः।**

---

पाधिः प्रमाणतेत्यपास्तम्। अन्यतरत्वस्यावश्यकत्वात् तेनैव तदन्यथासिद्धेरिति दिक्। **मनःसंयोगादेरिति**। तथा च नेन्द्रियस्यानुमितिकरणत्वापत्तिरितिभावः। आदिपदेन ईश्वरेच्छा परिग्रहः। **अप्रमासाधारण्यमिति**। तथा च जन्यज्ञानत्वावच्छिन्नं प्रत्येव तत्कारणं तेन प्रमाऽप्रमात्मकयोः कार्ययोः वैलक्षण्यं न स्यादितिभावः। **अपि चाक्षादेरकरणतापत्तिरिति**। मनः संयोगादेरेव तथात्वे इत्यस्यैव शेषोऽयम्। **अकारणतापत्तेरिति**। प्रमायामिति शेषः। एकत्र करणद्वये। गौरवादितिभावः इति विद्यासागरः। वस्तुतस्तु इन्द्रियलिङ्गादिसाधारणरूपेण इन्द्रियादेः प्रमां प्रति अकारणत्वे साक्षात्कारकारणताऽपि न स्यादित्यर्थः। तत्र हेतुः यत्सामान्य इत्यादि, दर्शनादित्यन्तः। यत् सामान्यमित्याद्यप्रयोजकं सामान्यकारणताया विशेषकारणतानुपपादकत्वादित्याशयेन शङ्कते—**प्रमात्वप्रयोजकमिति**। यदि कार्यसामान्यकारणसामान्ययोर्निरुपाधिः सम्बन्धस्तदा विशेषयोरपि स वाच्य एवेत्युक्तमावर्तत इत्याशयेन परिहरति—**निरुपाधिकत्वेति**। अत्र विपक्षे बाधकमाह—**अन्यथेति**। सामान्यावच्छेदेन यत् कारणत्वं तद् यदि [1]विशेषे न स्यात्तदा व्यक्तिः कारणं न स्यादित्यर्थः इति मिश्रव्याख्यानमशुद्धम्। प्रमासामान्यप्रयोजकस्य अनुमितिप्रमायां व्यक्तिस्थानीयायां प्रयोजकत्वेऽपि अनुमितिप्रमात्वं न [2]प्रमाकरणत्वेनेन्द्रियप्रयोज्यमनुमितित्वस्य तदप्रयोज्यत्वात् तथाचानुमितित्वप्रयोजकं लिङ्गमेवेति शङ्काया अपरिहारात्। अतएव व्यक्तेरकारणत्वापत्तिरित्यपि न तर्कः व्यक्तेरपि सामान्यधर्मावच्छिन्नकारणताश्रयत्वादेव। अन्यथा कारणताया निराश्रयतापत्तेः। सामान्यधर्मावच्छिन्नस्य विशेषत्वनियमात्। तदवृत्तौ सामान्यधर्मावच्छिन्नकारणता मिथ्यैव स्यादिति। तस्मात् प्रमासामान्ये मनः संयोगादिः, प्रत्यक्षादाविन्द्रियलिङ्गादिः। न तु सामान्याप्रयोजकस्य विशेषाप्रयोजकत्वं प्रमाणाभावादिति शङ्कार्थः। सामान्यप्रयोजकस्यैव धर्मविशेषावच्छिन्नस्य विशेषप्रयोजकत्वं स्यान्नतु अक्लृप्तेन्द्रियत्वलिङ्गत्वादीति मनःसंयोगविशेष एव प्रत्यक्षानुमितित्वादौ प्रयोजकः स्यान्नत्विन्द्रियलिङ्गत्वादिकमिति परिहारार्थः। यथा प्रमासा[3]मान्यमनःसंयोगसामान्ययोः सम्बन्धो निरुपाधिः तथा मनःसंयोगविशेषप्रत्यक्षादिप्रमाविशेषयोरपीत्यर्थः। सामान्यस्य प्रयोजकत्वे विशेषस्यापि प्रयोजकतायाः क्लृप्तत्वाविशेषेऽपि तद्विशेषस्यैव प्रयोजकतायाः लाघवेन कल्पयितुं युक्तत्वात्

१. विशेषेण स्यात्। इति उभयत्र पाठः। २. नप्रकारणत्वेन।
३. यथा प्रमान्य मनः संयोग।

नत्विन्द्रियत्वप्रत्यक्षत्वादिना इन्द्रियत्वेन प्रयोजकतायाः क्वाप्यक्लृप्तत्वादिति सिद्धान्तभङ्गापत्तेरतो न मनःसंयोगत्वेन प्रमाकरणत्वमपि तु इन्द्रियाद्यन्यतरत्वेन ततः तद्विशेषप्रत्यक्षादिकं प्रति इन्द्रियत्वादिनेति तव सिद्धान्तः ततश्चानुमितेरिन्द्रियत्वेन इन्द्रियाजन्याया अपि अन्यतरत्वेन इन्द्रियजन्यत्वादनुमितिरिन्द्रियकरणिका स्यात् परामर्शस्य तज्जन्यत्वे सतीन्द्रियजन्यानुमितिजनकार्थे [1]इन्द्रियव्यापारत्वादिति ।

ननु अनुमितित्वे प्रयोजको मनःसंयोगो विशेषः कः कश्च प्रत्यक्षत्वे प्रयोजक इति चेत् लिङ्गपरामर्शकालीनत्वम् इन्द्रियसन्निकर्षकालीनत्वञ्च । एवमन्यत्रापि वाच्यम् । न चैवं तयोरेव [2]कारणत्वमुचितम् आवश्यकत्वादिति शङ्कायामाह—**निरुपाधित्वाविशेषादिति** । यथा सामान्ये तस्य सामान्यरूपेण अन्यथासिद्धान्वयव्यतिरेकित्वं तथानुमित्यादि विशेषेऽपि मनोयोगस्य लिङ्गपरामर्शकालीनत्वादिना अनन्यथासिद्धान्वयव्यतिरेकित्वमिति कारणता [3]प्रमाणसिद्धेत्यर्थः ।

यद्वा अक्षादेः कारणत्वं न स्याद् बीजसामान्यस्याङ्कुरसामान्यस्य[4] प्रयोजकत्वे यथा बीजविशेषस्यैवाङ्कुरविशेषप्रयोजकत्वं तथा मनःसंयोगविशेषस्यैव प्रयोजकत्वं स्यात् नत्विन्द्रियत्वादिना । ततः फलितमाह—**तत इति** । प्रमाविशेषे अक्षादेः करणत्वं वदता येन धर्मेण तस्य प्रमां प्रति नियतत्वमुच्यते, तेनैव धर्मेणानुमितिप्रमायामपि तस्य नियतत्वाद् अनुमितिरिन्द्रियकरणिका स्यात् इति योऽनिष्टप्रसङ्गः स ते उपपन्न इत्यर्थः ।

अत्र शङ्कते—इन्द्रियस्य नियतोपपत्तावपि नानुमितिः इन्द्रियकरणिका, प्रमात्वरूपे तस्य प्रयोजकत्वेऽपि अनुमितित्वरूपे तस्याप्रयोजकत्वादिति । **प्रमात्वे तत्प्रयोजकमिति** । तद् इन्द्रियस्य नियततोपपादकं रूपमित्यर्थः । परिहारस्तु निरुपाधिकत्वम् इहानन्यथासिद्धान्वयव्यतिरेकित्वम् । यथा प्रमात्वं प्रति निरुपाधिकमिन्द्रियस्य अन्वयव्यतिरेकित्वं तथा अनुमितित्वादि[5] प्रत्यपि तयोरविनाभावात् । एवञ्चानुमितिरिन्द्रियकरणिका स्यादित्युक्तदूषणे परिहाराय कोऽप्यधिको वाक्यार्थो नोक्त इति ।

ननु सामान्यं सामान्यस्यैव प्रयोजकं स्यात् नतु [6]तद्विशेषानुमितित्वादावित्याशङ्क्याह—**सामान्येत्यादि** । विपर्यये दण्डमाह—**अन्यथेति** । तन्तुसामान्यस्य पटसामान्यप्रयोजकत्वेन पटविशेषकारणत्वं न स्यात् तन्तुत्वाक्रान्तस्य पटव्यक्तिप्रयोजकत्वाभावादित्यर्थः ।

ननु तन्तुसामान्यमात्रं न पटव्यक्तिविशेषप्रयोजकं सर्वव्यक्तीनामेकदोत्पादापत्तेरिति तत्तद्विशेषे तत्तत्संयोगोऽपि हेतुरिति चेत्तर्हि इहापि लिङ्गपरामर्शो

१. इन्द्रियत्वेनेन कस्य । २. कारणमुचितम् । ३. कारणातामाणसिद्धा ४. सामान्यस्यं कुरु । ५. अनुमितिप्वादिप्यपि ६. तद्विशेषान्वये ततत्वादौ ।

**अथ प्रमात्वे तत् प्रयोजकम्, न त्वनुमितित्वादाविति चेन्न, निरुपाधित्वाविशेषेणोक्तार्थानाधिक्यात्। सामान्यप्रयोजकत्वेन विशेषत्यागानवकाशादिति। अन्यथा व्यक्तेरकारणकत्वापत्तेः।**

**अथान्यत्रास्तु यद्वा तद्वा करणम्, प्रमाविवक्षितजातिविशेषव्यपदेशकं प्रमाणम्। चतस्रः खल्विमाः प्रत्यक्षादि प्रमितयो भिन्नव्यपदेशभाजः। न च प्रमाता प्रमेयं वा तद्भेदहेतुः, प्रमाणानि तु यथायथं चतसृष्वसाधारणानीति भिन्नबुद्धिव्यपदेशनिबन्धनानीति।**

**मैवम्, विवक्षितपदं तावल्लक्षणे भण्डालेख्यमिव, पुरुषेच्छानामनियतविषय-**

---

हेतुरस्तु नत्विन्द्रियस्यापि नियततया क्लृप्तस्यापि त्याग इतीन्द्रियकरणत्वमनुमितेर्दुर्वारमिति ।

ननु कारणानिरूपितमेव प्रमाणलक्षणं तर्हि अस्तु इत्याशङ्कते—**अन्यत्रेत्यादि**। कुठारादौ करणे यत् करणत्वं तत्र यत्किञ्चिल्लक्षणमस्तु। अयं भावः करणमात्रविचारो न प्रस्तुतः किन्तु प्रमाणं निर्वचनखण्डनोपायतया। तच्च प्रमाणमन्यथैव निर्वाच्यमित्यलमप्रस्तुतकरणविचारेणेति।

तदेवाहुः—**प्रमाविवक्षितजातिविशेषेति**। प्रमाया विवक्षिता ये जातिविशेषाः प्रत्यक्षानुमितित्वादयस्तेषां व्यवस्थापकमित्यर्थः। येषां जन्यतावच्छेदकाः प्रत्यक्षत्वादयः, अनुभवत्वसाक्षाद्व्याप्यधर्मावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकाश्रया इति यावत्। विवक्षितपदं चाक्षुषत्वादिवारकतया अव्याप्तिवारकम्। अनुभवत्वसाक्षात् व्यापारे कारणतावच्छेदकानि तु इन्द्रियज्ञानत्ववर्णज्ञानत्व धर्मज्ञानत्वानि तदाश्रया इन्द्रियलिङ्गज्ञानपदज्ञानसादृश्यज्ञानानि। भिन्नव्यपदेशः प्रत्यक्षम् अनुमितिरित्यादि। **न च प्रमातेति**। एकस्मिन्नपि प्रमेये एकस्यैव प्रमातुर्नानाप्रमाणदर्शनात्। तथाच तयोः साधारणत्वादिति हेतुः पूरणीयः[१]। भिन्नबुद्धिव्यपपदेशभाजः इति पाठे प्रत्यक्षमनुमितिरित्यादिविलक्षणबुद्धिव्यपदेशः शब्दः प्रत्यक्षमित्यात्मकः, तद्भाजस्तद्विषया इत्यर्थः। **यथायथमिति**। यथायोग्यमिति। प्रत्यक्षं प्रत्यक्षव्यवहारेऽसाधारणम्, एवमनुमानमिति। तथा च तादृशव्यवहारासाधारणकारणं प्रमाणमित्यर्थः। भवति हि इन्द्रियजा प्रमा, लैङ्गिकी[२] प्रमा, शाब्दी प्रमा [३]औपमानिकी प्रमेतिभेदव्यपदेशः इति भावः। [४]**भाण्डालेख्यमिवेति**। आलेख्यं=रेखोपरेखादि, सर्वभाण्डसाधारणं यथा न भाण्डविशेषलक्षणं तथा पुरुषाधीना विवक्षाऽपि न विशेषिकेत्यर्थः।

ननु विवक्षितप्रमाजातीयत्वं साक्षात्कारित्वादि जात्यैव विवक्षणीयं तथा च तत्तदसाधारणाकारणत्वमेव लक्षणं तच्च न भाण्डालेख्यमिवेत्याशङ्क्याह—**अर्थ-**

१. पूर्णीयः। २. लिङ्गिकी। ३. उपमानिकी। ४. भण्डालेख्यमिवेति विद्यासागरसम्मतः पाठः।

**जत्वस्येति** । अर्थः = कर्म तदपि साक्षात्कारे करणं तस्यापि व्यपदेशत्वादित्यर्थः । **त्वात् । अर्थजत्वस्य च साक्षात्कारित्वं प्रति इन्द्रियजत्वाविशिष्टतया अर्थस्यापि करणत्वप्रसङ्गात् । आप्तोक्तौ तु कर्तुरपि शाब्दप्रमाजातिविशेषकत्वेन अति प्रसङ्गात्, ओमित्युत्तरे च पूर्वमेवोक्तमिति ।**

**विवक्षितजातिभेदौपयिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाणमित्यपि अत एव प्रत्युक्तम् ।**

---

विद्यासागरस्तु भण्डो भण्डकस्तस्यालेख्यं देवदत्तस्य जाया[1] किमपत्यं जनयिष्यतीति पृष्टस्य भण्डकस्य पुत्रं न पुत्रीमिति वाक्यं **कुड्यादौ** लिखितं यथा न विषयविशेषे[2], निषेधस्य उभयत्राऽपि योजयितुं शक्यत्वात् तथा विवक्षितपदमपि पुरुषेच्छाया अनियतत्वेन कस्यचित् चतस्रः प्रमितयो विवक्षिताः कस्यचित् पञ्चेति न चतुष्टय जातीय[3] ( स्यैव ) नियमेन प्रत्याययितुं समर्थमित्यबुद्धिपूर्वकमिव व्याख्याय विशेषप्रतिपत्तौ प्रत्येकसमुदायविकल्पेन दूष्यम् । आलेख्यं = लिपिविन्यासो, वाक्यं वेति व्याचख्यौ । तत्तु पाठान्तरमेव । **साक्षात् कारित्वं प्रतीति** । यथा साक्षात्कारिज्ञाने इन्द्रियं करणमिति इन्द्रियजं प्रत्यक्षमिति व्यपदेशः तथा अर्थोऽपि कारणमित्यर्थजं प्रत्यक्षमिति व्यपदेशसम्भवात् अर्थोऽपि[4] प्रमाणं स्यादित्यर्थः[5] । प्रत्यक्षे कर्मणीव शाब्दे कर्तरि अतिव्याप्ति माह—**आप्तोक्ताविति अतिप्रसङ्गादिति** कर्तुरपि प्रमाणत्वप्रसङ्ग इत्यर्थः । **पूर्वोक्तमिति** । दूषणमित्यर्थः । आप्ते प्रमाणशब्दस्य गौणत्वमुक्तमिति यावत् ।

**विवक्षितेति** । [6]प्रमितस्यासमवायिकारणस्यात्मसंयोगस्य विशेषकाः[7] । विवक्षितजातिभेदौपयिकतयेति । मनस्तु ज्ञानत्वविशिष्टौपयिकतया संयोगस्य व्यावर्तकम् इन्द्रियादिकन्तु प्रत्यक्षत्वादिजातिविशिष्टप्रमित्यसमवायिकारणस्य आत्ममनः[8] संयोगस्य व्यावर्तकमिन्द्रियादिसहितस्यैवात्ममनःसंयोगस्य प्रत्यक्षादिकारणत्वात् । प्रमितिकारणविशेषकत्वं दण्डादेरपीत्यसमवायिपदम्[9] । प्रमितीत्यस्यानुपादाने रूपादिव्यावर्तके पाकजत्वेऽतिव्याप्तिः, विवक्षितपदानुपादाने चाक्षुषत्वजात्यौपयिकप्रमित्यसमवायिकारणविशेषत्वं चक्षुष एवेति भागासिद्धयापत्तेः । विवक्षितजातिभेदविशिष्टप्रमित्यसमवायिकारणविशेषफलत्वं प्रमाणत्वमित्यत्रापि विवक्षितपदार्थघटिततयेत्यर्थः ।

---

१. जायापदं पुस्तकद्वयेऽपि नास्ति । २. नियतमिति शेषः । ३. चतुष्टय जातीयस्यैव ।
४. प्रामाण्यं स्यात् । ५. अर्थजत्वस्य साक्षात्कारित्वं प्रति इन्द्रियजत्वाविशिष्टतया अर्थोऽपि इन्द्रियवत् प्रमाणं स्यादितिभावः । ६. प्रमित्यस्य ।
७. विशेषकर्मणोऽपीति । ८. आत्मनः संयोगस्य अव्यावर्तकम् ।
९. दशादेरप्रतीत्यसमवायिपदम् ।

## २७. प्रत्यक्षलक्षणखण्डनम्

**एवं विशेषतोऽपि प्रमाणलक्षणानि प्रतिवक्तव्यानि। तथा हि—**

**(१) प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीत्याहुः। किमर्थमिदमुच्यते ? किं सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थम् ? उत साक्षात्कारित्वप्रतीतये तच्चिह्नोपदर्शनमिदम् ? उत व्यवहारार्थम् ? उत प्रत्यक्षादिशब्दप्रवृत्तिनिमित्तावधारणार्थम् ? उत अन्यत्किञ्चिदर्थमेव ?**

**तत्र नाद्यः, तथा हि—किं सजातीयेति प्रत्यक्षत्वेन साजात्यमपेक्षितम्,**

---

ननु विवक्षितजातिभेदपदेन अनुभवत्वसाक्षाद्व्याप्यजातयो विवक्षिता इति नोक्तदोष इति चेन्न। तथापि प्रमितेरननुगमात्। प्रमाणत्वं लिङ्गं स्यात् तथा च प्रमाणादि षोडशपदार्था इति विभागानुपपत्तिः धर्म्यंशप्रमाणाविषयीकृतस्य शुक्तिरजतस्यापि प्रमेयत्वापत्तेः। तदंशे प्रमाणत्वं नास्तीति चेदितरांशेऽपि तन्न[१] स्यात्। बाधाबाधाभ्यां विनिगमना[२] तु प्रागेव दूषिता। प्रमित्यसमवायिकारणव्यावर्तकञ्च नेन्द्रियलिङ्गसहितत्वादिकं, सहकारिणः कारणतानवच्छेदकत्वात्, लिङ्गत्वमैकमस्ति[३]।

अथ प्रमाणत्वमखण्डोपाधिरेव। स च न प्रमायामंशेऽपि, पदार्थविभाजकोपाधिश्चेति नव्यन्यायविदः। इति चेत् स्यादप्येवं यदि तत्र प्रमाणं किञ्चित् स्यात्। प्रमाणाकारानुगतमतिश्चेत्तर्हि प्रमात्वं करणत्वञ्चाखण्डोपाधिरित्येव स्यात् अन्यथा प्रमाणपदस्य असाधुतापत्तेरितिदिक्। उपसंहरतीति। प्रमाकरणनिरुक्तिदूषणानि विशेषप्रमाणलक्षणखण्डनद्वारेणापि प्रमाणसामान्यलक्षणं खण्डनीयं निर्विशेषस्य सामान्यस्याभावादित्याशयेन एवमित्यादिना।

प्रतिवक्तव्यानीति प्रतिज्ञाय दूषयति—तथाहीति। एतेन सामान्यखण्डनेनैव विशेषतोऽपि खण्डिता अपि भवन्ति निःसामान्यानां विशेषाणामभावादतस्तेषां पृथक् खण्डनं व्यर्थमिति ये दूषयिष्यन्ति तेषामाशयाज्ञानमेव।

किञ्च निःसामान्या अपि विशेषाः सम्भवन्त्येव। यथा बौद्धानां सामान्यमपलपतां, शुद्धब्रह्माद्वयमिच्छताञ्चेति[४] नाशङ्का असम्भवद्वुक्तिकापीति।

प्रथमतोऽक्षपादोक्तं लक्षणं दूषयति। प्रत्यक्षमिति। इदञ्च यद्यपि साक्षात्कारिप्रमाया एव लक्षणं न प्रत्यक्षप्रमाणस्य, तथापि एतादृशं प्रत्यक्षं यतः तत्प्रत्यक्षमिति यत्पदमिहाध्याहार्यमन्यथा प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति विशेषोद्देशेनासङ्गत्यापत्तेरिति। तत्सूत्रव्याख्यातृभिरिदं प्रत्यक्षप्रमाणलक्षणत्वेन कथित-

---

१. तत्र। २. विनिगमनात्। ३. लिङ्गत्वनैकमस्ति।

४. शुद्धब्रह्माद्वयमिच्छतामिति नाशंक्या सम्भवदुक्तिकापीति।

**रूपान्तरेण वा ? नाद्यः, तस्माद् व्यवच्छेदावधेः सजातीयादव्यावृत्तत्वेन व्यवच्छेदकत्वानुपपत्त्या ध्यावृत्तत्वस्वीकारेण अव्यापकत्वात् । नापि द्वितीयः, विजातीयपदोपादानवैयर्थ्यात् । अस्ति हि प्रमेयत्वादिना सर्वसाजात्यम् ।**

**अथ प्रमाणत्वादिना विशेषेण साजात्यं विवक्षित्वेदमुच्यते, तर्हि लक्ष्यस्यापि प्रमाणत्वेन साजात्याद् व्यवच्छेद्यकोटिप्रविष्टतया संग्राह्याभावप्रसङ्गः ।**

**लक्ष्यस्य यत्प्रमाणत्वादिभिः सजातीयं तद् व्यवच्छेद्यम् । न च लक्ष्यस्य**

---

मिति तत्खण्डनं साधु सङ्गच्छते । अत्र ज्ञानपदं [१]वैषयिकसुखातिव्याप्तेर्वारणाय । अव्यभिचारिपदं प्रत्यक्षाभासवारणाय । तत्र सर्वलक्षणानां निष्प्रयोजनकत्वं कथयितुं प्रयोजनं विकल्पयति—**सजातीयविजातीयेत्यादिना** । तथा च निष्प्रयोजनाभिधायिनः खाण्डनिकैरश्रद्धेयवचना उपेक्ष्या एवेति प्रयोजनखण्डनाशयः । सजातीयं प्रमाणत्वेनानुमानादि विजातीयं प्रमेयादि ततो व्यवच्छिन्नस्य वाच्यतया प्रतीत्यर्थमित्यर्थः । **यस्मादिति** । यस्मात् प्रत्यक्षत्वेन सजातीयाद् इदं व्यवच्छेद्यं तस्माद् व्यवच्छेदावधिर्लक्ष्यः स्यात् । व्यावृत्तत्वे वर्तमानत्वे व्यवच्छेदकत्वं नोपपद्यते वैधर्म्यस्यैव व्यावर्तकत्वात् । **अव्यापकत्वादिति** । [२]प्रत्यक्षत्वाक्रान्ते तस्मिन् असत्त्वादित्यर्थः । इदं लक्षणं संजातीयाद् व्यावर्तकमित्युक्ते यद्यपि लक्षणेन समानजातीयमित्यापाततो मतिर्जायते तथापि लक्षणत्वानुपपत्त्या तदतिरिक्तरूपेण साजात्यमेव वाक्यर्थं इत्याशङ्क्याह—**विजातीयेति** । प्रमाणत्वादिनेत्यादिपदेन बुद्धिकरणत्वादेः प्रमेयावृत्तिधर्मस्य संग्रहः । तथानुमानादिकमेव सजातीयं विजातीयं तु प्रमेयादिकमित्यर्थः ।

अयं भावः, प्रत्यक्षसजातीयाव्यवच्छिन्नमित्युक्ते प्रत्यक्षपदं प्रथमतः प्रत्यक्षमुपस्थाप्य तज्जातीयमेव उपस्थापयति । तत्र बाधे सति तद्गतं धर्मान्तरं प्रमाणत्वादिकयदुपस्थापयति तत्र बाधकाभावे [३]तेन रूपेण सजातीयमिति प्रत्याययति अब्राह्मणपदमिव द्विजातिमिति शब्दस्य स्वभावः । किञ्च प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रेण प्रमाणसामान्यं विभक्तमतोऽपि प्रमाणत्वेन सजातीयस्यैव लाभ इति प्रत्यक्षमपि प्रमाणसजातीयमेवानुमानवदिति तदपि व्यवच्छेद्यं स्यात् । ततश्च स्वस्मादपि स्वस्य [४]व्यवच्छेदेऽलक्षणं स्यादिति । **तर्हि तस्यापीति** । यद्वा प्रमाणत्वाक्रान्तं सजातीयं तच्चेद् व्यवच्छिद्यते प्रत्यक्षेऽपि तर्हि साजात्यसत्त्वात् व्यवच्छेद्यता स्यात् ततश्च तत्र लक्षणमस्ति नवा । आद्ये, अतिव्याप्तिः, अन्त्येऽसम्भव इत्यर्थः । लक्ष्यस्य यदिति । प्रमाणत्वेन सजातीयात् लक्ष्यात् लक्षणेन

---

१. खंडा । तस्मादिति पाठो मूले सर्वत्र ।

२. प्रत्यक्षत्वात्क्वास्ते तस्मिन् सत्त्वादित्यर्थः । ३. येन । ४. व्यवच्छेदो लक्षणं स्यात् इति । व्यवच्छेदो लक्षणफलं स्यात् इति द्वितीयपुस्तकपाठोऽपि युक्त एव ।

लक्ष्यं सजातीयम् षष्ठ्यर्थस्य भेदव्यवस्थितत्वादिति चेत्, एवं तर्हि लक्ष्यापेक्षया भिन्नाद् व्यवच्छेद इत्येवोच्यताम्, कृतं प्रमाणत्वादिना साजात्येन प्रकृतानुपयोगिना वर्णितेन ? यदा च लक्ष्यादन्यत्वं परेषामवगतं तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धमग्रत एव लक्षणप्रयोजनमिति वैयर्थ्यमेव स्यात् लक्षणाख्यानस्येति ।

अस्तु वा विवक्षावैचित्रीवशात् कथमपीदृशमभिधानम्, तथापि न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवः, अतिप्रसङ्गात् । नापि ज्ञातेन, दुरवधारणत्वात् । तथा हि—न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः, प्रत्यक्षाऽप्रत्यक्षविशेषणत्वात् । नापि कार्येण लिङ्गेन तदनुपपत्त्या वा तदवगमः, ताभ्यां सामान्यतः

---

व्यवच्छिद्यते इत्युक्ते सजातीयस्येत्याकाङ्क्षायां लक्ष्यस्येति[1] बुध्यते, तेन षष्ठ्या लक्ष्यस्य भिन्नत्वेनोपस्थापनात् तदनुमानादिकमेव लक्ष्यसजातीयं न तु लक्ष्यमिति सम्बन्धस्य भिन्नाधिष्ठानत्वादित्यर्थः । एवं सति लक्ष्यभिन्नव्यवच्छेदफलकं लक्षणमित्येवोच्यतामलं लक्ष्यभिन्नगतसाजात्यवैजात्य कथनेनेत्याह—**एवं तर्हीति** । ननु तथापि लक्ष्यनिष्ठस्य अनुमानादि प्रतियोगिकभेदस्य[2] ज्ञानमेव प्रयोजनमित्याशङ्क्याह—**यदेवेति** । परेभ्योऽनुमानादिभ्यः प्रत्यक्षस्य भेदं विना परेषां प्रत्यक्षभिन्नत्वमनुपपन्नमित्यर्थसिद्धमेव इतरभिन्नत्वमित्यर्थः इत्यपव्याख्यानं मैथिलानाम् ।

अर्थपदेन यदि अर्थापत्तिरुच्यते तदा लक्षणमपि तद्बोधकसम्भवात् किमित्युपेक्षणीयम् । तस्माद् अलक्ष्यान्यत्वेन लक्ष्यस्य ज्ञानं विना अलक्ष्येषु लक्ष्यान्यत्वं [3]ज्ञातुमशक्यं स्वतोऽपिप्रसङ्गात् । अतश्चालक्ष्यान्यत्वप्रतिपत्तावेव अलक्ष्यस्यापि लक्ष्यान्यत्वप्रतिपत्तौ अलक्ष्यस्य ततोऽन्यत्वं लक्षणाभिधानात् प्रागेव सिद्धमिति व्यर्थं लक्षणाभिधानमित्यर्थः इति विद्यासागरोक्तं व्याख्यानं साधु ।

वस्तुतस्तु तदा परस्मादन्यत्वप्रतीतिग्राहकसामग्र्याः प्रतियोग्यात्मनः लक्ष्यार्थधर्मिज्ञानस्य च सत्त्वात् ज्ञानात्मनामनुमित्यादिकरणानां प्रतियोगिनां लक्ष्यभेदाश्रयत्वेनोपस्थितेः धर्मिणश्च[4] लक्ष्यभेदप्रतियोगित्वेनोपस्थितेः ।

विवक्षावैचित्रीलक्ष्यभिन्नव्यवच्छेदफलकत्वस्य समानासमानजातीयत्वस्य वा लक्षणस्य वक्तुमिच्छा तदधीनमभिधानवैचित्र्यमित्यर्थः । **अति प्रसङ्गादिति** । सर्वदा सर्वेषामेव [5]लक्षणानां सर्वान् प्रति व्यवच्छेदकत्वं स्याद् विशेषादित्यर्थः । **अप्रत्यक्षविशेषणत्वादिति** । इन्द्रियार्थसन्निकर्षरूपमुत्पत्तेर्विशेषणमप्रत्यक्षमित्यर्थः[6] ।

---

१. लक्ष्यसे निबुध्यते । २. अनुमानादेः । ३. दातुमशक्यम् । ४. धर्मेण ।
५. लक्ष्याणामिति । ६. अप्रत्यक्षणम् ।

**कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धौ एकरूपलक्षणासिद्धेः।**

**कार्यस्यैकजात्याद् एकजातीयकारणसिद्धिरिति चेत्, तर्हि कार्यगतैकजात्यस्य पूर्वमवश्यं प्रत्येतव्यत्वाङ्गीकारे तत एव सजातीयविजातीयव्यवच्छेदप्रतिपत्तिरस्तु, कृतमनया पारम्पर्यकुसृष्ट्या।**

**नन्वेतावताऽपि न प्रकृतलक्षणखण्डनं भवति, अव्याप्तेरतिव्याप्तेर्वाऽनुद्भावनात् मैवम्, प्रथमभावितयाऽवश्यानुष्ठेयतया च लघोरुपायात् साध्यसिद्धौ सम्भवन्त्यां चरमभावितयाऽवश्यानुष्ठेयत्वाभावेन च गुरूपाये प्रवर्तमानस्य तवैवेदं**

---

यद्यपि चोत्पत्तिरप्रत्यक्षा [१]आद्यक्षणजन्मरूपत्वात् तथापि भट्टमते तस्याः क्रियारूपत्वात् प्रत्यक्षत्वसम्भव इति [२]विशेष्ये प्रत्यक्षत्वमेवोक्तम्। इन्द्रियाणां चक्षुरादीनां स्वं स्वं कार्यं तेन कारणमनुमीयताम्। तदन्यथानुपपत्त्या वा कारणमनुमीयतामतो नाप्रत्यक्षविशेषणता दोषाय विशिष्टज्ञानं प्रति विशेषणज्ञानस्यैव हेतुत्वादित्याशङ्क्याह—**ताभ्याममीति**। चाक्षुषादिकार्यस्य कारणं चक्षुरादि सिद्ध्यति नत्वनुगतमिति, ततश्च अनुगतकारणासिद्ध्या चक्षुरादिप्रत्येकघटितत्वे व्याप्त्यसिद्धिरित्यर्थः।

अथ यथारूपोपलब्ध्यादिलिङ्गेन अनुगतमेव[३] कारणं सिध्यति प्रत्यक्षरूपकार्यलिङ्गेन प्रत्यक्षस्य अनुगतकारणमिन्द्रियं सिध्यतीत्याशङ्कते—**कार्यस्यैकजात्यादिति**। प्रत्यक्षत्वात्मकजात्यैक्यादिति। तथा। यद्यपि प्रत्यक्षत्वेन न कार्यता तस्येश्वरप्रत्यक्षेऽपि सत्त्वात् तथापि जन्यप्रत्यक्षं तथेतिभावः। **अव्याप्तेरेवेति**। अव्याप्तिपदमेकदेशाव्याप्तिसर्वाव्याप्त्योः संग्राहकमतो न न्यूनता।

लक्षणस्यादुष्टत्वेऽपि तत्प्रणेतुस्तव दोषमापादयत्[४] मम जयहेतुर्भवत्येवेत्याशयेनाह[५]—**मैवमिति**।

लाघवे हेतुमाह—**अवश्यानुष्ठेयतेति**। कार्यगतैकरूप्यानवगतौ कथितलक्षणस्यैवावगत्यसम्भवेन[६] अवश्यानुष्ठेयत्वम् अवश्यज्ञेयत्वमिति यावत्। अवश्यज्ञेयत्वहेतुः **प्रथमभावितयेति**। प्राथम्यञ्च तस्य कार्यकरूप्यावगमस्य[७] लक्षणं प्रति हेतुत्वादिति भावः। इतरस्य गुरुत्वे हेतुमाह—**अवश्याननुष्ठेयतयेति**[८]। साधनान्तरादावश्यकादेव साध्यसिद्धेर्नावश्यं[९] तदपेक्षेति भावः।

विपरीतमेव किन्नस्यादित्याह—**चरमभावितयेति**। लक्षणस्य त्वदुक्तस्य चरमभावित्वान्नवैपरीत्यमितिभावः। **प्रदीपे प्रदीपान्तरमिति**। प्रदीपं प्रज्वाल्य

---

१. न्वाद्यक्षण। २. विशेषं। ३. अननुगतमेव। ४. लक्षणमिति शेषः।
५. तयहेतुः। ६. अवगत्यमन्तरेण। ७. कार्यैककस्य।
८. अवश्यानुष्ठेयत्वा भावेनेति मुद्रितपुस्तके पाठः। ९. वावश्यम्।

**दोषोद्भावनं प्रदीपे प्रदीपान्तरं प्रज्वाल्य तमोनिरासाय यतमानस्येव पुंसः। न हि तस्य दीपान्तरस्य कश्चिद्दोषः, किन्तु तथाकारी पुरुष एव पर्यनुयोज्यः। सर्वसाधनसाधारणोऽयं वा दोषो यत्सम्भवदेवंविधलघूपायत्वं नाम, स्वरूपासिद्धिरिव सर्वप्रमाणानाम्। तस्मान्मा नाम भूदतिव्याप्त्यादिर्दोषः, सामान्यदोषादेवेदं लक्षणं दुष्टमिति।**

---

प्रदीपे=प्रदीपान्तरे यतमानस्येत्यर्थः। प्रज्वलितप्रदीपेनैव तमोनाशस्य सिद्धेः तमोनाशाय प्रदीपान्तरे यत्न इव वृथा।

ननु विषमो दृष्टान्तः तत्र द्वितीयो दीपो दुष्टः कार्यानुपयुक्तत्वात्, नत्विह लक्षणं दुष्टमतिव्याप्त्यादिरहितत्वादित्याशङ्क्याह— **नहीति**। नहि दीपान्तरं न तमोनिरासाय क्षमं येन दुष्टं स्यात्। कथं तर्हि साधने समीचीने न फलमिति चेत्। को ब्रूते न फलमिति। न[1] त्वानीयमानं दीपान्तरं न तमो नाशयति। प्रथमवत्तस्यापि सामर्थ्यसत्त्वादेव। तर्हि तत्र को दुष्टः। कर्तैव। तदाहुः—

दुष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्। तथा च तत्र कर्तृदोषादेव प्रदीपान्तरे[2] तमसो नाशके विद्यमानेऽपि तस्यानीयमानत्वात् नतु स्वतस्तस्य सामर्थ्याभावरूपा दुष्टतेति[3]।

ननु तर्हि भवतु पुरुषो दुष्टो, लक्षणन्तु स्वकार्यं साधयेदेव। नहि निर्दोषमपि न साधनमिति शक्यं वक्तुमित्याशङ्क्य अव्याप्त्याद्यात्मकलक्षणसाधारणदोषविधुरस्यापि लक्षणसाधनसामान्यदोषेण दुष्टत्वमाह—**सर्वेति**। एवंविधं= प्राथमिकावश्यानुष्ठेयं सम्भवति यस्मिन् लघूपाये[4]।

ननु यस्य प्रत्यक्षत्वेन इतरभेदेन व्यतिरेकव्याप्तिग्रहो न जातः तस्य लक्षणमिदं बोधकमिति चेन्न। तथा सति तदधीनलक्षणज्ञानस्याप्यसिद्धेः साधनत्वस्यानन्यथासिद्धत्वांशस्तत्र नास्ति तत्सम्भवात्। एवं विधलघूपायस्तत्वम्।

इदमुक्तं भवति तादृशे लघौ उपाये सम्भवति गुरोरुपायत्वमेव नास्ति उपेयस्यान्यत एव सिद्धेः। उपेयते साध्यमनेनेति उपायः। प्राथमिकप्रदीपनिरस्ते तमसि ज्वाल्यमानदीपान्तरस्य तमोनिरासस्साधनत्वाभावात्[5]। सर्वसाधारणं दोषमुदाहरति **स्वरूपासिद्धिरिति**। प्रत्यक्षादिप्रमाणानां स्वरूपासिद्धिर्यथा अतीन्द्रिये पक्षे प्रत्यक्षस्य अनुमानस्य च। बुद्धो धर्माधर्मवेदी सर्वज्ञत्वादिति शब्दोऽपि यद्य-

---

१. न त्वानीयमानं प्रथम पुस्तके पाठः। २. प्रदीपान्तरं तगसो नाशकं विद्यमानेऽपि तमस्यानीयानीयमानत्वात् इति पाठः पुस्तकद्वये। ३. नष्टतेति पुस्तकद्वये पाठः। ४. तत्सम्भवदेवंविधलघूपायस्तस्यभावस्तत्त्वमिति मूलार्थः। ५. तमोनिरासस्साधनत्वाभाववत्।

**एतेन द्वितीयोऽपि निरस्तः, साक्षात्कारित्वावगममन्तरेण तदवगमानुपपत्तेः । तदवगमाच्चास्य प्रतीतावन्योन्याश्रयप्रसङ्गः ।**

**अस्तु वा अन्यदपि किञ्चिदिन्द्रियजत्वे लिङ्गम्, तथापि तदेव साक्षात्कारित्वाविनाभूततया प्रत्यक्षलक्षणमुपन्यस्यतां सन्निहितप्रतिपत्तिकत्वात् ।**

**न च तदवश्यं व्यापकं वक्तव्यम्, लिङ्गस्य तद्व्याप्यत्वेनैवोपपत्तेरिति चेन्न, यत्र लिङ्गमव्यापकत्वान्नास्ति तत्रेन्द्रियजत्वस्य प्रमाणाभावात् प्रत्येतुमशक्यत्वेन कथं ततः साक्षात्कारित्वावगमः ? यदा च क्वचित्प्रत्यक्षजातीय एव प्रमाणाभावादिन्द्रियजत्वमनवधारणीयतया साक्षात्कारित्वव्यापकत्वेनानवगतमपि लक्षणम्, तदा किमपराद्धं लिङ्गान्तरेणाव्यापकेन ?**

---

प्रमितस्तदा प्रमां न जनयत्येव । यथा सर्वमप्रमाणमित्यादि । एवमन्यद्[१] अपि उदाहार्यम् । उचितञ्चैतत् यस्य स्वरूपं नास्ति स कथं प्रमाणं सम्भवेदिति ।

परामृष्टं हेतुं कथयति—**साक्षादिति** । साक्षात्कारित्वे [२](प्रतीतिव्यतिरेकेन-कथितप्रत्यक्षणस्य दुरधिगमत्वमित्यर्थः । अस्तु तर्हि साक्षात् कारित्वादेव लक्षण-सिद्धिरित्याशङ्क्याह—साक्षात् कारित्वे) सिद्धे लक्षणसिद्धिः, सिद्धे च लक्षणे साक्षात्कारित्वसिद्धिरिति परस्पराश्रय इत्यर्थः ।

नन्वर्थजत्वम् अपरोक्षव्यवहारप्रत्ययत्वं वा इन्द्रियजत्वे लिङ्गमस्त्विति न परस्पराश्रय इत्याशयेन आशङ्क्य दूषयति—**तथापीति** । **साक्षात्कारित्वाविनाभूततयेति** । [३] व्याप्यव्याप्यतया सुतरां व्याप्यत्वादितिभावः । **सन्निहितप्रतिपत्तिकत्वादिति** । प्रथमोपस्थितत्वादित्यर्थः । नच साक्षात्वेन सह व्याप्तिग्रहो यस्य न जातः किन्त्विन्द्रियजत्वेन सह तत्र तदनुपन्यास इति वाच्यम् । [४]तुल्यसामग्रीकत्वादितिभावः ।

ननु लक्षणत्वं लक्ष्यव्यापिन एव इदन्तु न तथा उपेक्षाज्ञानेऽपि वृत्तेः । नचाव्यापकत्वे लिङ्गत्वमपि तस्य न स्यादिति वाच्यम् । व्यापकभिन्नस्यापि सपक्षैकदेशवर्तिनो [५]धूमादेर्लिङ्गत्वात् इत्याशङ्कते—**न तदवश्यमित्यादि** । अव्यापकस्य लिङ्गत्वसम्भवेऽपीह व्यापकस्यैव तद्वाच्यमन्यथा तस्य असार्वत्रिकत्वात् सर्वत्र लक्ष्येऽभावे केन लिङ्गेन इन्द्रियजत्वमनुमाय साक्षात्कारित्वमनुमेयमतः सर्वस्मिन्

---

१. अदप्युदाहार्यम् इति पाठः । २. कोष्ठान्तर्गतः पाठः प्रथमपुस्तके नास्ति ।

३. व्याप्यतया इत्येव पाठः आदर्शपुस्तके न युक्तः । प्रत्यक्षत्वस्य व्याप्यमिन्द्रियजत्वं तद्-व्याप्यमर्थजत्वमतो व्याप्यव्याप्यतया प्रत्यक्षत्वव्याप्यमिति युक्तम् ।

४. सामग्री इन्द्रियार्थसन्निकर्षरूपा । "तुल्यसामग्रीकत्वादित्यारभ्य लिङ्गत्वमपि तस्य न स्यादित्यन्तं" द्विवारमादर्शपुस्तके पाठः । ५. धूमादिलिङ्गत्वात् ।

अथ यत्र तदिन्द्रियजत्वे लिङ्गं नास्ति तत्र लिङ्गान्तरात्तत्प्रत्येतव्यम्। तथापि तदेवास्तां साक्षात्कारित्वे लिङ्गम्, कृतमिन्द्रियजत्वानुमानपूर्वकतदनुमानकल्पनया।

अथ तथा लिङ्गद्वयं तत् प्रत्येकमव्यापकतया न लक्षणम्, इन्द्रियजत्वन्तु तथात्वात् लक्षणमिति चेन्न, साक्षात्कारित्वानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः कृतं व्यापकेन तेन।

---

प्रत्यक्षे वर्तमानमर्थजत्वमेव इन्द्रियजत्वे लिङ्गं वाच्यमतस्तदेव लक्षणमस्त्वित्याशयेन परिहरति—यत्र [1]तर्हि लिङ्गमिति। अव्यापकत्वात्। पक्षैकदेशवृत्तित्वादित्यर्थः।

ननु इन्द्रियजत्वं सर्वसाक्षात्कारवृत्तीत्येव लक्षणम् अज्ञानस्यापि व्यवच्छेदकत्वम् अव्याप्त्यादिदोषत्रयशून्यत्वस्यैव तत्र प्रयोजकत्वमन्यथा लक्षणस्याज्ञानदशायां लक्ष्यस्य [2]अलक्ष्यभेदानापत्तिरित्याशङ्कते—यदा चेत्यादि लक्षणमिति।

यदि इन्द्रियजत्वं साक्षात्कारित्वव्यापकतयाऽनवगतमपि लक्षणम्, अव्यापकेनापि लिङ्गेन तर्हि कोऽपराधः कृतो येन तस्य लक्षणत्वं न भवेत्। सर्वस्मिन् लक्ष्ये साक्षात्कारितत्वाज्ञापकत्वसाम्ये सर्वपक्षवृत्तित्वतदवृत्तित्वाभ्यां न विशेषः। प्रत्यक्षभिन्नेभ्यः एकदेशस्य साक्षात्कारित्वव्याप्यैकरूपेणापि व्यावर्तनात्, तस्मात् सजातीयव्यावर्तकत्वमेव लक्षणत्वोपयोगि ननु सर्वजातीयव्यावर्तकत्वमित्यव्याप्तमपि लक्षणं भवेदिति भावः। अतएव क्रियावत्त्वमपि द्रव्यलक्षणमाचक्षते इत्यभिप्रायनिष्कर्षः।

अथ इन्द्रियजत्वस्य साक्षात्कारित्वव्यापकतयाऽवगतस्यैव लक्षणत्वं ततश्च यत्रापरोक्षव्यवहारहेतुत्वमिन्द्रियजत्वव्याप्यं नास्ति उपेक्षाज्ञानात्[4]....शाद्विज्ञाने तत्रापीदमिन्द्रियजत्वं चाक्षुषत्वान्मनोमात्रासाधारणकारणत्वमेव वा लिङ्गमस्तु ततश्चाव्याप्तिशून्यमेव लक्षणमिति शङ्कार्थः। परिहरति—तदेतदेवास्तामिति। तौ=लिङ्गविशेषौ। आस्तामिति। आङ्पूर्वस्यास्तेर्लोडिदस्य रूपं तथा च ताभ्यां प्रमितेन साक्षात्कारित्वेनैव प्रत्यक्षभेदसिद्धौ [5]कारणभेदेनापि गौतमसूत्रं तस्य जडतमतामावेदयतीति भावः। अथ मुनिना प्रत्यक्षप्रमाणविभाजकतया प्रत्यक्षलक्षणं कृतं विशेषत्रयञ्च साक्षात्कारित्वलिङ्गमपि न लक्षणमननुगमादपितु इन्द्रियसत्त्वं तथा, तथा च लक्षणप्रतीत्यौपयिकं तदित्याशयेनाह—तथा लिङ्गद्वयमिति। पक्षाव्यापकं लिङ्गद्वयमित्यर्थः। व्यापकेन तेनेति। तथा चालं लक्षणेनेत्यर्थः। एते-

---

१. तर्हि पदघटितः पाठो मुद्रितपुस्तके नास्ति। २. भेदापत्तिरित्ययुक्त पाठः। अलक्ष्याभेदापत्तिरिति पाठो द्वितीयपुस्तकसम्मतोऽपि युज्यते। ३. सर्वपक्षवृत्तित्वाभ्याम्।
४. बिलुप्तानि अक्षराणि। ५. कारणभेदोऽपि।

नापि तृतीयः, स ह्येवं रूपो यदिन्द्रियार्थसन्निकर्षजनितं तत्प्रत्यक्षमिति व्यवहर्तव्यमिति। अयमप्यर्थोऽनुपपन्नः, लक्षणस्य ज्ञातुमशक्यत्वात्। साक्षात्कारित्वात्तदवगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमनिदानम्, अव्यवहितप्रतिपत्तिकत्वादित्यावेदितम्। अत एव न चतुर्थः, कल्पनागौरवदोषश्चाधिकः। नापि पञ्चमः, तादृशस्य दर्शयितुमशक्यत्वात्।

[२] एतेन भासमानाकारेन्द्रियसंयोगजं प्रत्यक्षमित्यपि निरस्तम्।

किञ्च प्रमाणविशेषलक्षणमिदं प्रमाणलक्षणोपसंगृहीतस्य कियतः सङ्ग्राह-

---

नेदमुक्तं यत्र लक्षणव्यतिरेकेण लक्ष्यस्येतरव्यवच्छेदः प्रत्येतुमशक्यः तत्र लक्षणं [१]वाच्यमिह तु इन्द्रियजत्वानुमापकलिङ्गद्वयेनैव साक्षात्कारित्वमनुमाय प्रत्यक्षप्रमाणभेदोऽनुमीयतामिति। तथा च सम्भवति [२]लघूपायस्य साधने गुरूणि उपायत्वमेव नास्तीति तद् व्युत्पादनं [३]मुनेरधिकतां सूचयतीति।

यद्यपि चैवमविचारदशायां नैयायिकबालकानामनुमानपरम्परा उदेत्येव तथापि उपायत्वभ्रमादेव। ततश्च गुरुणोऽनुपायत्वे कथं ततस्तथाधीरित्यपास्तम्। स्वरूपसत्त्वे उपायस्यातन्त्रत्वात् इति।

निषेध्ये ज्ञाते निषेधज्ञानमिति निषेध्यमनुवदति—**सह्येति**। **अव्यवहितेति**। साक्षात्कारित्वेनेन्द्रियजत्वानुमानमिति कल्पनागौरवादीत्यर्थः। तथा च सम्भवति लघूपाये गुरूपायमुपदिशतः शिष्टवञ्चकत्वापत्तिरेत्येको दोषः। न चायमुपाय इति अनुपायपमुदिशतः प्रतारणाभ्रान्तत्वं वा स्यादिति भावः।

**अतएवेति**। लक्षणाऽज्ञानादिदोषेणेत्यर्थः। **कल्पनागौरवदोषश्चेति**। प्रत्यक्षावगतप्रत्यक्षत्वजात्यपेक्षया अनेकविशेषणविशिष्टस्यास्य लक्षणस्य प्रत्यक्षशब्दप्रवृत्तिनिमित्तत्वकल्पने गौरवश्चाधिको दोषः।

"[४]सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्य तत् प्रत्यक्षमिति" सूत्रे जैमिनिनाऽनूदितं लक्षणं परिष्कृत्य दूषयति। **एतेनेति**। प्रयोगः सम्बन्धः तज्जन्यत्वमनुमानादेरपीति इन्द्रियसम्प्रयोगजत्वम्। न च भासमानाकारसम्प्रयोगजन्यत्वाभावेनैव तत्र नातिव्याप्तिरिति वाच्यम्। आत्मानुमितौ तस्यापि सत्त्वात्। इन्द्रियत्वनिरूपितसम्बन्धत्वेन कारणतायामाश्रयजन्यत्वविवक्षया न दोषः तथापि अपरोक्षभ्रमेऽतिव्याप्तिः तस्यापि पुरोवर्तीन्द्रियसम्बन्धजन्यत्वादितिभासमानाकारेति। यावत्त्वमाकारे विशेषणं बोध्यं, ते न भासमानेन पुरोवर्तिना आकारेण यः सम्बन्धः तत्सत्त्वेऽपि रजताकारेण सम्बन्धाभावात् न तज्जन्यत्वमिति न दोषः। एतेन निष्प्रयोजनत्वदोषेण इन्द्रिय-

---

१. वाच्ययितु। २. सम्भवलघूपायस्यसाधने। ३. अविकृताम्।
४. सत्यं प्रयोगे ………।

**कम्, कियतश्च प्रतिक्षेपकं वक्तव्यम्, प्रमाणलक्षणेन च व्यभिचारिणो निवृत्तिः प्रदर्श्यते। तथा च सति यथाश्रुतमिदमलक्षणम्, व्यभिचार्यपि हि भासमानस्य सत्तादेराकारस्येन्द्रियसंयोगादुत्पद्यते।**

**अथ विशेषाभिप्रायेणेदं लक्षणं वाच्यम्, तथाऽप्यसङ्गतिः। तथा हि—किं कियन्मात्रभासमानेन्द्रियसम्प्रयोगजत्वं विवक्षितम्? उत यावद्भासमानेन्द्रियसम्प्रयोगजत्वम्? आद्ये व्यभिचार्यव्यवच्छेदः, निर्विकल्पकासंग्रहश्च।**

**नापि द्वितीयः, विकल्पासहत्वात्। तथा हि - किं भासमानताविशिष्टस्येन्द्रियसम्प्रयोगः? उत भासमानतोपलक्षितस्य? नाद्यः, पूर्वं भासमानत्वाभावात्**

---

सम्प्रयोगजत्वस्य दुरवधारणत्वेन वेत्यर्थः। अतिव्याप्तिकथनाय भूमिं रचयति—**प्रमाणविशेषलक्षणमिदमिति**। तत किमित्याशङ्कयाह-प्रमाणलक्षणेत्यादि। सामान्यानालिङ्गितस्य विशेषणस्याभावात् ततो न्यूनवृत्तित्वादित्यर्थः। प्रतिक्षेपकं =व्यवच्छेदकम्। ततोऽपि किमित्यत आह—प्रमाणलक्षणेन च=यथार्थानुभवकरणत्वेन व्यभिचारिकरणव्यावृत्तिरुक्ता। तथा व्यभिचार्यनुभवकरणे न प्रमाणमिति तद्व्याप्यस्य प्रत्यक्षप्रमाकरणत्वस्याप्यभावस्तत्र मन्तव्यः। ततः फलिता लक्षणस्यातिव्याप्तिरलक्ष्ये लक्षणगमनादित्याहुः।

**तथा च सतीति**। तस्य अलक्ष्यत्वे सतीत्यर्थः। अलक्षणं=लक्षणधर्मातिव्याप्त्या शून्यम्। सत्तादेरित्यादिपदेन द्रव्यत्वरूपत्वपरिग्रहः। अथाकारपदं विशेषाकारपरं तच्च रजतत्वादिकं, न च तेन इन्द्रियसंप्रयोगोऽस्ति तस्य विशेषे[१] पुरोवर्तिनि असत्त्वादित्याशयेनाशङ्कते—**अथेति**। **तथापीति**।

यद्यपि विशेषविवक्षायामननुगमादव्याप्तिरस्त्येव तथापि तामुपेक्ष्यातिव्याप्तेरनिस्तारेणैव दूषयति—**असङ्गतिरिति**। दुष्टता तद्धीनता असङ्गतमिदं तथापीत्यर्थः। कियन्मात्रेति=किञ्चिन्मात्रमित्यर्थः। **आद्ये इति**। भासमानेन इदमाकारादिना संप्रयोगाद् व्यभिचार्यपि ज्ञायते इति भावः। न [२]केवलमतिव्याप्तितादवस्थ्यं किन्तु अव्याप्तिरप्यापततीत्याह—**निर्विकल्पेति**। तद्धिवस्तुमात्रावगाहितया भासमानयावदाकारसम्प्रयोगजं न तु किञ्चिन्मात्रसंप्रयोगजमितिभावः।

**पूर्वमिति**। सम्प्रयोगात् पूर्वमित्यर्थः। अत्र हेतुमाह—[३]**कारणस्येति**। भानकारणमेवभानात् पूर्वं [४]भवति न तु भानमपि, भानस्य निर्हेतुकतापत्तेरितिभावः। पूर्वं भासमानत्वाभावेऽपि पश्चाद् भासमानत्वात् तत्संप्रयोगात् प्रत्यक्षं

---

१. अपुरोवर्तिनि इति द्वितीयपुस्तके पाठः।

२. आकाराणामतिव्याप्तितादवस्थ्यं किं व्याप्तिरापततीत्याह।

३. कारणस्येति मूलं द्विरुद्धार। ४. भवेत्तेन तु इति प्रथम पुस्तके पाठः।

**कारणस्य च पूर्वभावित्वात्। द्वितीये लटोऽविवक्षितार्थत्वम् ? विवक्षितार्थत्वं वा ? नाद्यः, तथा हि—यावद्भासमानाकारेन्द्रियसंयोगजमपि भवति घटोऽयमिति विज्ञानम्। न च तदात्मनि प्रत्यक्षम्, आत्मनस्तदीयाविषयत्वात्, प्रामाण्यस्य च विषयनियत्वात्। यत्र प्रामाण्यं तत्रैव विषये तद्विशेषस्य प्रत्यक्षत्वस्य वक्तव्यत्वात्। अन्यथा पटास्तित्वे घटोऽयमिति प्रत्यक्षं प्रमाणयतः किमुत्तरम् ?**

**नन्विदमुत्तरम्—घटविज्ञानं पटे न प्रत्यक्षम्, न हि तदिन्द्रियसन्निकर्षेणोत्पन्नमिति। तत् किमात्मेन्द्रियसन्निकर्षजं घटज्ञानमात्मनि प्रत्यक्षमेव ? कथमेवं स्यात्, आत्मेन्द्रियसन्निकर्षाद् घटज्ञानस्योत्पादेऽपि आत्मनोऽनवभासमानत्वादिति चेन्न, भासमानेत्यत्र लटोऽविवक्षितार्थत्वपक्षमाश्रित्येदं भवतोच्यत इति स्मर्तव्यम्। अस्ति ह्यात्मनो भासमानत्वं कदाचित् केनचिद्, अन्यथा अप्रमेयत्वप्रसङ्गात्।**

---

किन्न स्यादित्यत आह—**कारणस्य चेति**। पूर्वभाविनः एव कारणत्वादित्यर्थो वा। **लट इति**। भासमानेति लटः शतृशानचाविति सूत्रेण लट्स्थाने विहितस्य शानचो रूपम्। तदादेशस्तद्वद्भवतीति न्यायेन लट इत्युक्तम्।लड् वर्तमाने विहितस्तदर्थो वर्तमानत्वम्। सतोऽपि उपलक्षणत्वात् वर्तमानस्य न विवक्षा सम्भवतीति भावः। **न च तदात्मनीति**[२]। घटप्रत्यक्षं न [३]आत्मनि प्रत्यक्षमतो घटेऽपि प्रत्यक्षत्वं मास्तु। यथा प्राभाकराणामित्याशङ्क्याह—**प्रामाणस्य चेति**। अविषयेऽपि प्रत्यक्षत्वे घटोऽयमिति ज्ञानं पटेऽपि प्रत्यक्षं स्यात्। यद्विषयं तत्र प्रमात्वं स्यात् प्रत्यक्षत्वन्तु तदभावेऽपि भवेदित्याशङ्क्याह—**यत्र प्रामाण्यमिति**। **सह्येति**। तदिन्द्रियसन्निकर्षजन्यत्वे प्रयोजकं न तु भासमानेन्द्रियसंप्रयोजत्वमात्रे इत्याशयः। तर्हि घटज्ञानमात्मनि प्रत्यक्षं स्यादित्यपि प्रसङ्गमाह—तत्किमिति भासमानत्वसहितं तत्प्रयोजकं नतु [४]केवलमिति शङ्कते—**कथमेवमिति**। **स्मर्तव्यमिति**।

तथा च भासमानस्य वर्तमानत्वाविवक्षायामतिप्रसङ्ग इति भावः। आत्मनोऽप्रमेयत्व प्रसङ्गादितिदिक्। तच्चानिष्टं नैयायिकादीनामित्याशयः। भासमानयावदाकारेन्द्रियसम्प्रयोगजं स्वविषये प्रत्यक्षमित्यर्थः। नचात्मा घटोऽयमिति ज्ञाने भासमानः, नवा घटप्रत्यक्षं पटीयं घटप्रत्यक्षविषयत्वस्य तत्राभावादित्याशयेन शङ्कते।

उक्तलक्षणकमिति स दोष इति[७]। घटज्ञानमात्मनि प्रत्यक्षं स्यादात्मनो ज्ञानमात्रविषयत्वस्य सत्त्वादिति भावः। ज्ञानव्यक्तिर्यदि ज्ञानत्वजात्याश्रयव्यक्तिपरा (तदा) तद्दोषतादवस्थ्यम्। अथ लक्ष्यीभूतव्यक्तिपरा तदा विषयविशेषावच्छिन्न-

---

१. तक्षादेश तद्वद् द्रवसि। २. नचात्मनीति। ३. न स्वस्मिन् प्रत्यक्षमिति पाठः। पुस्तक द्वये पाठः। ४. प्रत्यक्षत्वमन्तु। ५. मात्रमित्याशयः। ६. बलम्। ७. रेखाङ्कितपाठः पुनरुक्त इवाभाति।

उक्तलक्षणकं स्वविषये प्रत्यक्षम्, न त्वन्यत्रापीति चेन्न, स्वशब्देन यदि ज्ञानमात्रं विवक्षितं तदा स दोषस्तदवस्थः। अथ ज्ञानव्यक्तिरपेक्षिता, तदा लक्ष्यस्वरूपस्यासाधारणतया तत्परित्यागेन लक्षणस्यान्यत्र गतत्वादतिव्याप्तिः। व्यक्त्यन्तरस्य लक्षणाश्रयस्य एकव्यक्त्यभिहितलक्ष्यीभूतासाधारणरूपत्वाभावात्।

व्यक्त्यन्तरमपि लक्ष्यमेव, अलक्ष्ये च लक्षणस्य गमनादतिव्याप्तिरिति चेन्न, यदेकत्रासाधारणस्वरूपं लक्ष्यत्वेन निरुच्यते भवता, न तदन्यस्य स्वरूपम्। अतः कथं 'तदपि लक्ष्यमि'ति अपिशब्देनानेकं साधारणीकृत्य समुच्चेतुं शक्यम्। यदपि साधारणं रूपं तद्व्यक्त्यन्तरव्यवच्छेदकस्वविषयपदं विशेषणं प्रक्षिपता भवतैवासाधारणीकृतम्। स्वशब्दस्य ज्ञानमात्रार्थत्वे दोषस्योक्तत्वात्। स्वत्वस्य चानुगतस्वरूपस्य निर्वक्तुमशक्यत्वात्। अन्यथा अन्यव्यक्तिविषयस्यान्यत्र तथात्वापत्तेः।

---

प्रत्यक्षत्वं लक्ष्यत्वप्रयोजकमिति नात्मप्रत्यक्षातिव्याप्तिः, किन्त्वव्याप्तिः स्यादित्याशयेन दूषयति—तदेति। अतिव्याप्तिस्थले इत्यर्थः[1]। व्यक्त्यन्तरस्येति। व्यक्त्यन्तरस्य लक्ष्यव्यक्तिविशेषगतासाधारणरूपविरहादित्याशयेन परिहरति—न यदेकस्येति[2]। समुच्चेतव्यमिति[3]। समुच्चयस्य साधारणरूपापेक्षित्वादितिभावः।

यदपीति। प्रत्यक्षत्वमित्यर्थः। व्यक्त्यन्तरव्यच्छेदकं स्वपदं विशेषणं प्रक्षिपता भवतैव असाधारणीकृतमिति सम्बन्धः। प्रत्यक्षमात्रं लक्ष्यं परित्यज्य स्वविषयावच्छिन्नप्रत्यक्षं त्वया लक्ष्यमुपात्तमतोऽसाधारण्यमिति भावः। स्वत्वमनुगतमभ्युपेत्यातिव्याप्तिरुक्ता सम्प्रति तदपि नास्तीत्याह—स्वत्वस्येति। तद्धि जातिरुपाधिर्वा। आद्ये सामान्यादीनां जातिशून्यानामप्रत्यक्षतापत्तेः। नाप्युपाधिः। स्वत्वेस्वत्वस्यावृत्तौ तत्प्रत्यक्षाव्याप्तिः वृत्तौ च तदेव स्वस्मिन् वर्तते चेत्तदा आत्माश्रयः। अन्यच्चेत्तर्हि तत्राप्यन्यदित्येवमनवस्था स्यात्। नवा स्वत्वाख्ये धर्मे मानमस्ति। किं वा तदिति शक्यते निर्वक्तुमित्यर्थः। स्वशब्दस्य सर्वनामतया सर्वत्र प्रवृत्यनुपपत्त्या अनुगतं पदार्थान्तरमास्थेयं चेत्तदा घटज्ञानस्य घटमात्रविषयस्यान्यस्मिन् स्वाविषये स्वस्मिन्नपि[4] प्रत्यक्षतापत्तिरिति उक्तदोषान्न विमोकः घटस्येव घटज्ञानस्यापि स्वपदार्थत्वादिति भावः।

ननु माभूदनुगतं स्वत्वं किमत इत्यत आह—अन्यव्यक्तिविषयस्येति। तथा च लक्ष्यान्यव्यक्तिविषयस्य। तथात्वापत्तेः अप्रत्यक्षतापत्तेरित्यपि क्वचित् व्याचष्टे। ननु घटज्ञानस्य स्वविषयत्वे आपादकाभावः, नहि यत् प्रत्यक्षं तत्सर्वविषये प्रत्यक्षमिति क्वचित्सिद्धम्। अथ प्रत्यक्षं स्वविषय एव प्रत्यक्षमित्यपि[5] न

---

१. अतिव्याप्तिस्थलेत्यर्थः। २. यदेकत्रेति मुद्रितपुस्तकेषु। ३. समुच्चेतुं शक्यमिति मुद्रितपुस्तकेषु। ४. स्वज्ञानेपि इति भावः। ५. इत्यादि सिद्धम्।

**नापि द्वितीयः पक्षः, विकल्पासहत्वात् । किं सम्प्रयोगापेक्षया वर्तमानत्वम् ? अथ यत्किञ्चिदपेक्षया ? प्रथमे विशेषणत्वपक्षान्न विशेष इत्युक्तदोषापत्तिः । द्वितीये तु लटोऽविवक्षितार्थत्वमेव स्याद्, व्यवच्छेद्ययोर्भासितभासिष्यमाणयोरपि तदा तदा भासमानत्वस्वीकारात् ।**

**इन्द्रियसम्प्रयोगानन्तरं भासमानत्वमपेक्षितम्, अतो विवक्षितार्थमिति चेन्न, आत्मनोऽपीन्द्रियसंयोगानन्तरं भासमानत्वमस्ति । न हि स यदा मनसा गृह्यते तदा नेन्द्रियसंयोगानन्तरम् ।**

**नेन्द्रियसंयोगमात्रं विवक्षितम्, किं नाम ? यदनन्तरं भासमानतोत्पत्तिरिति चेन्न, तदनन्तरमपि भासमानतोत्पत्तेः ।**

**भासमानतान्तरं तत्, न त्विदं भासमानत्वमिति चेन्न, अव्याप्तिप्रसङ्गात्, एकभासनमात्रव्यवस्थितत्वात् लक्षणस्य ।**

---

सिद्धमिति चेन्न । स्वविषये प्रत्यक्षमित्यत्र कस्यापि विवादाभावे अन्यविषयत्वस्य अनुभवबाधितत्वेन [1]तस्यार्थस्यापि सिद्धेः । अथ स्वविषयविषयत्वं घटप्रत्यक्षस्य यथा तदिन्द्रियसन्निकर्षजत्वेन तथा आत्मविषयत्वमपि स्यादतोऽस्य विनिगमकत्वे पटविषयताऽपि स्यादविशेषादित्युच्यते । तन्न । घटप्रत्यक्षस्य पटविषयत्वे मानाभावादनुभवविरोधाच्च ।

अत्रेदं तत्त्वं [2]घटप्रत्यक्षस्य घटमात्रविषयत्वे मानाभावः घटेन्द्रियजन्यत्वं तथेति चेन्न । तदेव कुत्रेति वक्तुमशक्यत्वात्, स्वप्ने घटप्रत्यक्षे तदभावप्रसङ्गाच्चेति भावः । वर्तमानत्वमित्यनन्तरं भासमानत्वस्य उपलक्षणीभूतस्येत्यर्थः ।

**उक्तदोषापत्तिरिति ।** इन्द्रियसम्प्रयोगभासमानत्वयोरेककालत्वाद् इन्द्रियसम्प्रयोगस्य भासमानाकारतानुपपत्तेरित्युक्त एव दोष इत्यर्थः । **अविवक्षितार्थत्वमेव स्यादिति ।** भासमानेति विशेषणेन भासितं भासिष्यमाणं व्यवच्छिद्यते । तच्चाशक्यं तयोरपि तत्कालीनकिञ्चिदपेक्षया वर्तमानत्वात् इत्यन्यज्ञानमन्यत्रापि प्रत्यक्षं स्यादिति अतिव्याप्तितादवस्थ्यं विशेषणवैयर्थ्यञ्चेत्यर्थः ।

**इन्द्रियसम्प्रयोगानन्तरमिति ।** नचैवं सति घटज्ञानमात्मनि प्रत्यक्षं स्यादित्यापादयितुं शक्यते सम्प्रयोगानन्तरमात्मनोऽनवभासनात् । नापि घटेन्द्रियसम्प्रयोगानन्तरं पटो भासते इति घटप्रत्यक्षस्य पटप्रत्यक्षतापत्तिरितिभावः ।

**नत्विदं भासमानमिति ।** घटभानमित्यर्थः । तथा च घटभानजनकेन्द्रियसंयोगानन्तर्यमित्यर्थः । घटभानजनकेन्द्रियसंयोगे भानं प्रत्यक्षमित्युक्तं भवति, नच तत् पटादिप्रत्यक्षेऽस्तीत्याशयः । अव्याप्तिमुपपादयति—**एकभासनेति ।**

---

१. एवार्थस्यापि । २. पट ।

**अथ मन्यसे यद्भासनं यस्य विषयस्येन्द्रियसंयोगादुत्पन्नं तत्तत्र प्रत्यक्षं प्रमाणमिति निरुक्तौ न दोष इति। मैवम्, यद्भासनं घटोऽयमिति यस्य विषयस्यात्मन इन्द्रियेण सह सन्निकर्षादुत्पन्नं तद्भासनं तस्मिन्नात्मनि प्रमाणं स्यात्।**

**नात्मा तस्य विषयः, तत्कथमेवं स्यादिति चेत्, न हि भवता तदीयविषयस्येत्युक्तम्, किन्तु सामान्यतो विषयस्येति, तेनेदमभिहितम्। यदि तु तदीयताविशेषणमुपादत्ते भवान्, तदा यदि तच्छब्देन ज्ञानजातीयमात्रपरामर्शस्तदा स दोषस्तदवस्थः। यदि तु ज्ञानजातीयमात्रव्यक्तिविशेषपरामर्शः, तदाऽव्यापकत्वम्, प्रतिज्ञानं तच्छब्दार्थस्य भेदात्। न हि यत्वं तत्त्वं वा किञ्चिदनुगतं रूपमस्ति।**

**अत एवात्मविषयत्वानुयोगवत् त्रिपुटीप्रत्यक्षवादिनि पटज्ञानस्य घटादौ प्रत्यक्षतया प्रामाण्यानुयोगो द्रष्टव्यः, चक्षुःसन्निकर्षाभावात्। अन्यथा तस्येष्टप्रसञ्जकत्वात्। तदर्थं यदिन्द्रियसन्निकर्षोत्पन्नमिति विशेषणप्रक्षेपे यत्तच्छब्दार्थस्यासाधारण्यादव्याप्त्यापत्तेः। यदि तु यत्तच्छब्दार्थावनुगतौ स्यातां पुनरप्यन्यत्र 'घटोऽयमि'ति ज्ञानस्य प्रत्यक्षत्वेन प्रमाणता प्रसज्येत।**

---

भासमानपदस्थाने यस्येति विशेषणं प्रक्षिप्य लक्षणं शङ्कते—**अथेति**। तेन लटो विवक्षिताविवक्षितार्थत्व[1] विकल्पदोषो नास्तीति भावः। **ज्ञानजातीयेति**। आत्मनोऽपि ज्ञानत्वात् लिङ्गितव्यक्तिविषयत्वात् घटज्ञानमात्मनि प्रमाणं स्यादित्यर्थः। प्रतिज्ञानं व्यक्तिभेदेऽपि यत्तच्छब्दवाच्ययोर्यत्वतत्त्वयोरनुवृत्तेर्नाव्यापकतेत्याशङ्क्याह—**नहीति**। यत्वतत्त्वयोरपि यत्तच्छब्दवाच्यत्वमेष्टव्यमन्यथा तज्ज्ञानयोरप्रत्यक्षतापातात् यत्तच्छब्दयोः सर्वनामत्वव्याघातापाताच्चेति। यत्त्वादेः स्ववृत्तौ आत्माश्रयो यत्त्वाद्यन्तरवृत्तौ अनवस्थेति तदन्तरेणापि यच्छब्दादिवाच्यत्वे ज्ञानादिव्यक्तीनामपि तथात्वोपपत्तौ यत्त्ववैयर्थ्यमित्यर्थः।

घटोऽयमिति ज्ञानमात्मानमाश्रयतया प्रकाशयति, [2]आत्मानं प्रकाशाभिन्नतया घटञ्च कर्मतया इति प्राभाकरैरङ्गीकारात् घटज्ञानमात्मनि प्रत्यक्षं स्यादिति नानिष्टापादनमित्याशङ्क्याह—**अतएवेति**। इन्द्रियार्थसन्निकर्षजत्वाविशेषात्[3] पटज्ञानं घटादौ प्रमाणं स्यादित्यनुयोज्यमित्यर्थः।

**अथेति**। ननु यज्ज्ञानं यस्यात्मव्यतिरिक्तस्येन्द्रियेण संयोगादुत्पद्यते तज्ज्ञानं तत्र प्रत्यक्षमिति विवक्षितं घटज्ञानस्य आत्मविषयत्वानुयोगो यथा नैयायिकादीनां तथा त्रिपुटीप्रत्यक्षवादिनः प्रभाकरस्यापि, तथा च घटज्ञानमात्मनि प्रमाणं स्यादिति दोषो नेति व्याख्यानमयुक्तम्। आत्मव्यतिरिक्ते इति सप्तमी श्रुतेः। किन्तु आत्मव्यतिरिक्ते प्रमाणमित्येव योज्यं, तच्छब्देन आत्मशब्देन स्वरूपमुच्यते।

---

१. लटोविवक्षितार्थत्व विकल्प इति पाठः।

२. स्वमित्यर्थः। ३. सन्निकर्षजत्वविशेषात्।

अथ 'अन्यव्यतिरिक्ते' इति विशेषणं प्रक्षिपसि, तदा तदाऽन्यविषयस्य प्रत्यक्षता न स्यात् । तच्छब्देनानुगतार्थाभिधाने व्यवच्छेदकत्वाभावात् । घटज्ञानस्य च पटे प्रत्यक्षतया प्रामाण्यं प्रसज्येत ।

एतेन—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षमित्यत्रापि दोषोऽयमुक्तो द्रष्टव्यः, तादृशस्यापि ज्ञानस्य विषयान्तरे प्रत्यक्षत्वेन प्रामाण्यप्रसङ्गात् । यस्यार्थस्य सन्निकर्षाद् यदुत्पद्यते ज्ञानं यत्तत्र प्रत्यक्षतया प्रमाणमित्यभिधाने तु यच्छब्दतच्छब्दसाधारणासाधारणार्थाभिधानविकल्पोक्तदोषप्रसङ्गः ।

अव्यभिचारिपदञ्च व्यर्थम् । न हि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नम् । संस्कारलक्षणा प्रत्यासत्ती रजतत्वेऽप्यस्तीति चेन्न, पूर्वानुभूतरजततादात्म्यस्य संस्काराभावादुक्तदोषतादवस्थ्यात् । गुरुमतानुसारेण सुतरां विशेषणवैयर्थ्यात्तेन व्यभिचारानङ्गीकारात् । रजतत्ववैशिष्ट्ये पुरोवर्तिनस्तदभावात् । तस्मिन्नेव वांशेऽप्रामाण्यम्, न तु रजतत्वमात्रे, तस्यान्यत्र सत्त्वात् ।

---

घटादि स्वरूपमपि स्वरूपमुच्यते तद्व्यतिरिक्तत्वमात्मनोऽपीति नात्मप्रत्यक्षाव्याप्तिरितिशङ्कते—तच्छब्देनानुगतरूपाभिधाने[१] इति । स्वरूपमात्राभिधाने इत्यर्थः । यथा आत्मा घटस्वरूपाद् व्यतिरिक्त इति नात्मप्रत्यक्षाव्याप्तिः । पटोऽपि न घटस्वरूपाद् व्यतिरिक्त इति घटज्ञानमपि पटे प्रमाणं स्यात् तथाचेदं व्यवच्छेदकमेव नेति तदुपादानं व्यर्थमेव स्यादिति भावः ।

विद्यासागरस्तु स्वस्य व्यतिरिक्त इति पठित्वा यदिन्द्रियसन्निकर्षादुत्पन्नं तदन्यव्यतिरिक्ते प्रत्यक्षं तदिति व्याख्याय अन्यशब्दः किं घटादिविशेषं वक्ति किं वा भेदाश्रयं वस्तुमात्रम् । आद्ये आह—अन्यविषयकस्येति । तदस्य घटादिविषयकज्ञानस्य प्रत्यक्षता न स्यात् अन्यव्यतिरिक्तात्मकविशेषणस्याभावात् । द्वितीयपक्षे तु तच्छब्दतः अन्यशब्देनेत्यर्थः । अन्यस्मिन्नपि अन्यव्यतिरिक्तत्वं किञ्चिदपेक्षया अस्त्येवेति यद्यपि घटादिज्ञाने नाव्याप्तिः तथापि घटज्ञानस्य पटे प्रत्यक्षतया प्रामाण्यं प्रसज्येतेति तदुपपादयति—व्यवच्छेदकत्वाभावादिति । अन्यव्यतिरिक्तविशेषणस्येति शेषः इति लिखितवान् ।

एतेनेति । एतेन[२] उक्तः । दोषोऽयमिति । "भासमाने" त्यादिलक्षणे अनेन प्रकारेण उक्त दोषः । प्राक् दूषिते लक्षणे अयमेतस्यार्थं स्फुटयति—तादृशस्यापीति । विकल्पेति । साधारण्येऽन्यप्रत्यक्षस्यापि अन्यत्र प्रामाण्यम् असाधारण्ये प्रत्यक्षान्तराव्याप्तिरित्यर्थः । यत्पदतत्पदपूरणे दूषणान्तरमाह—अव्यभिचारीति । तस्मिन्ने-

---

१. अनुगतार्थाभिधाने इति पाठो मूले उपलभ्यते ।

२. एतेनोक्तदोषोऽयं भासमोनेत्यादि ।

अथ साक्षात्कारित्वं प्रत्यक्षलक्षणमुच्यते, तदा साक्षात्कारिभ्रमेऽपि प्रसङ्गः। अव्यभिचारित्वेन विशेषितं तल्लक्षणमिति वा भेदाग्रहव्यतिरिक्तविभ्रमाभावो वेति चेत्, न, विकल्पासहत्वात्। किमवगतमिदं लक्षणं फलहेतुः ? अनवगतं वा ? न तावच्चरमः, तदभिधानवैयर्थ्यप्रसङ्गात्। अभिधानस्य ज्ञानोत्पादोपयोगित्वात् तस्य चानवगतस्यैव फलसाधकत्वाभ्युपगमात्।

आद्ये किमन्यस्मात्तदवगमः ? उत त्वदीयाल्लक्षणवाक्यात् ? यद्यन्यस्मात्, कृतममुना लक्षणाभिधानप्रयासेन। अभिधानस्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात् तस्य चान्यत एव सिद्धेः। अन्त्ये किं त्वदभिधानमाप्तोपदेशतया साक्षात्कारित्वं बोधयति, उत लिङ्गादिभावेन ? न तावच्चरमः, त्वद्वचनस्यसाक्षात्कारित्वाविनाभावादेर्दर्शयितुमशक्यत्वात्। नापि प्रथमः, वादिनं प्रति भवत आप्तत्वासिद्धेः। सिद्धौ हि प्रतिज्ञामात्रादेव साध्यसिद्धेर्हेत्वाद्यभिधानमनर्थकं सर्वत्र स्यात्।

---

वांशे पुरोवर्तिनो रजतत्ववैशिष्ट्ये एवाप्रामाण्यम्। यद्यपि रजतत्ववैशिष्ट्यमारोप्यं तत्र संस्कारोऽस्त्येव, विशिष्टं तु नारोप्यमसत्ख्यात्यापत्तेः[1] तथापि भ्रमस्य व्यधिकरणप्रकारकतोपपत्तये तदवश्यं वाच्यं, नहि शुक्तिविशेष्यकज्ञानस्य रजतत्वप्रकारकत्वैव भ्रमः, शुक्तिरजत इति समूहलक्षणस्यापि[2] तथापत्तेः नापि शुक्ति-[3]विशेष्यतांशे रजतत्वप्रकारकता, साहि यदि शुक्तिनिष्ठवैशिष्ट्यप्रतियोगि-प्रकारीभूतरजतत्वप्रकारकत्वप्रकारकत्वं चेत्तदा सुतरामसत्ख्यातिः[4] प्रकारीभूते रजतत्वे पुरोवर्तिनि विशिष्टे वा तथापि मिथ्यापि मिथ्या इत्याशयात्।

अस्मिन् लक्षणे ईश्वरप्रत्यक्षाव्याप्तिस्तु न दोषः। साक्षात्कारप्रमाकरणस्य लक्ष्यतया तद्घटकसाक्षात्कारस्यैव लक्ष्यत्वात्।

तृतीय प्रत्यक्षलक्षणमाशङ्कते—अथेति। विभ्रमेपीति[5]। नच तत्र नास्त्येव साक्षात्त्वमनुव्यवसीयमानत्वात्। न्यायमते विशेषणीयमित्युक्त्वा प्रभाकरमते विशेषणस्याभावेऽपि अतिव्याप्तिर्नास्तीत्याह[6] भेदाग्रहेत्यादि। नच गुरुमते गुणगत-जात्यभावात् लक्षणमेव नेदमिति वाच्यम्। जातेरभावेऽपि साक्षात्करोमीत्याकारा-नुगतस्य तैस्तादृशधर्मस्याभ्युपेयत्वात्।

द्वितीयं कल्पमादौ दूषयति–तत्र बहुवक्तव्याभावात्। **न तावच्चरम्** इति। **लिङ्गादिभावेनेति**। आदिपदेन अर्थापत्तेः पक्षधर्मतायाश्च परिग्रहः। **साक्षात्कारित्वाविनाभावादेरिति**। नहि यत्र त्वद्वचनं तत्र साक्षात्कारित्वं, ज्ञानधर्माधर्मयोर्विरोधात्[7]। कश्चिकी तु व्यक्तिः सम्भवन्त्यपि न साक्षात्कारित्वेन तदुपस्थापयति, नित्यमात्रसाधारण्यात्। न वा तादृगुपस्थितिः फलसाधनाय अलम्। एतेन आदिपद-

---

१. असत् ख्यात्यापत्तेः। २. सस्पृहालक्षणास्य। ३. विशेषतांशे ४. असत् ख्यातिः। ५. भ्रमेऽपीति मुद्रितपुस्तकेषु। ६. विशेषस्याभावादतिव्याप्तिर्नास्तीति। ७. ज्ञानधर्मधर्मयोः।

**अथ मन्यसे यः साक्षात्कारित्वमन्यतो जानाति, प्रत्यक्षव्यवहारनिदानतया च न जानाति, तं प्रति प्रत्यक्षव्यवहारनिदानत्वमस्य ज्ञाप्यते लक्षणवादिना। तच्चानुमानभावेनैव, नाप्तोपदेशतया। अत एव च लक्षणं केवलव्यतिरेक्यनुमानमाचक्ष्महे। तद्यथा—श्रावणादिप्रमितयः साक्षात्कारिप्रमितयो वा प्रत्यक्षत्वेन व्यवहर्त्तव्याः, साक्षात्कारिप्रमितित्वात्, न यत्प्रत्यक्षतया व्यवह्रियते न तत्साक्षात्कारि, यथानुमितिः, तथा चैताः, तस्मात्तथा। एतदनुमानप्रतिपादकञ्च वाक्यं नाप्तवाक्यत्वेन प्रयुज्यते वादिना। किन्तु व्याप्त्यादेः प्रतिपन्नस्यैव स्मारकम्, पूर्वाप्रतिपन्नस्य वा जिज्ञासोत्पादनद्वारेणेदानीमेव वादिनि प्रमाणोत्पादकमित्युक्तदोषानवकाश इति।**

**न, 'प्रत्यक्षतया व्यवहर्तव्याः' इति व्यवहारस्य किं विषयभेदो विशेषः? उत शब्दभेदः? आद्ये यद्यसौ विषयविशिष्टं व्यवहारं नाज्ञासीत्, कथं साक्षात्कारिणि तस्य स्वकर्तव्यतां लक्षणवाक्यादप्यवगच्छेत्। न ह्यविदिताग्निरनुमानादप्य-**

---

ग्राह्या अर्थापत्तिरपि परास्ता। विनापि साक्षात्कारित्वेन त्वद्वचनोपपत्तेः। प्रयोगस्य तज्ज्ञानमात्रसाध्यत्वेन तदन्तरेणाप्युपपत्तेः। सर्वत्र=वादमात्रे।

अन्यतोऽनुव्यवसायतः। **तच्चानुमानभावेनेति**। तच्च ज्ञाप्यते इति सम्बन्धः। अनुमानस्य=परार्थानुमानवाक्यस्य भावेन स्मारकतयेति यावत्। अत्र न्यायाचार्यसम्मतिमाह—**अतएवेति**। यदाहुराचार्याः—केवलव्यतिरेकिलक्षणं तु निर्व्यूढमिति। तत्र केवलव्यतिरेकिपदमनुमानविशेषपरमित्यर्थः। ननु लक्षणं भवतु अनुमानविशेषः, किमायाति वाक्यस्येत्याशङ्क्याह—[1]**तद् यथेति**। यत एव लक्षणवाक्यं परार्थानुमानवाक्यस्य स्मारकम् अतएव तदुपपद्यते अन्यथा लक्षणस्य न स्वार्थानुमानता स्वतः प्रकारान्तरेणावगत्यैव लक्षणकथनात्। यदि चानुमापकवाक्यस्मारकता नास्ति तदा कथं तस्यानुमानत्वमित्याशयः।

**श्रवणादीति**। श्रवणशब्दोऽत्र विषयपरः। प्रमतिपरत्वे श्रावणीति स्यात्। ततश्च शब्दस्पर्शरूपरसगन्धसुखप्रमितय इत्यर्थः। ततश्च तत् प्रमितिमात्रपक्षत्वे भागासिद्धिः स्यात्। अतो लाघवादेकं पक्षतावच्छेदकमाह— **साक्षात्कारि प्रमितयो वेति**। **स्मारकमिति**। एकसम्बन्धिदर्शनादपरसम्बन्धिस्मृतेरौचित्यात् व्याप्त्यादिविषयकशब्दश्रवणे वादिना पूर्वानुभूतव्यतिरेकव्याप्त्यादिपदार्थः स्मार्यते इति भावः।

**विषयभेद** इति। प्रत्यक्षत्वलक्षणे व्यवहारस्य विषयः प्रत्यक्षशब्दाभिधेयत्वमात्रं वा विशेष इत्यर्थः। आद्ये इति। तथाच साध्याप्रसिद्धया व्याप्त्यग्रहः। अन्त्ये सिद्धसाधनत्वाल्लक्षणं निष्प्रयोजनमित्याह—

---

१. अस्फुटानि अक्षराणि।

ग्निसम्बन्धं बोधयितुं शक्यः। अथाज्ञासीत् तदा ज्ञातज्ञापनवैयर्थ्याल्लक्षणरूपमनुमानं निष्प्रयोजनम्।

अथ सामान्यतो जानाति—अस्ति कश्चिद्विषयः प्रत्यक्षव्यवहारस्य। विशेषतस्तु न जानाति, तं प्रतीदमुच्यते। न, किं सामान्यतो निमित्तवत्तां व्यवहारमात्रस्य जानाति? उत व्यवहारविशेषस्य? आद्ये प्रकृतानुपयोगः व्यवहारविशेषस्य चिन्त्यमानत्वात्। द्वितीये किं कुतोऽसौ व्यवहारस्य विशेष इति विकल्पितपक्षानुप्रवेशमन्तरेण न निस्तारः।

एतेन सर्वस्यैव लक्ष्यस्य स्वीकारः परासनीयः। तथा हि—

नात्यापत्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः।
तद्धियस्तद्दुरीकारे स्वाश्रयं कश्चिकित्सतु ॥३४॥
अथान्यः स विशेषश्चेत् तद्धीत्वं कश्चिदिष्यते।
दत्तः साकारवादाय विष्टरः स्पष्टमेव तत् ॥३५॥

---

अथाज्ञासीत्यादिना प्रकृतानुपयोग इति। तथा चार्थान्तरं निग्रहस्थानमित्यर्थः। विकल्पितपक्षेति। किं विषयभेदो विशेषः उत शब्दभेद इति विकल्पितपक्षानुप्रवेश इत्यर्थः। ततश्च[१] तद्दोषदुष्टत्वादेव नास्ति निस्तार इति भावः। एतेन विकल्पितपक्षे प्रवेशेऽपि निस्ताराभावात् कथमेवमुच्यते इत्यपास्तम्। किं कुतो विशेष इति मम प्रश्नानिस्तार इत्यर्थः।

अथवा विकल्पितपक्षानुप्रवेशमन्तरेणैव यो निस्तारः स नास्तीत्यर्थः। विकल्पितपक्षविशेषतद्दोषस्यावश्यकत्वादितिभावः। उक्तदोषः प्रागुक्तलक्षणद्वयेऽपि बोध्य इत्याह—एतेनेति। न केवलं प्राक्तनयोरेव परन्तु पृथिवी गन्धवत्त्वादित्यादौ गन्धवत्त्वादिरूपे लक्षणेऽपीत्याशयेनाह—सर्वस्येति।

अत्र विद्यासागरः—लक्षणेन लक्ष्यस्य स्वीकारो निराकार्यः। निराकरणप्रकारं संगृह्णाति—तथाहीति।

लक्षणतो जायमानात् प्रमामात्रात्तु लक्ष्यस्वीकारः, उत पृथिव्यादिविशिष्टलक्ष्यप्रभावः? प्रथमं[२] नेति। ते ते पृथिव्यादयोऽर्थाः प्रमामात्रात् स्वीकारोचिताः न भवन्ति। कुतः अत्यापत्तेः=अतिप्रसङ्गादित्यर्थः। ज्ञानमात्रस्य सर्वार्थसाधारणतया बाधकज्ञानेन सर्वार्थस्वीकारप्रसङ्गात्। अर्थापत्तेरिति पाठे अर्थस्य अतिप्रसङ्गलक्षणस्य आपत्तेरित्यर्थः। द्वितीयं दूषयति—तद्धिय इति।

पृथिवीत्वविशिष्टज्ञानस्य (पृथिव्याः [४]साधकत्वे पृथिवीसिद्धिरित्यात्माश्रयं

---

१. अतद्दोष। २. प्रथमेनेति। ३. प्रमामात्रास्वीकारोचिताः। ४. कोष्ठान्तर्गत पाठः प्रथमपुस्तके नास्ति।

अर्थादुत्थास्नवो धर्मा नानुमात्वादयो यथा ।
तद्धीत्वमपि तद्वत् स्यादित्यर्थोऽनर्थमाविशेत् ॥३६॥
सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं विना ।
एवञ्च सोऽपि सोऽपीति नान्तः सोपानधावने ॥३७॥
समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ॥३८॥
उपपादयितुं तैः तैर्मतैरशकनीययोः ।
अनिर्वक्तव्यतावादपादसेवागतिः तयोः ॥३९॥

---

दोषं कश्चिदपि चिकित्सितुं न शक्नोतीत्यर्थः । तद्धीत्वं नाम ज्ञानस्यैव कश्चिद्धर्मो-ऽस्तो······) ज्ञानेऽन्तर्भाव निबन्धनो नात्माश्रय इत्याशङ्कते—अथेति । तथासति तद्धीत्वकारणतया विशेषसिद्धिरिति स्वसिद्धान्तत्यागः ज्ञानस्य ज्ञेयाभेदमन्तरेण तद्धीत्वधर्मायोगात्[२] ।

"सहोपलम्भनियमात् अभेदो नीलतद्धियोरिति" ।

पराभ्युपगतोपगमः स्वाभ्युपगतहानिरिति दोषद्वयमापद्येत[३] इति । साकार-वादाय विष्टरः आसनं स्पष्टमेव दातुं स्यात् । साकारवादः पूजितः स्यात् । ज्ञानस्य प्रकाशमात्रस्वभावात् तद्धीत्वं विशेषो न स्वाभाविकः किन्तु अर्थसम्बन्धौपयिकः स्फटिकलौहित्यमिवेति ज्ञानगतविशेषजनकतया अर्थसिद्धिरित्याशङ्क्याह—

अर्थादिति । अनुमितित्वागमत्वादयोधर्मा यथा अर्थात् विषयात् उत्थानशीला न भवन्ति किन्तु लिङ्गादिकारणविशेषात् तथा तद्धीत्वमपि ज्ञानधर्मत्वाविशेषा-दित्यर्थासिद्ध्यापत्तिरित्याह— अर्थोऽनर्थसंकटमापतेत्[४] । स्वाभावमापतेत् न सिद्ध्ये-दिति यावत् । तद्धीत्वस्य ज्ञानधर्मत्वे बाह्यासिद्धिरुक्ता, अधुना तत्सिद्धावम-वस्था स्यादिति । [५]सर्वं लक्ष्यासिद्धिपरतया व्याचष्टे । तन्न युक्तम् । तथा सति प्रमामात्रादित्यत्र लक्षणाधीनप्रमामात्रादित्यध्याहारापत्तेः ।

अथ तथाहीत्यादिना तन्निरसनप्रकारस्यैव विवरणात् तत्परतयैव[६] व्याख्ये-यमिति प्रमापदं तादृशविशेषे लाक्षणिकमिति चेन्न । प्रत्यक्षलक्षणस्य या अति-व्याप्तिरुक्ता घटे प्रत्यक्षलक्षणं प्रत्यक्षेपीति । [७]पटप्रत्यक्षं यथा पटे प्रमा तथा घटप्रत्यक्षमपि पटे प्रमा स्यादिति, तत्रैवाधिकं किञ्चित् [८]वक्तुमयमारम्भः । तत्र घट प्रत्यक्षं घटस्यैव साधकं न पटस्येत्यनुभवबलात् कल्प्यते । न च तत्र प्रमाणस्य

---

१. तद्धीकरणतया । २. तद्धीत्वधर्मयोगात् । ३. दोषद्वयाशेत इति । ४. अनर्थ-माविशेत् इति भावः ५. सर्वालक्ष्यासिद्धि । ६. परतयैव । ७. पटाप्रत्यक्षं । ८. किञ्चिदुक्तम् ।

**नापि द्वितीयः । तथा हि, अयमनुमानार्थः स्यात्—'श्रावणादिप्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः साक्षात्कारित्वादित्यादिः ।' सोऽपि न, यद्यसाक्षात्कारिण्यनुमानादौ तच्छब्दाप्रयोगमात्रात् साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते तर्हि शशविषाण-जबगडदशादिशब्दप्रयोगोऽपि साक्षात्कारिणि कर्तव्य एव, अविशेषात् ।**

---

घटज्ञानस्य पटासाधकत्वे लोकविरोधः । लोकेऽपि पटज्ञानस्यैव पटसाधकतोपगमात् । पटप्रत्यक्षपटज्ञानताऽपि तस्यास्तीति चेन्न । तत्प्रमायास्तत् साधकत्वात्, घटज्ञानं पटे प्रत्यक्षलक्षणाक्रान्ततया प्रत्यक्षमपि न प्रमा, विषयबाधात् प्रमालक्षणाकान्तत्त्वाच्चेति । तत्रेदं प्रतिवाच्यम्[1]—किं घटप्रत्यक्षं न प्रमा इत्युच्यते ? अथ पटे न प्रमेति आद्ये घटमपि न साधयेत् । अन्त्ये पटप्रमात्वाभावेऽपि तत्साधकत्वस्य कोंऽशो नास्ति । भवति हि घटज्ञानं पटप्रत्यक्षं प्रमाणञ्च घटे । अथ पटप्रत्यक्षं पटप्रमात्मकमेव तत्साधकमित्युच्यते, तत्रैतत् खण्डनं नार्थापत्त्या घटप्रत्यक्षात् प्रमात्मकादपि पटात्मकोऽपि[2] धर्मी पटत्वेन न व्यवतिष्ठते, अतोऽयमभिप्रायो भवतः पटप्रमा पटव्यवहारहेतुः पटप्रमाविषये एव पटः पटत्वं पटप्रमाविषयत्वव्याप्यं तत्र दोषमाह—तद्धियः । पटत्वविशिष्टप्रमायां सत्यामेव पटत्वं तिष्ठति ततश्च पटत्वे तिष्ठत्येव पटत्वं तिष्ठतीति अत्यापत्तियोगे एवं प्रक्षिप्तेन महौषधेन चिकित्सिते आत्माश्रयरोगचिकित्सा न शक्या कर्तुम् । न हि पटत्वं कुत्र तिष्ठतीति जिज्ञासा । पटत्वं यत्र तिष्ठतीति पर्यवसितात् पटप्रमात्वनिर्णयात् निवर्तते तस्यैव जिज्ञास्यत्वात् । नहि रोगनिवर्तकं किमिति जिज्ञासा रोगनिवर्तकत्वं यत्रेति ज्ञानात् निवर्तते ।

यत्तु पटप्रमातो न पटसिद्धिः किन्तु पटप्रमैव पटसिद्धिरिति तथापि विशेषाभावात् सा घटसिद्धिरेव किं न स्यादित्यत्र तात्पर्यम् इति मिश्रोक्तम्[4] ।

ते तेऽर्थाः पटादयः घटज्ञानात् पटत्वेन व्यवहर्तुम् अयं पटएव न पटादन्यः इति व्यवहर्तुं शक्यं किन्तु पटप्रमात एवेति तात्पर्यानवबोधनिबन्धनेनैवेयमाशङ्का ।

यद्वा यावतां लक्षणानां दूषणमेव प्रत्यक्षलक्षणदूषणावसरे कथयति एवमिति तत्र सर्वाणि लक्षणानि स्वरूपासिद्धानीति वक्तुं सर्वपदार्थसाधकं निराकरोति नात्यापत्त्येति ।

अथान्य एवेति । पटत्वादन्य एव विशेषः पटत्वं तदेव विषयगतं सद्व्यावर्तकं पटस्य अबाधितपटव्यवहारहेतुश्च तथाच घटज्ञानात् न पटव्यवहारः । नवा आत्माश्रय इति शङ्का । पटत्वनिरपेक्षमेव पटधीत्वं ज्ञानगतोधर्मः पटव्यवस्थाहेतुः

---

१. प्रत्युच्यं २. अस्फुटाक्षरम् । ३. जिज्ञासोः इति पाठः ।

४. शाङ्कर्यां पटस्थाने घट पाठ उपलभ्यतेऽतो भावानुवादोऽयम् ।

**अथ जबगडदशादिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः क्वचिदप्यप्रयोगात्। शशविषाणादिशब्दाश्च असद्विषया एवेति सिद्धाः प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया सामान्यतः सिद्धाः, 'प्रत्यक्षमस्ती'त्यादिप्रयोगदर्शनादित्यस्ति विशेष इति चेत्, मैवम्, एतेनापि विशेषेण चाक्षुषादिशब्दानामव्यवच्छेदात् तेषामपि साक्षात्कारिमात्रे प्रयोगप्रसङ्गः।**

---

तदा पटोऽपि पटधीरेवेति ज्ञानमेव पट इति स्यात् तदतिरिक्ते तस्मिन् पट इव प्रमाणाभावादित्यपसिद्धान्तः[१] इत्याह—**दत्त इति**। तथा च बाह्यापलापप्रसङ्गः। ३६।

अथ ज्ञानवति कादाचित्कतद्धीत्वान्यथानुपपत्त्या बाह्योऽपि[२] स्वीकार्यं इत्युच्यते। तन्न। अनुमितित्वादिबुद्धिं विनापि अर्थोपपत्तेः। अनर्थज्ञानम्=अर्थो हि बाह्यः तद्भिन्नं ज्ञानं तदात्ममेव स्यात्। ज्ञानाकारकादाचित्कत्वमपि स्वभावादेव उपपद्यताम् असतैव चात्याशयः। ३७।

किं तद्धियं विनेति काक्वा नेत्यर्थः। प्राप्यते तद्धियं तद्धीत्वधियं विना प्रमाणं विना, अर्थानङ्गीकारादिति हृदयम्। सोपानधावनं बहुकक्षाविशिष्टमार्गधावनम्। नान्तः=अवसानाभावः। तस्मादनवस्था स्यात्। साच अप्रामाणिकीति भावः। यद्युक्तदोषेण बाह्योऽर्थस्तद्धीश्च नासिध्येत् तदा तयोः प्रसिद्धयोः अयं घटः अनेन जलमाहरणीयमिदञ्च तज्ज्ञानमितिसकलतैर्थिका[४] विसंवादेनागतयोः का गतिरिति पृच्छति। किमत्यन्तासद्विषयत्वम् उत सद्विषयत्वम्। न च शशशृङ्गतुल्यता तयोः। यतः समस्तो लोकः पण्डितादिचाण्डालपर्यन्तं समस्तानि च शास्त्राणि तर्कतन्त्रादीनि तेषामैकम[५]त्यमविसंवादमाश्रित्य नृत्यतोः=अतिशयेन [६]वर्तमानयोः। सर्वेषां लोकानां शास्त्राणां च सम्प्रतिपत्तिमात्रं विचारतस्तु उपपादनमशक्यमित्याह—**उपपादयितुमिति**। सम्मतैः प्रकारैः न सद्विषयत्वं नाप्यसद्विषयत्वम् अपितु अनिर्वचनीयाज्ञानविलासविषयत्वमेव गतिरिति युक्त्यनुसारिणा त्वया वाच्यमित्याह—उपपादयितुमशक्ययोस्तयोरसत्त्वमेव उपनिषद् आह—**अद्वैतसत्यतावादिनी**त्याशयः।

उत शब्दभेद इति विकल्पार्थं स्पष्टीकर्तुमनुवदति प्रत्यक्षादिशब्दाभिधेया इति। तथा च प्रत्यक्षशब्दप्रकारको व्यवहारः आकाशं प्रत्यक्षं शब्दसमवायीत्याकारको व्यावर्तितः। यद्यपि आधुनिके प्रत्यक्षसंज्ञके पुरुषेप्येत दस्ति तथापि आदि-

---

१. इत्यपि सिद्धान्तः। २. ह्योऽपि। ३. बुद्धिनाप्यर्थमुपपत्तेः।

४. लोकंत्री विकानामविसंवादिना गतयोः। उभयपुस्तके पाठः।

५. ऐकमल्पं। ६. अतिशयेन वर्तमानतयेति।

**साक्षात्कारित्वे सत्यपि श्रवणादौ चाक्षुषादिशब्दानामप्रयोगः, नत्वेवं प्रत्यक्षादिशब्दानामिति विशेष इति चेद्, एवं तर्हि यत्र साक्षात्कारित्वं नास्ति,**

---

पदग्राह्यमपरोक्षशब्दाभिधेयत्वं नास्ति एकस्य नामद्वयासम्भवात्। "एकादशेऽहनि पिता नाम कुर्यात्" इत्येकत्वस्य विधेयविशेषणत्वेन विवक्षितत्वात्। नाम्ना पुत्रं संस्कुर्यादिति हि तदर्थः। नाम्नो[1] निप्रयोजनकत्वेन कर्मतानुपपत्तेः। यदि च संस्कृतनाम पुत्रस्य कर्माधिकारसम्पादकमिति न निष्प्रयोजनता तथापि अप्राप्तोद्देशेन विधानात् "अध्वर्यं वृणीत" इतिवत् उद्देश्यविशेषणमप्येकत्वं विवक्षितम्। न च तथापि येन अपरोक्षप्रत्यक्षेत्येव नाम कृतं तदादाय–दोषः। प्रत्यक्षमात्रशब्दमात्रपर्यवसिताभिधायकत्वस्य साध्यार्थत्वात्। आदिपदं तु एवं सति साध्यान्तरसूचनाय। तच्छब्दप्रयोगाभावादिति विशेषणान्तरशून्यप्रयोगो हेतुरित्यर्थः। अतिप्रसङ्गप्रदर्शनेनाप्रयोजकत्वमाह—**एवं तर्हीति। अविशेषादिति**। शशविषाणादिशब्दानां प्रत्यक्षशब्देन सहेत्यर्थः। अथार्थवत्तया प्रसिद्धत्वे सद्विषयत्वे च सति अन्यत्राप्रयोगात् इति[2] विशेषितो हेतुरिति शङ्कते **अथेति**। तथा च यथा चाक्षुषादिशब्दा एवं भूता अपि न यावत् साक्षात्कारिप्रमितिवाचकाः तथा प्रत्यक्षादिशब्दा अपि[3] सन्त्विति भावः।

ननु साक्षात्कारिण्येव प्रत्यक्षशब्दप्रयोगात् साक्षात्कारिणि प्रत्यक्षशब्दवाच्यत्वं साध्यते इति साक्षात्कारित्वे सत्यपीत्यादिशङ्का ग्रन्थार्थ इति विद्यासागरः।

तदसत्। चाक्षुषादिशब्देऽपि भावात्। साक्षात्कारित्वं न चाक्षुषादिशब्दप्रवृत्तिनिमित्तं तस्मिन् सत्यपि श्रावणज्ञाने चाक्षुषत्वशब्दाप्रयोगादिति तु युज्यते परन्तु प्रत्यक्षशब्दाभिधेयत्वसाधने प्रयोजकस्तर्कस्तथापि नोक्त इत्यर्थान्तरतेति चेन्न। प्रत्यक्षशब्दाभिधेयत्वे विशिष्टे[4] हेतौ उक्ते चाक्षुषत्वशब्दादीनां साक्षात्कारित्वप्रवृत्तिनिमित्ताभावे[5] च साधितेऽविशेषप्रसङ्गपराहतिरूपदोषाभावे सति तस्यैव साधकत्वात्।

एवञ्च साक्षात्कारिप्रमितयः प्रत्यक्षशब्दाभिधेयाः प्रत्यक्षान्तरधर्मवाचकावाच्यत्वे सति सदर्थवाचकवाच्यत्वे सति अभिधेयत्त्वादित्यर्थः। साक्षात्कारित्वादित्येव[6] ब्रूयात् शशशृङ्गानर्थकशब्दवाच्यतायादनेन अप्रयोजकत्वाशङ्का नास्ति। निरर्थकासदर्थकाभिधेयत्वस्य[7] पक्षे बाधात् चाक्षुशादिशब्दाभिधेयताऽपि न सम्भवति तस्य न्यूनवृत्तित्वादिति प्रतिसंधानवतो व्यतिरेकव्याप्तिप्रतिसंधानात् अनुमानमिति पर्यवसिते दूषणमाह—**एवं तर्हीति**।

---

१. निष्प्रयोजकत्वेन। २. विशेषितो। ३. शब्दादपि।
४. विशिष्टे हि तो। ५. प्रवृत्तिनिमित्तं वा भावे ६. इत्ये ब्रयातु।
७. निरर्थकासदर्थकासदर्थकाभिधेयत्वस्य।

तत्र प्रत्यक्षशब्दप्रयोगो नास्ति, यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्तीति यो जानीते, तं प्रति लक्षणाभिधानमिति स्यात् । स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थलक्षणम् ।

एतेन—अनुमित्यादिव्यवच्छिन्नतया व्यवहर्त्तव्यमित्यप्युक्तानुमानसाध्यतया अभिधीयमानमपास्तं वेदितव्यम् ।

पूर्वप्रतिपन्नमेव वाच्यवाचकभावं लक्षणाभिधानेन स्मार्यत इति चेन्न, अवगतसमयस्य प्रत्यक्षशब्दादेव तत्स्मरणसम्भवाद् व्यर्थता लक्षणाभिधानस्य स्यात् । अवगतशब्दार्थसम्बन्धः शब्दादेव स्मरन् यदि लक्षणेन स्मार्यते, तदा लक्षणवाक्यगतपदकदम्बार्थस्मरणार्थमपि तल्लक्षणमभिधानीयमविशेषात् । एवं तल्लक्षणवाक्येऽपीत्यपर्यवसानं स्यात् ।

ननु प्रतिवादिनं प्रति लक्षणाभिधानं नार्थवत्, तेन वाद्याप्तभावानङ्गीकारात । किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे, स हि शास्त्रस्य कर्तारमाप्तमेव मन्यते । तस्मात् शिष्यं प्रत्याप्तवचनतयैव लक्षणवाक्यमर्थं प्रतिपादयिष्यति । गुरुणा गीय-

---

यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रेति । तेन चाक्षुषादिशब्दतुल्यताव्यावृत्तिः ।

सचेति यथा वृद्धव्यवहारेण वर्गादिशब्दस्यान्वयव्यतिरेकाभ्यां शक्तिं जानाति तथा [१]प्रत्यक्षशब्दस्यापि अवधृतवानेव सामग्री सत्त्वादिति भावः ।

विधिव्यवहारसाध्यं[२] पक्षोक्तं दोषं निषेध्य व्यवहारसाध्यपक्षेऽपि अतिदिशति—एतेनेति । अनुमित्यादित्यवच्छिन्नतया व्यवहर्तव्या इति व्यवहारस्य किं विषयतो [३]विशेष उत शब्दभेदः इत्यादिना । अन्वयव्यतिरेकाभ्यां शक्तिं जानाति तथा प्रत्यक्षशब्दस्यापि अवधृतवानेव सामग्रीसत्त्वादितिभावः । अन्वयव्यतिरेकसिद्धत्वपर्यन्तेनं[४] दोषेणेत्यर्थः[५] । स्मार्यते इति शिष्यः आचार्येणेति शेषः ।

यद्यपि अयमपसिद्धान्तः तस्य केवलव्यतिरेकिरूपतायाः नैयायिकैः स्वीकारात् । तथापि यदि कश्चित् एकदेशी, भूयोऽपि ब्रूयात् तदापि दूषयति–अवगतसमयस्येति । समयः शब्दार्थयोः सम्बन्धः । अनवगतसमयता तु तस्य निराकृतैव । ततश्च सम्बन्धिदर्शनसमुद्बुद्धसंस्कारादेव सम्बन्ध्यन्तरस्मृत्युत्पत्तेर्लक्षणवाक्यं व्यर्थं प्रत्यक्षपदमेव ब्रूहीति भावः । यदि च त्यक्तलज्जः प्राह शब्दादेव स्मरणं लक्षणेन स्मार्यते इति ।

---

१. प्रत्यशब्दस्यापि ।　२. व्यवहारसाध्यक पदक्षोक्तं ।　३. विषयतो विशेषः ।
४. द्धत्वपर्यन्तेन इति पाठः ।　५. अन्वयव्यतिरेकसिद्धत्वपर्यन्तदोषेणेत्यर्थः इतीयं पक्तिः "शब्दभेद इत्यादिना' इति पूर्वपङ्क्तेरनन्तरं पठनीया इति प्रतिभाति ।

मानम्—'यस्त्वया साक्षात्कारिशब्दार्थः प्रतीतः, स एव प्रत्यक्षशब्दार्थः' इति। मैवम्, यदि वादिनं प्रति न शास्त्रं किन्तु शिष्यं प्रति, तदा प्रतिज्ञामात्रादेवाऽऽप्त-वचनात् शिष्यस्वार्थनिश्चयोत्पत्तेः हेत्वाद्यभिधानमनर्थकमापन्नं शास्त्रे।

अथ भवतु तत्प्रतिवादिनमपि प्रति शास्त्रे वाक्यं यत्र हेत्वाद्युपात्तम्। लक्षण-वाक्यन्तु शिष्यमेव प्रति प्रयोजकं प्रतिपन्नशास्त्रकाराप्तभावमिति मन्यसे। तदप्य-नुपपन्नम्, शास्त्रान्तरसाध्यत्वादस्यार्थस्य। अस्ति समयग्राहकं शास्त्रं मुनिभिः प्रणीतं नामलिङ्गानुशासन-व्याकरणादि। यदि च शास्त्रान्तरसाध्योऽप्यर्थो भव-दीयशास्त्रस्य विषयः, तर्हि प्रकृतिप्रत्ययविभागेन साधनमपि शब्दानां कुतो न व्युत्पाद्यते, लिङ्गं वा शब्दानां कुतो नाभिधीयते? तदज्ञानेऽपि पराजयो जायत एव।

अथवाऽस्तु व्याकरणादिविषयं विहाय नामव्युत्पादनं कथमपि भवच्छास्त्रस्य विषयः, तथापि न्यूनतरत्वमस्मिन् विषये भवदीयशास्त्रस्य—बहूनि नामानि विद्यन्ते कोषान्तरवर्तीनि कुतो न व्युत्पादितानि तानीति। अथास्मिन् शास्त्रे येषां शब्दानामुपयोगस्तेषामनेन व्युत्पादनम्, न सर्वेषामित्युच्यते, तथापि यथैकवाक्य-

---

यद्यपि लक्षणेन स्मारणीयमिति न वेदोऽस्ति, मन्त्रेणैव मन्त्रार्थस्मरणेऽध्ययन-विधिरिव, तथापि कथकसम्प्रदायाचारप्रमाणकोऽयमर्थ इति ब्रवीषि तदपि न युक्तं निर्मूलकत्वात् सम्प्रदायस्य अनवस्थापातदोषात् अप्रामाणिक एवायमाचार इत्याह—तदेत्यादि अपर्यवसानादित्यन्तेन। अपर्यवसानम्=अनवस्था। न च अतएव लक्षणपदलक्ष्ययोर्वाच्यवाचक भाव एव लक्षणेन स्मार्यते इति वाच्यम्। तर्हि लक्षणवाक्यार्थगतपदार्थस्मरणार्थमपि लक्षणमभिधाय विरम[1] इत्याशयात्।

आप्तोपदेशतया लक्षणवाक्यस्य बोधकत्वप्रकारं कथयति—**यस्त्वयेत्यादि**। यद्यपि लक्षणवाक्यस्य नैवं प्रकारबोधजनकता स्वरसतः तथापि लक्षणया अस्त्विति भावः। शास्त्रे [2]'मन्त्रायुर्वेदवत् तत्प्रामाण्यमाप्तप्रामाण्यादि'त्यादौ सर्वमेव शास्त्रम् आप्तन्यायप्रतिपादकमिति भवतां सिद्धान्तव्याकोपः, प्रतिज्ञादिपञ्चावयव-व्युत्पादनमपि चासम्बद्धमेव स्यादित्यपि बोध्यमिति। अस्यार्थस्य=वाच्यवाचकव्यु-त्पादनस्येत्यर्थः। नामानुशासनम् अभिधानम्। लिङ्गानुशासनं=टाप्[3] ङीवादि। यावतः अपरिज्ञानेन पराजयो जायते कथायां तावदेव अस्मच्छास्त्रे प्रतिपाद्यते नान्यदनुपयोगादित्याशङ्कयाह—**तदज्ञानेऽपीति**। अपशब्दादेरपि कथनेन निग्रहः। **अथवा अस्त्विति**। एकस्य नानोपायताया लोके बहुलमुपलब्धेः शास्त्रान्तरसाध्य-मपि नामव्युत्पादनमस्मच्छास्त्रे नातीव दोष इत्याशयः। **तथापीति**। तथाच बहुविष-यकेण तदीयाल्पविषयकस्य वैयर्थ्यमितिभावः। वादिविप्रतिपत्या सन्दिग्धो यः

---

१. लक्षणमभिधापि रविरम इति पाठः। २. न्याय सूत्रमिदम्। ३. टापतिवादि।

**गतस्य पदस्य लक्षणव्युत्पादनमेवं तल्लक्षणवाक्यगतपदस्यापीति अपर्यवसानमापतितं शास्त्रस्य, तत्तल्लक्षणवाक्यप्रयोग एव तेषां तेषां पदानां शास्त्रे जातोपयोगत्वात् ।**

अथ **नानालक्षणप्रणेतॄणां वादिनां विप्रतिपत्तेः प्रत्यक्षादिशब्दार्थं एव व्युत्पाद्यते संशयनिरासाय, नान्योऽसंशयत्वादिति मन्यसे, तथाप्यनुपपत्तिः । अस्ति हि वाऽऽदीनामर्थे वाच्यताद्योत्यताविवादः । अस्ति च छिदुरादिपदानामर्थे कर्मकर्तृत्वाकर्मकर्तृत्वे विवादः । अस्ति च भावशब्दस्य स्वरूपसत्त्वसत्तासामान्याद्यार्थत्वे । अस्ति चाधिकरणशब्दार्थस्य पतनप्रतिबन्धकत्वसमवायित्वादौ । एवमन्यस्मिन्नपि**

---

शब्दः स एवेह व्युत्पाद्यत इत्यपि न तस्याव्युत्पादनात्[१] इत्याहुः। **तथाप्यनुपपत्तिरिति । वाऽऽदीनामिति ।** वाशब्दादीति निपातमात्रम् उपसर्गाः ते द्योतका वाचका वेति सन्देहोऽस्ति, न चाक्षपादेन अत्र निर्णयः कृतः । वैयाकरणैः विदिभिदिच्छिदेः कुरजिति कुरच् प्रत्ययः कर्मकर्तरि विहितस्तदपरो न क्षमते कर्मकर्तृद्वयविरोधात् । आदिपदेन विदुर इत्यादिपरिग्रहः तथा भावपरिग्रहः सच समानार्थः, तदर्थेऽपि विप्रतिपत्तिः । स्वरूपसत्त्वं भाव इत्येके । अपरस्तु सत्तासामान्यम् । प्रमाणसम्बन्धः तद्योग्यता वेति[२] । अर्थक्रियाकारित्वमित्यपरे । अधिकरणे सप्तमी विहिता[3] तदर्थे विप्रतिपत्तिमाह—**पतनेति** । आदिपदेन कारकविशेषः [४]संयोगित्वं वा ।

ननु यावतामर्थानां[५] तत्त्वज्ञानं निश्रेयसहेतुः त एव लक्षणतः परीक्षातश्च शास्त्रे व्युत्पादनीया इति नायमुपालम्भः इति चेन्न । तादृशस्य आत्मतत्त्वस्यैव अव्युत्पादनात् । नहि वेदान्तप्रतिपाद्यस्यात्मनः स्वरूपं गुणवत् सम्भवति । न च मोक्षो दुःखाभावः, सन् पुरुषार्थः तथासति भोजनादावपि नान्तरीयकदुःखे न प्रवर्तेत किं पुनः तपस्यादौ । तस्मात् निःसुखं दुःखं द्वेष्यं, तदभावः पुरुषार्थः ततश्च मोक्षोऽपि न्यायशास्त्रनिरूपितो न पुरुषार्थः केवलदुःखाभावात्मकत्वात् । न केवलं दुःखध्वंसमुद्दिश्य दुःखसाधनतत्त्वज्ञानादौ तदुपाये प्रवृत्तिः सम्भवति । तथा सति दाहजदुःखध्वं समुद्दिश्य दाहे शिरस्ताडनजदुःखध्वंसमुद्दिश्य शिरस्ताडनेऽपि प्रवर्तेत । तस्मादानन्दात्मक आत्मैव पुरुषार्थः । सच वेदान्तिभिरेव ब्रह्ममीमांसायां निरूपितः ।

नच तस्य नित्यस्य कथं पुरुषार्थत्वमिति वाच्यम् । आनन्दत्वेनैव पुरुषार्थत्वात् । नचेच्छाविषयत्वेनैव पुरुषार्थता नच नित्येच्छा सम्भवति सिद्धत्वादिति वाच्यम् । स्वरूपतः सिद्धस्यापि तत्त्वेन अज्ञाने साध्यत्वज्ञानादिच्छोपपत्तेः । नहि तत्त्वज्ञानात् प्राक् मोक्षे साध्यत्वज्ञानं नास्ति । विशेषदर्शनस्यैव भ्रमविरोधित्वात् । नच

---

१ तस्यानुत्पादनात् इति । २. केचित् इतिशेषः । ३. वेति तादर्थे । ४. संयोगत्वे वेति पाठः । ५. यावताअर्थानां तत्त्वज्ञानं निश्चयसे सहेतुः ।

**वह्नौ पदार्थे जाग्रति विप्रतिप्रत्ययः, तल्लक्षानि कस्मान्नोक्तानि ? तदास्तामेकत्र विस्तराभिनिवेशः ।**

**३—किञ्च तत्साक्षात्कारित्वम् ?**

**सविशेषार्थप्रकाशत्वमिति चेन्न । सविशेषत्वस्योपलक्षत्वेऽनुमानादिव्याप्तिः । विशेषणत्वे च यदि विशेषशृङ्खलाया विश्रान्तिस्तदा शेषविशेषस्य बोधे प्रत्यक्ष-लक्षणक्षीणत्वेन आमूलमप्रत्यक्षतापातः । यद्यविश्रान्तिस्तदा तादृशस्यैव व्याप्ति-ग्रहादनुमायामपि तादृशी सिद्धिरिति साक्षात्कारित्वापत्तिः ।**

---

तत्त्वज्ञानोत्तरं कश्चिदपि मोक्षाय यतते । यतयो यतन्ते चेन्न । तदा तत्त्वज्ञानिनः शरीराद्यध्याससत्त्वात् इति स्थिरो भव । विद्यावतो वा उपास्वेति दिक् । इत्याशय-वानाह—तदास्तामेकत्र विस्तराभिनिवेशः इति । एकत्र प्रत्यक्षलक्षणमात्रे इत्यर्थः ।

चतुर्थं प्रत्यक्षलक्षणमाशङ्कते—**सविशेषश्चेति । अनुमानादिव्याप्तिरिति ।** सत्यपि अनुमानादौ सामान्यभाने तदाश्रये रूपादिविशेषसत्त्वादिति भावः । शेषविशेषस्य विशेषहीनस्य भानं न विशेषविशिष्टभानमतस्तत्र प्रत्यक्षलक्षणं नास्तीति तद-प्रत्यक्षम् । ततश्च तद्विशिष्टे पूर्वविशेषे यद् भानं तदपि प्रत्यक्षं न स्यात् अप्रत्यक्ष-विशेषणस्य विशिष्टस्य प्रत्यक्षत्वायोगात्[1] इत्याह—सविशेषस्येति । तथाचासम्भवः प्रत्यक्षलक्षणस्येति भावः । **यदीति ।** अनवस्थामतिस्पष्टामुपेक्ष्य अव्याप्त्युद्धरणा-समर्थं प्रति किं दूषणान्तराभिधानेनेत्याशयेनाह—**तादृशस्यैवेति ।** विशेषसहितस्य व्यापकस्यैव व्याप्तिग्रहात् व्याप्तिभाने स्फुरणात् [2]अनुमायामप्यनन्तविशेषसहित स्यैव भानमित्यर्थः ।

**अथेति ।** विशेषाणामनन्तगतत्वान्नानुमिति, तावत्सु[3] व्यापकतावच्छेदकस्य एकस्याभावात् । व्यापकतावच्छेदकावच्छिन्नस्यैव तत्र भाननियमविषयत्वं किन्तु-व्यापकगतसामान्यस्यैवेत्यर्थः । तर्हि तावतां विशेषाणामनुगतप्रतीतिव्यवहारौ न स्यातामेकरूपाभावादित्यर्थ [4]इत्यपव्याख्यानम् ।

सत्यपि तेषु विशेषरूपेषु अनुगतधर्मेण रूपेण व्यापकताया अग्रहात् न तथा भानं तादृशरूपेण व्यापकताया अग्रहेऽपि तत्प्रकारकानुमाने वह्निमानित्यनुमितौ सत्त्वद्रव्यत्वतेजसः शुक्लभास्वरत्वादिप्रकारकताऽपि स्यात् । अतएव विशेषवतो दृष्टान्तदृष्टस्यापि अननुगमादप्रकाशश्चेत् तर्हि अग्निमान् अयमिति व्यापकविशे-षानुगतपक्षप्रतीतिः[5] वह्न्यर्थिनश्च तत्र व्यवहारो न स्यादिति विद्यासागर-व्याख्यानमपि अपास्तम् । अग्नत्वाकारानुगतप्रतीतेः स्वीकारादेव । नहि यावन्तो

---

१. प्रत्यक्षत्वापात । २. अन्तविशेष । ३. तावत्सव्यापकता । ४. इदं मिश्रस्य व्याख्यानम् । ५. लक्ष्यप्रतीति ।

**अथाननुगमात्तत्र न तदनुमा, तर्हि तदनुगतप्रतीत्याद्यनुपपत्तिः, व्यक्तेरनुमानादसिद्ध्यापत्तिश्च। यथा हि व्यक्तिं विना सामान्यस्य, तथा तावत् तं विशेषं विना व्यक्तेरप्यनुपपत्त्यविशेषात्। यदि च प्रतीत्यपर्यवसानाभावात् पक्षधर्मतया**

---

विशेषाः व्यापके गृहीताः तत्प्रकारिकेयं[1] प्रतीतिरग्निमान् इति। अत्र ब्रूमः। किं तावत् स्वविशेषेषु सामान्यमेकं[2] नास्ति। अथवा विद्यमानमपि न प्रतीयते। आद्ये तदनुगतप्रतीत्यनुपपत्तेः अनुगतप्रतीतेरप्यपलापे कथं तेषामत्यन्ताननुगतानाम् अनुगतप्रत्यक्षलक्षणघटकत्वम्। द्वितीयेऽपि कथमप्रतीयमानस्य लक्षणानुप्रवेशः। अप्रवेशे वा अत्यन्ताननुगमः प्रत्यक्षलक्षणस्य दुर्ज्ञेयता च असर्वज्ञैः[3] स्यात्। अथ प्रतीतमेव व्यापकतावच्छेदकतयो[4] न गृहीतम्। यत्र धूमः तत्राग्निरित्यनुगतस्यैव धूमव्यापकत्वेन भानात् अननुगतरूपेण व्यभिचाराच्चेति चेन्न। तद्धूमतद्वह्न्योरव्यभिचारात् नान्त्यः। अग्नित्वस्यानुगमेऽपि वह्नेरननुगमात् नाद्योऽपि।

अथ [5]व्यक्तेर्जातिरनुगमिका, नानाव्यक्तीनामेकाकारप्रतीतिविषयत्वमेव अनुगमकत्वम्। अस्तु एवं तथापि व्यापिकाः कथं व्यक्तयो, व्यभिचारात्। अग्नित्वेन रूपेण न व्यभिचारिणः वाक्यार्थः धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकमग्नित्वमिति चेत्ततः किमायातमग्नेः यथाहि तत्तद्व्यक्तिमान्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकाग्निकत्वेन तासां व्यक्तीनां व्यापकत्वं तथा तत्तद्विशेषाणामपि व्यापकत्वं दुर्वारमित्याशयेनाह—**व्यक्तेरिति**[6]। यथाहि अग्नित्वं व्यक्तीनामत्यन्ताननुगतानामनुगमकं तथा विशेषाणामपि। यदि च अनुमाने सामान्यमेव विषयो भासमानत्वात् नतु विशेषाः तथाऽप्रतीतेरित्युच्यते तदा व्यक्तेरपि सामान्याश्रयस्यानुमानं न स्यात् ततश्च विशेषे अनुगमाभावः। "सामान्ये सिद्धसाध्यते"ति चार्वाकदोषाद् अनुमानोच्छेदो दुर्वारः।

अथ परम्परया पक्षवृत्तिसामान्यमनुमितेरसिद्धं विषय इति नानुमानोच्छेदो व्यक्तिविशेषस्तु सामान्येन आक्षेपादेव सिध्यति, सामान्यस्य तां विना अनुपपत्तेरित्याशङ्क्याह—**यथाहीति**। सामान्येन व्यक्त्याक्षेपवद् व्यक्तिभिरपि विशेषाः आक्षिप्येरन् इत्यर्थः। तथा च लिङ्गादेव पक्षधर्मतासहायाद् व्यक्तिरिव तद्गतविशेषोऽपि सिध्येत् इति भावः। अतएव पक्षधर्मतया नानन्तविशेषसिद्धिरिति शङ्किष्यते। सामान्यस्येत्यस्य अनुपपत्तिरिति शेषः। व्यक्तेरित्यनुमितौ भासमानाया वह्निव्यक्तेरित्यर्थः।

---

२. कं नास्ति इति पाठः। ३. सर्वज्ञैः स्यात्। ४. व्यापकतावच्छेदकता न गृहीतम्। ५. व्यक्तिर्जातिरनुगमिका। ६. अन्यथा व्यक्तेरिति।

**नानन्तविशेषसिद्धिरिति मन्यसे, तदा प्रतीतापर्यवसानात् तद्बुद्धि साक्षात्प्रकाशः स्यात् ।**

**अप्रतिपद्यमानानन्तविशेषप्रकाशकल्पनाच्च एकाकिसाक्षात्त्वनामकविशेषकल्पनैवाल्पत्वात् श्रेयसितरा। साक्षात्त्वव्यवहारान्यथानुपपत्तेः कल्पनाबीजस्य तावताऽपि चरितार्थत्वादिति कृत्वा तत्कल्पनाऽपि नात एव। विस्तरश्चात्र वक्ष्यते।**

**विशेषश्च यदि व्यवच्छेदस्तदा निर्विकल्पकाव्याप्तिः। यदि च विश्वव्यावृत्तस्वरूपप्रकाशात् सोऽपि तथा, तदा दूरे सामान्यप्रत्यक्षस्याप्रत्यक्षत्वापातः, तत्र जग-**

---

**तदा प्रतीतापर्यवसानादिति।** अनुमिता या वह्निव्यक्तिः सा तावदनन्तविशेषमन्तरेण न[1] पर्यवस्यतीति तदनन्तरभाविनि अर्थबलापाते ज्ञानान्तरे प्रत्यक्षता स्यादित्यर्थः। तत्रैवासम्भवं दर्शयितुं दोषान्तरमाह—

**अप्रतिपद्यमानेति।** एतेन अनुपलम्भबाध उक्तः, एकाकित्वेन अनन्ततायाबाध उचितः। अल्पत्वेन[2] लाघवमुक्तम्। श्रेयसितरा=अतिशयेन श्रेयसी उक्तयुक्तित्रयेणेति भावः। **तावतापीति**। तथाच—

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि। इति न्यायस्य नायं विषयः। साक्षात्वं विषयगतं चेत् तन्त्रवार्तिके कल्प्येत तदा दोषमाह—**अतएवेति**। साक्षात्व विषयकानुमितौ अतिव्याप्तिरेवेत्यर्थः। **अतएवेति**। तत्कल्पनावीजस्य साक्षात्वव्यवहारानुपपत्तेरनिर्वचनीयसाक्षात्त्वेनापि चरितार्थत्वाद् अन्यस्य **प्रमाणस्याभावादे**वेत्यर्थ इति विद्यासागरः।

वस्तुतस्तु साक्षात्वधर्मकल्पनायां लाघवं युक्तम् तच्च यदि ज्ञानगतेनैवोपपद्यते **तत्कल्पनेति**[3]। विषये कल्पनेति। एवं ज्ञानगतजातेरेव व्यवहारोपपत्तेर्विषये तस्यानुपलम्भवाधितत्वाच्चेत्यर्थः। अस्तु तर्हि ज्ञानगतमेव साक्षात्त्वमित्याशङ्क्याह—**विस्तरश्चेति**।

ननु [4]अनन्तविशेषकल्पने गौरवं तदा स्याद् यदि क्लृप्तविशेषेण उपपद्येत तथाचानुक्तोपालम्भोऽयमित्याशयेन क्लृप्तविशेषं विकल्पयति। **विशेषश्च यदीति। निर्विकल्पकाव्याप्तिरिति।** वस्तुस्वरूपावगाहिनो भेदाविषयत्वात्। न चैवं सविकल्पेऽपि भेदाभानाद् असम्भव एव वक्तुमुचित इति वाच्यम्। अतद्व्यावृत्तेस्तत्रभानात्। अथ व्यवच्छित्तिभानं न विवक्षितम् अपितु व्यवच्छिन्नभानम्। अथवा। स्वरूपभेद एव व्यवच्छित्तिरिति शङ्कते—**यदि चेति**। सोऽपि=निर्विकल्पकविषयोऽपि तथा=व्यवच्छित्त्याश्रयः। सोऽपि निर्विकल्पात्मकप्रकाशोऽपि,

---

१. अन्तरेण पर्यवस्यतीति पाठः। २. अल्पत्वे पाठः। ३. तदा कल्पनात् इति।

1. अनन्तविषय।

द्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः। यदि तत्रापि प्रतिपत्त्रादिव्यवच्छेदमात्रप्रकाशाद् विशेषप्रकाशत्वमेव, तदाऽनुमित्यादिव्याप्तिः।

(४) अथ इन्द्रियकरणकानुभूतित्वम्। तत्र साक्षात्कारिधीकरणस्यैवेन्द्रियत्वेन अन्योन्याश्रयत्वापत्तिरिति केचित्। तन्न, अज्ञातप्रमाकरणत्वस्य भावत्वविशेषितस्येन्द्रियत्वनिरुक्तेः सम्भवात्। विना कार्यगतविशेषसिद्धिं किं प्रति करणत्वमेव ज्ञेयमिति तु बाधः साधीयान्।

---

तथा कोऽर्थः=व्यावृत्तप्रकाश इति वार्थः। अनुमानाद्यतिव्याप्तिमुपेक्ष्यैवाह—**तदेति**। दूरे=दूरस्थे स्थाण्वादौ यदूर्ध्वत्वादिसामान्यज्ञानं तस्य प्रत्यक्षता न स्यादित्यर्थः। **संशयादीति**। आदिपदं भ्रमपरम्। यदि धर्मिमात्रं वस्तुमात्रं [१]स्वविशेषः तदा धर्मिदर्शनमेव विशेषदर्शनमिति भ्रमसंशयौ न स्यातामित्यर्थः।

अथ तादृशदर्शनं विशेषदर्शनं न संशयादिविरोधि किन्तु कोटिविरोधिज्ञानमेव तथा, न चेह तद्भासत इति चेत्तर्हि कथं जगद्वैलक्षण्यप्रकाशोऽयम्।

ननु सकलव्यवच्छिन्नप्रकाशत्वं न लक्षणमतो नैष दोषः किन्तु व्यवच्छित्तिप्रकाशत्वं तच्च प्रमातुर्व्यवच्छेदस्य विषयत्वेनाप्युपपन्नमिति शङ्काग्रन्थार्थः। न चानुपस्थितस्य प्रमातुर्भेदः कथं भासतां, भाने वा जगतोऽपि स भासतामिति वाच्यम्। प्रतियोगिप्रकारकभेदज्ञाने एव तदुपस्थितिः, कारणं विनाऽपि तया सामान्यप्रत्यासत्त्या भेदोऽस्तीति शब्दादिना तद्भानात् जगद्वैलक्षण्यभानं तु संशयाद्यनुपपत्त्यैव परास्तमिति दिक्।

पञ्चमं साक्षात्कारलक्षणं शङ्कते—**इन्द्रियेति**। अनुभवत्वमित्यस्य साक्षात्त्वमिति शेषः। [२]**साक्षात्कारिधीकरणत्वस्येति**। शरीरसंयुक्तं साक्षात् प्रतीतिसाधनम् अतीन्द्रियम् इन्द्रियमिति तन्निरुक्तेरिति दूषणमुद्धरति परिष्कृत्य दूषयितुम्—**तन्नेति**। नैयायिकमते अज्ञातत्त्वे सति प्रमाकारणत्वमात्रम्। अज्ञातत्त्वविशेषणेनैव लिङ्गशब्दादिवारणात् [३]लिङ्गाज्ञानादेरकरणत्वात्। भट्टमते अनुपलब्धेर्वारणाय भावत्वेनापि विशेषणीयमिति। एवं परिष्कृत्य दूषयति—**विनाकार्यगतविशेष इति**। कार्यभूतायाः प्रमायाः लक्षणविशेषणत्वात् [४]तस्या अज्ञाने लक्षणासिद्धेः ज्ञाने तदेव लक्षणमस्तु अलं [५]तदधीनसिद्धिकेनानेनेति भावः। बाधः=लक्षणस्याभावप्रमा। **साधीयानिति**। लिङ्गादिज्ञानकरणकत्वपक्षे तथा निर्वचनासम्भवाद् अन्योन्याश्रयोऽपि साधुरेव तथाप्ययमतिशयेन साधुः सर्वमतसाधारणत्वादित्याशयः।

---

१. स्वाविशेषः। २. साक्षात्कारित्वस्येति। ३. लिङ्गज्ञानादेः।
४. तस्याज्ञाने। ५. सिद्धिकेनोनेति।

**(५) एतेन ज्ञातता काचिद्विलक्षणा तज्जनकत्वं ज्ञानस्य साक्षात्त्वमिति निरस्तम्, ऐकरूप्याव्यवस्थितौ कारणत्वानवधारणात् । न च ज्ञाततावैलक्षण्या-न्यथानुपपत्तेरेव तत्सिद्धिः, कारणान्तरवैलक्षण्यादेव तदुपपत्तेः ।**

**(६) नापि मेयजनितत्वम् अतिप्रसङ्गात् । स्वमेयजत्वे च स्वार्थव्यावृत्त्याऽननुगमात्, पूर्वदोषानिवृत्तेश्च ।**

---

षष्ठं लक्षणं दूषणातिदेशेन निरस्यति । **एतेनेति** । ज्ञानमात्रेणाऽहितविषयता = ज्ञातता = प्रकटता स्पष्टतापरपर्याया तु सा विलक्षणा प्रमाणसिद्धा, तस्याः कारणत्वमेव साक्षात्वं नहि सा परोक्षज्ञाने सम्भवतीति भावः । **ऐकरूप्यमिति** । कारणीभूतज्ञानगतएकधर्मत्वमित्यर्थः । साक्षात्कृतताधायकं किं ज्ञानमिति नाद्यापि निरूपितम् । ज्ञानगतं जनकतावच्छेदकं विना कारणताग्रहासम्भवः । **यदि** च कारणतावच्छेदकं शक्यते निरूपयितुं तदा तदेव प्रत्यक्षलक्षणमस्तु नतु तन्निष्ठजनकत्वं गुरु इति भावः । तत्सिद्धिः = कारणगतैकरूप्यसिद्धिरित्यर्थः । **कारणान्तरवैलक्षण्यादिति** । ज्ञानाद्भिन्नं यत्कारणमिन्द्रियमित्यर्थः । तथा च इन्द्रियादेव सन्निकर्षविशिष्टात् साक्षात्कारणत्वेनाभिमतात् साक्षात्कृतता जायतां नतु तज्जन्येन तस्यैकरूप्यस्य अद्याप्यनिरूपणात् चाक्षुषत्वादेस्त्वननुगतत्वादेवेति भावः । षष्ठं लक्षणमाशङ्क्य निषेधति—

**नापि मेयजनितत्वमतिप्रसङ्गादिति** । अनुमित्यादाविति शेषः । सर्वज्ञानानामात्मना मेयेन जननादिति[१] भावः प्रत्यक्षज्ञानस्य यन्मेयं घटादि तज्जन्यत्वं न[२] लक्षणं स्वपदार्थाननुगमात् इत्याह—**स्वमेयजन्यत्वञ्चेति** । आत्मप्रत्यक्षे आत्मा भवति मेयः तज्जन्यत्वञ्च सर्वज्ञानानामित्याह—**पूर्वेति** । आत्मानुमिति स्मृत्यातिव्याप्तिः पूर्वो दोषः, एवं व्याख्याने आत्माश्रयप्रसङ्गः प्रत्यक्षत्वेन तदप्रवेशे-यज्ज्ञाने यन्मेयं तज्जन्यत्वमिति व्याख्येयम् ।

विद्यासागरस्तु मेयजनितमात्रं, स्वमेयजनितत्वं वा । आद्ये घटज्ञानस्य पटे अपरोक्षत्वप्रसङ्गः इत्याह अतिप्रसङ्गादिति । अन्त्ये स्वार्थव्यावृत्त्या लक्षणव्यावृत्तिप्रसङ्गः । इदं लक्षणं नाप्रतीतं लक्ष्यसाधकमतिप्रसङ्गात् । प्रतीतमपि न स्वतःप्रतीतं, जडत्वात् । अन्यतः प्रतीतं चेत्तर्हि तदेव लक्षणमस्तु अव्यवहितप्रतीतिकत्वादित्याह—**पूर्वेति** व्याचष्टे । तत्तु न युक्तम् एतेषां दोषाणां प्रायुक्तत्वात् पूर्वदोषो न तिष्ठतीत्येव वक्तुमुचितत्वात् इति ।

---

१. जनात् । २. तज्जन्यत्वं लक्षणम् । ३. घटज्ञानस्य पटप्रसङ्गः । ४. व्यावृत्त्येति, इदं लक्षणं । ५. अव्यवहित प्रीतिकत्वात् ।

**(७) अथ येन प्रमिते सति न प्रमित्सा पुनर्भवति, तज्ज्ञानं साक्षात्कारीति। तन्न, प्रत्यक्षावगतेऽपीष्टे तनयादौ प्रमित्सादर्शनात् ।**

**अथ यदनन्तरं न विजातीयप्रमित्सा, तद्भावस्तथात्वम् । तन्न, तत्साजात्यानवगतौ तद्विजातीयानवगतेः, अरिसम्पद्यनुमादिविषयायां प्रत्यक्षयितुमनिष्टेश्च । प्रत्यक्षावगतेऽपि दहने रक्ताशोकस्तबकसन्देहे धूमदर्शनेन वह्नेरनुमीयमानत्वादित्यप्येके ।**

---

ज्ञानत्वे सति विषयप्रमित्सोत्पत्ति प्रतिबन्धकत्वं साक्षात्वमिति सप्तमं लक्षणमाशङ्कते—**अथ येनेति** । अनुमानाद्यनन्तरमपि प्रत्यक्षेण प्रमित्सा भवति यदनन्तरम् आत्मप्रत्यक्षं प्रत्यक्षे तु सति प्रमित्साया अदर्शनात् तस्य प्रतिबन्धकत्वमित्यभिमानः इदमसम्भवेन दूषयति—**तद्विजातीयानवगतेरिति** । तत्सजातीयभिन्नत्वं हि तद् विजातीयत्वं, तच्च सजातीयात्मकप्रतियोगिनिरूपणेन निरूप्यम् । तथाच लक्षणात् सा जात्यावगतौ परस्पराश्रयः, अन्यतोऽवगतौ तदेव लक्षणमस्त्वितिभावः । शत्रुसम्पदनुमितावतिव्याप्तिमाह—**अरिसम्पद्यनुमानादिविषये** इति । क्वचित् अनुमानादिविषयायामिति पाठः । सच विषयशब्दस्य पुंलिङ्गत्वादनुपपन्नः प्रामादिक एवेति ।

यद्वा अनुमानं विषयोऽतिव्याप्तिस्थलत्वेन यस्याम् अविसंवादीत्यर्थः इतिमैथिलाः ।

अन्यस्तु विषयपदं विषयतापरं 'द्व्येकयोर्द्विवचनैकवचने'[१] द्वित्वैकत्वयोरिति च । तथाच अनुमानादिविषयता यस्यामिति बहुव्रीहिणा साधुरित्याह । अनुमानादि विषयीकरोति--इति अनुमानादिविषया सम्पत् । विषय एव हि ज्ञानस्य विषयतां सम्पादयन् विषयीकरोतीत्युच्यते ।

यद्वा विषया इति विषयमयते इत्यय्[२] धातोः रूपम् । ततश्च अनुमानादिविषयमयत यस्याः सम्पदः । सम्पत् शत्रुसम्पत् । सम्बन्धादेव अनुमानादि विषयं प्राप्नोति इत्यर्थं इति तु तत्त्वम् । प्रत्यक्षयितुमनिष्टेरिच्छाविरहादित्यर्थः ।

ननु शत्रुसम्पदोऽनिष्टत्वादेव तत्प्रत्यक्षे इच्छा नोत्पद्यते नतु अनुमितिस्तत् प्रतिबन्धिका इति चेन्न । प्रत्यक्षानन्तरम् अनुमित्सा न जायते इति प्रत्यक्षं तत्प्रतिबन्धकं तदेवत्वसिद्धमिति । तत्र उपप्लवकारीदं[3] दूषणमुद्भावयति–प्रत्यक्षावगतेपीत्यादिना । अत्र विशेषप्रदर्शनात् कथं प्रत्यक्षावगते सन्देह इति अस्वरसः केचिदित्यनेन सूचितः । तदस्य दूरस्थे वह्नौ दूरत्वदोषात् सादृश्यदर्शिनो [४]रक्ताशोकस्तवकसन्देह-

---

१. अ० १ पाद ४ सं० २२ अष्टाध्यायी । २. अय्धातोः ।

३. उपप्लवकोरीयं । ४. वक्ताशोकस्तवक सन्दोह ।

(८) **अज्ञायमानासाधारणकारणकानुभवत्वं** (९) **कारणविशेषणीकृतभावत्वं वा साक्षात्कारित्वमिति चेन्न, दीर्घादिप्रत्यक्षाव्यापनात् तत्रावधिप्रवृतेः प्रतीयमानस्यापेक्षणात् ।**

**नावधिस्तत्र ज्ञायमानस्तथा, अवधिज्ञानं तु स्यात् । अतीतादावप्यवधौ तथाप्रत्ययादिति चेत्, तुल्यं लिङ्गे धूमादावपि, धूमदर्शनात् (धूमदृश्वना) 'तत्राग्निरासीदि'ति पश्चादप्यनुमानात् । ज्ञानविशेषणतया तु ज्ञेयहेतुता तुल्यैवेति ।**

---

बाधकाभावात् । ननु पदमशोकसादृश्यसूचनाय, तस्मात् केचिदिति खाण्डनिकमुख्या इत्युक्त्या स्वमतमुदाहरणान्तरमेवेदं प्रत्यक्षाव्याप्तिप्रदर्शनाय ।

सप्तमं लक्षणमाशङ्कते—**अज्ञायमानेत्यादि** । स्मृतावतिव्याप्तिवारणाय अनुभवपदम्, मनःसंयोगः सर्वेषु ज्ञानेषु अज्ञायमान एव हेतुरित्यनुमानादावतिव्याप्तिरित्यसाधारणपदम् ।

मतभेदेन लक्षणान्तरमाह—**कारणेति** । अज्ञायमानासाधारणभावकारणकानुभवत्वमित्यर्थः[१] । तथा च भट्टमतेनेदं लक्षणमिति ।

यद्यपि अनुमितावपि बाधाभावविधया अनुपलब्धिकारणं तथापि नासाधारण्यम् असंसर्गाग्रहस्य विशिष्टधीमात्रे हेतुत्वात् । अबाधिततत्वज्ञानमेव परोक्षज्ञानमिति पक्षमाश्रित्य चेदम् । **दीर्घादीति** । आदिपदेन सादृश्यपरिग्रहः । **प्रभृतेरिति**[२] । सादृश्यप्रतियोगिनः परिग्रहाय । **नावधिस्तत्रेति**[३] । समानदोषभाजोरेकत्र दूषणोद्धारे अन्यत्रापि तुल्यतयोद्धारो भवतीति एकत्र एव कथनं न दोषाय । **अतीतावित** । आदिपदेन अनागतस्य परिग्रहः । गूढाभिसन्धिरव्याप्तिं परिजिहीर्षुः [४]आपाततोऽनुमाने अतिव्याप्तिमाह—धूमं दृष्टवान् यः स धूमदृश्वा तेन दर्शनस्य अतीतत्वं दृश्यस्यातीतत्वविवक्षया कथयति—धूमदृश्वन[५] इति । **ज्ञानविशेषणतयेति** । ज्ञानमात्रं न हेतुः किन्तु लिङ्गज्ञानमिति ज्ञेयस्य लिङ्गस्यापि हेतुतेति । अभिसन्धिमुद्घाटयति—**तुल्यमिति** । तथा च दीर्घादिप्रत्यक्षाव्याप्तिरिति भावः ।

यद्यपि असतो हेतुता न सम्भवति तथापि ज्ञानावच्छेदकतात्वमेव तस्य हेतुत्वमिह विवक्षितमिति भावः । यद्वा जातिव्यक्त्यभेदवादिमतेनेदम् ।

ननु अवधेः बाधज्ञायमानस्य कारणत्वेऽपि प्रत्यक्षस्य इन्द्रियकरणकतया अज्ञायमानकरणकत्वमस्त्येवेति[६] चेन्नाज्ञायमानमेव कारणं यस्येत्येव वाक्यार्थोऽन्यथा[७] अतीतानुमानेप्यदृष्टविषयात्मककारणस्याज्ञायमानस्यैव[८] तत्त्वेनातिव्याप्तिः ।

---

१. अज्ञायमान साधारग इति । २. प्रभतिरिति । ३. नविधिस्तथेति ।
४ परिजिहीर्षु परायत्तो । ५. नैवं विधः पाठो मूले दृश्यते । ६. अस्त्येवेतिन्ना ।
७. अन्यथा नानुमानेऽपि । ८. ज्ञायमानस्य ।

**असाधारणकारणगिरा करणमभिमतमिति चेन्न, अनुमितभाविलिङ्गकभाविलिङ्ग्यनुमितौ असतो लिङ्गस्य करणत्वासम्भवेन ज्ञायमानकरणकत्वाभावात् ।**

**लिङ्गज्ञानं तावत्करणम्, तच्च स्वप्रकाशवादिनो मम ज्ञायमानमेव तत्रेति चेन्न, तस्यापि ज्ञायमानतया करणकोटिप्रवेशे प्रमाणाभावात् उक्तप्रत्ययानां तथात्वाभावात् ।**

**अन्यथासिद्धस्यापि ज्ञायमानत्वस्यावर्ज्जने चक्षुराद्यनुमित्यनन्तरं दैवोपजातघटादिप्रत्यक्षाव्यापनात् । नियमेनेति चेन्न, विधौ वैयर्थ्यात् । नियमेन निषेधस्यविशेषणे दैवावगतेन्द्रियज्ञानानन्तरजप्रत्यक्षसम्भवादसिद्धिः । विधौ करणत्वप्रविष्ट एवायं नियमो निरुच्यत इति चेन्न, तथापि वैयर्थ्यादेव ।**

---

अथ लिङ्गं करणं[1], ज्ञानं तद्व्यापार इति नाज्ञाप्यमानकरणत्वमित्याशङ्कते—**असाधारणेति**[2]। अवधिज्ञानस्य व्यापाराभावात् न करणमित्याशयः। अतिव्याप्तिं परिहरति। **अनुमितेति**। अनुमितं भाविलिङ्गं यस्य भाविलिङ्गिनः तदनुमितभाविलिङ्गकं यद् भाविलिङ्गि तस्यानुमितावित्यर्थः। यदा पुरोवातादि विशिष्टलिङ्गेन विशिष्टमेघोदयमनुमाय तेन भविष्यन्ती वृष्टिरनुमीयते तदा असतो मेघोदयस्याकारणत्वात् तज्ज्ञानम् अज्ञायमानमेव करणमित्यर्थः।

प्राभाकरः शङ्कते—लिङ्गज्ञानं तावदिति। तावदिति एवकारार्थे। लिङ्गज्ञानं स्वरूपेणैव करणं न[4] ज्ञायमानतया प्रमाणाभावादिति पाठः सुगमः एव। क्वचित्तु उक्तप्रत्ययानां तथात्वे प्रमाणत्वाभावादिति पाठः। स एव विद्यासागरसम्मतः।

तस्य च उक्तप्रत्ययानाम् अनुमितभाविलिङ्गप्रत्ययानां ज्ञायमानतया करणकोटौ प्रवेशे प्रमाणाभावादित्यर्थः। लिङ्गविषयकज्ञानत्वेन करणत्वस्यावश्यकत्वेन ज्ञायमानत्वरूपेण निष्प्रमाणकमेव अवच्छेदकत्वकल्पनमितिभावः।

ननु कारणताया अनतिरिक्तवृत्तित्वमेव अवच्छेदकत्वं नतु लघुत्वसहितं गुरुत्वादित्याशङ्क्य अव्याप्त्या दूषयति **घटादीति**।

**विधाविति**। अज्ञायमानं नियमेन कारणं यस्येति कारणविधावित्यर्थः। कारणत्वेनैव नियमस्य लब्धत्वादिति भावः। **नियमेनेति**। ज्ञातं करणं यत्र नियमेनेत्यर्थः। **असिद्धेरिति**। ज्ञातकरणत्वस्य कदाचिद् विद्यमानत्वेन ज्ञातकरणत्वं यत्र नियमेन नास्तीत्युक्तावसम्भवापत्तेरित्यर्थः। ज्ञातकरणजन्यत्वं यस्य नियमेन तद्भिन्नत्वमित्याशङ्कते। **विधौ**। नचैवं [5]करणत्वांशप्रवेशादेव नियमलाभे तद्वैयर्थ्यमित्याशङ्क्याह—**करणत्वप्रविष्ट** एव। अनुवादोऽयं स्पष्टीकरणार्थः

---

१. करणज्ञानं तव्यापार। २. अथेति। ३. अथाधिज्ञानस्य।
४. करणं ज्ञायमानतया। ५. नचैव करणत्वां प्रवेशादेव।

**अन्यथाऽतिप्रसक्तेरवैयर्थ्यमिति चेन्न, तथाप्यतिप्रसक्तेरेव। न हि रसादिसाक्षात्कारे रूपादिर्हेतुः। अन्यथासिद्धेर्नेति चेन्न, तुल्यत्वादनुमानेऽपि।**

**किञ्च—यत्र निषेधस्तद्गतमैकरूप्यं निरूप्यम्, अन्यथा किमादाय नियमो निरूप्येतेति कार्यगतैकरूप्यमनभिधाय न निस्तारः। विनाऽपि च नियमपदप्रवेशं कार्यगतैकरूप्यमनिरूप्याऽनिस्तार एव। ज्ञायमानं नात्र करणमिति हि यदि कार्यव्यक्तिमभिसन्धाय तदा तत्पूर्वं प्रतीतानां तत्राकारणत्वं दुरवधारणम्। ततस्तज्जातीये तज्जातीयव्यभिचारप्रतिसन्धानेऽवश्यं यतनीयमिति।**

इत्याशय इति विद्यासागरः। ज्ञायमानत्वं करणस्य विशेषणं [1]नतूपलक्षणमिति नियमेनेत्युपादानात् लभ्यमिति भाव इत्यपरे। अस्मिन् पक्षे ज्ञायमानकरणकमित्यभिधानादेव विशेषणलाभे तद्वैयर्थ्यमित्याह। **तथापीत्यादि**। जायमानकरणकत्वम् अनुमीयमानचक्षुर्जन्यज्ञाने प्रत्यक्षेऽप्यतिप्रसक्तमिति तद्वारणार्थमयमनुवाद इत्याशयेनाह—**अन्यथेति**। अवर्जनीयसन्निधिमादाय यद्यतिप्रसक्तिस्तदा अन्यथासिद्धम् अन्यदपि कारणं स्यादिति सुतरामतिप्रसक्तेः। [2]ईश्वरज्ञानमादाय प्रत्यक्षेऽतिप्रसक्तिरित्यपव्याख्यानमपि न, फक्किका विरोधात्।

ननु अन्यथासिद्धमपि कारणमित्यत आह—रसादिसाक्षात्कार इति। अन्यथासिद्धेन ज्ञानेन ज्ञायमानकरणकत्वं प्रत्यक्षस्य[3] नत्वेवमनुमानस्येति अज्ञायमानकरणकानुभवत्वं नानुमानगामीत्याह—**अन्यथेति**। लिङ्गज्ञानमपि स्वप्रकाशतया स्वविषये अन्यथासिद्धमेवेत्यनुमानेऽपि अज्ञायमानकारणकत्वमतिप्रसक्तमेवेत्याह—[4]**तुल्यत्वादिति** शङ्करमिश्राः। तत्र। अन्यथासिद्धस्य अवच्छेदकत्वेऽपि कारणतानङ्गीकारात्। अन्यथासिद्धमन्यदपि अनुक्तोपालम्भापातात्। विधौ नियमविशेषणाभावे अज्ञातकरणकानुभवत्वं भाविलिङ्गज्ञानकरणकानुमितावतिप्रसक्तमित्युक्ते क्वचित् लिङ्गं ज्ञायमानं करणं क्वचित् लिङ्गज्ञानमिति कल्पनायां प्रमाणाभावात् सर्वत्र लिङ्गज्ञानमेव करणं तच्चाज्ञायमानमेवेत्याह—**तथाप्यतिप्रसक्तेरेवेति**। वर्तमानं लिङ्गं न कुतः करणमित्याशङ्क्य हृदयस्थमेव ज्ञानावच्छेदकत्वेन तस्यान्यथासिद्धत्वं दृष्टान्तेन अभिव्यनक्ति—नहीति। वैषम्यं शङ्कते—**अन्यथासिद्धेरिति**। रूपं रसव्यापकमिति रससाक्षात्कारे रसे नावश्यक्लृप्तेन जनयितव्ये रूपं नियतपूर्ववर्त्यपि न हेतुः। अवश्यक्लृप्तलघुपूर्ववर्तिसहभावित्वादिति भावः। लिङ्गस्यापि ज्ञानकर्मत्वेन अनुमितिकारणीभूतज्ञानेन सहभावितया अन्यथासिद्धत्वमित्याह तुल्यमिति। नियमो निषेधविशेषणमिति पक्षे दूषणान्तरमाह—**किञ्चेति**। ज्ञायमानकरणकत्वं[5] यस्मिन् अनुभवे नास्तीति निषिध्यते तद्गतमैकजात्यं निषेधाधिकरणंगततया ज्ञातव्यं

१. विशेषणं तदुपलक्षणम्। २. कस्यचिदिदमपव्याख्यानं शाङ्कर्यामपि उट्टिङ्क वर्तते। ३. प्रत्यस्य। ४. जन्यत्वादिति। ५. ज्ञायमाणकरवम्।

**(१०) अथाऽव्यवहितार्थप्रमात्वं तथा, तर्हि किमपेक्ष्य व्यवधानम्, किञ्च तदिति वाच्यम्। इन्द्रियमपेक्ष्य तत्, असन्निकर्षश्च तदिति चेत् तर्हीन्द्रियसन्निकृष्टप्रकाशत्वमिति कुटिलिकाथः। स चानुपपन्नः, स्वविलोचनगोलकानुमानव्याप्तेः।**

---

निषेधज्ञानस्य अधिकरणज्ञानजन्यत्वात्। अत्र विपक्षे दण्डमाह—**अन्यथेति।** व्यक्तिर्न निषेधस्य धर्मिणि अव्यापकत्वात् अत एकोपाधिक्रोडीकृतं रूपं वाच्यं ततः फलितमाह—**साक्षात्कारेति**। नियमस्यान्वयव्यतिरेकावसेयस्य जात्युपाधिविषयत्वात्तदनभिधाने न निस्तारः, तज्ज्ञानेन च तदेव लक्षणमस्तु लाघवादिति नियमपरित्यागे तत्पूर्वं तस्याः प्रत्यक्षव्यक्तेः पूर्वं प्रतीतानां चक्षुरादीनां तत्र करणत्वाभावो दुरवधारणः एकव्यक्तेरेव निषेधाधिकरणतया व्यक्त्यन्तराणां निषेधानधिकरणत्वात् अतोऽव्याप्तिपरिहाराय जात्युपाधौ लक्षणमभिधानीयमिति निगमयति-**तत इति**। तज्जातीये=अनुभवजातीये तज्जातीयव्यभिचारप्रतिसन्धनेऽज्ञानकरणजातीयस्य व्यभिचारप्रतिसन्धाने। एतदुक्तं भवति, भवति ज्ञातकरणजातीयाजन्योऽनुभवजातीयः साक्षात्कारी, अनुभवत्वे सति ज्ञानकरणजन्यत्वात्यन्ताभावाधिकरणत्वं साक्षात्त्वमिति यावत् प्रघट्टकव्याख्यानं विद्यासागरस्य अपव्याख्यानम्।

अस्मिन् अनुभव इत्यनुवादे व्यक्तेरेव निषेधाधिकरणताप्रतीतेः। तस्याश्च अननुगताया लक्ष्यत्वे कुतो जात्यपेक्षा। अतः एवं व्याख्येयं, मूले यत्र पदे लक्ष्यतावच्छेदकावच्छिन्नपरमेव, ऐकरूप्यं यावतां लक्षणानां संग्राहकम 'न्यथा किमादाये"-त्यत्र किं धर्मावच्छेदेनेत्यर्थः। नहि तत्तत् प्रत्यक्षव्यक्त्यवच्छेदकनियमनिरूपणं यावतीषु प्रत्यक्षव्यक्तिषु अस्मादृशामसर्वज्ञानां ज्ञानासम्भवादिति न निस्तारः इति। न च तदपि निरूपितमिति, ततश्च लक्षणं दुर्ज्ञेयमिति। तया यद्धमविच्छेदेन निषेधनियम इति नियमपदं च व्यर्थम्। न च तत्त्यागे व्यक्तिविशेषस्य लक्ष्यतायामनेकार्थतायाश्च प्रत्यक्षपदस्य स्वीकारेऽपि निस्तारः तत्पूर्वप्रतीतानां पदार्थानां करणत्वं दुरवधारणमिति, तथा च ज्ञायमानकरणत्वं स्यादित्यव्याप्तिः। अस्ति हि तेषां तद्व्यक्तौ नियमः पूर्वभावित्रा च न चान्यथासिद्धिः। पञ्चसु तिष्ठत्सु वा मध्ये एकस्यापि अभावात् एतद्व्यक्तेः सामग्र्याः क्वापि क्लृप्तत्वाभावेनावश्यक्लृप्तपूर्ववर्तिन इत्येतस्यापि वक्तुमशक्यत्वादिति। तस्मात् निषेधनियमाप्रवेशेऽपि ज्ञायमानकरणत्वाभावो यदवच्छेदेन प्राप्तः स च न व्यक्तित्वम् उक्त दोषापत्तेरिति अनुगतधर्मो वाच्यो यदवच्छेदेन ज्ञायमानव्यक्तीनां व्यभिचारात् कारणता नास्तीत्याशयेनोपसंहरति। कार्यजातीयं प्रति ज्ञायमानपूर्ववर्तिजातीयस्य व्यभिचार इत्यर्थः।

अष्टमं लक्षणमाशङ्कते—**अथेति**। कुटिलिकार्थः वक्रगत्या पर्यवसितोऽर्थः। **प्रकाशत्वमिति**। प्रकाशत्वे सति प्रमात्वमित्यर्थः। **स्वविलोचनेति**। मदीयं चक्षुः साधिष्ठानमिन्द्रियत्वात् अन्येन्द्रियवदित्येवमनुमाने अतिव्याप्तमित्यर्थः। **इन्द्रिया-**

**(११) ज्ञानाजन्यज्ञायत्वं तदिति चेन्न, सविकल्पकविशेषाव्यापनात् ।**

**एतेन विषयान्तरज्ञानाजन्यत्वं तदिति प्रयुक्तम् । सविकल्पकस्याधिकव्यवच्छेदरूपविषयत्वात् तदवधिज्ञानजन्यत्वात् ।**

---

धिष्ठानत्वादेव इन्द्रियसन्निकृष्टत्वमित्यर्थः । परकीयगोलके प्रत्यक्षमस्त्येवेति स्वपदम् । परेन्द्रियसन्निकृष्टवह्न्याद्यनुमानेऽप्यतिव्याप्तिः यदि च प्रमातृसन्निकृष्टत्वं विवक्षितं तथापि नोद्धारः तस्यापि प्रमातृत्वात् ।

अथ [1]लक्ष्यीभूतप्रमाश्रयपरं प्रमातृपदं तथापि[2] स दोषः तदवस्थः अनुमातुरपि कदाचित् तथात्वात् । अथ तत्कालीनत्वमपि प्रमायां विशेषणं तथा सति लक्ष्यीभूतप्रमाऽव्यवहितप्राक्कालेन्द्रियसन्निकृष्टार्थप्रमात्वमिति पर्यवसितं लक्षणम् । न च लक्ष्यीभूता प्रमा अद्यापि निरूपितेति दिक् ।

नवमं लक्षणमाशङ्कते—[3]ज्ञानाजन्यमिति । **सविकल्पकविशेषेति** । अभावसमवाययोः[4] प्रत्यक्षे इत्यर्थः । सविकल्पकसामान्ये नाव्याप्तिः निर्विकल्पकजन्यस्य तस्य तद्विकल्पाजन्यत्वात् ज्ञानपदस्य सविकल्पकपरत्वादिति भावः[5] ।

दशमं शङ्कमान एव दूषयति—**एतेनेति** । लिङ्गादिजन्यज्ञानं विषयान्तरविषयकमतो न [6]तज्जन्येऽतिव्याप्तिः । न वा निर्विकल्पकजन्ये सविकल्पकेऽव्याप्तिः तस्य सविकल्पकविषयविषयकनिर्विकल्पकजन्यत्वेन विशिष्टाभावत्वादिति भावः । ज्ञायमानलिङ्गादिकरणत्वपक्षेऽपि ज्ञानस्यापि करणत्वं विनिगमना विरहादिति नातिव्याप्तिः । एतेन इत्यस्य सविकल्पकाव्यापकत्वेनेत्यर्थः । उक्तमेव हेतुं स्पष्टयति—**सविकल्पकस्येति** । निर्विकल्पकार्थाद् वस्तुमात्रादधिकमितरेभ्यो व्यावृत्तिरूपं तद्विषयत्वादित्यर्थः । व्यावृत्तिविशिष्टरूपविशेष्यरूपत्वात् नाधिक्यमित्याशङ्कयाह—**तदवधिकज्ञानजन्यत्वदिति** । भेदप्रतियोगिज्ञानजन्यत्वात् इत्यर्थ इत्यपव्याख्यानं विद्यासागरस्य ।

सविकल्पके व्यवच्छेदस्य वैशिष्ट्यस्य स्वरूपेणभानात् तत्र च भेदप्रतियोगिनो ज्ञानानपेक्षणात् ।

एतेन विषयान्तरे यज्ज्ञानाजन्यज्ञानत्वं तदेव प्रत्यक्षम्, लिङ्गादिज्ञानेन विषयान्तरे अनुमित्यादिकं जन्यते निर्विकल्पने तु स्वविषये एवेत्यभिमानः ।

निर्विकल्पकविषयादधिकस्य वैशिष्ट्यस्यापि अतद्व्यावृत्तिरूपस्य सविकल्पके विषयत्वादव्याप्तिरिति मिश्राः । तदसत् । तादृशसमासस्य असाधुत्वात् ।

अत्र ब्रूमः जन्यज्ञानविषयात् व्यवच्छेदात् यद्विषयान्तरविषयकं यद्ज्ञानं

---

१. लक्ष्यीभूत । २. तदापि । ३. ज्ञानजन्यमिति ।
४. अभाव समवायायाः प्रत्यक्षेत्यर्थः । ५ इति व्याप्तिः । ६. इति तज्जन्ये ।

**(१२) स्वविषयानन्तर्गतार्थज्ञानाजन्यधीत्वं तत्। न च सप्रतियोगिकार्थ-प्रत्यक्षाव्याप्तिः, प्रतियोगिनोऽपि विशिष्टार्थप्रविष्टस्य तत्ताया इव प्रत्यभिज्ञायां प्रत्यक्षविषयत्वोपगमाद्, अप्रतियोगित्वेन विशेषणाद्‌ेति चेत्, न, स्वपदेनैव क्षारीकृतत्वात्, कार्यव्यक्तौ अजन्यताया दुरवधारणत्वाच्च। तज्जातीये तज्जातीय-व्यभिचारशस्त्रग्रहे च कार्यैकजात्ये च पूर्ववत्पतनमिति।**

---

निर्विकल्पकं तज्जन्यत्वादव्याप्तिः। तामेव स्फोरयति—सविकल्पकस्य निर्विकल्पक-विषयादधिको व्यवच्छेदो यतो विषयोऽत एव अतोऽधिकस्य निर्विकल्पकाद्भिन्नस्य तस्य ज्ञानजन्यत्वात् निर्विकल्पकजन्यत्वात्। विषयभेदेनैव ज्ञानभेदे सति तस्य वैल-क्षण्यापेक्षायां निर्विकल्पकसिद्धिरितिभावः।

क्वचित्तु [१]तद्वधिज्ञानजन्यत्वादिति पाठः। तदा अवधिज्ञानजन्ये दीर्घप्रत्यक्षे ह्रस्वादिव्यवच्छेदोऽधिकोऽपि भासते इत्यर्थः। तथा च दीर्घादिप्रत्यक्षे ह्रस्वव्यवच्छे-दमवगाहमाने अव्याप्तिः, तस्यावधिज्ञानेन भिन्नविषयेण जननादित्यर्थः। मिश्र-सम्मतोऽयं पाठः। विषयान्तरज्ञानाजन्यत्वमित्यस्य सविकल्पकाव्याप्तिपरिजिहीर्षु-राह—स्वविषयेति। निर्विकल्पकं तु सविकल्पकविषयान्तर्गतार्थकमिति। न च जन्यत्वेऽपि सविकल्पस्य अव्याप्तिः। निर्विकल्पकाव्याप्तिवारणाय जन्यत्वगर्भता। यन्मते लौकिकप्रत्यासत्तिर्नास्ति तन्मतमाह—

**अप्रतियोगित्वेनेति**[२]। स्वपदेन ज्ञानमात्राभिधाने अनुमितावतिव्याप्तिः तद्विशेषाभिधाने चाव्याप्तिरिति दूषयति—**तन्नेति**। **क्षारीकृतत्वादिति**। यथा हि क्षारभूमौ किमपि अङ्कुरं न जायते तथा भूमिस्थानीये लक्षणवाक्ये लक्षणाज्ञा-नाङ्कुरस्य। उत्पत्तिविरोधिस्वपदमित्यर्थः।

अथवा क्षारीकृता[३] दुर्भङ्गीकृता उपेक्षास्पदीकृता कथा पत्यात्यक्ता स्त्री क्षारीकृतेत्युच्य इति तदर्थः। असम्भवमाह—**कार्यव्यक्ताविति**। कार्यकारणभाव-तदभावयोः अन्वयव्यतिरेकभाव तदभावनिश्चयावधार्यत्वात्तयोश्च अनुगतरूप-विषयत्वेन व्यक्तावसम्भवादित्यर्थः। **तज्जातीय** इति। तज्जातीयज्ञानव्यक्ति-मात्रे तज्जातीयव्यक्तिमात्रस्य यो व्यभिचारः तस्य यज्ज्ञानं तदेष च कारणत्वग्रहोऽ-यमुच्यते, तदा लक्षणज्ञानात् प्रागनुगतरूपावगममन्तरेण तज्जातीयत्वमेव दुरव-धारणमिति कार्यैक्यरूपे पतनीयमिति तदेव लक्षणमस्तु आवश्यकत्वात् अलमितरेण इति पूर्वदोषापत्तिः।

वस्तुतस्तु तादृशैकरूपे प्रमाणाभाव इति काव्यं रचयति [४]**शस्त्रग्रहेऽपि इति पात इति।**

---

१. तदवधिर्ज्ञान इति पाठः। २. अप्रतियोगिनेति।
३. दुर्यङ्गीकृत उर्यं क्षारीकृतेच्युतेतर्थर्थः। ४. शास्त्र ग्रहणेऽयीति मुद्रितपुस्तके पाठः।

(१३) स्वकालावच्छिन्नार्थबोधत्वं साक्षात्त्वमित्यपि न, स्वार्थाविवेचनात्। कथञ्च अनुमानादिव्यवच्छेदः ?

तत्र व्याप्त्यादिप्रविष्टकालनियतार्थत्वम्, यत्रापि चन्द्रोदयसमुद्रवृद्ध्यादौ स्वकालार्थत्वं तत्रापि व्याप्तिप्रविष्टतव तादृशत्वस्य प्रयोजिकेति चेन्न, कथमप्यस्तु, तथापि स्वकालावच्छिन्नार्थत्वस्य सम्भवात्। न च यज्जातीयमेवमेवेति विशेषः, साजात्यस्य वैलक्षण्यस्याग्रतः सिद्धौ किमन्येन ? न च तदपीति वक्ष्यते।

व्याप्त्यादिकमन्तरेणेति चेन्न, तस्यैव समर्थत्वेन स्वकालकथावैयर्थ्यात्। यथा च न तदपि, तथा वक्ष्यते।

यत्तु कश्चिदाह—स्वप्रकाशनिषेधात् स्वकालावच्छिन्नार्थप्रकाशत्वासम्भव इति। तदयुक्तम्, वस्तुतो यः स्वकालस्तस्य विवक्षितत्वात्। वर्तमानप्रकाशस्तथेति निरुक्तिपर्यवसानात्। वर्तमानार्थस्य च सर्वनिर्वचनीयत्वात्। तथा चोक्तम्—'सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना।' तस्मादस्मदुक्तमेव युक्तम्।

(१४) षोढासन्निकर्षेतराप्रयुक्तविषयनियमं ज्ञानं तथेति चेन्न, दोषवशजातसाक्षाद् बोधे तदसम्भवात्। प्रमासाक्षात्कारस्तावत् तथेति चेन्न, साक्षात्वेन प्रमेतरयोरविशिष्टतया साक्षात्त्वस्य साधारणस्यैव निर्वक्तव्यत्वात्।

अनिष्टभ्रमबुद्धिमते षोढासन्निकर्षस्य प्रत्येकमिलितविकल्पापत्तेः,

(१५) साक्षाद्धीः स्वरूपधीः=स्वेन रूपेण वस्तुनो भानमिति चेन्न, अनुमानादिव्यापनात्।

अनुमानादौ लिङ्गाद्यपेक्षत्वात् तदवच्छिन्नकालसम्बद्धबोधत्वं न त्वध्यक्ष इति चेन्न, व्यभिचारात्। यत्र लिङ्गादि भाव्यादिबोधकं तत्र तत्कालताव्यभिचारात्।

---

एतेन ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति गङ्गेशस्य निर्वचनं परास्तम्। धारावाहिनि तृतीयादिप्रत्यक्षे चाव्याप्तेः। तत्रापि प्रथमज्ञानस्य द्वितीयज्ञानव्यापारकस्य करणत्वात् सर्वस्यैव ज्ञानस्य ईश्वरज्ञानकरणत्वेनासम्भवाच्चेति दिक्।

एकादशलक्षणमाशङ्कते—**स्वकालेत्यादि**। स्वस्य ज्ञानस्य यः कालः तदवच्छिन्नार्थज्ञानत्वं[1] प्रमात्वमित्यर्थः। स्वाप्रकारकत्वादुपस्थितस्य धूलीपटलस्य व्याप्यत्वादिति केषाञ्चित्[2]......अतिव्याप्तिवारणम्। तदपास्यति—**भूतादीति**। तथाच तादृशानुमायामतिव्याप्तिरित्याशयः कुट्लिङ्गकानुमितिप्रमायामतिव्याप्तिरपि नोद्धृतैवेत्याह—**तथापि चेति**। प्रमाखण्डनग्रन्थे इति उक्तत्वात् इत्यस्य आदिः।

---

१. तदवच्छिन्नार्थं प्रमात्वमिथि पाठः। २. प्रधनीयाम्।

**एतेन यदि न लिङ्गकालावच्छिन्नव्यापकप्रतिभासोऽनुमा तदा कूटव्याप्यानुमितस्य व्यापकस्य देववशात् सत्यव्याप्यव्यक्त्यन्तरवतः प्राप्तौ व्याप्तिकालावच्छिन्नव्यापकप्राप्त्या तावत्यंशे प्रमात्वं प्रमाविशेषान्तर्भावानिर्वाह्यमापद्येतेति निरस्तम्, भूतादिव्यापकानुमाने व्याप्यकालत्वासम्भवात्। तथापि चाग्न्यादिमदंशमात्रे प्रमात्वापातदुष्परिहरत्वस्योक्तत्वात्।**

**(१६) अनुपहितप्रतीतिः साक्षाद्धीरिति चेन्न, विशिष्टप्रविष्टविशेष्यप्रत्यक्षाव्यापनात्। करणानुपहितत्वं विवक्षितमिति चेन्न, परकरणोपहिताव्यापनात्। स्वकरणोपहितत्वस्य च स्वपदकुक्षिनिक्षिप्तत्वात्।**

---

चतुर्दशं प्रत्यक्षलक्षणं शङ्कते—**अनुपहितेति**। अनुमितिस्तु पक्षहेतुसाध्यविषयेति नातिव्याप्तिरित्याशयः। विशिष्टप्रत्यक्षं विशिष्टविषयं, नच तत्रान्यद् उपाधिभूतं भासते इति तदुपेक्ष्य [1]विशिष्टप्रविष्टेत्युक्तम्। यद्यपि विशेष्यप्रत्यक्षाव्यापनादित्येव वक्तुमुचितं तथापि विशेष्यपदस्य धर्मिमात्रपरत्वेन[2] अव्याप्तिः सम्भवति निर्विकल्पकस्य तथात्वादेवेति विशिष्टपदोपादानम्। **करणानुपहितत्वमिति**। अनुमितौ तु लिङ्गात्मककरणोपहितो विषयो नतु प्रत्यक्षम्[3] इन्द्रियात्मककारणोपहितमिति भावः। **परेति**। दण्डीपुरुष इत्यत्राव्याप्तिः दण्डस्य घटकरणत्वात्।

अथ करणपदं ज्ञानकरणपरं तदापि धारावाहिज्ञानकरणत्वाद् दण्डस्य स दोषस्तदवस्थः।

किञ्च परकीयानुमितिकारणीभूतलिङ्गवतः पूर्वं तस्य प्रत्यक्षेऽतिव्याप्तिरित्यर्थः।

पञ्चदशं शङ्कते—**व्याप्तीति**। व्याप्तिसादृश्यसंगत्युपहितत्त्वानां व्यतिरेकाः[4] सन्ति इत्यर्थः। **व्याप्त्यादि प्रत्यक्षेति**। व्याप्योऽयं कस्यचित् सदृशः सङ्केतविषयश्चेति व्याप्त्यादिविशिष्टप्रत्यक्षाव्यापनादित्यर्थः। सर्वप्रत्यक्षाव्यापनाच्च असम्भवमप्याह—**असिद्धत्वाच्चेति**। यत्रैव व्याप्त्यादिसमुच्चयासम्भवः तत्रैव तद्व्यतिरेकसमुच्चयो नच प्रत्यक्षादिव्याप्त्यादिमति तदस्तीत्यसिद्धिरित्यर्थः।

यदि च विषयतासम्बन्धेन व्यतिरेकसमुच्चयो विवक्षितस्तथा च प्रत्यक्षं यद्यपि कस्यचिद् व्याप्यं सादृश्यमभिधेयश्च तथापि न तद्विषयकमतो न दोषः तदाऽनुमित्यादौ अतिव्याप्तिरित्याह—**पर्वत इति**। फलिता[5] द्रुमा इति शब्देन अति-

---

१. विशिष्टविशिष्ट इति द्वितीयपुस्तके। २. विशेष्यपदधर्मिमात्र। ३. प्रत्यक्षे।
४. व्यतिरेका य सतीत्यर्थः। ५. फलित्वा द्रुमा इति शब्दाम्

(१७) **व्याप्त्याद्युपहितत्वादीनां व्यतिरेकस्य यत्र समुच्चयः, सा धीः साक्षाद्धीरिति चेन्न, व्याप्त्यादिप्रत्यक्षाव्यापनात्,** असिद्धत्वाच्च । **पर्वतोऽग्निमानित्येव प्रतिज्ञानात्, शब्देन च स्वाप्रतिपादनात्, शब्दादिमितेश्च प्रत्यक्षत्वापादनात् ।**

(१८) अव्यवहितधीत्वं **साक्षाद्धीत्वमिति चेन्न,** व्यवधानविकल्पानुपपत्तेः । **यदि द्रव्यविशेषान्तरावस्थितिर्व्यवधिः, तदानीमप्रत्यक्षविभुधियां साक्षात्त्वापत्तिः । अथ ज्ञापकज्ञानपूर्वसत्ता** व्यवधानम्, तदा परत्वाद्यप्रत्यक्षतापत्तिरिति । विशिष्ट-

---

व्याप्तिः कथमित्याशङ्क्याह—[1]**शब्देन च स्वाप्रतिपादनादिति ।** यद्यपि सङ्गत्यप्रतिपादनादित्येव वक्तुमुचितं तथापि अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाशक्तिः सङ्गत्यपरपर्याया अतः शब्देन स्वाप्रतिपादने तद्घटितसङ्गतिप्रतिपादनं दूर एवेत्याशयः ।

मिश्रास्तु अनुमित्यादावपि व्याप्त्याद्युपधानमसिद्धमित्यर्थ इत्याहुः ।

षोडशं लक्षणमाशङ्कते—**अथाव्यहितधीत्वमिति ।** अव्यवहितस्यधीः अव्यवहितधीः । **यदीति ।** द्रव्यविशेषस्य मूर्तस्य अन्तरा=ज्ञानकरणज्ञेययोर्मध्ये अवस्थितिः व्यवधिरित्यर्थः इति विद्यासागरस्तन्न । तदा मनसोऽपि व्यवधायकतापत्तिस्तदपि मूर्तमेव । अथमूर्तपदं कठिनपरं तदा तत्कालनिर्मितमित्यादीनामव्यवधायकत्वापत्तिः । तस्माद् विशेषपदेन इन्द्रियसंयोगविरोधी बोध्यः । आत्मज्ञानं प्रत्यक्षमेव, ततश्च तत्र [2]साक्षात्वापादने इष्टापत्तिरिति अप्रत्यक्षत्वेन विभवो विशेषिताः तद्धीरेव वा तेनात्मविषयानुमिति शाब्दयोरपि अतिव्याप्त्यापादनसम्भवात् न न्यूनता । **ज्ञापकज्ञानपूर्वसत्त्वेति ।** ज्ञापकानि अनुमानादीनां जनकानिलिङ्गादीनि तेषां कार्यकारणानाम् अनुमितिलिङ्गादीनां ज्ञानस्य या कार्यतः प्राक्काले सत्ता अवस्थितिः सा व्यवधानं, प्रत्यक्षे तु इन्द्रियाणां ज्ञानजनने ज्ञानप्राक्कालेऽस्ति स्वरूपसत्तानामेव[3] जनकत्वात् । पूर्वपदम् अवश्यापेक्षता सूचनाय ।

यत्तु एतावता ज्ञानाजन्यज्ञानत्वं साक्षात्त्वमित्युक्तमिति मिश्रैरुक्तम् । तन्न । पदार्थो न वाक्यार्थः पुनरुक्तश्च । अतएव ज्ञानाजन्यज्ञानत्वं साक्षात्त्वमित्यपि पूर्वमेव परास्तं तथापि तत्रैव दोषान्तरदित्सया व्यवधानपदार्थं विकल्प्य विशेषतया पुनरुद्भावनमिति विद्यासागरोक्तं हेयम् । कार्यकारणयोरन्तराले अवश्यापेक्षणीयस्य ज्ञानस्य सत्ताव्यवधानं तादृशव्यवहितो योऽर्थो न भवति सोऽव्यवहितः इत्यत्र ज्ञानाजन्यत्वस्य प्रवेशाभावात् । कार्यकारणे अपि ज्ञापकज्ञाप्यत्वरूपेण प्रवेशिते इति न तत्रापि प्रवेशसम्भावनेति ।

---

३. चकाररहितः पाठः । १. अमूर्तं पदं । २. साक्षात्वोपादाने । ३. स्वरूपसत्तामेव ।

**वैशिष्ट्यं व्यवधानमिति चेन्न, धूमविशिष्टे वह्निवैशिष्ट्यमिति स्वरूपस्थितौ तथात्वे कार्यकारणभावविरोधः। प्रतीतौ धूमवैशिष्ट्यस्य धर्मिविशेषणत्वे हेतोरंशतः स्ववृत्तिः। साध्यविशेषणत्वे व्याप्तिग्राहिप्रत्यक्षेऽप्यव्यवधानाभावात् न साक्षात्त्वं स्यात्।**

---

**विशिष्टवैशिष्ट्यं व्यवधानमिति।** यद्यपि ज्ञाप्यज्ञापकयोर्वह्निधूमयोरिमौ व्यवहितौ वह्निधूमस्य व्यवहित इति प्रत्ययो नास्ति तथापीह लक्षणघटकतया तथा विवक्षितमिति यदि ब्रूते तदापि दूषयति। स्वरूपस्थितिः वस्तुगतिरित्यर्थः। **धूमविशिष्टे वह्निवैशिष्ट्यमिति।** यदि वस्तुगतिस्तदा धूमस्य वह्निकारणत्वापत्तिरित्यपव्याख्यानं पूर्वभाविताम‍ात्रेण कारणत्वस्यापादनाशक्तेः, तस्यान्यथासिद्धसाधारणत्वात् स्वरूपपदञ्च लाक्षणिकं स्यात्। तस्मात् स्वेनरूपेण नतु ज्ञायमानत्वरूपेण, तथात्वे प्रथमभावित्वे कार्यकारणत्वविरोधः। धूमस्य वह्निकार्यत्वं न स्यात् उत्तरभाविनियतत्वात् कार्यत्वस्येत्यर्थः। तथा च वह्निधूमव्यवहितत्वस्य उक्तस्याभावात् तदनुमितौ अतिव्याप्तिरितिभावः।

धूमवैशिष्ट्यज्ञानं पर्वतादौ पक्षे चेत्तदा धूमविशिष्टतया ज्ञाते पक्षे यद् वह्निज्ञानं तद् व्यवधानमिति विवक्षायां वह्निज्ञानमेव न स्यात् धूमविशिष्टतया ज्ञाते धूमस्य वृत्तौ आत्माश्रयापत्तेः। धूमस्यावृत्तौ पक्षधर्मताज्ञानाभावात् अनुमित्यनुदयात्।

अथ धूमविशिष्टस्य वह्नेर्धर्मिणि वैशिष्ट्यमित्येवंविधविशिष्टवैशिष्ट्यमेव व्यवधानं तदा [1]व्याप्तिप्रत्यक्षेऽपि अव्यापकमिति[2]। अपव्याख्यानम्। वैशिष्ट्यस्य साध्यविशेषणत्व इति मूलविरोधात्। तस्माद् धूमवैशिष्ट्यस्य वह्नि–विशेषणत्वमेव व्यवधानं तथा च व्याप्तिप्रत्यक्षाव्याप्तिः तत्र धूमवैशिष्ट्यस्य धूमसामानाधिकरण्यात्मनो विशेषत्वेन व्यवहितविषयतापत्तेरित्यर्थः।

यत्तु तत्र साक्षात्त्वं न स्याद् धूमवैशिष्ट्यप्रतीतिरूपव्यवधानादिति विद्यासागरव्याख्यानम्। तदसत्। तथा सति अनुमित्यव्याप्तितादवस्थ्यात्। नहि वह्नौ धूमसामानाधिकरण्यप्रतीतिरूपा अनुमितिः, नवा प्रतीत्यन्तरम् अनुमित्यव्यवहितप्राक्काले तथाविधमस्तीति।

यदि तु विशिष्टे वैशिष्ट्यमित्युपक्रमात् न वैशिष्ट्यमात्रं व्यवधानं तदा मिश्रोक्तमेव ग्राह्यम्। साध्यविशेषणत्व इति तु न विशिष्टवैशिष्ट्यपक्षात्

---

१. व्याप्ति प्रत्यक्षानुव्याप्तिरिति।

२. ईदृशः शाङ्कर्याम्—अथ धूमविशिष्टस्य वह्नेर्धर्मिणि वैशिष्ट्यमिति विशिष्टवैशिष्ट्यं व्यवधानं तदा व्याप्तिप्रत्यक्षेऽपि धूमविशिष्टवह्निज्ञानाद् अव्यवहितधीत्वम् लक्षणमव्यापकम्।

**(१९) अथ ज्ञानस्य जातिभेदः कश्चित्साक्षात्त्वम् । तत्रानुभवत्वेन परापरभावानुपपत्तिः स्मृतेरपि साक्षात्कारित्वादिति केचित् । तन्न, स्मृतेस्तथात्वानभ्युपगमात् ।**

**स्वप्नस्य तावत् स्मृतित्वासिद्धेः, सिद्धौ वा तत्र साक्षात्त्वारोपोपगमात् । भावनाबलजस्य च क्वचिदालोकादिधर्मिकप्रियाद्याश्रयधर्मारोपत्वं शुक्तिरजतभ्रमवत्, निमीलितनयनादेश्च स्वप्नवदेव गतिरवगन्तव्येति ।**

---

पक्षान्तरं किन्तु विशिष्टपदस्य वैशिष्टयाश्रयपरस्य आश्रयो न धर्मी किन्तु साध्यमित्येतत्परमित्यवधेयम् । अव्यवहितपदं यदीन्द्रियसन्निकृष्टपरं लक्षणवाक्ये तदा प्रागुक्तदोष एवेति ।

असन्निकृष्टत्वव्यवधानत्वेनाशङ्कितं सप्तदशं लक्षणं शङ्कते—[१]**साक्षात्त्वं जातिभेद इति** इन्द्रियजन्यतावच्छेदकः अथवा ज्ञानाकरणकज्ञानमात्रवृत्तिरित्यर्थः । **केचिदिति** । तत्रापि ज्ञातृज्ञानांशे साक्षात्त्वं तस्यापि स्वप्रकाशत्वादिति भावः । **तथात्वानभ्युपगमादिति** । साक्षात्त्वजातिवादिना नैयायिकेन ज्ञानाकरणकज्ञानत्वव्यङ्ग्यसाक्षात्वस्य ज्ञानकरणिकायां स्मृतौ अभावनिर्णयेनेतिभावः । तथापि भट्टमते स्वप्नस्य स्मृतित्वात् ज्ञानलक्षणप्रत्यासत्त्यनङ्गीकारेण साक्षात्त्वासम्भवात्, भवतात्तु तत्रापरोक्षत्वाभ्युपगमाद् अनुभवत्वपरिहारेण वर्तमानस्य साक्षात्त्वस्य साङ्कर्यं स्यादेवेत्याशङ्क्याह—[२]**स्मृतित्वासिद्धेः** । अनुभवकारणबाधात् स्मृतिरेव सा दोषादेव विपर्यस्तरूपा, शिरश्छेदस्मृतौ कदाचित् स्वीयत्वमपि विषयीकरोतीति भट्टमतम् ।

ननु तत्र साक्षात्त्वमस्ति इन्द्रियसन्निकृष्टविषयत्वात्[३] रात्रौ मया स्वप्ने जगन्नाथो नीलाचले साक्षात्कृत इति कथमनुव्यवसाय इत्याशङ्क्याह—[४]**साक्षात्त्वारोपोपगमादिति** । साक्षात्त्वं तत्र नास्त्येवेति तु अनुभवत्वपरिहासः ।

यदि च नारोपस्तदा इष्टानिष्ट इत्यनुभवात् चाक्षुषत्वस्पार्शनत्वे अपि स्याताम् । **भावनाबलजस्य चेति** । आलोकादिधर्मी अधिष्ठानं यस्य । प्रियाद्याश्रयधर्मरूपस्य, चक्षुःसंयुक्ता लोकादिधर्मिणि कामुकस्य कामादिदोषात् शुभ्रू सुनासा-इत्यादयोधर्मा आरोप्यन्त इति न[६] स्मृतित्वं किन्तु साक्षात्त्वमेव । का तर्हि गतिः निमीलितनयनस्य देवतां ध्यायतो ध्येयसाक्षात्कारे । मैवम् । तत्रापि साक्षात्कारकारणबाधात् साक्षात्त्वारोप एव अनुभवकारणाभावे जायमाने तस्मिन् अनुभवत्ववत् तद्व्याप्यसाक्षात्त्वमपि नास्ति, परन्तु मनोनिरोधदोष-

---

१. जातिभेदः काश्चत् साक्षात्वमिति । २. संततित्वासिद्धेः । ३. अन्यथतिपूरणीयम् । ४. साक्षात्त्वारोपादिति । ५. आलाकादिधर्मो । ६. इत व स्मृतित्वं ।

**इदन्तु स्यात् - परमाण्वादिबुद्धावनुव्यवस्यमानायां परमाणुप्रतीत्यंशेऽपि**

वशेन मनसा जन्यमानत्वात् स्वप्नवद्भ्रम[1] एवेत्यर्थः ।

अनुभवसाङ्कर्यस्याभावेऽपि परोक्षत्वेन साङ्कर्यात् न साक्षात्त्वं जातिरित्याह- **इदन्तु स्यादिति** । [2]तत्र=परमाणुविषये अनुव्यवसाये ।

परोक्षत्वसाक्षात्त्वसाङ्कर्यमुक्त्वा अनुमानविशेषेऽपि प्रत्यक्षार्थधर्मिकायाम् इत्यादिना साङ्कर्यं वक्ष्यतीति विद्यासागरः ।

वस्तुतः साक्षात्त्वजातौ मानं न प्रत्यक्षमेवेत्याह—**इदन्तु स्यादिति** । तदभावे नानुमानशब्दावपीत्यप्रमाणकं साक्षात्त्वं कथं लक्षणं सम्भवेत् । प्रमाणाभावात् साक्षात्त्वं न जातिरित्युक्त्वा अपरोक्षत्वसाङ्कर्याच्च तस्य न जातित्वमिति वक्ष्यतीति । अन्यथा उदाहरणभेदेन साङ्कर्यदर्शनमनुपयुक्तमेव स्यादिति ।

द्व्यणुकं स्वपरिमाणन्यूनतरपरिमाणारब्धं कार्यद्रव्यत्वात् पटवत् । अनुव्यवस्यमानायामित्यत्र तु [3]अनुव्यवसीयमानायामिति युक्तः पाठः । ( इत्युक्तम्[4] तथासति व्यवसायलाभोपपत्तेः ) व्यवस्यमानायामिति अनुव्यवस्यत्यामिति चायुक्तः पाठः । बुद्धाविति विषयसप्तमी । अनुव्यवसायात्मिकायां परमाणुबुद्धौ इति वार्थः । साधातोर्दिवादिगणपठितस्य रूपमिदमिति मिश्राः ।

पटवदित्यनुमानजा परमाणुबुद्धिः अनुव्यवसीयते, कुतः परमाणवः इति, निर्विषयाया बुद्धेः अनुव्यवसायागोचरत्वात् । तथा च बुद्धिरिव परमाणूनामपि मानसापरोक्षविषयत्वम् । न चैवमनुभवोऽस्ति परमाणूनाम् अयोगिगम्यत्वापातादि त्याशयेन परमाण्वादिबुद्धावित्यादि । ततश्च परमाण्वाद्यंशे अनुव्यवसायस्य परोक्षत्वं ज्ञानांशे च प्रत्यक्षत्वमिति साङ्कर्यमिति साङ्कर्यपरं व्याख्यानम् ।

मम तु योग्यव्यक्तिवृत्तिजातेः प्रत्यक्षत्वनियमात् ज्ञानत्ववत्, स्वांशे[5] साक्षात्त्ववच्च परमाणुसाक्षात्कारोऽयमित्यपि भासेत । नचैवमस्ति[6] तस्मात् योग्यानुपलब्ध्या जात्यभावः प्रतीयते ।

**ननु परमाण्वाद्यंशेऽपि व्यवसायात्मकप्रत्यक्षसामग्रीसत्त्वात् तज्ज्ञानं प्रत्यक्षमेव, लौकिकसन्निकर्षजत्वस्य तद्व्यञ्जकस्य तदंशेऽभावात् न प्रत्यक्ष-**

१. स्वमवद्भ्रमएव । २. मुद्रितपुस्तके अत्रेति पाठः ।

३. षोडन्तकर्मणि इति पाठो 'धातो' दिवादिगणे वर्तते । तत्र 'धात्वादेः' इत्यनेन दन्त्यसकारे व्यवपूर्वकात् सो धातोःकर्मणि प्रत्यये लटि शानचि पकि आत्वे च घुमास्येति ईत्वे व्यवसीयमानपदस्यसिद्धिः । श्यनो अभावेन 'ओतः श्यनी' सूत्रेण ओकारलोपाप्रसक्तेः तादृशरूपासम्भवात् ।

४. इत्युक्तं तथासति व्यवसायलाभापत्तेरिति पाठः । आपाततः पाठ द्वयमावातम् ।

५. सांशे इति पाठः । ६. न चैव सस्मि ।

**साक्षात्त्वमनुभूयत इत्यत्र न नः सम्प्रतिपत्तिः। अन्यथा लिङ्गबुद्धिलक्षणया प्रत्यासत्त्या वह्निरपि मानसप्रत्यक्ष एव, न लैङ्गिक इति परेण सुवचत्वात्। एवं प्रत्यभिज्ञायां पूर्वदेशकालस्थितिमस्य पश्यामीति कस्यानुभवो यद्बलात् तथाऽभ्युपेयम्। तस्मात्प्रतीतिकलहोऽयम्। यदि च साक्षात्त्वं जातिरध्यक्षमानिका, तदा प्रतीतौ कस्याञ्चिदध्यक्षानध्यक्षविवादो न स्यात्। न हि घटादिप्रत्यक्षत्वे विवदन्ते।**

**क्वचिदस्फुटत्वाद्विवाद इति चेत्, मैवम्, निरंशे वस्तुनि कः स्फुटत्वावभासः? यद्येकार्थसमवायिभिर्भूयोभिः सहोपलम्भः, स ज्ञानत्वादिवत् साक्षात्त्वेऽपि तर्हीति**

---

विषयतेति चेन्न। ज्ञानस्य प्रत्यासत्तित्वे अनुमानादिप्रमाणोच्छेदापत्तेर्न सा प्रत्यासत्तिरित्याह—**अन्यथेति**। लिङ्गबुद्धिर्न प्रत्यासत्तिः स्वविषयकबुद्धेरेव तथात्वोपगमात्। तथापि अन्यविषयस्यापि तथात्वं स्यादिति खाण्डनिकाभिप्रायः। यस्मिन् लिङ्ज्ञाने [1]चरमपरामर्शरूपे वह्निरपि व्याप्त्यवच्छेदकतया भासते तत्परमिदम्। आदिपदेन योग्यतासादृश्ययोरपि तादृशयोरेव परिग्रहः।

किञ्च न तस्य ज्ञानमित्येव प्रत्यासत्तिः किन्तु सिद्धे साक्षात्कारित्वे प्रत्यासत्त्यन्तराभावे सति न च परमाणुप्रतीत्यंशे साक्षात्त्वं सिद्धं न च लौकिकसन्निकर्षत्वं साक्षात्त्वव्यञ्जकं भ्रमे रजतांशे साक्षात्त्वस्य विनापि तेन प्रत्ययात्। प्रत्यभिज्ञायामपि परोक्षत्वसाङ्कर्यं मन्यते[2] योग्यानुपलब्धिरित्याह—**एवं प्रत्यभिज्ञायामिति**। तेन विप्रतिपन्नानुभवात् नार्थसिद्धिरित्युपसंहरति **तस्मादिति**।

दूषणान्तरमाह—**यदि चेति**। **कस्याञ्चित् प्रतीताविति**। अभावप्रतीतौ भाट्टनैयायिकानां बाह्यज्ञाने च बाह्यानां साक्षात्त्वासाक्षात्त्ववादो न स्यादित्यर्थः। साकल्येन अर्थग्रहणं स्फुटावभासः साक्षात्त्वजातेरनवयवत्वात् अस्ति चेदवभासः तर्हि स्फुट एव स इत्याह—**निरंश** इति। कः स्फुटावभास इति वक्तव्यम्। स्फुटादपरोऽवभासः स स्फुटावभास इति। कः अस्फुटस्याप्रसिद्धेरिह अस्फुटादन्योऽवभासः स्फुट इति न शक्यते वक्तुमित्यर्थः। एवञ्चेदं स्फुटत्वं निरुच्यते तदा निरंशे वस्तुनि क्वचिदपि स्फुटाभासो न स्यात्तथा च ज्ञानत्वादावपि स[4] वादः स्यादिति भावः।

अथ साकल्येन अर्थग्रहणं न स्फुटावभासः किन्तु ज्ञानत्वानुभवत्वप्रमात्वादयो-भूयांसोऽपरोक्षत्वेन एकार्थसमवायिनो ये तैः धर्मैः सह ग्रहणमेव स्फुटोपलम्भ इति शङ्कते—**यदीति**। स=स्फुटोपलम्भ इत्यर्थः। **ज्ञानादित्ववदिति**। आदिपदेन गुणत्वसत्त्वयोरपि परिग्रहः। स साक्षात्त्वेऽपीत्यर्थेऽन्वयः। साक्षात्त्वे स्फुटमवभास-

---

१. यस्मिन् लिङ्गज्ञाने च परामर्शरूपे इति प्रथमपुस्तके पाठः।
२. यन्मते इति। ३. किञ्चेति। ४. संवादः स्यात् इति।

**ज्ञानादित्वे न विवादः, साक्षात्वे त्विति विशेषो वाच्यः। दर्शनकृतो हि विवादो न मात्सर्येण वाङ्मात्रेण वा, किन्तु तत्त्वाभिमानादेव। प्रत्यक्षार्थधर्मिकायां चानुमायां साक्षात्त्वपरोक्षत्वसङ्करो दुर्वारः।**

**परोक्षत्वं न जातिः, किन्तु साक्षात्वमेव तथा केवलं तु साक्षात्त्वाभावः परोक्षत्वमिति चेन्न, अस्यार्थस्याऽविनिगन्तव्यत्वापत्तेः। सर्वज्ञमनुमन्यमानस्य च मते दृष्टलिङ्गादेरीश्वरस्य लिङ्गचादिबुद्धावपरोक्षत्वेनापि विरोधः।**

---

मानेऽपि मात्सर्यादेव परोक्षेण भवितव्यमिति मात्सर्यनिमित्तोऽयं विवाद इत्याशङ्क्याह—**दर्शनकृतो हीति**। न मात्सर्यं, यद् वाङ्मात्रमर्थशून्यवाक्यं परपक्षो न शुद्ध इत्येव वाक्यं, तस्मात् न यतो दर्शनकृतो हि ते कथमन्तरमाहुरत आह—'किन्तु तत्त्वाभिमानादेव'। अस्ति हि स्वस्वयुक्त्या सर्वेषां मतमेव तत्त्वमित्यभिमानः। विरुद्धं कथमेकं तत्त्वं स्यादित्याशङ्क्याह—**अभिमानादिति**। अभिमानात् मन्मतमेव सम्यगपरस्य तु नेत्याकारात् नतु बाह्यं किमपि वस्तुतत्त्वमस्तीतिभावः।

**प्रत्यक्षार्थधर्मिकायामिति**। पर्वतोऽयं वह्निमान् इत्येमाकारायामित्यर्थः। इयमनुमा परोक्षेति तवापि सम्मतम्। परन्तु पर्वतांशेऽपि सा अनुमितिरेव पर्वतचक्षुःसंयोगस्तु विद्यमानोऽपि न प्रत्यक्षाय अलमनुमितिसामग्रचा ईदृश्याः बलवत्त्वादिति तव मतम्। तत्तु न युक्तम्। बलवत्त्वं हि प्रतिबन्धकत्त्वं तच्च फलाभावनिर्णये शक्यनिर्णयम्। न चेह प्रत्यक्षाभावः शक्यो निर्णेतुम्। नच तथापि संशय इति वाच्यम्। उभयसामग्रचोः [1]समावेशादेव विलक्षणकार्योत्पत्तिसम्भवे अनुमितिविशेषसामग्रचभावस्य प्रत्यक्षकारणत्वकल्पनायां गौरवात्। एवं तर्हि साक्षात्त्वानुमितित्वयोः[2] साङ्कर्यात् न जातित्त्वं स्यादिति चेत् किमयं मन्त्रपाठः पर्वतो वह्निमान् इति धियं प्रतिबध्नाति पर्वतज्ञानं वा, तत्साक्षात्कारं वा। आद्यद्वयं तवाप्यसम्मतम्। तृतीये प्रतिबन्धस्तु अयमिति प्रतिभासविरूद्धः, नहि इदन्ता परोक्षमात्रस्य विषयः।

किञ्च तादृशज्ञानोत्तरमयमित्यपिलापोऽपि न स्यादिदयोऽपरोक्षबुद्धिस्थवाचित्वादिति। ननु भावभूतयोः धर्मयोः परस्परव्यभिचारिणोरेकत्रावस्थानमेव[3] साङ्कर्यं तच्च परोक्षत्वस्याजातित्वेऽपि स्यादित्याशङ्क्याह—**केवलं साक्षात्त्वाभाव इति**। साक्षात्वाभाव एव परोक्षत्वमित्यर्थः। परोक्षत्वेन निश्चिते साक्षात्त्वाश्रयत्वेन, जातिसाङ्कर्यम् आपाद्य असाक्षात्त्वेन निश्चितायां परोक्षत्वजात्यां साङ्कर्यमाह—**सर्वज्ञं मन्यमानस्य चेति**।

**दृष्टलिङ्गादेवेति**। दृष्टं लिङ्गादि येन, आदिपदेन आगमादयो गृह्यन्ते।

---

१. समाजादेव। २. नुमितिद्वयोः। ३. एकएवेस्थानमेव।

**लिङ्गादिधीजन्यत्वमनुमितित्वादौ प्रयोजकमिति चेत्, साक्षात्वेऽपि तर्हीन्द्रियसन्निकर्षादिजत्वमिति साक्षादपि सा न स्यात्। व्यञ्जकोपाधिनियता च जातिरिष्यते। न च तदत्र, उक्तप्रकारबाधात्।**

अयं भावः—ईस्वरस्य व्याप्यज्ञानं परामर्शात्मकम् अपरोक्षरूपं सर्वदाऽस्त्वेव, ततश्च ततो वह्न्याद्यनुमितिरपिजायेतैव परामर्शस्य तच्चरमकारणात्वाभ्युपगमात्। नचेश्वरज्ञानं शरीरमनःसंयोगादिसापेक्षम् ईश्वरज्ञानत्वादेव। तथाच वह्निपरोक्षे तदीये [1]वह्न्यपरोक्षे वह्न्यनुमित्यात्मके परोक्षत्वमस्तीति तत्र-साक्षात्त्वस्य साङ्कर्यम्।

यद्वा तदीयवह्न्यपरोक्षं वह्न्यनुमितित्वाश्रयः वह्न्यनुमितिकारणत्वेन अन्यत्र क्लृप्तेन परामर्शेन सामानाधिकरणत्वात्। नच परामर्शसमानाधिकरणत्वं वह्न्यनुमितित्वे प्रयोजकं न तु वह्निप्रत्यक्षस्य वह्न्यनुमितित्वे प्रयोजकं तथाच वह्न्यपरोक्षं वह्न्यनुमितिश्चेति ज्ञानद्वयमेवास्ति इति न साङ्कर्यमिति वाच्यम्। एकस्मिन् युगपदेकजातीयविशेषगुणद्वयसमवायविरोधात्। नचानुमितिप्रत्यक्षयोर्भिन्नजातीयत्वादेव [2]विरोध इति वाच्यम्। तथापि [3]ज्ञानत्वव्याप्यजात्या सजातीयत्वसत्त्वात्। पूर्वव्याख्याने लिङ्गादिधीजन्यत्वमित्यनेनापि दोषानुद्धारापत्तिरिति[4]। **लिङ्गादिधीजन्यत्वमिति**। ननु परामर्शादिसामानाधिकरण्यं तथा सत्येकस्या एव धियः प्रमाचतुष्टयरूपतापत्तौ सर्वतान्त्रिकसम्प्रदायविरोधापत्तेः नच स न्याय्यः। यदाहुः भट्टचरणाः—

"सिद्धानुगममात्रं हि कर्तुं··· परीक्षकैः" इति। ननु तथापि योगिज्ञाने परामर्शे जन्यत्वमपि स्यात्। न च पक्षताजन्यत्वमपि प्रयोजकम्। नच पक्षताऽस्ति योगिप्रत्यक्षे सर्वविषयस्य सत्त्वात् इति वाच्यम्। पक्षतायाः कारणतायाः दूषयिस्यमाणत्वात् इति चेदत्र ब्रूमः। योगिप्रत्यक्षे परामर्शस्य कारणत्वे मानाभावः। यदि परमनुमितिरपि स्यात् कारणसत्त्वादित्युच्यते तदा न क्षतिः तावतापि साङ्कर्यभावात्।

नच गुणत्वव्याप्यजात्या सजातीयम् एकत्रात्मनि। 'न युगपद् गुणद्वयमि'ति व्याप्तेः योगिज्ञानमेकमेव नानाजातीयमिति साङ्कर्यापत्तिरिति वाच्यम्। तावतापि खाण्डनिकस्येष्टसिद्धेः[5]। "**इन्द्रियसन्निकर्षादिजत्वम्**"। आदिपदेन इन्द्रियजत्वेन इन्द्रियजन्यत्वं विषयत्वेन अर्थजन्यत्वं च परिगृहीते। तथा च मास्तु तत्र साङ्कर्यं पूर्वोक्तं तु वर्तते तथा तवापसिद्धान्तश्च। ईश्वरस्य सर्वविषय-

---

१. वह्न्यपरोक्षे। २. भिन्नजातीयत्वादेवाविरोधः। ३. अस्फुटाक्षराणि।

४. अक्षराणि लिप्तानीति न सुवाच्यानि। ५. खाण्डनिके स्येष्वसिद्धेः।

**न च व्यञ्जकनियमानभ्युपगत्या न तदत्रोपगम्यमिति वाच्यम्, 'किं मया दृष्टं तथा किं वा केनचित्कथितमि'ति संशयानुपपत्तेः। प्राग्भूतायां स्मर्यमाणायां तद्बुद्धौ त्वन्मते मनसा ज्ञानरूपया प्रत्यासत्त्या प्रत्यक्षीक्रियमाणायां साक्षात्त्वाग्रहो विना व्यञ्जकाभावं कथं स्यात्। अर्थधर्मश्च साक्षात्त्वमिति स्वप्रकाशवादे निरस्तम्।**

**तथापि अबाधितसाक्षात्त्वबुद्धिव्यवहारबलादन्ततः पदार्थान्तरमपि साक्षात्त्वमननुमत्य न निस्तारोऽस्ति, भ्रान्तेरप्यभ्रान्तिपूर्वकत्वादिति चेन्न, तस्यापि साक्षाद्ग्रहे क्वचिदपि तद्विवादो न स्यादित्यादिदोषसाम्यात्। अनुमानादिवेद्यत्वे**

---

प्रत्यक्षाभावे वेद प्रामाण्यानुपपत्तिश्चेति। यदि च जन्यज्ञानवृत्तिप्रत्यक्षत्वे इन्द्रियजन्यत्वं प्रयोजकमित्युच्यते तदा जन्यत्वानुमित्यादौ परामर्शादिजन्यत्वं प्रयोजकं न तु नित्यानुमित्यादौ तथापि ईश्वरस्य तथानुमितौ किं प्रमाणमिति चेत् परामर्शनियतज्ञानत्वमेव। नच तान्त्रिकसम्प्रदायोल्लंघनं, तस्य त्वयाऽपि कृतत्वात्। नहि [1]मनः संयोगाजन्ये ज्ञानकरणाजन्ये वा ज्ञानत्वमिन्द्रियाजन्ये वा प्रत्यक्षत्वं केनापि तान्त्रिकेण स्वीकृतमिति मूकीभवेति। न केवलं साङ्कर्यमात्रात् न साक्षात्त्वं जातिः किन्तु जातिस्वभावनिरूपणेनापि तस्य जातित्वाभावो निरूप्यते इत्याशयवान् आह—

**व्यञ्जकोपाधिनियताचेति।** **तदिति।** व्यञ्जकमित्यर्थः। **उक्तप्रकारेति।** सविशेषार्थप्रकाशत्वादीनां कथितानां बाधात् निरासादित्यर्थः। **किमिति।** दृष्टेऽर्थे मया दृष्टं तद् उत केनचित् कथितमिति संशयः कदाचिज्जायते व्यञ्जकाग्रहणनिबन्धनः स न स्यात् व्यतिरिक्तसाक्षात्वव्यञ्जकस्य अनङ्गीकारे। तदुपपादयति—**प्रागिति।** प्राग्भूता पूर्वोत्पन्ना बुद्धिः यदा स्मर्यते तदा तद्विषयकस्य स्मृतिज्ञानस्य मनःसंयुक्तात्मनि समवायात् स्मृतिरूपैव प्रत्यासत्तिः तस्या बुद्धेर्मनसा सह त्वन्मते तथा प्रत्यासत्त्या पूर्वोत्पन्नायां बुद्धौ प्रत्यक्षीक्रियमाणायां साक्षात्त्वाग्रहो व्यञ्जकाभावं विना कथं स्यात्। यदि व्यञ्जकं स्वीक्रियते तदा तदग्रहात् तत्संशयः सम्भवति असति तु व्यञ्जकस्वीकारे तद्व्यक्तिसाक्षात्कारदशायां तद्वृत्ति साक्षात्त्वमपि निश्चिनुयादिति संशयानुपपत्तिरित्यर्थः।

ननु साक्षात्त्वं न ज्ञानधर्म इति क्व साङ्कर्यं किन्तु मेयधर्मः तद्विषयकतया ज्ञानस्य साक्षात्त्वव्यपदेश इत्याशङ्क्याह—**अर्थधर्म इति।** साक्षात्त्वं ज्ञानवृत्तिपदार्थान्तरमिति।

अष्टादशं लक्षणं शङ्कते—**पदार्थान्तरमिति क्वचेति।** अनिर्णीताश्रयत्वादित्याशयः।

---

१. मनः संयोगेजन्ये।

**च लिङ्गाद्यनुपपत्तेः, क्व च व्याप्त्यादिग्रह इत्यादिदुरुत्तरपरम्परैव स्यात्। सप्त-पदार्थीनियमसाधनानि च न कथं परिपन्थीनि स्युरिति।**

**(२०) लिङ्गादिजत्वाभावसमुदायवती धीः साक्षादिति चेन्न, परोक्षविषय-संशयादावतिव्याप्तेः। ईदृशी प्रमा तथेति चेन्न प्रत्यक्षभ्रमाव्याप्तेः।**

---

यद्वा क्वचिद् गृहीते हि साक्षात्त्वे व्याप्त्यादिग्रहो न तु अगृहीते तत्राप्यनु-मानेन ग्रहे तत्राप्यनुयोग इति दुरुत्तरपरम्परा = अनवसानपरम्परैव स्यादित्यर्थः।

**सप्तपदार्थीनियमसाधनानीति।** [1]सप्तपदार्थीनियमगोचराणि प्रमाणानि परिशेषानुमानानि। तथाहि साक्षात्त्वस्य न द्रव्यादित्रिकेऽन्तर्भावः गुणवृत्तित्वात्। नापि सामान्यादित्रिके सामान्ये दोषस्य[2] उक्तत्वात्। न विशेषे आत्मगुणेऽपिवृत्तेः। नापि समवाये सम्बन्धिशून्यत्वात् नाप्यभावे प्रतियोग्यनिरूप्यत्वात्। नच पदार्थ-साधकानि इतोऽपराणि सन्तीत्यपदार्थ एव स स्यात्। पदार्थत्वस्य सप्तविभाजको-पाधिव्याप्यत्वादिति।

नन्वेवं वैशेषिकमतम् अस्माकं नैयायिकानां नायं नियम इति चेत्, स्यादेवं यदि प्रमाणं तत्र किञ्चित् शक्यनिर्वचनं स्यात् यदि चाद्वैतश्रुतिविरोधो न स्यादिति।

ऊनविंशं लक्षणं शङ्कते—**लिङ्गादिजत्वाभावेति।** समुदायपदं लिङ्गादि-जत्वान्योन्याभावमादाय अनुमादावतिव्याप्तिवारणाय। **परोक्षविषयसंशया-दाविति।** परमाणुर्जगत्कारणं प्रधानं वेति परोक्षसंशयः, प्रधानमेव कारणमिति परोक्षभ्रान्तिः सा मातेति स्मृतिः एतासु अतिव्याप्तिरित्यर्थः। अपरोक्षे इष्टापत्ति-माशङ्क्य परोक्षपदमिति क्रमेण विद्यासागरशङ्करमिश्रयोरपव्याख्यानम्। संशयस्य साक्षात्त्वे कुत्रान्तर्भावः स्यात् नहि परोक्षे लिङ्गादिजन्यत्वाभावात्।

यद्वा अपरोक्षे इष्टापत्तिरिति। तदसत् परोक्षेपीष्टापत्तेः। तस्मात् परोक्ष इति न विषयविशेषणं संशयस्यादिः। **संशयादिरिति।** संशयकारणत्वेन अवश्यं स्वीकार्यायां स्मृतौ। नच सा मानसप्रत्यक्षरूपा, संस्काराख्यप्रत्यासत्ति-जन्या त्वया तथाऽनङ्गीकारात् अतः परोक्षे स्मरणे अतिव्याप्तिरित्यर्थः।

'ग्रन्थग्रन्थिरिहक्वचित् क्वचिदपि न्यासिप्रयत्नात् मया' इत्येवं वक्ष्यमाणत्वात् स्मरणे परोक्षे इत्यनुक्तिः।

---

१. सप्तमपदार्था नियमगोचराणि प्रमाणानि परिशेषान्मानानि। २. सामान्यादीनां नित्यत्वात् अनित्यस्यास्य नान्तर्भावः कर्तुं शक्यते इति भावः। कारणान्तरमप्याह विशेष इति। ३. समानेति। ४. इतिपूरणीयम्। ५. अस्मिन्नेव ग्रन्थे लिखिता अन्तिमश्लोकात् पूर्ववर्तिश्लोकस्यांशः।

**(२१) अनुमानादिव्यवच्छेद्यतत्तदसाधारणाजनिता धीः साक्षादिति चेन्न, एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धीरनुमानादिरिति वैपरीत्यमेव कुतो न**

---

विषयपदं स्तक्चन्दनादिपरं[1] परोक्षरूपो यो विषयोऽतिव्याप्तेरिति वाऽर्थः। एवमतिव्याप्तिं परिहरतोऽव्याप्तिमाह[2]—**न प्रत्यक्षभ्रमाव्याप्तेरिति**। प्रमाऽप्रमा साधारणस्यैव साक्षात्त्वस्य लक्ष्यमाणत्वमिति[3] प्रागावेदितत्वात्, तस्याऽलक्ष्यत्वे परोक्षाऽपरोक्षभिन्नज्ञानापत्तिरिति भावः।

अव्याप्त्यतिव्याप्तिशून्यम् अपरं लक्षणं शङ्कते—**अनुमानादीति**। अनुमानादीनि च तानि व्यवच्छेद्यानि इति कर्मधारय इति विद्यासागरमिश्रौ।

वस्तुतस्तु अनुमानादीनि व्यवच्छेद्यानि प्रत्यक्षतो विलक्षणतया व्यवस्थाप्यानि यैः असाधारणकारणैः परामर्शादिभिरित्यर्थः। अन्यथा व्यवच्छेद्यपदस्य पूर्वनिपातापत्तिः वैयर्थ्यञ्च। व्यवच्छेद्यासाधारणकारणाजन्या धीरिति तु वाक्यार्थः। अनुमानादिपदन्तु स्वरूपकथनमात्रम्।

यद्वा व्यवच्छेद्यत्वं प्रत्यक्षेऽपीत्यसम्भववारणाय अनुमानादिपदं विशेषणमेव। इदञ्च लक्षणमीश्वरप्रत्यक्षस्याप्यस्तीत्यवधेयम्। **एवं तर्हीति**।[4] अनुमानाद्यप्यशक्यनिर्वचनं प्रकारान्तरेणेति तदपि प्रत्यक्षादिकारणाजन्यत्वेन निर्वाच्यमित्यन्योन्याश्रय इति मिश्रस्य अपव्याख्यानं वैपरीत्यमेव कुतो न स्यादिति मूलविरोधात्। तेन किं किमधीननिरूपणमिति निश्चेतुमशक्यम् इत्यशक्यनिश्चयत्वमेव लक्षणस्योक्तमिति प्रतिभाति। तस्मात् अनिश्चयत्वं लक्षणस्येत्येव ग्रन्थार्थः।

यद्यपि निरुक्तलक्षणं न धीभिन्नत्वरूपं किन्तु साधारणकारणाजन्यधीत्वमित्येवमिति वैलक्षण्यात् न वैपरीत्यापादनं सम्भवति। इह हि प्रत्यक्षं च तानि तानि चापराणि उपमिति शाब्दीस्मरणादीनि तेभ्योऽतिरिक्ताधीरनुमानं तथा प्रत्यक्षानुमानशाब्दीस्मरणभिन्नम्[5] उपमानमित्येव किं न स्यादित्युक्तमिति प्रतीयते तथापि प्रत्यक्षपदमिहेन्द्रियपरं तथाचेन्द्रियात् सादृश्यात् पदात् संस्काराच्च यो व्यतिरिक्तः तत्तदीयभिन्नाधीरित्येवार्थः। प्रत्यक्षं तत्र परेभ्यो व्यतिरिक्तो यस्याः इति धीविशेषणं षष्ठ्यर्थस्तु जनकत्वमिति न समासानुपपत्तिः प्रत्यक्षसिद्धौ तद्व्यतिरिक्तानुमानादिसिद्धिः, तत् सिद्धौ च तद्व्यावृत्तप्रत्यक्षसिद्धिरित्यन्योन्याश्रयोऽपि दोषो लक्षणे बोध्यः।

---

१. पदं। २. अतिव्याप्तिमाह। ३. लक्षणत्वमिति। ४. एवं हीति पाठान्तरम्।
५. स्मरणभिन्नोपमानम्।

स्यादित्यविनिगम्यत्वं स्यात्। तेषु व्यवच्छेद्येषु एकद्वयादिपरिहाय व्यवच्छेद्यहेत्व-जनितत्वेनापि साक्षात्त्ववत्तत्र तत्रानुगतबुद्धयाद्यन्तरापत्तेः। व्यवहारे सति निमि-त्तानुसरणम् न तु निमित्तानुसरणेन व्यवहार इति चेन्न, निमित्तस्य अनत्यापत्ति-द्वारस्यैव कल्प्यत्वात्।

तत्तज्जनितत्वाभावो हि तेनैव रूपेण अनुगतव्यवहारप्रत्ययावादध्यात्, न त्वन्येनापि। तथात्वे यावत्परिदृष्टव्यक्तिविशेषान्यत्वेन व्यवहारोपपत्तौ गोत्वाद्यु-च्छेदप्रसङ्गः। तस्मात्—

---

दोषान्तरमाह—तेषु व्यवच्छेद्येषु इति। एकं द्वयं त्रयं चापि परित्यज्ये-त्यर्थः। इन्द्रियाजन्यत्वेन अनुगतेन, अनुमादिषु लिङ्गसादृश्याजन्यत्वेन प्रत्यक्षशब्दयोः शब्दसादृश्यसंस्काराजन्यत्वेन प्रत्यक्षानुमयोः लिङ्गसादृश्याजन्यत्वेन, प्रत्यक्षस्मरणयो-रनुगतबुद्धिव्यपदेशौ स्यातां लिङ्गाद्यजन्यत्वेन घटप्रत्यक्षादौ प्रत्यक्षबुद्धिव्यवहार-वदिति प्रघट्टकार्थः।

ननु निमित्तं नैमित्तिकानुसारि न तु नैमित्तिकं निमित्तानुसारि घटादौ व्यभिचारदर्शनादिति शङ्कते—व्यवहारे सतीति। यत्र नैमित्तिकं दृष्ट्वा निमित्तं कल्प्यते तत्रास्त्वेवं नत्वन्यत्र अन्यथा दर्शनमात्रशरणतया विचाराभाव-प्रसङ्गादिति परिहरति—नेति। अत्यापत्तिः=अतिप्रसक्तिः तस्या द्वारं[1] मुखं यन्न भवति=अतिप्रसङ्गापादकं यन्न भवति तदेव कल्प्यमित्यर्थः।

ननु तत्तद्हेतुत्वजनितत्वमनुगतत्वात् तथा व्यवहारं जनयेदेवेति चेत्। सत्यम्। येन रूपेण अभावात्मना अनुगतं तेन रूपेण जनयेत् नतु विधिरूपेण, साक्षात्त्वप्रत्ययव्यवहारौ विधिरूपौ प्रतियोगिधियं विनाऽपि जायमानौ कथं जन-येदित्याशयेन—अन्येनापीति। रूपेणेत्यनुषज्यते। अन्येन विधिरूपेणापीत्यर्थः। नाशावसानप्रत्ययव्यवहारयोः प्रतियोगिधीनिरपेक्षयोः अभावविषयत्ववदिहा-पि स्यादित्याशङ्क्याह—तथात्वे इति। विधिमुखेनापि साक्षात्त्वप्रत्ययव्यवहारा-द्यापकत्वे इत्यर्थः। परिदृष्टव्यक्तिविशेषान्यत्वेनेति। परिदृष्टाः ये व्यक्तिविशेषाः खरतुरगमहिषादयः तदन्यत्वमेव गोत्वमस्तु इत्याशयः। यावतां तेषाम् अनुगत-रूपस्य जात्यात्मनोऽपलापेन[3] ज्ञातुमशक्यत्वेऽपि कतिपयानां सुज्ञानत्वादिति भावः। तेन अगोऽपोहो गवाज्ञाने अगौरज्ञानात् अशक्यग्रह इत्यपास्तम्। अगोत्वेन अज्ञा-नेऽपि तत्तद्विशेषरूपेण ज्ञानात्।

अथ परिदृष्टेभ्यः[4] किञ्चिद् विशेषेभ्योऽन्यत्वं गवीव घटेऽप्यस्ति घटोऽपि दृष्टविशेषः तत्कथं तदन्यत्वं तत्रेति चेत्। तुल्यमिदम् गौरपि। परिदृष्टविशेष

---

१. दुर्विमुखम्पन्य भवति। २. येन रूपेणभावात्मना। ३. पलायेन ज्ञातुमशक्य-त्वेऽपि कतिपयानः स्वज्ञानत्वात्। ४. परिदृष्टया कश्चिदंशः त्रुटितः।

**विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थनः ।**
**नैवं चेदपराद्धं ते किमन्यापोहवादिना ।। ४० ।।**

(२२) **शब्दानुमानोपमानजप्रमितिव्यतिरिक्तत्वे सति प्रमितित्वं प्रत्यक्षलक्षणमभिधाय यः कोऽपि न त्रपत्ते, स प्रष्टव्यः - किं प्रत्येकमिदं लक्षणम् ? उत मिलितम् ? नाद्यः प्रत्येकं व्यभिचारात् । द्वितीये किं मिलितानां निषेधः उत निषेधानां मिलितत्वम् ? नाद्यः, प्रत्येकमेव व्यभिचारात् । न हि प्रत्येकमनुमि-**

---

एवेति कथं तदभावस्तत्रेति चेन्न। अस्ति गवि गौरितिबुद्धिः सा खराद्यन्यत्वं विषयीकरोति तत्र यावत् खराद्यन्यत्वं ज्ञातुमशक्यमिति परिदृष्टेति वदति। परिदृष्टानां च यावतामन्यत्वं विवक्षितमतो घटो न गौः······।

परिदृष्टविशेषश्च यद्यपि स तथापि तत्र तदन्यत्वं बाधितं तदन्यपरिदृष्टभेदोऽबाधितो विषय इत्यर्थः । तस्माद् यथा तत्राज्ञातखरादेरपि गोप्रत्ययादतिरिक्तसिद्धितया ज्ञातलिङ्गादेरपि साक्षात् प्रत्ययात् सिद्धिरित्याशयः। यस्माद् विधिमुखप्रत्ययोऽन्यव्यावृत्त्या न शक्यः कर्तुं साहि अभावव्यवहारस्यैव हेतुः।

तस्मादित्युत्तरश्लोकापेक्षितं पूरयति। विधिजः भावजः प्रत्ययः अन्योन्या = न्यावृत्तिगोचरात् प्रत्ययात् अन्यः । हेतुमाह—**व्यतिरेकेति**। न विद्यते व्यतिरेकेण समर्थनं यस्य स तथा, अन्यव्यक्तिविषयत्वेन न शक्यते समर्थयितमुपपादयितुमित्यर्थः। **किमन्यापोहवादिनेति**। ततश्च सिद्धश्च गौरगोभ्योऽन्यः गोनिषेधात्मकश्च सः।

तत्र गौरेव वक्तव्यो[2]नायं गौः प्रतिषिध्यत ।।१।।

गव्यसिद्धेऽप्यगौर्नास्ति तदभावे तु गौः कुतः। इत्येवं पादैः कथित इतरेतराश्रयः तवाऽपि स्यादित्यर्थः।

एकविंशं लक्षणमाह–**शब्देत्यादि**। प्रागुक्तपरस्पराश्रयः प्रत्येकमिलितविकल्पदोषाज्ञानं व्यतिरेकप्रत्ययस्य विधित्वाभिमानो वा लज्जाकारणं प्राप्तं तथापि चेत् निर्लज्जः कोऽपि विलक्षणं वक्तीत्यर्थः। **प्रत्येकमिति**। शब्दजप्रतीतिव्यतिरिक्तप्रमितित्वम् अनुमानजप्रतीतिव्यतिरिक्तप्रमितित्वमित्येवम् । नचात्र प्रतीतिपदं व्यर्थं शब्दजप्रतीतित्वेन शाब्दत्वजातेः, [3]एवमन्यत्रापि अनुमितित्वोपमितित्वयोश्च विवक्षितत्वात्। **व्यभिचारादिति**। अतिव्याप्तेरित्यर्थः। मिलितानां निषेध इति।

यद्यपि एवं मिलितं लक्षणं न स्यादिति मिलितपक्षानुपपत्तिः तथापि [4]शब्दजत्वादित्रिकं साक्षान्मितं परम्परया वेति विकल्पनीयमिति भावः। **नहि प्रत्येक-**

---

१. ततश्च सिद्धश्चागौरयोर्ह्येत् । २. वक्तव्यो न तापः । ३. एकमत्रापि ।
४. शब्दक्तत्वादि ।

**त्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः मिलितास्वनुमित्यादिषु निषेधमेलकसम्भवेऽपि प्रत्यक्षत्वानभ्युपगमात्। न बह्वाश्रयाणामुक्तनिषेधानां लक्षणत्वम्, अपि त्वेकाश्रयाणामिति चेन्न, समुदायिभेदेऽपि समुदायस्यानुमित्यादिवद् एकतोपचारबीजाविशेषाभ्युपगम इति हि वक्ष्यते।**

**असमुदायत्वे सतीत्यपि विवक्षितमिति चेन्न, समुदायत्वविशिष्ट एवांशतः स्वात्मनि वृत्तिविरोधभयेन असमुदायत्वस्यैष्टव्यत्वेन तादृशि प्रसङ्गो दुर्वारः। ज्ञानस्यैवं विवक्षितमिति चेन्न. विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव।**

---

**मिति**। प्रत्येकं स्वप्रतियोगिकाभावो[1]मिलितप्रतियोगिकभेदभावात् अन्यथा प्रत्येकं मिलितात्मकं स्यादित्यर्थः। **मिलितासु अनुमित्यादिष्विति**। नहि मिलिता अनुमित्यादयः प्रत्येकात्मकाः अपि तु प्रत्येकरूपाः, अनुमितित्वादेः प्रत्येकविश्रान्तत्वेन मिलितास्वभावेन प्रत्येकं तत्तद्धर्मावच्छिन्नप्रतियोगिताकस्याभावः, एवं मिलिते अस्त्येवेति मिलितास्वतिव्याप्तिरित्यर्थः। एकत्वे सति अभावसमुदायवती प्रमेति विवक्षितत्वात्।

**एकाश्रयाणामिति**। अत्रापि समुदायस्यैकत्वादेकाश्रितत्वानपाय इत्याशयेन दूषयति—**समुदायि भेदेऽपीति**। समुदायिनामनुमितिज्ञानशब्दज्ञानादीनां नानात्वेऽपीत्यर्थः।

ननु समुदायो नैकत्वाश्रयः अद्रव्यत्वादिति चेत्। प्रत्यक्षमपि नैकं गुणात्वादित्यसम्भवि प्रत्यक्षलक्षणं स्यात्। द्व्यादिसंख्यावैधुर्यात् तत्रैकत्वोपचार इत्येव चेत् तुल्यं समुदायेऽपीत्याह—**एकतोपचार**[2] इति। समुदायः = समुदायत्वविशिष्ट इत्येकोऽर्थः। सच समुदायत्वविशिष्टो न भवति आत्माश्रयापत्तेरिति तद्भिन्नत्वसत्त्वादतिव्याप्तितादवस्थ्यमित्याह—**न समुदायत्वविशिष्ट एवेति**। सप्तम्यन्तमिदम्। **ज्ञानस्यैवमिति**। एवमुक्तविशेषणबत्त्वमित्यर्थः। न च समुदाये ज्ञानत्वमस्तीति भावः। **विशिष्टस्यापीति**। समुदायत्वविशिष्टेऽप्यनुमित्यादौ ज्ञानत्व सत्त्वादित्यर्थः।

यद्यपि ज्ञानत्वविशिष्टो न समुदायः किन्तु समुदायी, तत्र च समुदायत्वं नास्ति, नवा अभावत्रयं तथा च कथमतिव्याप्तिसम्भावना तथापि[3] समुदायसमुदायिनोर्भेदाभेदाभ्युपगमाद् अयं दोषः। यथा तु एकधर्मावच्छिन्ना वृक्षा वनमित्युच्यते तथा अनुमित्यादय एकधर्मावच्छिन्ना एव समुदायशब्दभाजः। स च धर्म एकोधिको वा। एका त्रितयं[4] समूहालम्बनबुद्धिर्वेतिभावः।

---

१. स्वप्रतियोगिकाभमिलितप्रतियोगिकभेदाभावात्। २. एकोपचार इति पाठः।
३. तद्यापि समुदायिनो। ४. लुप्तानि अक्षराणि।

एकेति च किमाश्रयव्यक्त्यभेदो विवक्षितः ? उताभिन्नजातीयता ? उतैकोपाधिकता ? उतैकसङ्ख्यायोगिता ? उत द्व्यादिसङ्ख्यायोगाभावः ? आद्ये तद्विशिष्टस्याव्यापकतादोषः, व्यक्त्यात्मनोऽभेदस्य व्यावृत्तत्वात् धर्मिणा च लक्षणविशेषणेऽलक्ष्यधर्मत्वं धर्मस्य स्यात्, स्वस्यैव स्वधर्मत्वानुपपत्तेः । आश्रयाभेदस्योपलक्षणत्वे प्रागुक्तदोषः ।

द्वितीये तदेवाभिन्नजातीयत्वं लक्षणमस्तु, अवश्यं तथा प्राथम्येन प्रतीयमानत्वात् । न तृतीयः, परोक्षप्रमितित्वस्यानुमित्यादिषु मिलितास्वपि भावात् ।

नापि चतुर्थः, वैशेषिकपक्षे गुणतया तदभावात्, भावे वाऽनुमित्यादित्रयवृत्तीनां त्रयाणामप्यभावानामेकत्वसङ्ख्यासामानाधिकरण्यसम्भवात्, मिलितानामप्येकसमुदायापेक्षया तथात्वात् ।

नापि पञ्चमः, वैशेषिकमतानुसारेण अनुमित्यादित्रयेऽपि तदभावस्य तुल्यत्वात् । अतदनुसारे प्रत्यक्षव्यक्तिष्वपि द्व्यादिसङ्ख्यायोगात् ।

---

एकाश्रयाणामितिलक्षणगतमेकपदं विकल्पयति—**एकेति चेति** । **व्यक्त्यात्मनोऽभेदस्येति** । घटप्रत्यययोर्भेदाश्रय इत्यभावसमुदायलक्षणत्वे पटप्रत्यक्षे अतिव्याप्तिरित्यर्थः । **धर्मिणेति** । धर्मस्य लक्षणस्येत्यर्थः । **आश्रयाभेदोपलक्षणत्वे इति** । उपलक्षणस्य उपलक्ष्यवहिर्भूतत्वात् [1]तदुपलक्ष्यमभावत्रयमेव लक्षणं स्यात् तच्चानुमित्यादावपीत्युक्त दोषापत्तिरित्यर्थः । एकजातीयाश्रयाणामभावानां लक्षणत्वमिति पक्षे दूषणमाह—

यथा जात्या प्रत्यक्षत्वेन ऐकजात्यं व्यक्तीनां तदेव लक्षणमस्त्वित्याह—**द्वितीये तु इति** ।

ननु तदेवेत्यनुधावनं कुतः मदुक्तस्यापि लक्षणत्वसम्भवादित्याशङ्क्याह—**अवश्यं तथेति** । अवश्यं भाविना इत्यर्थः । यद्युपाधिर्यः कश्चन तदाह—**परोक्षेति** । प्रत्यक्षं वा तन्निष्ठस्य उपाधित्वं तदेव लक्षणं स्यात् न च तदस्तीति भावः । **परोक्षप्रमितित्वस्येति** । परोक्षप्रमितित्वम् अनुमित्यादिव्यक्तिष्वस्ति अस्ति चाभावत्रयं मिलितास्वित्यर्थः । न च मिलितासु अप्रमितित्वं ज्ञानत्ववत् तत्सत्त्वादिति भावः । **वैशेषिकपक्षे इति** । अस्य **गुणतयेति** । तन्मते गुणे गुणाभावादित्यर्थः तथा च असम्भव इति भावः । मीमांसकमतेत्वाह—**भावेवेति** । **तथात्वादिति** । एकत्वादित्यर्थः । समुदायापेक्षया च समुदायिनि पौर्णमास्यां पौर्णमास्या यजेतेत्यादौ एकवचनप्रयोगो दृष्टः, सेनावलमिति च हस्त्यश्वादौ वृक्षे चेति । **तत्रैवेति** । तदितरावृत्तित्वे सति तद्वृत्तित्वमित्यर्थः । अत्र द्व्यादेः संख्यायाः वृत्तिसम्बन्धः समवाय एव

---

१. तत्त्वापलक्ष्यम् ।

**तथापि नैकस्यां प्रत्यक्षव्यक्तौ द्व्यादिपरिसमाप्तिः, द्व्यादिसङ्ख्यापरिसमाप्त्यभावश्च तदभावशब्देन विवक्षित इति चेन्न, का हि परिसमाप्तिर्या एकस्यां व्यक्तौ नास्तीत्युच्यते ? तत्रैव वृत्तिर्द्व्यादेः परिसमाप्तिः, सैकस्यां व्यक्तौ नास्तीति चेन्न, एवमेकत्वस्यापि न क्वचित्परिसमाप्तिः स्यात्। न हि तस्य तत्रैव वृत्तिः, अन्यस्यैकत्वाभावप्रसङ्गात्। अत एकत्वसङ्ख्यावत्यामेव व्यक्तौ द्व्यादिपरिसमाप्तिरित्यविशेष एव। एकव्यक्तिगतैकत्वसङ्ख्याव्यक्तिर्नान्यत्रेति चेन्न, सत्ताव्यक्तेरप्येवम्भावप्रसङ्गाद्, अननुगतत्वापत्तेश्च।**

---

सचान्यत्राप्यस्त्येव इत्यसम्भव इति चेन्न ··· ·· नहि एको द्वौ त्रयो वा द्वाविति कदाचित् प्रत्ययः एको द्वित्वाश्रय इति प्रतीतेः। द्वित्वसमवायित्वमात्रं विषयः इति न दोषः। एतेन पर्याप्तिः स्वरूपसम्बन्धविशेषः स च नाधिक इति प्रलापः।

वस्तुतस्तु द्वाविति द्विधा निष्प्रकारप्रतीतिविषयत्वमेव वृतिशब्देन विवक्षितं तत्तु नैकस्या व्यक्तेरिति। द्विमात्रं वृत्तिः व्यावृत्तिः विशेषो वा न त्रयः एको वा किन्तु द्वाविति प्रसङ्गतो द्वित्वस्यैव वैशिष्ट्यामिति तुतत्त्वम्। फलितमाह—**अत इति**। ययोर्द्वित्वं वर्तते तयोर्द्वयोरप्येकत्वसंख्यावत्त्वात् एकस्यां व्यक्तौ द्वित्वादेरपि परिसमाप्तिरिति द्वित्वादिपरिसमाप्त्यभावलक्षणैकशब्दार्थाभावादेकाश्रयाणामभावानामभावेन लक्षणासम्भवे विशेषाभाव इत्यर्थः।

**एकव्यक्तिगतेति**। एकत्वं हि नाना तथा च एकमेमैकव्यक्तावेव व्यक्त्यन्तरे तु एकत्वान्तरमेव। अतः एकत्वसंख्याव्यक्तिमत्यामेव द्वित्वस्य न समाप्तिः व्यक्त्यन्तरेऽपि तस्या द्वित्वव्यक्तेः वर्तमानत्वादिति लक्षणासम्भव इत्याशयः। एकत्वस्य प्रतिव्यक्तिभेदे स्यादेव ते मनोरथसिद्धिः स एव तु नास्ति अबाधितैकाकारानुगतप्रतीतेः सत्तावत्तस्याप्येकत्वादित्याशयेनाह—**सत्ताव्यक्तेरिति**। 'एवंभावप्रसङ्गात्। प्रतिव्यक्तिभेदप्रसङ्गात् दोषान्तरमाह—**अननुगतत्वप्रसङ्गाच्चेति**। तथा च व्यक्तिस्वरूपमेव सत्ता स्यात् नातिरिक्ता प्रमाणाभावादितिभावः। एकत्वस्य प्रतिव्यक्तिभेदे दोषान्तरमाह—अननुगतत्वापत्तेरिति। तथा चैको घटः एकः पट इत्यनुगतप्रतीतिव्यवहारौ निर्विषयौ स्याताम् इति तु विद्यासागरस्य अपव्याख्यानम्।

नानैकत्वे तु एकत्वजातेः सत्त्वेन तदुभयोपपत्तेः तथा सति उत्तरग्रन्थेन एकत्वाननुगमदोषस्यापि परिहर्तुमुचितत्वात्। इष्टापत्तिरेव तत्र परिहार इति चेन्न। प्रतीतिव्यवहारयोर्निविषयत्वापत्तिदोषस्य सत्त्वात् एकत्वे हेतुमाह—**जातिरूपेति**। धर्मिग्राहकभावसिद्धं तस्या एकत्वमिति भावः। परिहसति—

---

१. अननुगतत्वापत्तेश्चेति मुद्रितपुस्तके पाठः।

**सत्तैकैव जातिरूपा, एकत्वं तु प्रतिव्यक्ति भिन्नं गुणपदार्थ इति चेत्, नूनं वैशेषिकैर्विप्रलब्धोऽसि। कथमन्यथा सदेकप्रत्यययोरनुभवव्यवहारविशेषमपश्यन्नपि कानिचित् कानिचिदसम्बद्धान्यक्षराणि प्रलपसि।**

**सत्त्वैकत्वयोः परापरत्वानुपपत्तेरेवं स्यादिति चेन्न, साम्यात्। जातिपरापरत्वध्रौव्यमेव च क्वाप्येकन्यूनवृत्तित्वे प्रमाणं स्यात्। क्व तथेति चेन्न, शैलेऽनलस्यानुमायां क्व हस्तवितस्त्यादौ तदंश इत्यनिश्चयवददोषत्वात्।**

---

**नूनमिति**। "विप्रलब्धोऽसि" = वञ्चितोसीत्यर्थः। न तु युक्त्या त्वयोपपन्नोऽयमर्थः। कनिचित् **कानिचिदक्षराणीति**। **सत्ताजातेरेकत्वं** गुण इति। निर्युक्तिकानि अक्षराणि न तु वाक्यानि अयोग्यपदार्थकत्वात् प्रलपसि, यदनर्थकं वचस्तदुच्चारयसि। वैशेषिका इति बहुवचनेन तेषां वाक्येषु परस्परसंवादं गृहीतवानसि। त्वन्तु एक एकवचनोक्त्या अन्येन केनाऽपि त्वत्तुल्यबुद्धित्वात् न संगतोऽसि इति भावः। तथाच सत्तेव एकत्वमपि जातिरेवेत्याक्षेपार्थः।

द्वयोर्जातित्वे साङ्कर्यं बाधकमित्याशङ्कते **सत्त्वैकत्वयोरिति**। सत्तायां सत्त्वापरिहारेण एकत्वमस्तीति न सत्ता व्यापिका, एकत्वपरिहारेणापि एकत्वे [1]सत्तायावृत्तेर्नैकत्वं व्यापकम् इति। तयोर्द्वये साङ्कर्यं स्यादित्यर्थः।

[2]**परापरत्वेति**। तर्हि उभयोरपि गुणत्वमस्तु ननु सत्ता जातिरेकत्वं गुण इति। सत्ताया जातित्वेऽपि एकत्वे न साङ्कर्यं बाधकं तस्य [3]गुणानिर्णयात्। सत्ताजातिरेकत्वं गुण इति वैशेषिकप्रसिद्धेः प्रमाणशून्यत्वात्, लोकप्रसिद्धेश्चाभावात् परापरभावानुपपत्तेस्तुल्यत्वात् न्यायसाम्यमित्यर्थः।

वस्तुतस्तु सत्त्वैकत्वे जाती अनुगतप्रत्ययविषयत्वे सति बाधकाभावात् परापरभावापत्तेश्च समानाधिकरणजातित्वात् द्रव्यत्वपृथिवीत्ववदित्यनुमानमेव परापरध्रौव्यमित्याह—जातिपरापरेति। अत्र नुपलब्धिविरोधं शङ्कते—**क्व तथेति**। अनुपलब्धिमात्रं न बाधकं किन्तु योग्यतासहितं नचानुमेयं तदस्तीति सदृष्टान्तं परिहरति—**शैलेऽनलानुमायामिति**। शैले अनलः किं[4]वितस्तिमात्रदेशे वर्तते हस्तपरिमितदेशे वा इति निश्चयाभावेऽपि यथा [5]अनुमानस्य अदुष्टता तथेयमपि परापरभावनियमानिश्चित न्यून[6] ( परभाव ) स्थलस्य इदं न्यूनतासत्तास्थलमिति [7]अनिश्चयेऽपि न दुष्टता इत्यर्थः।

इदन्तु परस्याप्रतिभासम्पादनायोक्तम्। वस्तुतः एकत्वाधिकरणं सत्ता सा

---

१. सत्ताया वृत्तिर्नैकत्वम्।

२. पाराया इति। ३. तस्य गुणानिर्णयत्वात्। ४. प्रमाशून्यत्वात्। ५. किं तस्ति।

६. यथाऽनुमानदुष्टा। ७. तूतस्थलस्य। ८. इति निश्चयेऽपि।

नन्वस्तु मा वाऽऽसीदेकत्वमनुगतम्, किमनेनात्र निरूपितेन ? द्वित्वादि यत्र न समाप्यते, अभिहिताभावत्रयं चास्ति तत्प्रत्यक्षमिति। मैवम्, अनुमित्यादित्रयेऽपि न त्रित्वं परिसमाप्तम्। एवं सत्यन्यानि त्रीणि न स्युः। अन्या सा त्रित्वव्यक्तिर्याऽन्यत्रेति चेन्न, त्रित्वव्यक्तेः कस्याश्चिदनुमित्यादित्रये समाप्त्यभावात्। काचिदपि त्रित्वव्यक्तिर्यत्र न समाप्यत इति चेन्न, अव्यापकत्वात्। प्रत्यक्षत्वस्य च त्रित्वव्यक्तेश्चावश्यं सामानाधिकरण्यस्य वैशेषिकमतव्युत्थितेन भवताऽभ्युपगम्य-

---

न सत्ताधिकरणमिति सत्तायान्यूनवृत्तितोदाहरणं सत्तैव, नच जातौ जातेर्वृत्तिरपि। इदन्तु परमतमनुसृत्योक्तम् अस्माकन्तु न साङ्कर्यदोष इत्येव तत्त्वम्।

न चैवमेकत्वस्य जातित्वे असमवायिकारणाभावाद् द्वित्वानुत्पत्तिप्रसङ्ग इति वाच्यम्। तथा गुण एवासमवायिकारणमिति न नियमः कर्मणोऽपि तथात्वदर्शनात् तथा गुणकर्मणोरेवेत्यपि न जातेरपि तथात्वदर्शनादिति जातिरप्येकत्वं तथा स्यात्। न चैवं नित्यद्रव्याणामेकत्वेन असमवायिकारणेन द्वित्वाद्युत्पादः सार्वदिकः स्यादिति वाच्यम्। अपेक्षाबुद्धिरूपकारणस्यापि अपेक्षणात्। किं च यस्मिन् कार्ये असमवायिकारणस्यान्वयव्यतिरेकौ स्तः तत्रैव तत्कारणमित्यसमवायिकारणाभावेऽपि द्वित्वादिकं जायते इत्येव तत्त्वम् इति।

[2]मासीदिति। माभूदित्यर्थं। एकत्वस्य विशेषणानङ्गीकारेणैव प्रत्यक्षलक्षणमाह—द्वित्वादीति। आदिपदेन त्रित्वस्य परिग्रहः। अनुमित्यादिद्वयेऽभावत्रयेऽतिव्याप्तिवारणाय द्वित्वपदम् अनुमित्यादित्रयेऽतिव्याप्तिवारणाय आदिपदम्। अन्या सेति। तथा च अनुमित्यादिनिष्ठा त्रित्वव्यक्तिस्तत्रैव समाप्तेति भावः। कस्याश्चिदिति। एकस्या अपि व्यक्तेरन्यनिष्ठायाः तत्राभावे त्रित्वपरिसमाप्तिसत्त्वादेवेत्यर्थः।

अव्यापकतामेवोपपादयति—प्रत्यक्षत्वस्य चेति। तथा च शरीरपरित्यागेन रोगपरिहारवदयमतिव्याप्तिपरिहारः प्रत्यक्षलक्षणस्य सम्भवतीत्याशयः। [3]वैशेषिकमतव्युत्थितेनेति। वैशेषिकमतमुपेक्ष्य[4] अनुमित्यादयः त्रय इति प्रतीतेः तत्र त्रित्वं समाप्यते एवेत्याशङ्क्याह—त्रित्वपरिच्छिन्ने त्रित्वान्तरं भवदपीति।

---

१. इति नियमः।

२. मा वासीदिति मुद्रितपुस्तके मूलम्। अत्र सर्वलकारापवादभूतेन "माङिलुङि"त्यनेन लुङि अस्तेर्भूरिति भूरूपादेशेन माभूदिति स्यात् अतो नात्र माङ्शब्दः किन्तु माशब्दः तेन मङि लुङित्यस्या प्राप्तेः लङि एतद्रूपम्।

३. वैशेषिकमताभ्युत्थितेनेति क्वचित् पाठः। ४. उज्येक्षामन।

त्वात् । अन्यथा प्रत्यक्षव्यक्तयस्तिस्रो न स्युः, तदेव हि त्रिरभिधीयते यत्र त्रित्वं परिसमाप्यते ।

किञ्च—तथापि स एवातिव्यापकतादोषः । त्रित्वेनावच्छिन्नासु अनुमित्यादिव्यक्तिषु त्वदभिहितमभावत्रयमस्तीति तत्र प्रत्यक्षलक्षणं गतमित्यतिव्याप्तिरुक्ता, तद्व्यावर्तनाय भवताऽभिधीयते—काचिदपि त्रित्वव्यक्तिर्यत्र न समाप्यत इति । न चैवमुक्ते साऽतिव्याप्तिर्निवर्तते, तत्राप्युक्तविशेषणस्य विद्यमानत्वात् । न हि त्रित्वावच्छिन्ने तस्मिन् त्रित्वव्यक्तिः काचिदपि समाप्यते, त्रित्वलक्षणैकोपाध्यवच्छिन्ने तस्मिन् त्रित्वव्यक्त्यन्तरं भवदप्याश्रयान्तरमादाय वर्तते, न तु तत्रैव परिसमाप्यते ।

यत्र चोक्तमुपाधिभूतं त्रित्वं तेषु यदि त्रित्वसमाप्तिर्धर्मिषु दृश्येत, तदा तद्दर्शनेन तत्र धर्मिमात्रे लक्षणव्यावृत्तिः सिद्ध्येत्, न तु त्रित्वविशिष्टे धर्मिणि । तस्मादतिव्यापकत्वं तदवस्थमेव ।

अभावत्रयञ्च त्रित्वोपाध्यवच्छेदेन समुदितताभ्युपगतवति विशिष्टे धर्मिणि वर्तते, न त्वविशिष्टे, प्रत्येकमभावत्रयावस्थानस्य तेषु वक्तुमशक्यत्वात् ।

अथ मन्यसे तादृशस्य विशिष्टस्य प्रमितित्वेनैव व्यवच्छेदः । न ह्यभावत्रयवत् त्रित्वं विशेषणमाश्रयकोटावन्तर्भाव्य तासु धर्मिव्यक्तिषु प्रमितित्वं वर्तते । किन्तु तेषां धर्मिणां स्वरूपमात्रे उक्ताभावत्रयं प्रमितित्वञ्चेत्येतत् तत्रास्ति,

---

यद्यपि भवति तथापि न तत्र समवाप्यते आश्रयान्तरमादायैव वर्तमानत्वात्, अतश्च प्रथमत्रित्वावच्छिन्ने अनुमित्यादित्रयेऽतिव्याप्तिरेवेत्यर्थः । अन्यथासिद्धिप्रतीतिवलात् प्रत्यक्षप्रमितिषु गुणेष्वपि त्रित्वमभ्युपेयमित्यर्थः । प्रतीतिमेवाह—**अन्यथेति**[१] । इदमुपलक्षणमनुमित्यादिष्वपि त्रित्वाभ्युपगमस्यातिव्याप्तिपरिहाराय त्वया कृतत्वात् ।

ननु अनुमित्यादिषु परिसमाप्तमेव प्रथम त्रित्वमिति कुतोऽतिव्याप्तिरित्यत आह—**यत्र चेति** । धर्मिमात्रे नातिव्याप्तिरुक्ता किन्तु त्रित्वावच्छिन्ने तत्र च त्रित्वम् परिसमाप्तमेव स्वविशिष्टे स्ववृत्तित्वाभावात् । उपसंहरति—तस्मादिति । यस्मादनवच्छिन्नेऽनुमित्यादौ अतिव्याप्तिर्नोच्यते किन्तु अवच्छिन्न एवेति तस्मादित्यर्थः । **वक्तुमशक्यत्वादिति** । इतरद्वयाभावसत्त्वेऽपि स्वाभावासत्त्वादित्यर्थः ।

**नहीति** । अभावत्रयस्यापि प्रमात्वापत्तेरितिभावः, तेषां **धर्मिणामिति** । दण्डीपुरुष इत्यत्र पुरुषत्वं दण्डे अवर्तमानमपि विशेष्यांशस्य देवदत्तादेः पुरुषत्वमिवेतिभावः ।

---

१. मूले अन्यथा शब्दः प्रसङ्गेऽस्मिन् नास्ति ।

तत्प्रत्यक्षमिति हि ब्रूम इति । न, भवताऽपि भिन्नभिन्नधर्मावच्छिन्नस्यैव धर्मिणः प्रमितित्वमभाव त्रयवत्त्वं च अवश्यमभ्युपगन्तव्यम् । तथा हि—यदि प्रमितित्वस्य क्वाचित्कत्वे नियामकं नोच्यते, तदा सर्वा प्रमितिः स्यात्, न वा काचिदपि ।

सर्वत्र सत्ताऽसत्ता वा नियमेऽन्यानपेक्षया ।
नियामकाद्धि भावानां क्वाचित्कत्वस्य सम्भवः ॥४॥

तन्नियामकमाश्रये विशेषणीभूतं वा वक्तव्यम् उपलक्षणीभूतं वा । आद्ये यदेव प्रमितित्वस्याऽऽश्रयविशेषणं तदेव यद्यभावत्रयस्यापि तस्य, तदा त्रित्वावच्छिन्नेऽनुमित्यादावभावत्रयस्य दर्शितत्वात्तत्र च प्रमितित्वेनापि त्रित्वावच्छिन्ने भवितव्यमिति प्रमितित्वान्न तद्व्यवच्छेदः ।

अथान्यावच्छिन्ने प्रमितित्वमन्यधर्मावच्छिन्ने चाभावत्रयसम्बन्धः, तदा—नास्ति त्वत्पक्षेऽपि प्रमितित्वस्य एकधर्मविशिष्टाश्रयत्वलक्षणमेकाश्रयत्वम्, विशिष्टेऽपि धर्मिण्याश्रितो धर्म्याश्रित एवेति कृत्वा च प्रमितित्वस्य अभावत्रयसमानाश्रयत्वेऽनुमित्यादित्रयेऽपि प्रसङ्गस्तदवस्थः ।

---

लक्षणस्वरूपमाह—तद्यत्रास्ति उक्ताभावत्रयवत् प्रमितित्वं प्रत्यक्षलक्षणमित्यर्थः । एवमतिव्याप्तिपरिहारेऽपि असम्भवः स्यादेवेति । नेति । भिन्नभिन्नधर्मावच्छिन्नस्येति । तथाच अभावत्रयप्रमितित्वयोः वैयधिकरण्यात् लक्षणस्यासम्भव इत्यर्थः । अवश्यमिति । प्रमात्वस्य कादाचित्कत्वानुपपत्तिरूपा अर्थापत्तिः सूचिता । प्रमितिः[2] सर्वा स्यादिति । शुक्तिरजतज्ञानमपि प्रमा स्यात् घटादि[3] वा अप्रमा स्यादित्यर्थः । विपक्षे दण्डमाह—नवा काचिदपीति ।

अनियामकपक्षोक्तमर्थमन्यत्राप्यनुसन्धातुं श्लोकेन उपनिबध्नाति । सर्वेति । अन्यानपेक्षया नियमे स्वीक्रियमाणे सर्वत्र सत्ता वा स्यादिति सम्बन्धः । नियामकाभावे क्वाचित्कत्वाभावः कुतः इत्याकाङ्क्षायामाह—नियामकादिति । अङ्कुरत्वादीनां बीजादुद्भवादिनियामकादेव क्वाचित्कत्वमित्यर्थः । तन्नियामकं यथार्थानुभवत्वादिकमुच्यते चेत् तदापि प्रमाव्यक्तीनां विशेषणम् उपलक्षणं वा तदेव अभावत्रयस्यापीति आश्रयविशेषणतया नियामकमित्यर्थः । धर्मविशिष्टभेदेऽपि यथा दण्डकुण्डलयोः देवदत्तरूपविशेषस्यैक्यादैक्याधिकरण्यं तथा नियामकधर्मविशिष्टभेदेऽपि प्रत्यक्षधर्मिण एकत्वात् ऐकाधिकरण्यमिति शङ्कते—धर्मिण एकत्वादिति ।

---

१. भिन्नभिन्नौ धर्मौ नत्वे को धर्मः । २. सर्वा प्रमितिः स्यादिति मुद्रितपुस्तके पाठः ।
३. घटादिव वा प्रमास्यात् ।

नापि द्वितीयः, उपलक्षणीभूतेन केनचिद्धर्मेण योऽसावुपलक्षितो धर्मो स एव खलु त्रित्वविशिष्टोऽपि, विशेषणवतोऽपि यावद्विशेष्यवस्तुनो विशेष्यवस्त्वात्मकत्वात् । यथा दण्डयपि पुरुषः पुरुष एव । एवञ्च सत्युपलक्षितादनन्यभूते त्रित्वविशिष्टेऽप्यनुमित्यादौ प्रमितित्वमाश्रितं नियामकेनोपलक्षणेन उपलक्ष्याभेदव्यवस्थिततया तस्याप्यवच्छिन्नत्वात् । तथा चातिव्याप्तिर्वज्रलेपायिता ।

तथाप्युपलक्षकेण त्रित्वविशिष्टतया नोपलक्षितोऽसो धर्मो, किन्तु स्वरूपेणेति चेन्न, उक्तमत्र यदेव तदुपलक्षितं तदेव विशिष्टमपि । तथापि विशिष्टेन रूपेण तावन्नोपलक्षितमिति चेत्, मोपलक्षि । अविशिष्टेनापि तन्नोपलक्षितमेव, अन्यथा प्रकृतेऽपि वयधिकरण्यापत्तेः । तदास्तामुल्लसत्प्लववलनविलसितेनेति । तदेवं लक्षणान्तरेऽपि प्रतिपादितोऽयं दूषणसमूहः स्वयमूहनीयः ।

एतदेव परामृश्य भट्टैरिदमुदाहृतम् ।
लक्षणस्याऽभिधानन्तु केनांशेनोपयुज्यते ।। ८२ ।।

---

उपलक्षितवृत्तिप्रमात्वस्य त्रित्वावच्छिन्नावृत्तितया नातिव्याप्तिरिति शङ्कते—**तथापीति** । उपलक्षितव्यक्तिस्वरूपस्यैव अवच्छेदात् धर्मैक्यमिति परिहरति—न **उक्तमत्रेति** । यद्यपि यस्य तद्विशेषणं तदेवोपलक्षितं तथापि विशिष्टरूपेण नोपलक्षितमतो विशिष्योपलक्षितयोरैक्यानुपपत्तिः तथात्वे विशेषणेनापि अभेदप्रसङ्गात् ।

उपलक्षितस्येति शङ्कते—**तथापीति** । स्वरूपेणोपलक्षितस्य विशिष्टाद् भेदो न भवति अन्यथा त्रित्वरूपस्य भेदप्रसङ्गादित्यभिप्रायेण परिहरति **नोपलक्षीति** । उपलक्षितं माभूदित्यर्थः । यथा उपलक्षणतायां वैशिष्यानवच्छेदकं तथा तदभावोऽपि नावच्छेदक इति निगर्वः **अन्यथेति** । प्रमितित्वस्य अभावत्रयस्य च भिन्नभिन्नावच्छेदेनैव[२] बृत्ताविद्यर्थः । **प्रकृतेऽपीति** । प्रत्यक्षेपीत्यर्थः ।[३] तथाचासम्भवः स्यादिति भावः ।

उल्लसन्तः[४] ऊर्ध्वं गच्छन्तो ये पल्लवाः किसलयानि तेषां पतनं[५] मोटनं तत्र क्रीडितेन इत्यर्थः । प्लवपतनविलसितेनेति केचित् पठन्ति । तत्रायमर्थः । तत्र सन्तो माद्यन्तो ये प्लवाः पक्षिविशेषाः तेषां पतनं पतनाकारेण गमनविशेषः तत्र क्रीडितेनेति ।

लक्षणस्यानुपयुक्तत्वे भट्टसम्मतिमप्याह—**एतदेवेति** । लक्षणस्यानुपयुक्तत्वं परामृश्य विचार्यैव "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्यतत्प्रत्यक्षमनिमित्तं

---

१. विशिष्टाभेदो । २. भिन्नभिन्नधर्मावच्छेदेन । ३. प्रत्यशेपीत्यर्थः ।
४. सन्तः । ५. तेषामायतनम् ।

अन्याभिप्रायोक्तमपि हि तत्सामान्यतोऽप्युपपद्यमानमेवेति ।



विद्यमानोपलम्भनत्वादिति सूत्रे[1] प्रत्यक्षमित्येतत् कैश्चित् प्रत्यक्षलक्षणपरतया व्याख्यानं तद् दूषितं भट्टाचार्यैः । धर्मं प्रति प्रत्यक्षस्य निमित्तत्वं प्रमाणत्वं नास्तीति वक्तव्ये प्रत्यक्षलक्षणाभिधानं केनांशेनोपयुज्यते । चोदनैव धर्मे प्रमाणं प्रमाणमेव चोदनेति प्रतिज्ञातेंऽशद्वये प्रत्यक्षलक्षणाभिधानं कुत्रोपयुज्यते इत्येतत् परमेव वार्तिकं कथमेवमुच्यते "एतदेवे" त्याशङ्क्याह--**अन्याभिप्रायेणोक्तमपि हि तदिति** ।

यद्यपि प्रत्यक्षलक्षणस्यैव चोदनालक्षणोऽर्थोधर्म इत्येतत् सूत्रप्रतिपाद्येऽर्थे अनुपयोग उक्तो न लक्षणमात्रस्य, नवोपयोग सा सामान्याभावस्तथापि "लक्षणस्याभिधाने" त्विति सामान्यशब्दप्रयोगात् सामान्यपरत्वापरित्यागेनैव विशेषो योज्य इति भावः ।

इति प्रत्यक्षखण्डनं समाप्तम् ।



१. जैमिनिसूत्रम् १।१।४ ।

## २८ अथ अनुमानलक्षणखण्डनम्

**अनुमानमपि किमुच्यते ?**

**(१) करणपक्षे लिङ्गपरामर्शोऽनुमानमिति चेत्, किं लिङ्गत्वम् ।**

**व्याप्तस्य पक्षधर्मत्वमिति चेन्न, संशयस्योपलक्षणत्वे तत्र दृष्ट्वाऽपि व्यापकं तत्परामर्शाऽतिप्रसङ्गात् । अत एव न तस्य वर्तमानस्य अतत्कालेऽप्युपलक्षणत्वात् । विशेषणत्वे चानुमाय व्यापकं धर्मिनाशवदप्रवृत्त्यापत्तेः ।**

---

यद्यपि प्रत्यक्षखण्डनेनैव अनुमानादेरपि खण्डनं भवति तस्य व्याप्त्यादि प्रत्यक्षोपजीवित्वात्[1] तथापि विशेषतस्तदखण्डने तत्प्रामाण्याशङ्का[2]मन्दमतेर्न निवर्तते इत्यतः, किं वा अनुमानादिप्रामाण्यान्यथानुपपत्त्यैव प्रत्यक्षप्रामाण्यमस्ति-इत्याशङ्कानिराकरणाय तत्प्रामाण्यनिराकरणं प्रस्तौति ।

वस्तुतोऽक्षपादस्य क्रमेण यानि सूत्राणि प्रत्यक्षादिलक्षणपराणि तेषामादि-सूत्रं दूषयित्वा द्वितीयसूत्रस्य दूषणाय प्रस्तावोऽयम् । अनुमानशब्दो हि भावव्युत्पन्नः करणव्युत्पन्नश्च । तत्र यदि करणमभिप्रेत्य प्रश्नः, करणखण्डनेनैव तत्फलमपि खण्डितं भवतीत्याशयेन । तत्र करणं शृणु इत्याशयेन उद्योतकरस्य न्यायवार्तिक-कृतो मतमुपन्यस्यति—**लिङ्गपरामर्श इति** । सौषुप्तिकसुखपरामर्शवारणाय लिङ्गपदमिति विद्यासागरः । तन्न नैयायिकैः तदनङ्गीकारात् तद्व्यावर्तनानौ-चित्यात् । परामर्शशब्दस्य ज्ञानमात्रवाचितया अन्वयकरणातिरिक्ते[3] पदज्ञाना-दावतिव्याप्तेर्वारणायास्तु ।

पक्षधर्मत्वं व्यापकस्याप्यस्तीत्यत आह—**व्याप्तस्येति** । इति विद्यासागरः । तन्न । तथापि तदनुद्धारात् स्वस्यापि स्वव्याप्यत्वात् । व्यापकन्यूनवृत्तित्वेनापि विशेषणीयमिति चेन्न । समव्याप्तपरामर्शाव्यापकतापत्तेः । पक्षतावच्छेदक-वारणाय व्याप्तस्येति तु तत्त्वम् । पक्षधर्मत्वं सन्दिग्धसाध्यधर्मा पक्ष तद्धर्मत्वम् ।

**तत्रेति** । दूरत्वदशायां सन्दिग्धवह्नेः सन्निकर्षदशायां प्रत्यक्षतो निश्चये धूमोऽयं वह्निव्याप्त इति निश्चये अतिव्याप्तिरित्यर्थः । लिङ्गपरामर्शस्तत्र अनु-मितौ स्वरूपयोग्यमेव, अनुमित्यनुत्पादश्च सिद्धसाधनादिति चेन्न । लिङ्गपरामर्शस्य [5]चरमकारणत्वोपगमादिति मिश्रास्तन्न । तथापि चरमकारणत्वाक्षतेः स्वोत्तर-माविभूतकारणानपेक्षित्वमेव हि चरमसत्त्वमिति चेन्न । सिद्धसाधनं हि पक्षतां विहन्ति । सा सन्देहघटिताऽस्त्येवेत्यनुमित्यापत्तेः अनुमितिकारणं स्यादित्यर्थः ।

---

१. प्रत्यक्षानुपजीवित्वात् । २. मंतमतेः । ३. अन्वयाकरण ।
४. लिङ्गपरामर्शः तत्रानुमित्तिस्वरूपयोग्यमेव । ५. चरमकारणत्वादितिभिश्च संन्नित्यर्थः ।

**पक्षधर्माद्धेतोः पक्षांशे विशेष्ये साध्यसिद्धिः, ईदृशञ्च वैयधिकरण्यमिष्टमेवेत्यतो नैवमिति चेन्न, पक्षमादाय वैयधिकरण्ये नियतसामानाधिकरण्यलक्षणव्याप्तिलोपापत्तेः ।**

---

अथ निश्चयेन संशयस्य नाशात्तस्योपलक्षणत्वे यत्र स वर्तमानस्तत्रोपलक्षणं भवत्येवेत्याशयेनाह—**तस्य वर्तमानस्येति** । उपलक्षणत्वमिति शेषः । तथा च वर्तमानसंदेहोपलक्षितधर्मिनिष्ठत्वं लिङ्गत्वमित्यर्थः । **अतदिति**[१] । वक्ष्यमाणं निर्दिश्य तमेव कथयति । [२]**अवर्तमानस्येति** । कुरूणां क्षेत्रस्य अवर्तमानेनापि उपलक्षणदर्शनात् इतिभावः ।

ननु भवतु वर्तमानस्यापि उपलक्षणत्वं लक्षणघटकस्तु सन्देहो वर्तमान एवोपलक्षणमितिचेत्[३] । अस्तु एवं तथापि विशेषणत्वपक्षे वर्तमानदोषाजगरमुखपतितस्य तस्य न निस्तारोऽस्तीति । **धर्मिनाशवदिति** । यथाहि—धर्मविशेष्यिका प्रवृत्तिः धर्मिनाशेनोत्पद्यते तथा अनुमित्या संशयस्य नाशे पक्षस्य नाशो दण्डनाशे दण्डिनाशवदवश्यंभावीति अनुमितवह्नेः तत्र प्रवृत्तिर्न स्यादन्यत्र, ज्ञानादन्यत्र प्रवृत्तावतिप्रसङ्गात्, समानविषयत्वेनैव ज्ञानप्रवृत्त्योः कार्यकारणभावादिति भावः ।

ननु विशिष्टस्य पक्षत्वेऽपि तद्धर्माद्[४] धूमाद् विशेष्यमात्रे साध्यसिद्धिः तस्यावस्थानात्, अनुमितवह्निस्तत्र प्रवर्तते । नचान्यधर्माद्[५] अन्यत्र साध्यसिद्धावतिप्रसङ्गः । विशिष्टधर्मस्य विशेष्यसाधकत्वनियमस्य अम्युपगमात् इत्याशङ्कते—**पक्षधर्मादिति**[६] । **ईदृशमिति** । पक्षाधिकरणकं साधनं तदंशधर्मिमात्राधिकरणकं साध्यम् इत्यात्मकं [७]वैयधिकरण्यं विशिष्टेऽप्यस्तीति विशिष्टवृत्तेः विशेष्येऽपि सत्त्वात् । साध्यस्य साधनसामानाधिकरण्यं तादृशं वैयधिकरण्येऽपि न [illegible]तम् । **इष्टमेवेति** । एवकारेण विशिष्टमादाय सामानाधिकरणस्य बाधितत्वेनानिष्टमिति सूचयति ।

अयमाशयः-नहि अनुमितिकाले संशयोऽस्ति तस्य साधननाशात् । नच साधननिश्चयकालेऽपि कथं संशय इति वाच्यम् । तत्प्राक्कालोत्पन्नस्य सम्भवात् । यद्यपि एवमपि, कथं संशयविशिष्टसाधनस्य वृत्तिः संशये तस्य वृत्त्यसम्भवात्, तथापि संशयस्य कालोपाधितया साधनाधिकरणताजन्यमात्रस्य कालोपाधित्वादित्याशयः प्राचामिति ।

---

१. तस्य वर्तमानस्येत्यनन्तरम् अतएवेति मूले पाठो नोपलभ्यते ।

२. अतत्कालस्येति मूलपाठस्य अनुवादः ।    ३. उपलक्षणत्वम् ।

४. तद्धूमाद्धूमाविशेष्यमात्रे साध्यद्धिः तस्य तस्य च ।  ५. नचान्यधर्माद् अन्यधर्मात् ।

६. पक्षे धर्मत् । ७. विशेष्यं ।

**तथापि विशेष्यमादाय साऽस्त्येवेति चेन्न, साध्यविशेषसिद्धिरपि यत्र व्याप्तिबलायातं सामान्यं तत्र सामान्यप्रतीत्यपर्यवसानबलादेवेति सामान्यविशेष-सिद्ध्यनुपयोगिनी पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहाराय अनुमिति-**

---

साध्यविषयत्वसामान्यं व्याप्तिवलायातं तत्र साध्यविशेषसिद्धिरपि। **सामान्यप्रतीत्यपर्यवसानादेवेति**। सामान्यविशेषसिद्ध्यनुपयोगिनी[१] पक्षधर्मता त्वया इष्टा परार्थानुमान एव हेतुरिति नानुमितिहेतुमात्रे निवेशनीया। तथा च स्वार्थानुमानाव्यापकमिदं लक्षणम्। स्वार्थानुमाने संशयात्मकपक्षताया व्यभिचार-ज्ञापनाय 'आगमेने'' 'त्यादिध्यानात्' यत्प्रत्यक्षलक्षणं तेन ध्यानस्य प्रमाकरणत्वा-भावात् तेन 'त्रिधेति' नानुपपन्नम्। प्रमाणानां संप्लवः - सङ्करः।

**एतेनेति**। दृष्ट्वाऽपि व्यापकं तत्परामर्श इति योग्यताया निश्चयदशायामपि सम्भवात् तस्या यावद्द्रव्यभावित्वात् अन्यथा कालान्तरे तत्रैव संशयो न जायेत।

किञ्च संशययोग्यता यदि निश्चयकाले तिष्ठति तदा अतिव्याप्तिः। न तिष्ठति चेत्तदा शाब्दज्ञानानन्तरमनुमानं न स्यात् ततश्च 'श्रोतव्यो मन्तव्य' इति श्रुतिविरोधः इति भावः। पक्षधर्मताया अनङ्गत्वप्रदर्शनेन साधकबाधकमानाभाव-रूपा संशययोग्यता पक्षतेत्यपि निरस्तम्।

यद्वा साधकमाने सत्यपि मननदर्शनेन इति एतत्पदार्थ इति मिश्राः।

अस्तु तर्हि लिङ्गपदं व्याप्यपरं लक्षणे इत्याशङ्कते—**व्याप्यत्वमिति**। **अगृहीतव्याप्तिनेति**। न गृहीता व्याप्तिर्येन तेन पुरुषेण योऽयं धूम इति परामर्शस्तस्ये-त्यर्थः। तृतीयार्थः कर्तृत्वं, तच्च आश्रयत्वमात्रपरम्। **व्याप्त्युल्लेखिन इति**। व्याप्तिरिति ज्ञानस्येत्यर्थः।

ननु नास्य व्याप्यो विषयः किन्तु तद्गतो धर्म एवेत्याशङ्क्याह—'तस्यापि' व्याप्यग्राहित्वात्। धूमनिष्ठवह्निसामानाधिकरण्यं, वह्निसमानाधिकरणधूमत्वं वा व्याप्तिरुभयत्राऽपि व्याप्यो भासते एवेति तथापि व्याप्यतया भानं[२] नेदमिति चेत्। कोऽर्थः व्याप्तिप्रकारकं व्याप्यभानं नेति चेत् तदुत्तरज्ञानस्य तथाविधस्यापि सम्भवात्। व्याप्तिमुल्लिखतः इत्यत्र धूमोऽग्निव्याप्त इत्येवं व्याप्तिं गृह्णतः प्रमाणस्य अस्त्येव तथात्वमित्येव वा अर्थः द्वितीयलिङ्गपरामर्शोऽनुमानं तृतीयलिङ्गपरामर्शो-ऽनुमानमित्यर्थः।

अत एवेत्युक्तं हेतुमेव कथयति—**धारावाहिनीति**। दोषान्तरमाह—**गृहीतव्याप्तिना[३] चेति**। चकारोऽनुमानत्वप्रसङ्गाच्चेत्येवं योजनीयः। **सिद्ध-**

---

१. सिद्ध्यनुपयोगी पक्षधर्मता। २. भानं दनेदम्।
३. क्वचित गृहीतनापीति पाठः।

कारणत्वेनैष्टव्या। सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सेति। मोक्षमार्गेहि—

आगमेनानुमानेन ध्यानात् प्रत्यक्षणेन च।
त्रेधाऽऽत्मनि प्रमाणानां संप्लवः स्वार्थमिष्यते ॥ ४३ ॥ – इति।

एतेन संशययोग्यताऽपि निरस्ता।

व्याप्यत्वमिति चेत्, किं वस्तुगत्या व्याप्यस्य स्वरूपेण परामर्शोऽनुमानं व्याप्यतया वा? नाद्यः, अगृहीतव्याप्तिनाऽपि धूमादिपरामर्शस्यानुमानताप्रसङ्गात्। नापि द्वितीयः, व्याप्त्युल्लेखिनः प्रमाणस्यानुमानत्वप्रसङ्गात्। तस्यापि व्याप्यत्वग्राहिताया अवश्यवक्तव्यत्वात्।

अत एव द्वितीय-तृतीयविशेषणे अपि निरस्ते, धारावाहिनि तथात्वापत्तेः। गृहीतव्याप्तिनाऽपि युगपदुभयग्रहणे द्वावेतौ व्याप्यव्यापकाविति परामर्शस्यानुमानत्वप्रसङ्गात्। न च तदनुमानमेव, असन्दिग्धतया पक्षत्वाभावेन तद्धर्मस्य हेतोः सिद्धसाधनवदपक्षधर्मत्वात्। स्वार्थानुमाने नाऽयं दोष इति चेन्न, प्रत्यक्षलक्षणोपपत्त्या साक्षात्त्वासाक्षात्त्वविरोधापत्तेः।

अव्यापकविषयत्वे सतीति चेन्न, व्याप्यविषयत्वभावप्रसङ्गात्। व्याप्यत्वं हि सप्रतियोगिकग्रहणम्, तथा चैतस्य व्याप्यमिदमिति गृह्यते। तथा च सति

---

साधनवदिति। सिद्धसाधनस्य हेतोर्यथा पक्षधर्मता नास्ति तथेत्यर्थः। प्रमाणान्तरेण साध्यनिश्चयेऽपि[1]पक्षधर्मत्यदर्शनात् नायं दोष इत्याशयेनाह—

स्वार्थानुमाने इति। अनुमानमात्रस्येति लक्षणम् अनुमानविशेष्येति दूषणे सत्येव तत्रेष्टापत्तौ दूषणान्तरमाह—साक्षात्वेति। व्यापकधर्मविशिष्टधर्मिज्ञानस्य इन्द्रियान्वयव्यतिरेकवतः साक्षात्वात्, लिङ्गजन्यत्वेन परोक्षत्वात् साक्षात्त्वासाक्षात्त्वयोः [2]विरुद्धयोर्बिरोधापत्तेः। साक्षात्त्वपरोक्षत्वयोः साङ्कर्यापत्तेरिति तु विद्यासागरः। व्यापकाविषयत्वेति[3] व्याप्यपरामर्शोऽनुमानमित्यर्थः। यथाश्रुते समूहालम्बने अव्यापकस्य धूमधूमत्वादेर्विषयत्वान्न तस्य वारणं स्यात्, एवं सति असम्भव एव स्यादित्याह—व्याप्येति। व्यापकाविषयत्वेऽपि कथं नाव्याप्यविषयत्वं तयोरन्यत्वादित्याशङ्क्य ज्ञानाकारं प्रदर्शयन् व्यापकविषयतां प्रदर्शयति—व्याप्यं हीति। व्याप्यस्य ग्रहणमिदं प्रतियोगिविधया व्यापकविषयमेवेति भावः। विशेषत इति। समूहालम्बने व्यापकं विशेषरूपेण भासते न तु परामर्शे तत्र सामान्यरूपेणैव तस्य भानमिति नासम्भव इति भावः। अग्निधूमावित्यादि आप्तवा-

---

१. ममत्वदर्शनात् नायमित्याशयेनाह। २. विरोधयोर्विरुद्धयोरापत्तेः।

३. अव्यापकविषयत्वेति मुद्रितपुस्तके पाठः।

व्यापकस्यापि विशेषणस्य ग्रहणमवश्यं वक्तव्यम् । अन्यथा विशिष्टग्रहणस्य वक्तुमशक्यत्वात् ।

विशेषतो व्यापकाविषयत्वे सतीति चेन्न, 'अग्निधूमौ व्याप्ताविति' त्याप्तोपदेशाद्, वा पूर्वं भूयोगृहीतवह्निधूमसाहचर्यस्य वह्निधूमाग्रहणकाले विमर्शवशाद् वा जायमानव्याप्तिग्रहणस्य व्याप्यपरामर्शोऽनुमानं स्यात् ।

न परामर्शः प्रत्ययमात्रं येन प्रथमग्रहणे प्रसङ्गः स्यात् । किन्नाम् ? प्रत्यभिज्ञानमिति चेन्न, विचारादाप्तोपदेशाद्वा प्रतीत्य व्याप्तिं पुनराप्तोपदेशाद्विचाराद्वा यैव मया व्याप्तिर्गृहीता सैवेयमिति प्रत्यभिजानानस्य व्याप्तिज्ञानमनुमानं स्यात् ।

विशेषतो व्याप्यविषयत्वे सतीति चेन्न, अव्यापकत्वप्रसङ्गात् । एकव्यक्तिविषयत्वस्य व्यक्त्यन्तरेऽसम्भवात्, सामान्यतो व्यक्तिविषयत्वस्य चातिप्रसञ्जकत्वात् ।

---

क्यात् जायमानव्याप्तिग्रहस्य पुंसो व्याप्यपरामर्शोऽनुमानं स्यादिति योजना । तत्परामर्शस्य विशेषाविषयत्वादिति भावः ।

यदि च कश्चिद् वाक्यजन्यत्वे विशेषाविषयत्वे च सति व्याप्यपरामर्शोऽनुमानमित्याचक्षीत तं प्रत्याह–पूर्वमिति । गृहीतसाहचर्यस्य विचारवशाज्जायमानव्याप्तिग्रहस्य परामर्शोऽनुमानं स्यात् । गृहीतधूमसहचारोऽपि अगृहीतव्याप्तिको यदा एवं विचारयति यदि धूमो वह्निं व्यभिचरेत् तदा भूयः स्वस्थानेषु वह्निसाहचर्यं नोपपद्येतेति तदा व्याप्तेश्च [1]ज्ञानिनः तस्य परामर्शो नूनं धूमो वह्निव्याप्य इति सोऽप्यनुमानं स्यात् । न चेष्टापत्तिः, तेन हि कीदृशी अनुमितिर्जननीया न धर्मिविशेष्या कस्यचिद् धर्मिणोऽनुपस्थितेनापि वह्निविशेष्यकतादृशानुमितेरननुभवात् निष्प्रयोजकत्वाच्चेति भावः ।

ननु तर्हि उभयत्रापि अवश्यं व्यापको [2]भविष्यति इत्याशङ्क्याह–वह्निधूमाग्रहणकाले जायमानो यः परामर्श इत्यन्वयः । **विशेषत इति** । विचाराप्तोपदेशाभ्यां जायमानस्य ज्ञानस्य परोक्षतया विशेषविषयत्वं नेति । तेन व्याप्यविशेषविषयपरामर्शत्वमनुमानत्वमिति लक्षणमित्यर्थः । तथा चायं धूमो वह्निव्याप्य इति परामर्शोऽनुमानमिति लक्षणनिष्कर्षः । अव्यापकत्वप्रसङ्गं स्फुटयति–**एक व्यक्तीति**[3] । पर्वतनिष्ठधूमविषयत्वस्य अरण्यनिष्ठधूमपरामर्शेऽपि अनुमापकेऽभावादव्याप्तिरित्यर्थः ।

---

१. ज्ञातिनः । २. भाविष्टत । ३. पूर्वतनिष्ठधूमविषयत्वस्य प्राज्ञाननिष्ठ ।

**किञ्च—धूमवत्त्वादेर्यदा कदाचिदग्निमत्त्वं वा प्रतीयते तदानीं वाऽग्निमत्वं पर्वतादेः ? नाद्यः, तदानीमिव अन्यदाऽप्यग्न्यर्थिप्रवृत्तेस्तत्र प्रसङ्गात् । न द्वितीयः, तदानीमग्निमत्तया व्याप्तत्वानवगमात् ।**

**तदेति धूमकालोऽपेक्षित इति चेन्न, क्वचिद्देशेऽन्यदापि धूमस्यावस्थानमस्तीति कालान्तरस्यापि धूमकालत्वात् ।**

---

ननु व्यक्तित्वाश्रयविषयत्वमेव विशेषविषयत्वं नत्वेकैकधूमव्यक्तिविषयत्वमिति सामान्यतो व्यक्तिविषयत्वमित्यनेनाशङ्क्य व्यक्तित्वाधिकरणं प्रागुदाहृतप्रत्यभिज्ञानं स्फुरतीत्यतिव्याप्तिप्रसङ्गेन दूषयति एवमधुना व्याप्यविषयत्वनिर्वचनखण्डनेन अनुमानस्य स्वरूपं खण्डयित्वा फलमपि खण्डयति—किञ्च धूमादिना पर्वतादेर्यदाकदाचिदग्निमत्त्वं प्रतीयते तत्र यदा [1]व्याप्यपरामर्शः तत्कालीनमिति विकल्पार्थः । **अन्यदापीति ।** अतीतानागता[2]लिङ्गादपि पर्वते वह्निमनुमाय प्रवर्तिता स्यात् तत्कालीनवह्निभानस्यापि सम्भवात् इत्यर्थः । अधुना विद्यमानेऽग्नि स्वस्वकाले यामनुमितिं जनयति तस्या अयं पर्वतोऽपि विषयश्चेत्तदा वह्निनिश्चयस्य अत्रापि सत्त्वादधुना प्रवृत्तिः स्यादित्याशयः । [3]**तदानीमिवेति ।** तत्तल्लिङ्गकानुमानकाले इवेत्यर्थः ।

अथ प्रवृत्तिकाले निश्चयोऽपेक्षितो नास्तीति चेन्न । अतीतधूमजन्यवह्न्यनुमितिजनितसंस्कारेण वह्निस्मृतिसम्भवात् । तदाग्निमत्तयेति । धूमस्य वह्निमात्रेण व्याप्तिग्रहाद्, व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति नियमाच्च वह्नित्वेनैव वह्निर्भासेत ननु धूमकालीनवह्नित्वेन. तस्य [4]व्यापकतानवच्छेदकत्वेन कालस्य भानासम्भवादिति भावः ।

ननु यदा धूमस्तदा वह्निरिति कालगर्भव्याप्तिग्रहबलादेव लिङ्गकालीनलैङ्गिकसिद्धिरित्याशङ्कते—**तदेति** । धूममात्रे कालो विवक्षितः पक्षनिष्ठधूमकालो वा आद्ये आह—**क्वचिद्देश** इति । कालान्तरेऽपि क्वचिद्देशे पर्वतातिरिक्ते धूमस्य [5]अवस्थानमस्ति इति कालान्तरस्य धूमकालत्वात् तत्कालीनो वह्निः पर्वते निश्चित इति धूमविरहदशायां पर्वते प्रवृत्त्यापत्तिरित्यर्थः । द्वितीयमाशङ्कते—**तदिति**[6] । पक्षविशेषनिष्ठधूमकालीनाग्निना व्याप्त्यग्रहादसम्भवः । अप्रतीतव्याप्तिकत्वं पक्षवृत्तिधूमस्य पूर्वपक्षीयवह्नेरज्ञानात् तदीयव्याप्तेरशक्यग्रहत्वादिति भावः ।

---

१. अतीतानागतात् लिङ्गादावपि पर्वतो २. प्रवर्ति तप्कालीन ।

३. अन्यदेति व्याख्यानन्तरं तदानीमिवेति व्याख्यानेन पाठः विपयः प्रतिभाति ।

४. व्यापकतावच्छेदकत्वेनेति पाठः । ५. अधस्थानमस्ति । ६. तद्गतेति ।

**तद्धूमकालोऽपेक्षित इति चेन्न, तच्छब्दस्य व्यक्तिविशेषवचनत्वे अप्रतीत-व्याप्तिकत्वम्, यत्किञ्चिद्व्यक्तिवचनत्वे चोक्तदोषापत्तिः ।**

**हेतोः पक्षधर्मतयाऽप्यपर्वतादिधर्मः, साध्यो मा भूत्, ततस्तु कालान्तरे किं न स्यात् । तं कालमन्तर्भाव्य पक्षत्वे कथं पश्चान्निष्कम्पं प्रवर्तेत । धूमकालमन्त-र्भाव्य चेदुक्तमावर्तते । तद्धूमकालञ्चेद्, अंशतः स्ववृत्तिः ।**

---

यस्याः धूमव्यक्तेर्विशिष्य[1]कालिकीव्याप्तिर्गृहीत्वा सैव तच्छब्दार्थं इति शङ्कते—**यत्किञ्चिदिति** धूमे सति यत्किञ्चिद् धूमकालीनवह्निभानेऽपि तत्काले धूमाभावदशायामग्न्यर्थिनः[2] प्रवृत्तिः स्यादित्यर्थः । ननु व्याप्यमात्रान्न साध्यसिद्धिः किन्तु पक्षधर्मताऽपि अङ्गं तेन पर्वतनिष्ठात् धूमात् न देशान्तरकालान्तरीये वह्निः हि सिद्धिरित्याशङ्कापरिहाराभ्यामाह—**हेतोरिति** । पक्षधर्मतयाऽपि पक्षीयो[3] वह्निः सिध्यति नतु नियतकालीनतयाऽपि तस्यास्तत्र अतत्रत्वादित्याशयः ।

ननु लिङ्गपरामर्शकालः पक्षप्रविष्टोऽस्तु ततश्च पक्षधर्मता साध्यस्य [4]देश-नियममिव कालनियममपि साधयिष्यति इत्याशङ्क्य परिहरति—**कथं पश्चादिति** । कालस्य पक्षान्तर्भावे द्वितीयक्षणादौ क्षणविशिष्टस्य पक्षस्य नष्टत्वात् तत्र न प्रवृ-त्तिरित्यर्थः ।

मितभाषिण्यान्तु पक्षकालमन्तर्भाव्यपक्षत्वम् । पक्षधर्माद् हेतोश्च पक्षधर्मः साध्य एव सिध्यतीति चेत्तत्राह—**तं कालमिति** । यावत्संशयोऽनुवर्तते[5] ताव-देव हि पक्षकालोऽतः संशये निवृत्ते पक्षाभावादग्न्यर्थिनः प्रवृत्तिर्न स्यादित्यर्थं इत्येवं ग्रन्थोऽयं व्याख्यातः । धूमकालः पक्षान्तर्भूत इति नोक्तदोष इत्याशङ्कते—**धूमकाल-मिति** । एवं सति यत्किञ्चित् धूमकालीनवह्निसिद्धिरिति अन्यदाऽपि प्रवृत्तिः स्यात् । परामृश्यमानधूमकालः पक्षान्तर्भूत इति शङ्कते—**तदिति** । परामृश्यमान-धूमकालविशिष्टः[6] पक्षः तद्धर्म स[7] एवेति आत्माश्रय इत्याशयेनाह—**अंशत इति** । विशिष्टे अतिरिक्ते धूमस्य वृत्तावपि नात्माश्रयः[8] तस्य विशिष्टस्य पक्षभिन्नत्वादि-त्यतः उक्तमंशत इति ।

अथ तद् धूमकालः पक्षतावच्छेदकोऽस्तु तथा च तत्कालावच्छेदेन साध्यं सिध्यति नवा, अंशतः स्ववृत्तिस्तस्य पक्षेऽनन्तर्भावात् नच तथापि पक्षतावच्छेदक-सामानाधिकरण्येनैव साध्यसिद्धेः नाभिमतसिद्धिरिति वाच्यम् । तत्कालावच्छेदेन साध्यस्य सिसाधयिषायां तथा सिद्धेरावश्यकत्वात् ।

---

१. विशिष्टस्य । २. अभ्यर्थिनः । ३. पक्षीया । ४. देशनियमेनैव । ५. तयोरेवहि ।
६. धूमविशिष्टः । ७. परामृश्यमानो धूम एवेत्यर्थः । ८. नाश्रयः ।

## २९, व्याप्तिलक्षणतद्ग्रहोपायखण्डनम्

कश्च व्याप्तिशब्दार्थ इति वक्तव्यम्।

(१) अविनाभाव इति चेन्न, किमेकस्याव्यतिरेकेऽपरस्य भावोऽविनाभावपदार्थः, उत एकस्य व्यतिरेकेऽपरस्य व्यतिरेकः ? यद्याद्यः, तदाऽव्यतिरेकोऽन्वयार्थं इत्येकस्यान्वयेऽपरस्यान्वय इत्युक्तं स्यात्। एवञ्च सति पार्थिवत्व-लोहलेख्यत्वयोरन्वयो व्याप्तिः स्यात्।

न काचित्कः सम्बन्धो व्याप्तिः, सार्वत्रिकस्य तथात्वेन विवक्षितत्वादिति चेत्, किमिदं सार्वत्रिकत्वं सम्बन्धस्य ? सर्वासु तज्जातीयव्यक्तिषु विद्यमानतेति चेत्, नेयं सर्वतज्जातीयव्यक्त्यपरिज्ञाने शक्याऽवधारणा। न च सर्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः, तत्तत्प्रमितिकरणासम्भवात्।

इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्वास्तज्जातीयव्यक्तयो गृह्यन्ते, तदनभ्युपगमे षण्डकमुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिवेति वाच-

---

किञ्च तादृशपरामर्शोत्तरकाला या[1] अनुमितिः पर्वते प्रवर्तते अतीतकालीनवह्निमत्ताज्ञानादेवेति स्थिते तादृशपरामर्शजन्यतावच्छेदकं तत्कालीनवह्निज्ञानत्वमेवेति कल्पनयैवोपपत्तौ न तस्यावच्छेदकत्वाभावेऽपि क्षतिः नवा तस्यावच्छेदकत्वास्फूर्त्तिदशायां प्रवृत्त्यनुपपत्तिः तथापि तत्कालीनत्वं व्यापकतानवच्छेदकं[2] कथं वह्नौ प्रकार इति चेत्। फलवलेन अतथाभूतस्यापि भानकल्पनात्। अन्यत्रापि तथा फलादर्शनमेवान्याप्रकारकताकल्पनायां बीजम्। अत एव सकर्तृकतानुमितावपि कर्तुरेकत्वं प्रकार इत्याहुः। इति चेन्न। धूमकालीनत्वानुमितौ तद्व्याप्यज्ञानस्य क्लृप्तकारणस्याभावेन तद्बाधात्। शाब्दवह्निबुद्धौ जातायां स वह्निर्धूमकालीनो धूमकाले प्रतीयमानत्वात् इत्यत्र हि तत्कारणत्वेन क्लृप्तमिति।

अविनाभाव इत्यत्र निषेधार्थकस्य किं विना पदेन सम्बन्धो भावपदेन वा। आद्ये विना पदार्थेन सम्बन्धे व्यतिरेकाभाव इत्यर्थः। द्वितीये बिना व्यतिरेकोऽभाव इत्यर्थः। तत्र विनेत्यत्र एकस्य व्यतिरेक इत्यर्थलभ्यमव्याहृत्य वा भाव इत्यत्राप्यपरस्येत्यर्थलभ्यमव्याहृत्य विकल्पयति—प्रत्येकस्येत्यादि। तथाच एकस्य व्यापकत्वाभिमतस्याव्यतिरेके परस्य व्याप्यत्वाभिमतस्यभाव इत्याद्यविकल्पार्थः। एकस्य व्यापकत्वाभिमतस्य व्यतिरेके व्याप्यत्वाभिमतस्य व्यतिरेक इति द्वितीयस्यार्थः केवलान्वयसंग्रहाय निष्पन्नमर्थमाह—**अन्वयार्थ** इति। व्याप्तिः स्यादिति। न च साऽस्ति हीरके व्यभिचारादिति भावः।

**सम्बन्ध** इति। अन्वय इत्यर्थः। **यदनभ्युपगम** इति। यदि पक्षीयधूमेन व्याप्तिग्रहस्तदा ततोऽनुमितिर्न स्यात् इति सामान्यं प्रत्यासत्तिरभ्युपगन्तव्या

---

१. परामर्शोत्तरकालायामनुमितौ पर्वे प्रवर्तते उच्यते कालीन। २. व्यापकतावच्छेदकम्।

**स्पतिरुपालम्भमवादीदिति चेत्, मैवम्, सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिं गृह्णतः सार्वज्ञ्यप्रसङ्गात् ।**

**क्वचिदप्यज्ञानं ते न स्यादिति च सार्वज्ञ्यापादनमिति न प्रतिकृत्याऽपि । प्रमेयतया व्याप्तिग्रहणकाले सर्वतज्जातीयव्यक्तिग्रहणे प्रमेयत्वादिसर्वं तदा ज्ञायत एव, न तु रूपान्तरेणेति चेन्न, यदि रूपान्तरेण तत् प्रमेयं तदा रूपान्तरवतोऽपि प्रमेयत्वाधारतया कथमग्रहणम् ? अथ न प्रमेयं नास्त्येव रूपान्तरेण तत् । येन तु रूपेणस्ति तेन सर्वेण प्रमेयमिति यावद्विद्यमानाकारेण ज्ञातत्वप्रसङ्गः । तथात्वस्वी-**

इत्यर्थः । षण्डकं = नपुंसकं वीर्यहीनम् । उद्वाह्य = पाणिगृहीतारं कृत्वा मुग्धायाः कामुक्याः भ्रान्तायास्ततः पुत्रप्रार्थनमिवेति । उपालम्भम् = आक्षेपम् ।

वाचस्पतिरित्यत्र मिश्रपदं नोक्तं, तथा सति तेषां वाचस्पतित्वं बृहस्पति-तुल्यत्वं न लभेत । अधुना तु वाचस्पतिमिश्र एव वाचस्पति, स एव वाचस्पतिरेव वृहस्पतिरिवेति लभ्यते । [1]'विद्वन्मानसहंसे'त्यत्र मनो मानससरोवरं च तुल्यपर-त्वात् मानसपदस्येति । षण्डकसाम्यन्तु अगृहीतव्यापकत्वे सति अनुमितिजननासा-मर्थ्यं पुत्रोत्पादने वीर्यमिव लिङ्गज्ञानस्यापि व्याप्ति-विषयत्वम् अनुमित्युत्पादनेऽ-ऽङ्गं तद्धीनमसमर्थमेव स्यादिति । सामान्यलक्षणामनङ्गीकर्तुः अनुमानत्वं प्रमाण-मभ्युपगन्तुः न मनोरथसिद्धिः स्यादित्यलौकिकप्रत्यासत्तिस्वीकारिता परस्येति ।

ननु सर्वमजानता त्वया कथं मम सार्वज्ञ्यमापाद्यते, तदज्ञाने आपाद्याज्ञाना-दिति । मम सामान्यलक्षणस्थापने या कृत्या [2]परस्यानर्थहेतुः देवतोपासना मन्त्र-प्रयोगो वा तत्तुल्या सार्वज्ञ्यापादनात्मिका सा प्रवृत्त्यैव तव जाता सामान्यलक्ष-णाङ्गीकारे हेतुत्वात् । प्रतिकृत्या हि प्राक्प्रयुक्तकृत्याविरोधिनी परेष्टस्यैव साधिका इतीयमपि तथेत्याशङ्कां परिहरति—**क्वचिदपीति** । मम हृदयस्थे वस्तुनि तवाज्ञानं मम पृष्टस्य वचनासामर्थ्यादेव निर्णीतं तन्न स्यादित्यापादनाद् इत्यर्थः ।

नन्वेवं व्याप्तिग्रहणकाले एव सर्वस्य ज्ञातत्वात् अनुमेयं किमपि न स्यादित्या-शङ्क्याह—**नन्विति** । प्रमेयत्वादतिरिक्तं यद्रूपं तदेवानुमेयं भविष्यति इति भावः ।

ननु रूपान्तरवतः प्रमेयत्वेऽपि रूपान्तरं न गृह्यते किन्तु वस्तुतो यः तद्वान् स गृह्यते इत्याशङ्क्याह—**येन रूपेणापीति** । तेन रूपेण प्रमेयमिति तद्रूपामपि

१. विद्वन्मानसहंसवैरिकमलासङ्कोचदीप्तद्युते
दुर्गमार्गणनीललोहितसमित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्षविजयप्राग्भावभीमप्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

अत्र विदुषां मानसं (मनः) एव मानसं = मानससरोवरमिति तत्रभवान् हंसः । मानसपदेन मनसः सरोवरस्य च बोधः २. अर्थहेतुः ।

**कारे च ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्तिः, ततः श्रद्धास्ये ।**

**स्यादेतत्—यथा भेदोऽन्योन्याभाववैधर्म्यादिः पृथक्, तथैक्यमपि वस्तूनाम् । ततः प्रमेयत्वाद्यपि धर्मिणानेकत्वमेकमेव । ततः प्रमेयत्वेन ज्ञायमानं तत् सर्वमपि**

प्रमितिमिति तद्रूपे [1]प्रमेयत्वसत्त्वात् तद्रूपमपि भासेत प्रत्यासत्तिसत्त्वात् अन्यथा तद्रूपेणप्रमित एव न स्यादित्यर्थः । **ज्ञायतामिति** । यदि च ज्ञाने इष्टापत्तिः तदा कथ्यतामित्यपि बोध्यम् । **प्रमेयत्वदर्शिना** इति । प्रमेयस्य स्वरूपसतः प्रत्यासत्तित्ववारणाय दर्शिनेत्याह—**चित्तवृत्तिरिति** । चित्तस्य तत्तज्ज्ञानसुखाद्याकारः परिणामः । प्रियतामित्यस्य श्रद्धास्ये, इत्यसार्वज्ञमिति शेषः । श्रद्धा, सत्यमयं सर्वज्ञ इति विश्वासः ।

अथ तद्रूपमपि प्रमेयत्वेन भासत एव तद्रूपेण यत् सामान्यं प्रत्यासत्तिः तया तत्प्रकारकमेव ज्ञानं जन्यते तथैव सामर्थ्यावधारणात् ।

किञ्च सन्निकर्षे सति अवश्यं भासत इति न नियमः तदुत्तरकाले संशयदर्शनेन तत्र दोषस्य संशयाधायकस्यैव प्रतिबन्धककल्पनादिति चेन्न । प्रमेयत्वेन ज्ञायमानानां घटत्वादीनामेव द्वितीयज्ञानार्थं प्रत्यासत्तिरस्तु तथा च घटत्वप्रत्यासत्त्या तदुत्तरं घटत्वप्रकारकं ज्ञानमस्त्विवति आपादनेति । न च प्रमेयत्वेन ज्ञायमानं सामान्यं न प्रत्यासत्तिः किन्तु स्वांशे निष्प्रकारकीभूतज्ञानविषय एव तथेति वाच्यम् । प्रमेयघटत्वमिति ज्ञानस्यातथात्वापत्तेः । नापि सन्निकर्षे सति दोषात् संशयः द्रवीभूतधर्मस्यैव सन्निकर्षत्वे तत्संशयस्यैवाभावादिति यत् सार्वज्ञ्यमापादितं तन्न सम्भवतीत्याशङ्कते—

**स्यादेतदिति** । यथा भेदो वैधर्म्यादिः धर्मिणो भिन्नः तथा वस्तूनामैक्यमपि धर्मिणो भिन्नं तच्चानुगतो धर्मः प्रमेयत्वादि, कथमन्यथा प्रमेयं प्रमेयमित्यनुगतबुद्धिः । न चैतावता प्रमेयत्वमेव एवं सिध्यति न धर्मीति वाच्यम् । अत्र हि प्रमेयाणामभेद एव भासते जातिरिव सर्वव्यक्तीनामेकं रूपं[2] नहि धर्माणामैक्येन धर्मो वा बुद्धिर्विना धर्मधर्मिणोरभेदे न सिध्यति, तस्मात् प्रमेयत्वं वस्तुत्वञ्च व्यक्तीनामैक्याभेदपर्यायो धर्मः तद्ग्रहणं कथं सर्वग्रहणमिति ।

ननु धर्मिणः[3] ऐक्यस्याभेदकथनं किमर्थमिति चेद्धर्माणामभेदात्मैक्यासिद्ध्यर्थमन्यथाधर्मिण एवाभेदात्मकाः स्युः ननु धर्मः ततश्च धर्मिणां यदि विषयास्तदा सर्वविषयता दुर्वारा प्रमेयत्वाश्रयाणां सर्वेषां भानात् । न च धर्मिण एव कथमभेदात्मकाः न स्युरिति वाच्यम् । तथासति धर्मिणोऽभिन्ना न स्युः स्वस्य [4]स्ववृत्तित्वविरोधात् । ऐक्यस्य धर्मात्मकत्वे तदाश्रयतया एकोऽभिन्नश्चेति प्रत्ययो नानुपपन्नः । **प्रमेयत्वाद्यपीति** ।

१. यत्वसत्त्वात् । २. पाठाऽसंलग्नकः प्रतिभाति । ३. धर्मितं । ४. स्ववृत्तिविरोधात् ।

**तेनैक्येन प्रतीयमानैकव्यक्त्यात्मकमेव ज्ञायमानं भवतीति कथं तदेकत्ववेदिनः सार्वज्ञ्यम्। न च वाच्यं नानात्वमपि व्यक्तीनां प्रमेयमिति तदपि धर्मितया ग्राह्यमेवेति, यतस्तदपि प्रमेयत्वादिना गृह्यमाणमेकमेव गृहीतं भवतीति। तस्माद् "एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः।"—इति। तत्त्वतः = ताद्रूप्येण एकीभूता इति।**

**तदेतदपि नोपपन्नम्, नानैकमिति। व्याहतप्रतीत्यापत्तेः। अथ रूपान्तरेण नानात्वं प्रमेयत्वादिना चैक्यमिति व्यवस्थितया न व्याघातः स्यात्, तर्हि प्रमेयत्वाद्याधारस्य व्यक्तिभेदस्य कृत्स्नस्य ग्रहणात् सार्वज्ञ्यापत्तिस्तादृश्येवेति।**

---

यो धर्मो भेदप्रतियोगितावच्छेदको न भवति स एवाभेदापरपर्यायमैक्यमित्यर्थः। ततः किमित्यत आह—**अत इति**। सर्वमपि तदेवमेत्र ज्ञातं भवति। कथं सर्वमेकमित्याशङ्क्याह—**तेनैक्येनेति**[1]। प्रमेयत्वाद्यात्मकं यदैक्यं तद्विशिष्टतया प्रतीयमानम् एकत्वाश्रयतया एकतामापन्नव्यक्त्यात्मकम् एकमेव धर्मि ज्ञातं भवति इत्यर्थः। तत् तस्मात् कथमेकत्ववादिनः सार्वज्ञ्यम्। अशेषवहुज्ञोऽपि सर्वज्ञो भवति।

नचैकज्ञानं ननु बहुज्ञ इत्युच्यते यतः प्रमेयत्वादिनेति प्रमेयत्वादेरेकरूपत्वादिति भावः। सर्वैक्यवादी स्वमतमुपसंहरति—**तस्मादिति**। भावः प्रमेयत्वादिना एकत्वेन कृत्वा यो दृष्टः। **नानैकमिति**। नानात्वेन प्रतीयमानस्य [2]एकबुद्धिविषयता न कदापि सम्भवति नानात्वस्य बहुवृत्तित्वादेकत्वस्यैकमात्रवृत्तित्वात् इति। **प्रमेयत्वाधारस्येति**। धर्मो निर्धर्मिको न गृह्यते, तस्य धर्मी सर्व एवेति तद्ग्रहणं दुर्वारमेवेति भावः।

विद्यासागरस्तु भेदाभेदालम्बनेन पूर्वपक्षयति। स्यादेतदिति। अन्योन्याभावादिर्भेद एको न भवति किन्तु भिन्न इति वैधर्म्येण दृष्टान्तमाह—**यथेति**। भेदस्य भिन्नत्वात् तद्विलक्षणमभेदापरपर्यायमैक्यं वस्तूनामेकमेवेत्याह—**तथेति**। ऐक्यस्य[3] एकत्वेन प्रमेयत्वस्य किमायातमित्यत्राह—**तत** इति। प्रमेयत्वं वस्तुत्वं च सर्वभावानामेकत्वमेकमेव[4] तथापि कथमनिष्टापत्तिपरिहार इत्यत आह—तत इति। (यतः[5] प्रमेयत्वादिलक्षणमेकत्वमेकमेवातः प्रमीयमाणं घटपटादि यद्यपि निरर्थकं तथापि) यतः सर्वप्रमेयत्वादिलक्षणेन एकत्वेनैक्यात् प्रमीयमाणायाः पुरोवर्तिन्या एकस्या व्यक्तेरात्मना स्वरूपेण ज्ञायमानमेकमेव ज्ञानं[7] भवतीत्येकत्ववेदित्वात् न सार्वज्ञप्रसङ्गः इत्यर्थः। नानात्वमपि प्रमेयत्वादिना गृह्यमाणमेकमेव

---

१. अत ऐक्येनेति। २. एव बुद्धिविषयता। ३. एकस्य। ४. सर्वभावानामेकमेव। ५. अतः।
६. कोष्ठान्तर्गतः पाठो विद्यासागर्यां नोपलभ्यते। ७. एकमेव ज्ञातं भवति इत्येकवादिनां कथम्।

**किञ्च—सामान्यलक्षणया प्रत्यासत्त्या तज्जातीयविशेषग्रहणे तासु सर्वासु व्यक्तिषु सम्बन्धास्तित्वे किं प्रमाणम् ?**

**सर्वव्यक्तिवत् तत्सम्बन्धग्रहेऽपि व्याप्तिग्राहकमिन्द्रियमेव प्रमाणमिति चेत्, तर्हि क्वचिदेवमवधारितस्य तद्व्यभिचारो दृश्यते, तन्न स्यात्, इन्द्रियेण तत्सम्बन्धस्य प्रमितत्वात् । भ्रान्तिस्तत्र सम्बन्धप्रतीतिः, पश्चाद् बाधादिति चेन्न, सामग्र्य-**

---

भवति । यस्मादित्युत्तरं श्लोकार्थापेक्षितं पूरयन्नेवाभियुक्तवचनमुदाहरति—एक इति । **सर्वे भावा** इति । असाधारणरूपेण सर्वपदार्थज्ञानं कथमनेकत्वज्ञानमित्याशङ्क्य तत्त्वत इति पदं व्याचष्टे–**तत्त्वत** इति व्याचख्यौ ।

अथ जातिव्यक्त्योरभेदेन एकजातीयसर्वव्यक्तिमानं तज्ज्ञानप्रकारीभूतधर्माश्रिय यत्किञ्चिद्व्यक्तिसन्निकर्षेणैव वा परासां व्यक्तीनां भानमस्तु न च सार्वज्ञ्यं तत्तत्प्रकारकभाने तत्तन्निर्विकल्पकस्यापि हेतुत्वात् । निर्विकल्पके च सामान्यप्रत्यासत्तिर्हेतुः सामान्यस्य प्रत्यासत्तिभूतस्य प्रकारकत्वादिति चेत् । न । व्यक्तयो विशेषाकारेण अप्रमिताः सन्ति[1] चेत्यत्र प्रमाणाभावेन तासां जात्याऽभेदोप्यप्रामाणिक इति दूषणं दुरुत्तरमेव । सामान्यस्य प्रत्यासत्तित्वपक्षेऽपि एतद्दूषणं बोध्यम् । सामान्यलक्षणया पटपटत्वप्रत्यासत्तिरूपया ज्ञातप्रमेयत्वाख्यया च पटत्वादि निर्विकल्पकं स्यात् । ततश्च सर्वप्रकारकं ज्ञानं दुरुपपादं फलानां[2] तादृशानांमदर्शनात् न ततो निर्विकल्पकोत्पत्तिरिति चेत् तर्हि सा न प्रत्यासत्तिः, सत्यामपि तस्यां कार्यादर्शनादित्येव कल्पनं ज्यायः । अत एव यत्किञ्चित् व्यक्तिसन्निकर्षाद् यावद् व्यक्तिभानमित्यप्रामाणिकमिति दिक् ।

**सम्बन्धास्तित्व** इति । व्यापकसामानाधिकरण्यं धूमव्यक्तिषु सर्वासु अस्तीत्यत्र किं प्रमाणमित्यर्थः । इदमुपलक्षणम् सामान्यस्य धूमत्ववह्नित्वादेः विशेषतोऽगृहीतासु व्यक्तिषु प्रमाणमपि दुर्लभमिति कथं तेन तद्ग्रहणम् तथा धूमाधिकरणानां सर्वेषां न सर्वज्ञत्वादिनाज्ञानं सम्भवति आनन्त्यात् । नापि धूमाधिकरणत्वेन धूमस्य अधिकरणतायाश्च पर्वतादिषु प्रत्येकात्मनावृत्तेः सामान्यत्वाभावात् । नापि धूमसामान्यमेव परम्परासम्बन्धेन वर्तमानं प्रत्यासत्तिः परम्पराघटकव्यक्तीनामत्यन्ताननुगतत्वादित्यपि बोध्यम् । **तत्सम्बन्धग्रहेऽपीति** । यद्यपि व्यक्तीनां सामान्यलक्षणया ग्रहणं सम्भवति सम्बन्धानान्तु कथम् । संयोगत्वसमवायत्वाभ्यामिति चेत् । स्यादेवं यदि तत्तत्संयोगव्यक्तिषु संयोगत्वमस्तीत्यत्र[3] किमपि प्रमाणमस्माकं भवेत् । विशेषणतया व्याप्यव्यापकभावे वा का गतिरिति दूषणमस्ति, तथापि तदुपेक्ष्य अन्यदप्याह—**तर्हि क्वचिदिति** । [4]पार्थिवत्वलोहलेख्य-

---

१. अस्फुटम् । २. फलानामतादृशानाम् ।

३. संयोगमस्तीत्यत्र किमस्माकं भवेत् । ४. लोहलेख्यत्वे ।

**भेदे काचिद् भ्रान्तिः, काचिदभ्रान्तिरिति विभागानुपपत्तेः। दोषादोषवैचित्र्यविवेचनस्य च दुष्करत्वात्।**

**कार्यभेदादेव सामग्रीवेदोऽप्युन्नेय इति चेत्, उन्नीयताम्, स एव तु कीदृगुन्नेय इति वाच्यम्। न तावत्सार्वत्रिकसम्बन्धभावाभावात्मकः, तदानीं भाविनां सम्बन्धानामसत्त्वेनाकारणत्वात्। सामान्यतश्च तज्जातीययोः सम्बन्धस्य प्रतीतेः पूर्वं सत्त्वं भ्रान्त्यभ्रान्तिसाधारणम्। क्वचिदपि सम्बन्धाभावे भ्रान्तेरनुत्पादात्।**

**किमेतावता, अन्य एव तर्हि कार्यभेदात्कारणभेदः कल्पयिष्यत इति चेत्, स हि किमिन्द्रियसहकारिभूतः करणान्तरमेव वा कल्पनीय इति वाक्यम्। नाद्यः, इन्द्रियस्य भाविभूतसम्बन्धांशे प्रमाणत्वकल्पनायां प्रमाणाभावात्। प्रत्युत व्युपरतेन्द्रियव्यापारस्यापि विचारयतः पूर्वप्रतीतसम्बन्धधर्मिद्वयस्य व्याप्त्यवधारणदर्शनात्।**

---

त्वयोः। धूमे अग्निव्याप्तिग्राहकमिन्द्रियमदुष्टं पार्थिवत्वे लोहलेख्यत्वव्याप्तिग्राहकमिन्द्रियं दुष्टमित्यस्ति सामग्रीवैलक्षण्यमिति दूषयति–**दोषादेवेति**। वैचित्र्यमिदं। न प्रत्यक्षगम्यम् इन्द्रियस्यातीन्द्रियत्वात्। यादृशेनेन्द्रियेणाग्निव्याप्तिर्धूमे गृह्यते तादृशेनैव काचकामलदोषरहितेन पार्थिवत्वेऽपि लोहलेख्यत्वव्याप्तिग्रह इति दोषस्यानुपलब्धिबाध इति मितभाषिण्याम्।

नानुमेयं लिङ्गाभावात् कार्यभेद एव अनुमापक इति शङ्कते—[1]**कार्यभेदादिति**। यद्वा विवेचनस्य दुष्करतोक्त्या दोषत्वस्य प्राक् खण्डितत्वात् तदभावस्यापि च प्रतियोगिज्ञानाधीनत्वात् दुष्करत्वमाह। कार्यभेदादेवेति। कार्यभेदोऽपि सामग्रीभेदे मानं[2] (न) दोषादोषत्वादित्युत्तरग्रन्थविरोधोऽपि नेति। तदानीमित्यस्य असत्त्वेनेत्यनेन सम्बन्धः व्याप्तिग्रहणप्राक्काले भाविसम्बन्धानामसत्त्वात्।

यद्यपि भाविसम्बन्धा विशेषात्मना न सम्भवन्ति तथापि सामान्यात्मना सन्त्येव व्याप्यव्यापकसम्बन्धस्य कस्यचित् सत्त्वादित्याशङ्कते—सामान्यत इति। प्रत्यक्षं प्रति कारणतापि सामान्यधर्मावच्छेदेनैवेति भावः। **भ्रान्त्यभ्रान्तीति**। पार्थिवत्वलोहलेख्यत्वयोरपि काष्ठादौ सम्बन्धोऽस्त्येवेति तत् प्रतीतिरपि प्रमा स्यादित्यर्थः। अत्राभ्रान्तिपदं साधारण्यनिरूपकम् अनतिप्रयोजनमेव। तदेवोपपादयति—**क्वचिदिति**। सद्वादिनो[3] मते देशान्तरगतस्यैव भ्रान्तौ स्फुरणादिति भावः।

यद्यपि च तावताऽपि कारणता नास्ति सैव चेह विवक्षिता तथापि अविद्यमानसम्बन्धव्यक्तीनां कारणता सामान्यरूपेणापि सम्भवति। वाधात् तज्जातीयत्वं चेत् कारणत्वं तदा भ्रान्तिविषयस्यापि तदक्षतम्।

**कार्यभेदाविति**। व्याप्तिप्रतीत्या सामान्यतः तत्प्रमितिमित्या च विशेषः कल्प्यः,

---

१. कार्यादादिति। २. मानं न दोषादोषत्वात्। ३. सत्वादिनोमति।

तदाऽपि मनोऽस्तीन्द्रियमिति चेत् । अस्तु. तस्मिन् कार्ये मनसः करणत्वे तु प्रमाणाभावः, अवश्यपरिकल्पनीयेनान्येनैव सर्वानुपपत्त्युपशान्ते । कारणत्वमात्रं तु चक्षुरादिजज्ञानवन्मनसस्तत्र स्यात् ।

चक्षुरादिवत्करणमन्यदेव तत्कल्पनीयमिति सप्तममिन्द्रियं प्रयाणान्तरं वा प्रसज्येत । अन्यथा चाक्षुषादिप्रतीतावपि चक्षुरादेः करणत्वं न स्यात् । शक्यते तत्रापि वक्तुं मन एव तत्र सुखादिप्रतीतिवत्करणम्, चक्षुरादयस्तु सहकारिमात्रम् ।

नापि द्वितीयः, इन्द्रियान्तरप्रसङ्गात्, प्रमाणान्तरप्रसङ्गाद्वा ।

अन्यथा कार्यस्याकस्मिकत्वापत्तेरितिभावः । वहिरिन्द्रियस्य स सहकारी मनसो वा । आद्ये आह—**इन्द्रियस्येति** । बहिरिन्द्रियस्य सम्बद्धवर्तमानग्राहकत्वात् तत्र[1] प्रमाणाभावे कल्पनीयस्य तत्सहकारितानुपपत्तेरितिभावः । व्याप्तिग्रहं प्रति बहिरिन्द्रियस्य व्यभिचारात् । कारणत्वकल्पनायां बाधकमाह—**प्रत्युतेति** । व्युपरतचक्षुरादीन्द्रियव्यापारस्य पुंसो भावयतश्चिन्तयतः व्याप्तिघटकपदार्थान् स्मरतः व्याप्तिमन्तरेण भूयः साहित्यं न उपपद्यते इति । विचारयतः इति विद्यासागरः । तदसत् । व्यभिचारिण्यपि तत्सत्त्वात् पूर्वं प्रतीतः सम्बन्धो यस्य धर्मिद्वयस्य व्यात्यवधारणदर्शनात् ।

व्यभिचारज्ञानविरहसहचार दर्शनवतो बहिरिन्द्रियव्यापारविरामदशायां व्याप्तिधीदर्शनेन बहिरिन्द्रियाणां कारणत्वं बाधितमिति प्रघट्टकार्थः ।

**कारणत्वे प्रमाणाभाव इति** । मनसः प्रमाणान्तरसहकारेणैव बाह्यार्थग्राहकत्वमन्यथा अन्धबधिराद्यभावप्रसङ्गादिति । तस्य करणत्वं व्याप्तिप्रत्यक्षे नास्तीति भावः । अवश्यं कल्पनीयेन मनसा बाह्यप्रवृत्तौ सहायभूतेनेत्यर्थः । अन्त्यशङ्कानो मनसः कारणींभूतस्यैव सहकारी सविशेषोऽस्तु इत्याशङ्कयाह—**चक्षुरादिवदिति** । करणं विना कार्यानुत्पत्तिः करणान्तरं [2]कल्पयतीति भावः ।

यदि व्याप्तज्ञानं प्रत्यक्षं तदा सप्तमम् अन्यदाह—**प्रमाणान्तरमिति** । विकल्पे[3] तात्पर्यम् । **चक्षुरादयश्चेति** । तेनान्धस्य रूपाग्रहो बधिरस्य च शब्दाग्रह इति कल्प्यमानोऽपि विशेषो यदीन्द्रियरूपस्तदा षट्सु अनन्तर्भावादिन्द्रियान्तरम्, अनिन्द्रियरूपत्वे परिगणितप्रमाणमध्यानन्त.पातात् प्रमाणान्तरत्वमिति पक्षद्वयार्थः ।

**सार्वत्रिकं व्यतिरेकयौगपद्यमिति** । व्यतिरेकयोगः सार्वत्रिकोऽन्धकारालोकयोरपि न व्याप्तिरित्यर्थः[4] । तदाह—**यौगपद्यमिति** । तदुभयव्यतिरेकयोः एकाधिकरणवृत्तिता हि क्रमेणेति भावः । **अविनाभावनियमा इति** । [5]अविनापदोक्तो

१ तत्र कारणत्वे इत्यर्थः । २. कल्प्यम् । ३. विकल्पयोस्तात्पर्यम् । ४. इत्यथत आह ।
५. विनोपदोक्त व्यतिरेकाभावपदोक्तव्यरेकयोः ।

**नापि विनाभाव एकस्य व्यतिरेकेणापरस्याव्यतिरेकः, तन्निषेधोऽविनाभाव इति द्वितीयः पक्षः। एवं हि लोहलेख्यत्वव्यतिरेकश्च पार्थिवत्वव्यतिरेकश्च क्वचिदस्तीति पार्थिवत्वलोहलेख्यत्वयोरप्यविनाभावः प्रसज्येत।**

**सार्वत्रिकं व्यतिरेकयौगपद्यं विवक्षितम्, न तु क्वाचित्कम्। अत एवोच्यते-अविनाभावनियम इति चेन्न, सार्वत्रिकान्वयावधारणनिरासन्यायेन सार्वत्रिकव्यतिरेकावधारणस्याप्यशक्यत्वात्। शक्यत्वे चाऽन्वयावधारणमेवास्तु सार्वत्रिकम्, कृतं व्यतिरेकावधारणकुटिलिकया।**

**(२) यत्र विपक्षे वृत्तौ बाधकमस्ति, तयोरन्वयो व्याप्तिरिति केचित्। तन्न, यत्तु विपक्षे वृत्तौ बाधकं तत्प्रमाणं वा तर्को वा स्यात्? आद्ये न तावदिन्द्रियम्, तदसम्भवात्। अन्यथा व्यभिचाराव्यभिचारसंशयो न स्यात्। नाप्यनुमानम्, अनवस्थाप्रसङ्गात्। नाप्यर्थापत्तिः, अनुमानाव्यतिरेकात्। व्यतिरेके वा यदि**

---

व्यतिरेकः नञाऽभावः उक्तव्यक्तिव्यतिरेकयोर्नियम इति तद्ग्रन्थार्थः इत्यर्थः। कुटिलिकाप्रतिपत्तिगौरवम्। व्यतिरेकयोरपि नियमः तत्सहचारेणैव ग्राह्यः तदुत्तरम् अन्वययोरेव तदस्तु व्यतिरेकस्य अन्वयप्रतियोगिकतया तज्ज्ञानपूर्वकज्ञानत्वेन तयोर्नियमग्रहायापेक्षितत्वादित्यर्थः।

व्याप्तिद्वितीयं लक्षणं शङ्कते– **यत्रेति**। यत्र हेतौ बाधकमस्ति तस्यान्वयः साध्येन सहचारः।

यद्वा यत्र ययोः साध्यसाधनयोर्मध्ये साधनस्य विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयोः व्याप्तिरित्यर्थः। विपक्षबाधकसध्रीचीनोऽन्वयो व्याप्तिरित्यर्थः। **तदसम्भवादिति**। इन्द्रियस्य सम्बन्धमात्रग्राहकत्वेन अतीतानागतविप्रकृष्टविपक्षसन्निकर्षाभावेन तद्वृत्तित्वाभावबोधकत्वासम्भवात्। **व्यभिचारेति**। अव्यभिचारस्य निर्णीतत्वात् क्वापि संशयो न स्यादिति सन्दिग्धानैकन्तिकोच्छेद इत्याशयः।

न च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकरूपस्याव्यभिचारस्य विपक्षवृत्तित्वाभावनिश्चयेऽपि न निश्चय इति स्यादेव तत्संशय इति वाच्यम्। विपक्षवृत्तित्वाभावनिश्चयस्य विशेषदर्शनतया तत्संशयस्याप्यनुपपत्तेः अतः एव विशेषदर्शनमपि तस्य नास्ति। नहि विपक्षवृत्तित्वाभावदर्शनमित्येव विशेषदर्शनं स्थाणुनिष्ठे वन्ता निश्चयस्यापि तथात्वापत्तेः व्याप्यत्वेन तत्तु न वृत्तमिति चेत्। सत्यम्। परन्तु योग्यानुपलब्ध्यभावात् तदवृत्तित्वमात्रं ग्रहीतुं न शक्यत इत्येव मुख्य युक्तिः। इदन्तु अभ्युच्चमात्रम्। साध्याभाववान् न हेतुमान् साध्यविरोधित्वादित्यनुमानमाशङ्क्य निषेधति—

**लिङ्गिव्यतिरेकेण लिङ्गस्यानुपपत्तिः, तदा तत एव लिङ्गिसिद्धेः कृतमनुमानेन। अनेवम्भावे च तयोः किमायातम्।**

**अस्तु वा कथमपि तावदर्थापत्तिर्बाधिका, तथापि कीदृगभ्युपगम इति प्रष्टव्यम्। किं विपक्षवृत्तिबाधकसध्रीचीनो यत्र क्वचिदन्वयो व्याप्तिः, उत तत्सहितः सार्वत्रिकोऽन्वयः, उत किं नो विशेषगवेषणेन तत्सध्रीचीनः सामान्यतोऽन्वयो व्याप्तिः, उत सार्वत्रिकान्वयः, स च विपक्षे बाधकादवगम्यते ?**

**नाद्यः, विकल्पानुपपत्तेः। तथा हि—किं विपक्षे वृत्तौ बाधकं सर्वव्यक्तिविषयम्, उत सामान्यविषयम् ? आद्ये यत्राप्यनुमानं प्रवर्तनीयं तत्रावश्योपस्थाप्यया अन्यथाभावबाधकभूतयाऽर्थापत्त्यैव साध्यसिद्धे शान्तमनुमानव्यसनेन।**

---

[1]नाप्यनुमानेन इति। तस्याप्यनुमानतया व्याप्तिमूलत्वम् एवमन्यस्यान्यस्यापीत्यनवस्थापत्तेरित्यर्थः।

मीमांसकमतमालम्ब्य अनुमानमपि निराकरोति—**व्यतिरेकेणे**त्यादिना। **तदा तत एवेति**। अनुपपत्तिज्ञानादेव पक्षीयसाध्यसिद्धेः अनुमानकार्यस्याभावा दलम्। तत्कारणीभूता[2] का व्याप्तिरिति। व्याप्यज्ञानविषयव्याप्तिवच्च एवमित्यस्यार्थः। अनेवम्भावे = लिङ्ग्यभावे **लिङ्गानुपपत्ति**रित्येवं रूपत्वाभावे। तयोर्व्याप्तिरेव नेति तद्ग्रहार्थं विपक्षबाधकानुसरणमफलमित्यर्थः।

[3]**बाधिकेति**। विपक्षबाधकं प्रमाणमिति शेषः।

अयमाशयः हेतुः सामान्यतः स्वोपपादकमात्रमाक्षिपति तावतैव तदाकाङ्क्षाशान्तेः न तु विशेषमपि, तथाहि धूमो यदि केनचित् नियतो न स्यात् कादाचित्को[4] न स्यादित्येवं तस्य कादाचित्कत्वोपपत्तौ वह्निमानिति या बुद्धिः सा आनुमानिकी एवेत्याह—**कथञ्चिदिति**[5]। केनापि प्रकारेणेत्यर्थः। **यत्राप्यनुमानमिति**। यत्र पर्वतादौ वह्न्यनुमानं तत्रापि अग्न्यभावे धूमभावः अन्यथाभावः तद्बाधिकयेत्यर्थः।

अयमाशयः यदि धूमवति पर्वते वह्न्यभावो नेति तद्बाधकाभावधीरर्थापत्तिरूपा तदा वह्निः सिद्ध एवेति अनुमानं व्यर्थम्। **द्वितीये इति**। पार्थिवत्वलोहलेख्यत्वयोरप्येवंभूतव्याप्तिप्रसङ्ग इत्युपरितनेन सम्बन्धः। [6]चरितार्थत्वदर्शनाय बाधकविषयं सामान्यतो विपक्षं धूमवत्तेत्यादिना विपक्ष इत्यन्तेन प्रदर्श्य तत्रेत्यादिना तत्र बाधककृत्यमाह—सामान्यतो बाधकस्य विरोधपर्यवसितस्याभावबोधकं बाधकमपि विरोध एव पर्यवसितमित्यर्थः। ततश्च किमित्यत आह—**अविरोधश्चेति**।

---

१. नाप्यनुमानमिति मुद्रितपुस्तके पाठः। २. तत्कारणीभूतत्का व्याप्तिज्ञानविषयव्याप्तिच्चमित्यर्थः। ३. साधकमिति। ४. कादाचित्। ५. मूले नायं पाठः। ६. चरितादर्शनाय। ७. धूमवत्तर्हीत्यादिना।

द्वितीये क्वचिद्व्यभिचारेऽपि क्वचिदव्यभिचारमाश्रित्य बाधकस्य चरितार्थत्वम्। धूमवत्तामात्रमग्निमत्तामात्रव्यतिरेकीत्येवंरूपो हि सामान्यतो विपक्षपक्षः, तत्र च बाधकं तयोरविरोधे पर्यवस्यति। अविरोधश्च क्वचित्साहित्याद् भवत्येवेति पार्थिवत्वलोहलेख्यत्वयोरपि एवम्भूतव्याप्तत्वप्रसङ्गः।

नापि द्वितीयः, विशेषणवैयर्थ्यात्। सार्वत्रिकोऽन्वय इत्येवोच्यताम्। न च सोऽपि सङ्गत इत्युक्तम्।

नापि तृतीयः, बाधकस्य सामान्यविशेषविषयताविकल्पोक्तयुक्त्यैव निरस्तत्वात्।

नापि चतुर्थः। तथा हि—यद् धूमवत् तदग्निमदित्यत्रेदमन्वयस्य सार्वत्रिकत्वं वाच्यम्—यत्सर्वासां धूमव्यक्तीनामग्निसम्बन्धित्वम्, तद्यति व्याप्तिग्रहकाले गृहीतम्, तदा पक्षस्यापि धूमवद्व्यक्तेरग्निमत्त्वं प्राक् गृहीतं स्मर्यत एवेति गतमनुमानम्।

सामान्यतोऽग्निमत्त्वं तस्यापि गृहीतमेव, विशेषतस्त्वनुमीयत इति चेन्न। विशेषत इति किमग्निमत्त्वस्य विशेषो व्यक्तिरूपो विवक्षितः, उत कालदेशादिसम्बन्धस्तस्य ?

---

इत्युक्तमिति। सम्बन्धसार्वत्रिकत्वस्य असर्वज्ञेन ज्ञातुमशक्यत्वादित्येवम्। तृतीय इति। विपक्षबाधकोपेतमन्वयमात्रमित्यर्थः। सामान्यविषयत्वे व्यभिचारिण्यपि व्याप्तिः स्यात्। विशेषव्यक्तिविषयत्वे[1] अर्थापत्त्यैव साध्यसिद्धेरनुमानानवकाशः इत्यर्थः। यदीति असन्देहे यदि वेदाः प्रमाणं स्युरितिवत्। विशेषत[2] इति। पक्षधर्मतावललभ्यो[3] विशेषोऽनुमानस्य प्रमेय इत्यर्थः। इदानीम्भावो वर्तमानसत्त्वम्। देशविशेषावस्थानं पर्वतादिवृत्तित्वम्। कृतमनुमानेनेति।

नचैवं वह्निमनुमिनोमीति प्रत्ययो न स्यात् स्याच्च वह्निं साक्षात्करोमीति वाच्यम्। अनुमितित्वस्य साक्षात्त्वाव्याप्यत्वात्[4] चाक्षुषादिवत् साक्षात्करोमीति न प्रत्ययः। दोषविशेषसहकृता लौकिकसन्निकर्षजन्यत्वाभावस्य तद्व्यञ्जकत्वात्। दोषविशेषेत्युपादानात् अलौकिकसन्निकर्षजन्येऽपि रजतं साक्षात्करोमीति साक्षात्वाभिव्यक्तिः।

किञ्च यद् यत्रास्ति तत्र तदवश्यं गृह्यते [5]इति न नियमः प्रमाणाभावात् सामग्रीसत्त्वे गृह्यते एवेति नियमः। सा च नास्ति अनुमितित्वभानसामग्र्या एव प्रतिबन्धकत्वात्। अतएव आत्मानुमितौ साक्षात्त्वं[6] न भासितं लौकिकसन्नि-

---

१. सर्वव्यक्तिविषयत्वे। २. विषेषतवत्। ३. पक्षधर्मतावल्लभ्यः।
४. इति नियमः। ५. साक्षात्त्व व्याप्यत्वात्। ६. साक्षात्त्वं भाषितम्।

नाद्यः, सर्वव्यक्तीनां व्याप्तौ प्रतीतत्वेन भवतैवाङ्गीकरात् । नापि द्वितीयः, अग्निमद्रूपतया स्मृतस्य पक्षीभूतस्य धूमवद्विशेषस्य चक्षुरादिभिरेव पर्वतत्वादि-देशकालविशेषादिमत्तया परिच्छेदात् । यथा प्राक्प्रत्ययाहितसंस्कारसध्रीचीनैश्च-क्षुरादिभिः परिच्छिद्यमानेदानीम्भावदेशविशेषावस्थानादेः स एवायमिति प्रत्यभिज्ञायमानताऽङ्गीक्रियते, तथैव अत्राऽप्यस्तु, कृतमनुमानेन ।

नाप्युपमानं बाधकं विपक्षे शक्यं वक्तुम्, तस्य नियतविषयत्वेनैतादृशे विषयेऽनुदयात् । नापि शब्दः, आप्तस्योपदेष्टुरभावे व्याप्त्यनवगप्रसङ्गात्।

अभावस्तु कदाचित् स्यात्, सोऽपि निरूप्यमाणो न घटते । एवं स वाच्यः– यदि वह्निव्यतिरेकेण धूमः स्यात्तदा तथोपलभ्येत न चोपलभ्यते, अतोऽनुपलम्भा-नास्ति तद्व्यतिरेकेणेति । तच्च न । तथा हि—क्वचिद्व्यभिचारादर्शनाद्वा

---

कर्षस्य साक्षात्वव्यञ्जकस्याभावादित्यपास्तम्[१] । रजतभ्रमे साक्षात्वस्यानुभवात् ।

किञ्च आत्मानुमितौ साक्षात्त्वं न भासते इत्युभयसिद्धं तत् किमसत्त्वादेव उत अनुमितित्वभानसामग्र्याः प्रतिबन्धकत्वात् । तत्र नाद्यः । साक्षात्त्वस्य इन्द्रियजन्यतावच्छेदकत्वेन तत्रापि सत्वात् । अत एवेन्द्रियत्वेन जन्यतैव तत्प्रयो-जिकेति निरस्तम् । लाघवेन इन्द्रियजन्यत्वस्यैव तथात्वम् ।

नच स्मृतिवलेन तत्रापि व्याप्तिविशिष्टत्वात्[२] स्मृतित्वमपि साक्षात्त्वाव्याप्य-संस्कारजज्ञानमात्रवृत्ति । यदि च तान्त्रिकाणां तत्र साक्षात्त्वव्यवहारो नास्तीत्यु-च्यते तदा संस्कारासहकृतेन्द्रियजन्यज्ञानादेव साक्षात्वम् ।

अपि च मनसः सर्वज्ञानकारणता उभयवादिसिद्धा यथा चक्षुरादिसहकृतं प्रत्यक्षविशेषे करणं तथा परामर्शसहकृतमनुमित्यात्मकप्रत्यक्षेऽपि । नच प्रत्यक्षत्व-मेवासिद्धम् । अनुभवत्वमेव प्रत्यक्षत्वं नानुभवविशेषत्वं गौरवात् माना-भावाच्च ।

एतेन तस्या मानसत्वे परामर्शापेक्षा न स्यादित्यपास्तम् संशयोत्तरं प्रत्यक्ष-तया तदपेक्षणात् अन्वयव्यतिरेकाभ्यां तत्कारणत्वावधारणाच्चेति दिक् ।

तस्येति । उपमानस्य संज्ञासंज्ञिसम्बन्धः प्रवृत्तिनिमित्तं वा सादृश्यमेव वा मीमांसकमते प्रमेयं नत्वभाव इत्यर्थः । अनुपलम्भाख्यप्रमाणस्य इतिकर्तव्यताभूत-तर्कमाह—एवमिति । एवमुपकरणमित्यर्थः ।

तथाहीति । क्वाचित्कव्यभिचारादर्शनं व्यभिचाराभावं प्रमापयति, सार्वत्रि-कव्यभिचारादर्शनं वेति[३] । सर्वत्रयोग्यानुपलम्भः सः । आद्ये आह—नेति । अतीता-

---

१. साक्षात्त्वव्यञ्जकस्य भावात् । २. तत्रापित्ति ।

३. क्वाचित्कदर्शनमिति ।

**अयमभावः प्रवर्तते, सर्वत्र व्यभिचारादर्शनाद्वा ? नाद्यः, पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गात् । न द्वितीयः, सर्वत्र योग्यानुपलम्भो वाऽनुपलम्भमात्रं वा वाच्यम् ? नाद्यः, सर्वत्र योग्यानुपलम्भासम्भवात् । नापि द्वितीयः, पार्थिवत्वलोहलेख्यत्वयोरपि सम्भवात् ।**

**तत्र वज्र एव व्यभिचार इति चेन्न, तदीयादर्शनदशायां व्यभिचारानवगमात् । तद्दर्शनदशायां तावदस्ति व्यभिचारः । यत्र तु न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिरिति चेत्, अत्रापि व्यभिचारो न द्रक्ष्यत इत्यत्रापि नियामकादर्शनात् ।**

**नापि विपक्षे बाधकस्तर्को वाच्यः, तर्कस्य व्याप्तिमूलत्वाभ्युपगमेऽनवस्थाप्रसङ्गात् । तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापादात् ।**

**अथ ब्रूषे—न शक्यमिदं वक्तुम् । यथा हि—अग्निधूमव्यभिचारशङ्कायां बाधकः तर्कोऽयमभिधीयते—'यदि धूमोऽग्निं व्यभिचरेद्, अकारणकः सन्नित्यः स्यात् न स्यादेव वा ।' स चायमनुत्तरस्तर्कः, तत्र शङ्कायां व्याघातापत्ते । तदेव**

---

नागतविप्रकृष्टानां व्यभिचाराणां योग्यतत्वासम्भव इत्यर्थः । **सम्भवादिति** । क्वचिदिति शेषः । नत्वनुपलम्भस्य योग्यता सहितस्य सार्वत्रिकत्वमपेक्षितम् ।

ननु अनुपलम्भमात्रमित्यत्र प्रतियोगियोग्यताया एव व्यवच्छेदो नत्वनुपलम्भे सार्वत्रिकत्वविशेषणस्य नवाऽनुपलम्भविशिष्टयोग्यताया अपीत्याशङ्कते—**तत्र वज्र एवेति । तदीयादर्शनेति** । यदा[1] वज्रस्यादर्शनं तदा व्यभिचारोपलम्भो नास्तीत्यर्थः । तथाच काष्ठादौ व्यभिचारानुपलम्भस्तावदस्त्येव अत्रापि तदनुपलम्भे सार्वत्रिकोऽनुपलम्भोऽस्त्येवेति । ततश्च तत्र व्यभिचाराभावः स्यादितिभावः । तददर्शनदशायामस्ति व्यभिचारानुपलम्भः । तावदस्त्येवात्रापि तदनुपलम्भे सार्वत्रिकोऽनुपलम्भोऽस्त्येवेति । ततश्च तत्र व्यभिचाराभावः स्यादिति भावः । तद्दर्शनदशायामस्ति व्यभिचार इति ।

यदा दर्शनं तदा अनुपलम्भाभावाद् व्यभिचाराभावनिश्चयो नास्तीति कथं व्याप्तिः किन्तु व्यभिचार एव तर्हि कुत्र व्याप्तिरित्यत आह—**यत्रेति** ।

यद्यपि धूमे व्यभिचारो न दृष्टो न दृश्यते वा तथापि न दृश्येत इत्यत्र मानाभावेन [२]व्याप्त्यभावप्रसङ्ग इत्यर्थः । विपक्षबाधकं प्रमाणं न सम्भवतीत्युक्ते तर्को विपक्षे बाधक इति द्वितीयं पक्षमनुवदन्नेव दूषयति—**नापीति** ।

**इदं वक्तुमिति** । अनवस्थापादकं वाक्य (बाधक) मित्यर्थः । **अनुत्तर इति** । शङ्काप्रतिपादकोत्तररहितः[१] इत्यर्थः । तदेवोपपादयति—स्वक्रियाकथाप्रवृत्त्यादिका ।

---

२. यदा व्रजदर्शनं तदा । १. व्याप्त्यभाव । २. शाङ्करीसम्मतोऽर्थः ।

ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोक-मर्यादा। एवं सर्वत्रानुत्तरस्तर्को बाधकोऽभिधेय इति।

मैवम्, किमित्येवं शङ्कितव्यं यद्धेतुफलभाव एव न भविष्यति। एवं तु शङ्कितव्यम्—अग्निं विहायान्यस्मादपि हेतोरयमुदेष्यती'ति।

न च वाच्यम्—एवं हि सति धूमस्यैकजातित्वं न स्यादिति, क्वचिदिन्द्रिय-जन्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ज्ञानैकजात्यवत्तदुपपत्तेः।

तत्रेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारित्वादौ प्रयोजकत्वम्, न ज्ञान-तायामिति चेन्न, ज्ञानत्वस्याऽऽकस्मिकत्वपरिहारार्थं तत्कारणस्यानुगतस्य भवताऽ-वश्यं वक्तव्यत्वात्। धूमेऽपि वह्नेर्विशेष एव प्रयोजकत्वस्य तद्वच्छङ्कितुं शक्यत्वात्।

---

अथवा उत्तरो न विद्यते यस्य[१] सोऽनुत्तरः। व्याप्तिग्रहार्थमपेक्ष्यमाणोत्तरतर्कहीन इत्यर्थः। अनुत्तरः=अपरिहार्य इति वार्थः। तर्हि व्याप्तिमूलकत्वशङ्कायाःको विषय इत्याशङ्क्य कथयतीति व्याख्यानम्। स्वक्रियाव्याघातादय इत्यत्रादिपदेन स्ववचन-स्वभावव्याघातयोः परिग्रहः। यथाहि कार्यं कारणपूर्वकं नेत्यत्र शङ्कायां कारणो-पादानक्रियाव्याघातः तथा कारणाधीनात्मलाभत्वं कार्यत्वं तदकारणकमित्युक्ते स्वभावव्याघातः स्ववचनव्याघातश्चेति लोकमर्यादा=प्रामाणिकी व्यवस्था। व्याघातपरिहारेण शङ्कां दर्शयन् परिहरति—

**मैवं किमित्येवमिति।** यतः शङ्काया हेतु फलभाव एव न भवति एवं शङ्का न कार्या। कीदृशी कार्या इत्यपेक्षायामाह—एवन्तु शङ्कितव्यमिति। क्वचिद् वह्निजन्यो धूमः क्वचिदन्यजन्यं इति विकल्पोऽपि न सम्भवति धूमात्मककार्यस्यै-कजातीयत्वात् इत्याशङ्कते **नच वाच्यमिति। क्वाचेदिति।** घटप्रत्यक्षस्य इन्द्रिय-जत्वे इन्द्रियानुमितेरनुमानजन्यत्वे धर्मज्ञानस्य शब्दजन्यत्वेऽपि त्रिषु यथा ज्ञानत्वा-ख्या एका जातिः तथा वह्नितदितरप्रयोज्ये धूमेऽप्येका जातिरस्त्विति।

ननु विभिन्नकारणप्रयोज्ययोर्घटपटयोर्वैजात्यमेव[२] इन्द्रियादिप्रयोज्यानामपि साक्षात्कारत्वादिना वैजात्यं नच धूमे तथास्तीति इत्याशयेन शङ्कते—तत्रेन्द्रियादी-नामिति। इन्द्रियादीनि ज्ञानतायामपि प्रयोजकानि अन्यथा तस्य अनुगतकारणा-न्तराभावेन आकस्मिकतापत्तेः। नचात्ममनःसंयोगः तदवच्छिन्नप्रयोजकस्तस्य दूषयिष्यमाणत्वात्। न च व्यभिचार एकशक्तिमत्वेन तथात्वात् तथा वह्नितदन्य-योरपि धूमत्वावच्छिन्नं प्रति कारणतायाः शङ्क्यमानत्वमिति भावः।

तत्कारणस्य=ज्ञानसामान्यकारणस्य अनुगतस्य एकशक्तिमत्त्वेन इन्द्रि-यादेरेव।

---

२. यस्याः सानुत्तरः। १. वैजात्यमेव न।

न दृश्यते तावदग्निप्रयोज्यो धूमे विशेष इति च न वाच्यम्, तददर्शनस्य आपाततो हेत्वन्तरप्रयोज्योवान्तरजात्यदर्शनेन अयोग्यतयाऽविकल्प्यत्वादप्युपपत्तेः। यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो द्रक्ष्यते, तदाऽसौ विकल्पिष्यत इति सम्भावनाया दुर्निवारत्वात्।

अस्त्यात्ममनोयोगोऽनुगतं कारणं ज्ञानोत्पत्ताविति चेन्न, यद्यात्ममनोयोगादुत्पद्यमानं ज्ञानं स्यादिच्छादयोऽपि ज्ञानं प्रसज्येरन्। यदि त्वदृष्टविशेषो वा

---

अथ ज्ञानत्वस्य प्रयोजकं नेन्द्रियादिकं किन्तुसाक्षात्कारत्वादीनामेव प्रयोजकमित्युच्यते तदा वह्निरपि न धूमसामान्यप्रयोजकं किन्तु धूमगतविशेष एव प्रयोजको धूमत्वन्तु ज्ञानतुल्यमित्येव शङ्किष्यते इत्याह–धूमेऽपि [1]वह्नेर्विशेष एव = धूमगतविशेष एव वह्नेः प्रयोजकत्वमित्यर्थः। इन्द्रियादिप्रयोजकसाक्षात्त्वादिवद् धूमे विशेषो न दृश्यते इति योग्यानुपलब्ध्या बाधं शङ्कते—न दृश्यते[२] इति। अविकल्प्यत्वात् विशिष्टज्ञानाविषयत्वात्। नानुपलम्भमात्रम् अभावनिश्चायकं किन्तु योग्यताविशेषितम्। न च विशेषग्रहसामग्री तदास्ति वह्निप्रयोज्यधूमगतविशेषस्य हेत्वन्तरप्रयोज्यधूमगतविशेषप्रतियोगिकतया तज्ज्ञाननिरूप्यत्वात्। यदि च जातिर्न सप्रतियोगिका तदापि अन्वयव्यतिरेकाभ्यां हेत्वन्तरप्रयोज्यजातिविशेषज्ञानमेव तादृशजातिग्रहे हेतुरिति।

वस्तुतः तृणारणिमणिजन्यवह्नौ जातिविशेषग्रहो यथा नापाततः प्रथमदर्शनात् तथेहापीति शक्यते वक्तुम्।

नन्वेवं धूमसामान्यं किं प्रयोज्यं स्यात्। नच धूमविशेषसामग्रीषु धूमसामग्रीत्वं किञ्चिदस्तीति चेन्न। ज्ञानत्ववदुपपत्तेः। तत्रास्त्यनुगतं कारणमिति वैषम्यं शङ्कते—

आत्ममनोयोग इति। इच्छादय इत्यादिपदेन द्वेषसुखादीनां परिग्रहः। नन्विच्छात्वादिप्रयोजकसामग्रीसहकारेणात्ममनःसंयोग इच्छादिकमपि जनयिष्यति, सहकारिविशेषाधीनत्वात् कार्यविशेषजनने सामान्यकारणस्य। तथा च यथा ज्ञानसामग्रीमादाय ज्ञानम् इच्छादिसामग्रीमादायेच्छादिकमपीति नैतावता ज्ञानत्वप्रयोजकता हीयते इति चेत्।

अत्र मैथिलाः। यदि ज्ञानमेव जनयतीति नियमस्तदेदमापादितम् अन्यथा ज्ञानत्वस्य नित्यज्ञानवृत्तितत्वेन तत्प्रयोज्यतानुपपत्तेः। यदि च प्रत्यक्षादिवृत्तिज्ञानतायां किं प्रयोजकमिति शङ्कायामिदमुत्तरं तदा अतिप्रसङ्गः। यद्वि च सामग्री-

---

१. धूमेऽपिधूमे विशेषः। मूले तु नैवंविधः पाठः। धूमे विशेषो वह्नेः प्रयोजक इत्यन्वयः।

**शक्तिभेदो वा ज्ञानत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते, तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम् ।**

**दृष्टे व्यभिचारे युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत्, अस्तु दृष्टे तन्निश्चयः । अत्रापि व्यभिचारो न द्रक्ष्यत इत्यत्र नियामकाभावात् शङ्क्ष्यते ।**

**एवं शङ्क्ष्यमाणस्य भवतो न क्वचिदनुमानं स्यात् । प्रतिवाद्यात्माद्यनुमानादिव्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या स्वयं स्वकर्तव्येष्वनुमानेष्वेतादृशशङ्काक्रमणात् स एव व्याघात इति चेन्न, धूमवद्वह्नेरपि वह्निकारणविशेषानुमानस्यैवं सति सदनुमानत्वप्रसङ्गात् । सामग्रीसाम्येन प्रमाप्रमावैचित्र्यानुपपत्तेः ।**

---

सहिता सा प्रयोजिकेत्युच्यते तदा तुल्यं विशेषसामग्रीसहिता[1] धूमेऽपीतिभावः । **यदि चेति** । मीमांसकानां शङ्का नैयायिकानां शक्तेरनङ्गीकारादिति विद्यासागरः । तन्न आत्ममनःसंयोगेन ज्ञानजननेऽदृष्टविशेषः सहकारीति नैयायिकानां शङ्का कदाचिदस्ति ज्ञानजनकेषु शक्तिभेदोऽनुगतः स एव कारणमिति । कारणताप्रयोजकं तदवच्छिन्नकारणमित्यर्थः । शक्तिमतः कारणादभिन्ना शक्तिरित्यभिप्रायेण वा कारणपदम् । **ज्ञानत्वजातिर्वेति** । साहि नित्यतया सर्वस्माद् ज्ञानात् प्राक् सतीति तस्या एव अनन्यथासिद्धत्वं कल्प्यते ।······वा जन्यज्ञानस्य **ज्ञानस्य** ज्ञानत्वविशिष्टस्य तदात्मनोत्पत्तिः विशेषणीभूतज्ञानत्वाधीनेति विशिष्टातिरिक्तवादिनां सम्मतम् । **ज्ञानप्रागभावो वेति** । क्लृप्तं हि प्रागभावस्य कारणत्वं तदेव न्याय्यम् । **तदितरत्रापि इति** । तच्चतुष्टयं धूमत्वप्रयोजकमित्यर्थः ।

**दृष्टे व्यभिचार** इति । दृष्टानामिन्द्रियलिङ्गादीनां जन्यज्ञानमात्रे व्यभिचारादित्यर्थः । **अस्य दृष्ट[3]** इति । व्यभिचार इत्यनुषङ्गः । तन्निश्चयः अदृष्टकारणनिश्चयः । **अन्यत्रेति** । व्यभिचारनिश्चयादन्यत्र कारणान्तरस्य निश्चयोऽस्तु धूमे तु वह्निव्यभिचारसंशयादृष्टकारणान्तरसंशयो भविष्यति ।

यद्यपि व्यभिचारो न दृष्टो नवा दृश्यते तथापि न द्रक्ष्यते इति निश्चयाभावो नियामकाभावादिति भावः । **प्रतिवाद्यात्मानुमानादीति** । प्रतिवादिशरीरं सात्मकं प्राणादिमत्त्वात् मच्छरीरवदित्यनुमानाभावे कस्य प्रवोधार्थं कथाप्रवृत्तिः । आदिपदात् परचैतन्यानुमानं परास्फुरणाभावानुमानं[5] च न स्यात् । ततश्च किमुद्दिश्य साधकं बाधकं वा ब्रूयादिति कथापि न स्यादिति भावः । शङ्कामनिच्छतोऽपि व्याघात इति वक्तुं प्रथमतोऽतिप्रसङ्गमाह—**धूमवद्वह्नेरपीति** । अयं देशो वह्निमान् वह्नेरित्यपि सदनुमानं स्यात् । सदनुमानत्वप्रसञ्जकं सामग्रीसाम्यमाह—**सामग्रीति** । पक्षधर्मत्वादेर्दोषस्य च समानत्वाद् धूमाद् वह्न्यनुमानं[4] वह्नेः

---

१. तुल्यमविशेष । २. यदि तु इति मुद्रितपुस्तके पाठः । ३. अस्तु दृष्टे इति मुद्रितपुस्तकपाठः । ४. धूमाद्वह्न्यनुमानं वा वह्नेरव च । ५. एनुमानप्रमाणम् ।

साधारणधर्मदर्शनविशेषादर्शनादौ सत्यपि शङ्कायाश्चानुदये सामग्र्यां सत्यामपि कार्यानुदयात् परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि स्वक्रियाव्याघातस्तुल्यः ।

व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति मत्पक्षे, कुतो व्याघातसाम्यमिति चेन्न, तद्धि न तावत् आहारादिकारणाज्जायमानमेष्टव्यम्, कूटविषयस्य तस्यातिप्रसञ्जकत्वात् । कूटभिन्नः प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्न, तस्य तर्कावसरे निरस्यत्वात् ।

तस्मात् यदेतद्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते, तत् किं प्रमाणात् कुतश्चिदुपजायमानं वक्तव्यं तर्काद्वा । यदि प्रथमः शङ्कास्तित्वमपि तेनैव प्रमाणेनोपनेयम्, शङ्कायां सत्यां व्याघातात् । यदि च शङ्कां विनाऽपि व्याघातः, तदा शंकमानाशंकमानयोर्व्याघातस्य साम्यं सिद्धमेव ।

भवतु शंकायामपि तत्प्रमाणम्, किमेतावता ? प्रथमोपजातशंकामवलम्ब्य व्यवस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात् शंकान्तरं नोत्पद्यत इति चेन्न,

---

धूमानुमानं वा प्रमाणमिति वैचित्र्यानुपपत्तिरित्यर्थः । वह्निव्यतिरेकेण धूम इति शङ्कैव नोदेति व्याघातादिति चेत् । तर्हि सत्यामपि शङ्कासामग्र्यां शङ्कानेति वदतस्तवापि व्याघात इत्याह—**साधारणेति** । आदिपदेन विशेषादर्शनपरिग्रहः ।

**तद्धीति** । व्याघातात्मनो विशेषस्य दर्शनं व्याघातस्वरूपमिति मिश्रः । आहारः = इच्छोत्प्रेक्षा । आदिपदात् वाक्याभासादिपरिग्रहः । कूटम् = असदर्थविषयकम् । यदि पार्थिवत्वं लोहलेख्यत्वं व्यभिचरेत् तर्हि प्रमेयं न स्यादित्यपि व्यभिचारशङ्कावारकं स्यादित्यर्थः । **कूटभिन्न इति** । वास्तवाद् व्याप्याद् वास्तवस्यैव व्यापकस्य प्रसञ्जनमित्यर्थः । एतच्च[1] तर्कस्वरूपमेव तच्चाग्रे दूष्यमित्याह—**न तस्य तर्क इति** । प्रमाणवत् प्रमितविषयत्वे तत्प्रत्यक्षादित्वमेव न स्यादिति । तर्केण निरस्तत्वादित्यर्थः । यस्मादेवमुपेक्षादिजत्वं न सम्भवति तस्मादजन्यत्वं वाच्यमित्याह—**तस्मादिति** । आहारादितत्पक्षस्य दुष्टत्वात् । **शङ्कायां सत्यामेवेति** । तथाच शङ्कायां सत्यामेव व्याघाताभिधानेन शङ्काविशिष्टत्वात् व्याघातस्य विशेषणविशेष्ययोरेकप्रमाणविषयत्वादित्यर्थः इति विद्यासागरः । तच्चिन्त्यम् । शङ्कायां व्याघातविशेषणत्वे मानाभावात् । यतः शङ्कानिमित्तको व्याघातस्ततोऽप्रामाणिकस्य निमित्तत्वासम्भवात् शङ्कापि प्रामाणिकी स्यादित्यर्थं इत्येवं व्याख्येयम् ।

---

१. तर्हि तर्कस्वर समेवैतिः ।

**व्याघातसत्ताकाले तदवलम्ब्यया शंकयैव शंकयमानव्यभिचारता, तस्याः शंकाया व्युपरमे च तदवलम्बिनो व्याघातरूपस्य विशेषस्वाभावात् कः शंकान्तरोत्पत्तेर्वारयितेति वक्तव्यम् ।**

**मा नामास्तु तदा व्याघातात्मा विशेषः, तदवगस्तदाहितो वा संस्कारस्तादस्ति । विशेषावगमतत्संस्कारौ च शंकाविरोधिनौ, न तु स्वरूपेण क्वचिदपि विशेषस्यावस्थानं तथेति चेन्न, अयावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारः; तस्य कालान्तरेऽपि तत्प्रतिधर्मसंशयविरोधित्वे अवयविपाकपक्षे कुम्भस्य परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितपाकस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात् ।**

**यदि च शंकायां व्याघातस्तदा शंकाश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनात् शंकायां शंकान्तरं मा भूत् । यदि तु व्यभिचाराश्रस्तदा व्यभिचारः स्यादेव, व्याघाताश्रयस्य व्यभिचारस्यापि प्रमित्यापत्तेः ।**

---

अन्वयमुखेन उपपाद्य व्यतिरेकमुखेन उपपादयति—**यदीति** । **शङ्कमानेति** । यथा शङ्कमानस्य मम व्याघातस्तथा तच्छून्यस्य तवापि स्वक्रियाव्याघातः स्यात् शङ्का सदसत्वयोर्व्याघाताप्रयोजकत्वादित्यर्थः । **ननु स्वरूपेण विशेषयोरवस्थानं क्वचिदपीति** । सत्यपि पुरोवर्तिनि पुरुषत्वे **वक्रकोटरादौ** संशयोच्छेदात् सत्यपि च तदज्ञाने संशयोत्पत्तेः तद्दर्शनजन्यसंस्कारविशेषावगतयोरन्यतर एव विरोधीत्यर्थः ।

यावद् द्रव्याभाविनो विशेषस्यानिश्चितत्वात् संशयो भवत्येवेत्यत आह—**अद्यावदिति** । श्यामरूपस्येत्यर्थः । तत्प्रतिधर्मस्तस्य प्रतिकूलो विरोधीधर्मः पीतरक्तादिः । **संशयो न स्यादिति'** । अस्ति च कुम्भकारस्य [१]पाकनिक्षिप्तभस्माद्यावरणतिरस्कृतरणनेन वीक्षणं किमयं रक्तो न वा कदारम्भकः परमाणुः अधुना रक्तो न वेति पाकजन्यरूपविशेषो रक्तपीतादिः ।

विद्यासागरस्तु पाकजन्यसंशयो न तु रक्तिमगुण इति पूर्वपक्षयित्वा सत्यमेव परन्तु तत्राप्यनुपपत्तिस्तुल्यैव पूर्वपाकजत्वस्योपलम्भात् इति व्याचख्यौ । तच्चिन्त्यम् । एवं व्याघातविषयत्वशङ्काया दोषमुद्भाव्य व्याघाताश्रयत्वं विकल्प्य दूषयति—**यदिचेति** । तच्चिन्त्यम्[२] । एवं व्याघातविषयत्वं शङ्काया दोषमुद्भाव्य व्याघाताश्रयत्वं विकल्प्य दूषयति ।

अयमाशयो व्याघातस्याश्रयो न हेत्वादि केनाप्युच्यते अतः तस्य शङ्का वा आश्रयः किं वा व्यभिचारः । आद्ये-शङ्कायां व्याघाताश्रयभूतायां शङ्का माभूद् आश्रयभूता तु स्यादेवेति न व्याप्तिविषयः । द्वितीये त्वाह—यदिचेति ।

---

१. भस्माद्याचरण । २. आदर्शपुस्तके द्विवारं पठितं तच्च न युक्तम् ।

**अनादिसिद्धव्याप्तिकास्ते तर्का इति चेन्न, तद्बुद्धेः प्रमितित्वासिद्धेः शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्यप्रमात्वोपगमाद् अनादित्वासिद्धेश्चोभयत्राविशेषात् ।**

**नापि यत्रत्र व्यभिचारः शङ्क्येत, तदा व्याघातः स्यादित्येवंरूपात् तर्काद्व्याघातावगमः, व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वापातात् । तादृशस्यापि व्याघातोपनायकत्वे व्याघातापत्तेश्च साम्यम् । शक्यत एव तर्काभासाद् भवतोऽपि व्याघात उपनेतुम् ।**

---

**अनादीति** । अनादिसिद्धा मूलभूता व्याप्तिर्येषां ते तथा । अनादिपुरुषपरम्परायां तद्बुद्धिधारास्तित्वमनादिसिद्धम् तेन न युगपद् व्याप्तिग्रहापेक्षाया, अनवस्था (अतः) असञ्जातविरोधितया च लब्धप्रतिष्ठत्वात् बलवत्तराः तर्काः आगन्तुकं व्यभिचारसंशयं शमयिष्यन्तीत्याशयः । **तादृस्यापीति** । आभासत्वं व्याघातसाधकत्वञ्च इति विरुद्धद्वयसमुच्चयात्मकव्याघातापत्तेरित्यर्थः । अयं व्याघातस्त्वया नापादयितुं शक्यते [१]व्याप्त्यनङ्गीकारेण तस्याभासत्वात् इत्याशङ्क्याह— **शक्यत इति** । यथा त्वया आभासरूपो व्याघात आपाद्यते तथा मयापि शक्यते आपादयितुमित्यर्थः । एवं व्याघातसदसत्त्वयोः शङ्कामापाद्य यत् न्यायाचार्येण शङ्का सदसत्त्वयोरनुमानास्तित्वे युक्त्यभिधायकं वाक्यमुक्तं तदस्मत्पक्षेऽपि वक्तुं शक्यते इति [२]उष्ट्रलगुडन्यायापातो भवतः इत्युपहसन्नाह—**तस्मादिति** । यस्माद् व्याघातसत्त्वासत्वयोः शङ्का स्यादेव तस्मादस्मिन्नर्थे अस्माभिरपि [३]त्वद्गाथैव न दुष्पठा किन्तु सुपठैवार्थाभेदात् ।

कथं सुपठत्वमित्याशङ्क्याह—**अन्यथाकारमिति** । अन्यथाकारं यथा स्यात् तथा कियन्ति अक्षराणि कृत्वेत्यर्थः इति विद्यासागरस्य योजना ।

कियन्ति अक्षराणि त्वद्गाथा अन्यथाकारं न दुष्पठेति मिश्रस्य ।

तद्गाथा कियन्ति अक्षराणि अन्यथा कृत्वा न दुष्पठेत्यन्वये सिद्धाप्रयोगत्वाभावात् "अन्यथैवं[४] कथमित्थं सुसिद्धाप्रयोगश्चेत्" इति सूत्रेण प्रयोगः स्यादिति ।

---

१. त्यागीकोर । २. तन्मूलकूटन्याय इति पाठः । वस्तुतः उष्ट्रलगुडन्यायः । अयमाशयः । अयं हि स्वमते परेणोद्भाव्यमानानां दोषाणां तन्मतेपाततेऽवतरति । यथा उष्ट्रेणोह्यमानेनैव लगुडेन तस्त प्रहारः तथा प्रकृतेऽपि । ३. त्वद्गाथैव ।

४. ३।४।२७ पाणिनि सूत्रम् । अन्यथा एवम् कथमित्थमेषां शब्दानां द्वन्द्वे कृते सप्तमी बहुबचने 'अन्यथैबं कथमित्थं सु" इति निष्पद्यते । सिद्धः अप्रयोगः=प्रयोगाभावो यस्य कृञ्धातोः स सिद्धाप्रयोगः । एषु उपपदेषु कृञ् धातोर्णमुल्भवति यदि तत्र कृञ्ः प्रयोगाभावेऽपि तदर्थावगनि स्यात् । अर्थात् निष्फलः प्रयोगोयत्र । अन्यथा भुङ्क्ते इत्यतो ।

अथ तर्कस्य व्याप्तिर्मूलभूताऽभ्युपगम्यते। तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव। तत्रापि व्याघातापादने पुनरित्थमनवस्थैव।

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ॥४४॥

---

शङ्काचेदनुमास्त्येव नचेत् शङ्का ततस्तराम्।

व्याघाताबधिराशङ्का तर्कः शङ्कावधिर्मतः। इति आचार्यगाथामन्यथाकारं पठति। व्याघातो यदीति। यदि व्याघातस्तदा शङ्काऽस्त्येव। शङ्कामन्तरेण व्याघातानवतारात्। नचेद् व्याघातस्तदा सुतरां शङ्का अस्ति प्रतिबन्धकाभावात्। अथ व्याघात एवाबधिः शङ्काया अवधिः। सति हि विशेषदर्शनरूपे व्याघातज्ञाने शङ्का न जायते। पूर्वा च नश्यतीति चेदित्यस्यानुषङ्गः। दूषयति तर्कः शङ्कावधिः कुतः। व्याघातदर्शनजनकेन तर्केण शङ्काया अवधिः पर्यवसानं कुतः तस्यापि व्याप्तिमूलकतया शङ्कान्तरस्यावश्यकत्वात् इत्यर्थः।

यद्वा नचेच्छङ्का ततस्तरामित्यत्रैत्रोपपत्तिः व्याघातावधिराशङ्केति। व्याघातान्ता हि शङ्का तदभावे सुतरां स्यादित्यर्थः। तर्कः शङ्कावधिर्मत इत्याचार्येक्ति दूषयति तर्कः शङ्कावधिः स एव कुतः विपक्षबाधकस्तर्क एव नावतरति तन्मूलव्याप्तौ शङ्काया बाधकाभावात्। तत्रापि तर्कपरम्परास्वीकारेऽनवस्थानात्।

यद्वा शङ्का चेदनुमास्त्येवेत्याचार्यकारिकाया व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत इत्येकदेशस्यैव दूषणं प्रतिज्ञेयं हेतुस्तु व्याघातो यदीति पूर्वोक्त एव।

अयमाशयः—धूमस्य दृश्यमानस्य न वह्निव्यभिचारशङ्का सहैवोपलब्धेः किन्तु कालान्तरीयस्य देशान्तरीयस्य वा। न च तदुभयमानं विना अनुमानं सम्भवत्यतः शङ्काजननाय अनुमानं स्वीकार्यम्। न चेच्छङ्का तर्हि सुतरां व्याप्तिग्रहादनुमानमिति।

वितण्डया निरस्तापरः शिष्यतां नीतश्च पृच्छति—

अयमेव धूमो वह्निव्यभिचारी नवेति शङ्का जायते। यदि च वह्निमद्वृत्तिः कथं वह्न्यभाववद्वृत्ति इत्युत्तरं ददाति तदा नूनं तयोर्विरोधोऽवधृतोऽस्ति स एवं

---

१. अनधिकार्यत्वमन्यथाकारमित्यस्य। शिरोऽन्यथा कृत्वा भुङ्क्ते इत्यत्र शिरोऽन्यथा कृत्वा भुङ्क्ते इत्यर्थः कृञ् प्रयोगं विना न लभ्येत तत्प्रयोगाभावे तु अन्यथेत्यनेन भुजिक्रियाग एव प्रकारो गम्येत नतु शिरसोऽन्यथाकरणमतः करोतेः प्रयोगः सफल इति सिद्धाप्रयोगाभावात् न णमुल्।

व्याघातो यदि शंकाऽस्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशंका तर्कः शंकावधिः कुतः ॥ ५॥

अव्यभिचारश्च एकपरित्यागव्यवच्छेदेनापरान्वयः, समकालदृष्टे नष्टेऽदृष्ट शक्यत इत्याहुः ।

---

नियमघटितः कथमवधार्यः इत्याशङ्क्याह—तर्कः शङ्काया अवधिरिति । तथा च धूमो यदि वह्निव्यभिचारी स्याद् व्यधिकरणवह्न्यजन्यो वह्न्यसमवहिताजन्यश्च जन्य एव न स्यादिति तर्केण शङ्का वारणीया ।

अथ वह्न्यसमवहिताजन्यमसिद्धं कदाचित् वह्न्यसमवहितादपि भविष्यतीति शङ्कते—तथा व्याघातादेव शङ्का निवर्तनीयेति । तदाह—व्याघातावधिराशङ्केति । तदेव समुदायमनूद्य दूषयति—कुतः कीदृशो व्याघातो वक्तव्यः । यदि कथाप्रवृत्त्यादिका सापि सम्भावनयैव उपपाद्या । अथ धूमार्थिनो वह्नौ न नियतप्रवृत्तिः स्यात् कदाचिदन्यत्रापि प्रवृत्तिः स्यात् । तन्न । तदज्ञानादपि तत्राप्रवृत्तिसम्भवात् ।

अथ एतादृशी शङ्का स्वरसवाहिनी चेन्न शङ्कापिशाचीत्वेन क्षतिकरी, अन्या च नास्त्येवेति चेन्न । धूमे कार्यत्वात्मकधर्मस्य वह्न्यसमवहितजन्यवह्निसमवहितजन्यसाधारणस्य दर्शनात् तदापत्तेः दुर्वारत्वात् ।

यच्च मणिकृता नहि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव शङ्का प्रतिबन्धिकेति खण्डनमुद्धृतम् । तदसत् । प्रवृत्तेः शङ्काप्रतिबन्धकत्वस्य क्वाप्य कल्पनात् । क्रियाकारणीभूतनिश्चयस्य प्रमात्मकस्य क्वाप्यसिद्धेः प्रमामात्रस्य खण्डितत्वात् । भ्रमात्तु न वस्तुसिद्धिः ।

किञ्च क्रियाऽपि सम्भावनाऽत एव उपपन्ना न निश्चयमपेक्षत इति न किञ्चिदेतत् । ननु व्यभिचारशङ्कायां अव्यभिचार एका कोटिरिति क्वचिदव्यभिचारप्रमायां तत्रैवानुमानं मानसिद्धमित्यत आह—

अव्यभिचारश्चेति । अग्नौ सत्येव धूम इत्यभावपरित्यागेन [1]धूमस्यान्वयोऽव्यभिचार इत्यर्थः । तद्ग्रहश्च नानुमानं [2]तस्यैवादृष्टत्वादेवेतिभावः । इत्याहुरिति । तत्रापि व्यभिचारादर्शनमात्रम्, आश्रयनाशान्न व्यभिचारसिद्धिरित्यस्वरसः । व्यावहारिकमनिर्वचनीयम् अव्यभिचारमादायैव शङ्केति तु परामार्थः ।

यद्वा विपक्षवृत्तित्व बाधकाद् अव्यभिचार सिद्धिरिति दूषयित्वा प्रकारान्तरेणापि दूषयति—अव्यभिचार इति । एतादृशोऽन्वयो[3] यस्य गमकभावोपयोगी न भवतीत्याशङ्क्यत इत्याहुः । यतः समकालदृष्टमनन्तरञ्च नष्टं यद्वस्तुद्वयं गम्य-

---

१. धूमा च योऽभिचारः  २. तत्रैव दृष्टत्वात् ।  ३. एतादृशान्योगस्य ।

स्वाभाविकः सम्बन्धो व्याप्तिरित्यपरः । स प्रष्टव्यः—कस्य स्वाभाविकः, किं सम्बन्धिनो उत अन्यस्य ? न चरमः, वैपरीत्यापत्तेः ।

आद्ये कः स्वाभाविकशब्दार्थ इति प्रष्टव्यम्—किं सम्बन्धिस्वभावाश्रितः ? अथ सम्बन्धिस्वभावजन्यः ? अथ सम्बन्धित्वविवक्षितस्वभावानतिरिक्तः ? अथ सम्बन्धिस्वभावव्याप्यः ? अथवा सम्बन्धिस्वभावादन्येन न प्रयुक्तः ? उतान्य एव कश्चिद्विवक्षितः ? आद्ये पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गः । न द्वितीयः, अतिव्याप्तेरव्याप्तेश्च । अत एव न तृतीयः ।

नापि चतुर्थः, व्याप्त्यनिरुक्तया व्याप्यत्वानिक्तेः । सम्बन्धस्य व्याप्यत्वे च सम्बन्धिनोर्व्यापकयोः सम्भावितसम्बन्धाधिकदेशकालतया एकसम्बन्धिदर्शनेऽपरानुमानाय नियामकत्वायोगात् ।

---

गमकभावशून्यं तत्राप्यसौ[१] । यथा एकस्मिन् क्षणे वह्नौ सत्येव पैङ्गल्यं दृष्टमनन्तरे क्षणे च द्वयोनाशे आश्रयनाशाद् व्यभिचारो न दृष्टस्तथापि न तत्र गम्यगमकभावः तथान्यत्रापि भविष्यतीत्यर्थः ।

तृतीयं व्याप्तिलक्षणमाशङ्कते—**स्वाभाविक इति अन्यस्येति** । नन्वयं पक्षो न सम्भवदुक्तिः नहि अन्यस्य सम्बन्धोऽन्यस्य सम्बन्धो भवति इति चेत्तर्हि यस्य स्वाभाविकस्तस्येत्यर्थप्राप्तम् । न वादिवाच्याग्रादर्थप्राप्तिः दुष्टत्वेनाप्युपपत्तेरितित्याशयः । जघन्यत्वादन्त्यमपि पक्षमादौ दूषयति—**वैपरीत्यापत्तेरिति** । असम्बन्धिनोर्व्याप्यव्यापकमानानापन्नयोः सम्बन्धः सम्बन्धिनोः व्याप्यव्यापकाभावापन्नयोरसम्बन्ध इति वैपरीत्यापत्तेः । व्याप्यस्य अव्यात्यत्वं अव्याप्यस्य व्याप्यत्वं स्यात् तथा च असम्भवातिव्याप्ती स्यातामित्याशयः ।

अन्यस्य सम्बन्धोऽन्यस्य गमकमिति वैपरीत्यमिति मितभाषिण्याम् ।

यथा अग्नेरौष्ण्यं स्वाभाविकमुच्यते तत्स्वरूपाश्रयत्वात् एवं सम्बन्धिस्वरूपाश्रयात्वात् सम्बन्धः स्वाभाविक इति प्रथमविकल्पार्थः ।

पुरुषस्य चैतन्यं स्वाभाविकमिति [२]अनन्यार्थश्च तद्धितार्थ इति द्वितीयविकल्पस्य ।

**अतिव्याप्तेः** । [३]द्वयोः संयोगे । **अव्याप्तेरिति** । नित्यताकृतकत्वयोः सम्बन्धे पृथिवीत्वद्रव्यत्वयोश्चैकार्थ समवाये । **अतएवेति** । भूतलघटाभावसम्बन्धेऽतिव्याप्तेः धूमसम्बन्धे चाव्याप्तेरित्यर्थः । **व्याप्यत्वानिरुक्तेरिति** । व्याप्यत्वं हि व्याप्तिमत्त्वमिति तथा चात्माश्रय इति भावः । सम्बन्धो यद्यपि न सम्बन्धिनोर्व्याप्यो

---

१. गम्यगमकभावः प्रयोजको भवतीति शेषः ।

२. वक्तव्यत्वं तद्धितार्थः । ३. यत्वयोः संयोगः ।

**नापि पञ्चमः, 'न प्रयुक्तः' इति यदि न जनितस्तदा सम्बन्धस्याकृतकत्वपक्षे 'अन्येने'ति विशेषणवैयर्थ्यम्, अकृतकस्य सम्बन्धिस्वभावेनाऽप्यजनितत्वात् । सम्बन्धस्य कृतकत्वपक्षे स्वरूपासिद्धिरेव स्यात् । सामग्र्याः सर्वसम्भवादन्ततः कालदेशादृष्टादिभिरपि तज्जन्यत्वस्यावश्यवक्तव्यत्वात् ।**

---

धूमसंयोगवति धूमे धूमाभावात् एवं वह्निसंयोगाश्रये च वह्न्यभावात् तथापि अभ्युपेत्य दूषणान्तरमाह—सम्बन्धिनोऽपि व्याप्यात् धूमादधिकदेशकालवृत्तित्वमग्नेर्दृष्टमितीहापि सम्बन्धिव्यापकयोरधिकदेशकालवृत्तित्वसम्भावनायां धूमेन अग्न्यनुमानाय नियामकासम्भवः । सम्बन्धो हि न नियामकस्तं विनाऽपि कस्मिंश्चित्काले अग्निधूमयोरवस्थानसम्भवादित्यर्थः । नियामकाभावान्न चतुर्थः इत्यर्थः ।

सम्बन्धस्य व्याप्यत्वे इति स्वाभाविकः सम्बन्धः इत्यस्य हि स्वव्याप्यः सम्बन्धः इति पर्यवसितोऽर्थः । व्याप्यापेक्षया व्यापकस्य अधिकवृत्तित्वं वाच्यम् अन्यथा व्याप्यव्यापकनिश्चयासम्भवात् । एवं च वह्निव्यतिरेकेणापि धूमावस्थानसम्भवात् न धूमेन वह्न्यनुमानं स्यादित्यर्थ इति विद्यासागरः । तन्न । समव्याप्तस्यापि सम्भवात्, सम्भवेन तु क्वचित् दर्शनादपि सम्भवतीति ।

सम्बन्धस्यैव व्याप्यत्वं स्यान्नतु सम्बन्धिनोरन्यतरस्य तथा च धूमेन वह्न्यनुमानं न स्यादिति मैथिलानां व्याख्यानं व्याख्येयासम्वादि । किञ्च सम्बन्धिस्वभावव्याप्यो यः सम्बन्धिनोः सम्बन्धः स स्वाभाविकी व्याप्तिरित्यतः सम्बन्धिनो व्याप्यता प्रतीतेर्धूमेन वह्न्यनुमानं नानुपपन्नं स्यादिति ।

इदन्तु चिन्त्यते कथमयमर्थस्तद्धितस्य तथा अननुशासनादिति । शब्दार्थौ न विकल्पनार्हः । मैवम् । स्वभावप्रयुक्तमित्यर्थेऽपि स्वाभाविकशब्दः प्रयुज्यते प्रयुक्तत्वञ्च व्याप्यत्वमिति[1] स्वभावेनैवप्रयुक्त इत्यर्थः । 'समर्थः पदविधिरिति" पाणिनिस्मृतिमनुसृत्य कृतं विकल्पं दूषयितुमाह—नापि पञ्चमः इति पक्षे दूषिते अस्य पक्षस्य उत्थानमिति । तन्न । आशिङ्कतम् अन्यपदं विनाऽपि अजनित एत्येतावतैव तदर्थप्राप्तेः ।

स्वेन जन्यत्वे सति हेत्वन्तरनिराकरणाय विशेषणीयं न च तदस्तीत्याशयेनाह—**अकृतकस्येति** । अस्मिन् पक्षे धूमादिसम्बन्धस्य जन्यत्वात् तत्राव्याप्तिदोषश्च बोध्यः । **कृतकत्व पक्ष इति** । जन्यसम्बन्धेन संयोगादिना हेतुतायामित्यर्थः । **स्वरूपासिद्धिसम्भवः** इति । यद्यपि नित्यसम्बन्धे न हेतौ लक्षणमित्यत्र अव्याप्तिरेव वक्तुमुचिता तथा व्यर्थविशेषणतया नित्यसम्बन्धे न हेतौ लक्षणं नेदमिति प्राग् दूषिते जन्यसम्बन्धेन हेतावपि नास्ति चेत्तदा लक्ष्यमात्रावृत्तित्वेन इदमुक्तम् । **सामग्र्या** इति । न किञ्चिदेकमेकस्मादित्यादि । जन्यसम्बन्धस्यापि

---

१. द्वितीय पुस्तकानुसारी इतिचिन्हितः पाठः ।

**नापि षष्ठः, तस्य निर्वक्तुमशक्यत्वात् । एवमेव विकल्प्यायं चरमविकल्पः सर्वत्रोपन्यस्य दूष्यो न्यूनत्वशंकाभयादिति ।**

## ३०. उपाधिलक्षणखण्डनम्

**(५) अनौपाधिकः सम्बन्धो व्याप्तिरित्यपरः । स प्रष्टव्यः-कोऽयमुपाधिर्नाम, यच्छून्यत्वमनौपाधिकत्वम् ?**

**उपाधिः साध्यव्यापकत्वे सति साधनाव्यापकः । अयञ्च—**

**'एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।**
**साध्याभावाविनाभावी स उपाधिर्यदत्ययः ।।**

---

सम्बन्धिनोऽन्येन तज्जननादित्यर्थं । अन्ततः=इत्यवसानेऽपीत्यर्थः । अन्यस्यान्यकारणस्य निषेधोऽप्येषाम् । स चोत्पत्तिमन्निमित्तकारणानां निषेधासम्भवादित्यर्थः। आदिपदेन ईश्वरपरिग्रहः ।

यद्यपि स्वाभाविकत्वमित्यपि [1]शक्यं निर्वक्तुमिति कथमशक्यत्वं तथापि सोऽप्युपाधिखण्डनेनैव निरसिष्यत इति भावः ।

**निर्वक्तुमशक्यत्वादिति** । यद्यपि सम्बन्धिस्वाभावादन्येनोपाधिना न प्रयुक्तः स्वाभाविक इत्यपि शक्यं निर्वक्तुं तथापि प्रयुक्तपदार्थखण्डनेन सोऽपि निरस्त एवेति भावः ।

यदि हि एतानेवविकल्पान् निराकृत्य विरतः स्यात् तदा परो ब्रूयात् ममान्य एव प्रकारोऽभिप्रेत इति न्यूनोक्तिस्तत्परिहारायेति आह—न्यूनत्वेति ।

व्याप्तेश्चतुर्थं लक्षणं शङ्कते—**अनौपाधिक** इति ।

**एक साध्याविनाभाव** इति । एकेन साध्येन श्यामत्वाख्येन मित्रातनयत्वशाकाद्याहारपरिणतिपरम्परापूर्वकत्वयोरविनाभावे साहचर्ये सति मिथः सम्बन्धशून्ययोः परस्परं व्याप्यव्याप्यकभावहीनयोर्मध्ये यदत्ययः=शाकाद्याहार परिणतिपूर्वकत्वप्रत्ययाभावः साध्याभावव्याप्यो यत्र शाकाद्याहारपरिणतिपूर्वत्वाभावस्तत्र श्यामत्वाभाव इति व्याप्तेः शाकाद्याहारपरिणतिपूर्वकत्वधर्मं उपाधिरित्यर्थः । **मिथः सम्बन्धशून्ययोरिति** । साधनाव्यापकत्वमुक्तम् । एकसाध्येत्यादि स्वरूपकीर्तनमात्रम् । व्यतिरेको मुखं द्वारं यस्य, साध्यव्यापकसाधनाव्यापकस्यैव अभाव ईदृशो भवतीति । साध्यव्यापकत्वे सति साधनाव्यापकत्वं पर्यवसितोऽर्थः । इत्याशय इति विद्यासागरः ।

वस्तुतस्तु विषमव्याप्तस्योपाधितावारणाय "एकसाध्याविनाभाव" इति एकेन हेतुना यत्साध्यं तदविनाभावे सति तेन साध्यव्याप्यत्वं लब्धम् "यदत्ययः=

---

१. शक्यं निर्वक्तुमशक्यत्वम् ।

**इत्यस्य व्यतिरेकमुखस्य यदत्ययः, स उपाधिरिति योज्यमानस्य पर्यवसितोऽर्थः। तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीति उपाधिरसावुच्यते। तदिदमाहुः—**

**'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मं प्रयोजकः।**
**अस्मिन्सत्यमुना भाव्यमिति यत्सा निरूप्यते॥**
**अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।**
**तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा॥**

---

साध्याभावाऽविनाभावीत्यनेन साध्यव्यापकत्वं "मिथः सम्बन्धशून्ययो" रित्यनेन साधनाव्यापकत्वम्।

अत एवाह—**तद्धर्मभूता हि व्याप्तिरिति**। उपाधिगता हि साध्ये व्याप्तिरित्यर्थः। उपाधिर्यदत्यय इत्युद्देश्य विधेयवैपरीत्यं परिहरति—**यदत्ययः स उपाधिरिति**। [1]अन्यप्रतियोगी स उपाधिरित्यर्थः।

उपाधेः साध्यव्याप्यत्वे भट्टाचार्यसम्मतिमाह—**तदाहुरिति**। अन्ये = साध्यव्यभिचारिण इत्यर्थः।

तैः पक्षे दृष्टैरपि न व्यापकांशावधारणा = नानुमितिरित्यर्थः[२]। अथैव साध्यव्यापकत्वे सतीति व्यापकत्वांशमात्रोद्भावनं मूले न युक्तं स्यादिति चेत्। न।

साध्यं व्यापकं यस्य तत् साध्यव्यापकं = साध्यव्याप्यम् इत्यपि [३]आवृत्त्याऽर्थः।

यद्वा व्याप्तिविरोधिशङ्का[४] प्रदर्शनमात्रपरं तदिति। सन्दिग्धोपाधौ भट्टाचार्याणामेव सम्मतिमाह—[५]**यावच्चेति**। विपक्षस्येति षष्ठीयं सप्तम्यर्थे। अव्यतिरेकित्वसद्भावे शतांशेनापि शङ्कितोऽपाधिद्वारेण[६] हेतोः यावच्छङ्कते तावद् हेतोर्गमनिकाबलं साध्यनिश्चयसामर्थ्यं कुतो, न कुतोऽपि व्याप्त्यात्मकाङ्गविकलत्वादिति भावः।

**पक्षेतरत्वे इति**। पर्वतो वह्निमान् धूमादित्यत्र पर्वतेतरे तादात्म्यसम्बन्धेन वह्निव्यापकेऽतिव्याप्तिः। न च पक्षे वस्तुतो वह्निमतिव्यभिचारः तथापि पर्वतावृत्तिवह्निव्यापकत्वात्। साध्यपदं तु न साध्यतावच्छेदकावच्छिन्नपरं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र उद्भूतरूपवत्वे व्याप्त्यापत्तेः। न च तथापि पक्षेतरत्वं न

---

१. साध्याभाव व्याप्याभाव प्रतियोगी, साध्यव्यापक इत्यर्थः।

२. तैः परप्रयुक्तव्याप्तिभिः दृष्टैः पक्षधर्मतया अवगतैरपि व्यापकांशावधारणा नेष्टैव साध्यनिश्चयो न जायते इति भाट्टकारिकाशयः इति विद्यासागरी।

३. इत्ययावृत्त्यर्थं इति पाठः। ४. व्याप्तिविरोधिक अप्रदर्शन। ५. वस्तुतः श्लोकोऽयमुदयनाचार्यस्य कुसुमाञ्जलेः ६. शङ्कितेपाधिद्वारेण।

स चोपाधिर्निश्चित इवाऽऽशंकितश्च, यत्रेदमुच्यते—

यावच्चाव्यतिरेकित्वं शतांशेऽपि शंक्यते।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥'

**इति चेत्, साध्यव्यापके पक्षेतरत्वेऽपि प्रसङ्गात्। तद्व्यातिरिक्त इत्यपीति चेन्न, बाधोन्नीतस्य तस्याव्यापनात्। अन्यथा निरुपाधिसम्बन्धत्वे बाधासिद्धेः। यदाह— 'बाधेन वोपाधिरुन्नीयताम्, अन्येन वेति न कश्चिद्विशेषः।'**

**एतदर्थमपि विशेषणीयमिति चेन्न, तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे न शक्यावधारणम्। एवं साध्यव्यापक इत्यपि।**

---

साध्यव्याप्यमितिवाच्यम्। उद्भूतरूपतुल्यत्वात्। यदि च महत्त्वसमानाधिकरणं तत् तथा तदा वह्निविशेषवद्वृत्तित्वं पर्वतेतरत्वम्। **तथेति परितुल्यतामिति।**

मितभाषिण्यान्तु व्यापकत्वं हि अधिकदेशकालवृत्तित्वं तच्च पक्षेतरेऽप्यस्ति वह्निमत्त्वाभावे च पक्षेतरत्वस्य दर्शनात्। नहि व्याप्योत्पादकत्वं व्यापकत्वम् अनित्यत्वस्य कृतकत्वव्यापकत्वाभाव प्रसङ्गात्। नहि कृतकत्वं नित्यत्वसंसर्गाभावात्मकादनित्यत्वादुत्पद्यते। व्याप्यप्रमेति तु[1] पक्षेतरत्वस्यापि। नहि अद्रिमत्त्वेन पक्षेतरत्वम् [2]अनुमिनुयात् पक्षेऽपि भावात्। अनुमीयमानत्वाभावेऽपि व्याप्तिग्रहणदशायामग्नेर्धूमव्यापकत्वदर्शनादिति व्याख्यानम्। तन्न। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिकत्वमेव व्यापकत्वमिति सुवचत्वात्। ननु पक्षेतरो लक्ष्य इति चेत्। न। अनुमानोच्छेदापत्तेः।

ननु बाध एव तत्र दोषो नोपाधिरस्तीत्याशङ्क्याह—**अन्यथा निरुपाधिसम्बन्धित्वे** इति। वह्निरनुष्णः[3] कृतकत्वादित्यात्र कृतकत्वस्य घटादौ साध्यसहचारिणः तदभावसहचारो विरुद्ध इति अवच्छेदभेदोपन्यासावश्यकत्वे तादृशस्य तत्र अपरस्यासम्भवात् वह्नीतरत्वमेवोपाधिरित्याशयः।

विद्यासागरस्तु दुष्टकारणजन्यस्यैव शुक्तिरूप्यादि ज्ञानस्य बाध्यत्वात् निरुपाधिसम्बन्धत्वे क्लृप्तकारणजन्यतया प्रमाणमेव स्यादिति बाधो न स्यादित्यर्थः इत्याह —बाधेन वेति। कुसुमाञ्जलौ आचार्यवाक्यम् अन्येन व्यभिचारेण प्रतिकूल तर्कतो नेत्यर्थः। अतएव पृथिवीत्वस्य गन्धव्याप्यस्यापि गन्धप्रागभावकालावच्छिन्नस्य घटस्य पक्षे बाधो दृश्यत इति कथमेतदित्यपास्तम्। तत्र ज्ञानस्यैवानुदयेन दुष्टकारणजज्ञानस्थलीयस्यानवतारात्। **एतदर्थमपीति।** बाधोन्नीतपक्षेतरातिरिक्तः पक्षेतर इति विशेषणीयमित्यर्थः। '[4]साधनव्यापकत्वं साधननिष्ठव्याप्तिनिरूपकत्व[5]मित्याशयेन दूषयति—**तथापीति।**

---

१. त्वपक्षेतरत्वस्यापि। २. अनुमीयात्। ३. वह्न्यनुष्णः।
४. साधनाव्यापकत्वं। ५. तदभावः साधनाव्यापकत्वमिति शेषः।

अथ मन्यसे अदृष्टव्यभिचारसाध्यत्वं साध्यव्यापकत्वम्। न, वस्तुगत्या व्यभिचारिसाध्यस्यापि आपततोऽदृष्टव्यभिचारसाध्यत्वसम्भवात् तस्याप्युपाधित्वापत्तेः। न द्रक्ष्यत इति च निरूपयितुमशक्यम्, व्याप्तिग्रहकाले च साध्यत्वाभावेन तदव्यभिचारः कथमवधार्यः ?

साध्यं व्यापकमपेक्षितमिति चेन्न, व्याप्त्यनवगमे व्यापकार्थानवगमात्। सम्भावितव्यापकभावो व्यापकोऽपेक्षित इति चेन्न व्यापकस्यानिरुक्तौ किंरूपतया सम्भावनाऽपि स्यात् ?

अथ साध्यव्यापक इत्येव भद्रम्, तदानीं साध्यत्वाभावेऽपि साधयितुमर्हत्वस्य विवक्षितत्वात्। न, कथं ह्यवगन्तव्यमिदमेव साधयितुमर्हमिदं नेति ? व्यापकत्वादिति वक्तुमशक्यत्वात्।

न च साधनाव्यापकत्वं सर्वत्र निश्चेतुं शक्यम्, 'स श्यामो मैत्रतनयत्वादि' त्यत्र शाकाद्याहारपरिणतिपरम्पराया मैत्रतनयेऽभावस्य दुरधिगमत्वात्।

यत्रोक्तलक्षणस्य निश्चायकं प्रमाणमस्ति तत्र निश्चितोपाधित्वम्, अन्यत्र शङ्कितोपाधित्वम्। मैत्रतनयत्वव्याप्यशाकाद्याहारपरिणतिपरम्परया स्थातव्यमित्यत्र नियामकाभावादिति चेन्न, मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छ-

---

अदृष्टेति। न दृष्टो व्यभिचारः साध्येन यस्य, अर्थात् हेतोः एवम्भूतं साध्यं यस्य। न दृष्टो व्यभिचारो येन साध्येन तादृशसाध्यकत्वमितिवार्थः वस्तुगत्येति। क्षितिः सकर्तृका कार्यत्वात् घटवदित्यत्र [1]रूपित्वमुपाधिः स्यादित्यर्थः। व्यभिचारदर्शनात्यन्ताभावविवक्षायामाह— न द्रक्ष्यते इति। व्याप्तिग्रहणकाले इति। कथमवधार्यं इत्यत्राप्यनुषञ्जनीयम्।

साध्यत्वं न[2] सिद्धिकर्मत्वं सद्भावे तद्व्यापकादृष्टव्यभिचारत्वम्। साध्यव्यापकत्वमिति शङ्कते—सम्भावित व्यापकेति किं रूपतयेति[3]। केन प्रकारेणेत्यर्थः। [4]इदमग्न्याद्येव साध्यं नेदं धूमादि इति[5]। अथाव्यापकत्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तादृशाभावाप्रतियोगित्वन्तु व्यापकत्वमिति चेन्न। अत्यन्ताभावस्य प्रागुक्तदोषेण अनिर्वचनीयत्वात्। प्रतियोगित्वञ्च न व्याप्तिनिरूपणं विना शक्यनिरूपणमिति दिक्।

यत्रेति। साध्यव्यापकताग्राहकं निषिद्धत्वात्मकोपाधौ शुक्त्यादिकमस्तीत्यर्थः। साधनाव्यापकतासन्देहमुपपादयति—मैत्रतनयत्व इति। नच यत्र यावति मित्रातनये श्यामतैवास्ति तत्र निश्चयः सम्भवतीति वाच्यम्। तत्रानुमानस्यैवाभावेन श्यामे उपाधित्वस्यैवाभावादिति। मानाभावं मानप्रदर्शनेन दूषयति—मैत्रतनयत्वे-

---

१. अरूपित्वमुपाधिः। २. साध्यत्वं सिद्धिकर्मत्वं। ३. किं यतया।
४. इदमेव···द्यवे साधनं नेदं धूमादिति ५. इति कथमवगन्तव्यमिति भावः।

ङ्काया अपि छेत्तुमशक्यत्वात् । तत्रापि तत्तत्सामग्रीत्युपाधि परम्पराभिधाने च तस्या अपि मैत्रतनयत्वेनैव प्रसाधनस्य कर्तुं शक्यत्वात् ।

अनवस्थैवं स्यादिति चेत्, न, उपाध्युपन्यास एव कुतोऽनवस्था न स्यात ? साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात् । एवं च साध्ये सामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणं विशेषणीयम् । श्यामत्वादौ साध्ये शाकाद्याहारपरिणतिपारम्पर्यादेस्तस्मिन्साध्ये श्यामत्वादेरुपाधित्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यत इति चेत्, मैवम्, प्रत्येकं द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य शङ्कितुमशक्यत्वात् । अन्यथा सकर्तृकत्वे साध्येऽदृष्टजत्वं अदृष्टजत्वे च सकर्तृकत्वनुपाधिरित्युभयासिद्धिः स्यात् । एवं बुद्धिमत्पूर्वकत्वे प्रयत्नवत्पूर्वकत्वं प्रयत्नवत्पूर्वकत्वे बुद्धिमत्पूर्वकत्वम्, एवं वह्नित्वजात्याक्रान्तवत्त्वेऽपि इन्धनत्वजात्याक्रान्तत्वं, तस्मिन् वह्नित्वजात्याक्रान्तवत्त्वमुपाधिः स्यादित्यत्राऽपि विश्वमनुमानं व्याकुलं स्यात् ।

अत एव साध्यसाधनसम्बन्धं प्रति व्यापकत्वं साध्यव्यापकत्वमिष्टमित्यपि प्रत्युक्तम्, यत्राप्युपाधिर्निश्चीयते, तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्त्यर्थमनुमेयतायां सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्तुं शक्यत्वात् ।

---

नेति । तथा च साधनव्यापकतानिश्चयात् उपाधित्वमेव नास्ति क्व सन्दिग्धोपाधित्वमितिभावः । शक्यत्वादिति । तथाच साधनव्यापकत्वमितिभावः ।

एवमन्योन्योपाधितया ईश्वरासिद्धिमुक्त्वा तस्य सर्वज्ञताद्यनुमानासिद्धिमाह— एवं बुद्धिमदिति ।

ननु पक्षेतरत्वं नोपाधिः साध्यसाधनसम्बन्धाव्यापकत्वात् । यद्यपि महानसीयसाध्यसाधनसम्बन्धस्य व्यापकं तत् तथापि साध्यसाधनसम्बन्धत्वावच्छिन्नं प्रति अव्यापकत्वात् । प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वञ्चोपाधिः प्रत्यक्षस्य स्पर्शाश्रयत्वप्रत्यक्षत्वसम्बन्धव्यापकत्वात् ।

एवं मित्रातनयत्वश्यामत्वसम्बन्धव्यापकत्वात् शाकाद्याहारपरिणतिपूर्वकत्वस्यापि परिग्रह इत्याशङ्क्याह—अत एवेति । सर्वानुमानोच्छेदप्रसङ्गादेव । यत्र कार्यत्वसकर्तृकत्वयोः सम्बन्धस्तन्नादृष्टजत्वमिति तस्यापि उपाधितापत्तेरिति मितभाषिण्याम् ।

वस्तुतस्तु साध्यत्वव्यापकत्वयोरनिरूपणात् स धनाव्यापकतया निरूपयितुमशक्यत्वाच्चेति प्रागुक्तदोषादेवेत्यर्थः । यत्र चेत्यनेन यज्ञीयहिंसाया [1]अधर्म-

---

१. धर्मजनकत्वे इति पाठः ।

तथा सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्थास्यतीति चेत्, एवं ब्रुवाणो नियतमजैषीः, परं मन्द ! मन्दाक्षम्, न प्रतिपक्षम् । तथा हि स्वीकृतनिश्चितोपाधिभावे शङ्कितोपाधित्वमापतदनुकूलं मन्यते कोऽन्यो जितलज्जात् ? न च क्वचिन्निश्चितोपाध्यनभ्युगमे तच्छङ्का शक्या ।

यत्र प्रत्यक्षेणोपाधिनिश्चयस्तदेव तद्दर्शनस्थानं भविष्यतीति चेन्न, ऐन्द्रियकबाधे तज्जातीयस्य अतीन्द्रियस्याप्रयोजकीक्रियमाणेन हेतुनैव साधयितुं शक्यत्वात्। न च यदेकत्रैकजातीयमैन्द्रियकं तदन्यत्रैन्द्रियकबाधे हेतुबलादतीन्द्रियं न प्रसाध्येत, पाकदर्शनात् जठरानलादि ।

साधनाव्यापकत्वे सति साध्यव्यापक इति च न शाकाद्याहारपरिणतिपरम्परासाध्यं व्याप्नोतीत्यव्यापकतादोषः । न हि शाकादित्वं नाम किञ्चिदेकमस्ति, यत्साध्यं व्याप्नुयात् । अस्तु वा कथमपि तथापि श्यामत्वं न व्याप्नोति, इन्द्रनीलशिलादिश्यामत्वस्य आहाराजन्यत्वात् ।

---

जनकत्वे साध्ये निषिद्धत्वस्य साधनाव्यापकताग्रहार्थं तदभावो ग्राह्यः । सचाभावः पक्षे प्रत्यक्षेण ग्राह्यो न भवत्यतीन्द्रियत्वादिति । यागाङ्गहिंसा न निषिद्धा विहितत्वात् यागवदिति एवं तस्यानुमेयता वाच्यः न चैवमनुमानं सम्भवति सा हिंसा निषिद्धा हिंसात्वात् क्रतुवाह्यहिंसावदिति सत्प्रतिक्षत्वसम्भवात् ।

एवं पार्थिवत्वेन लोहलेख्यत्वे साध्ये प्रशिथिलावयवत्वस्योपाधेरभावौ वज्रादावस्ति । वज्रं नादः प्रशिथिलावयवं लोहालेख्यत्वाद् वायुवदिति । अस्य च हेतोः वज्रं प्रशिथिलावयवं पार्थिवत्वात् काष्ठवदिति सोपाधीक्रियमाण पार्थिवत्वेनैव सत्प्रतिपक्षस्य कर्तुं शक्यत्वात् न साधनाव्यापकत्वनिश्चयः सम्भवतीत्यर्थः । **तथा सतीति** । अतीन्द्रियोपाधौ साधनाव्यापकत्वानिश्चये सतीत्यर्थः । **निर्व्यूढमिति** । सिद्धमित्यर्थः । अपसिद्धान्तापत्त्या दूषयति—

**एवमिति** । **तद्दर्शनस्थानमिति** । साधनाव्यापकनिश्चयस्थानमुपाधिनिश्चयस्थानमिति वार्थः । तथा च वह्निना धूमे आर्द्रेन्धनस्य [1]साधना अव्यापकता अयोगोलके प्रत्यक्षेण निश्चितेति तदुपाधिरित्याशयः । अयोगोलकमार्द्रेन्धनवद् वह्निमत्त्वादित्यप्रयोजकेनापि हेतुना प्रत्यक्षेन्धनस्य वाधेऽपि अतीन्द्रियेन्धनसिद्धौ साधनव्यापकत्वं स्यादित्यर्थः । इन्धनत्वावच्छेदेनैव प्रत्यक्षत्वात् तत्साधने वाध इति शङ्कते— **न चेति** । यथा पाकेन अनुमीयमानो वह्निर्जठरे प्रत्यक्षबाधितः इत्यतीन्द्रियोऽपि जाठरानलः सिध्यतीति स्वीकारात् । आदिपदेन तद्गतरूपादीनां परिग्रहः । साधनाव्यापकत्वं निरस्य साध्यव्यापकतां निरस्यति । अव्यापकतादोषः उपाधिलक्षणे इति शेषः ।

---

२. साधकेन इति पाठः ।

**शरीरश्यामत्वं साध्यम्, तच्च व्याप्नोत्येवेदमिति चेन्न, व्याप्तावुपाधेरभिधेयत्वात्। न च पुरुषश्यामत्वेन व्याप्तिः। हेतुपक्षधर्मतयैव हि साध्यं पक्षधर्मः सिद्ध्यति न व्याप्त्या, अन्यथा पुरुषपदस्य व्यवच्छेदकस्याविशेषणत्वापातात्।**

**परम्परासम्बन्धिकज्जलादिलेपश्यामत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुषसमवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात्? न च साध्यसाधनसम्बन्धादृष्टव्यभिचारत्वं साध्यव्यापकत्वं मा रूपसाक्षात्कृतिकरणादेस्तैजसादित्वे साध्ये भूदुद्भूतरूपवत्त्वादेरुपाधित्वम्।**

---

श्यामकारणत्वेन तेषामनुगममाशङ्क्याह—अस्त्विति। विद्यासागरः। तन्न। इन्द्रनीलश्यामस्याऽपि तद्व्याप्यत्वात् इत्युत्तरग्रन्थविरोधात्। अक्रियमाणश्यामकरणत्वेन अक्रियमाणत्वेनानुगममाशङ्क्याह—[1]अस्तु वेति व्याख्येयम्।

अथ शुद्धसाध्याव्यापकस्यापि विशिष्टसाध्यव्यापकतया साध्यव्यापकत्वमक्षतमिति भावेन शङ्कते—**शरीरश्यामत्वं साध्यमिति**। साध्यतावच्छेदकाश्रयः पर्यवसितसाध्यमिति वार्थः। **व्याप्तिरिति**। यन्निरूपिता व्याप्तिर्हेतावभिमता तत्र उपाधिर्वाच्यो न च विशिष्टनिरूपिता व्याप्तिरितिभावः।

**पुरुषश्यामत्वेनेति**। ×पुरुषश्यामत्वावच्छिन्ना व्याप्तिरित्यर्थः। नच तथा व्याप्त्यभावे कथं पुरुषश्यामत्वसिद्धिरित्यत आह—हेतुपक्षधर्मतयेति। हेतोः पक्षधर्मतयेत्यर्थः। यदि पुरुषश्यामत्वमेव साध्यं तदा मैत्रः पुरुषः श्याम इति प्रतिज्ञास्यात्तत्र दोषमाह—**पुरुषपदस्येति**। नहि मैत्रे पुरुषत्वसमानाधिकरणे श्यामत्वं प्रसक्तं येन तद्व्यवच्छेदाय पुरुषपदं प्रयुक्तमिति भावः। पुरुषमात्रनिष्ठश्यामतासिद्धये पुरुषविशेषणमन्यथा कम्वलादि श्यामताऽपि परम्परया संयुक्तसमवायेन सिध्येत्, नतु पुरुषस्यैव यच्छ्यामत्वं षष्ठीतत्पुरुषलभ्यं तत्सिद्धिः पुरुषसमवेतेति सिद्धिरित्याशयेन परम्परेत्यादि [2]**संयुक्तश्यामपुरुषसमतेति**।

यद्यपि पुरुषस्यैवेति व्यवच्छेदः मा ·····कम्वलीयत्वात् तथापि संयुक्तसमवायेन तत्पुरुषस्यैव कम्वले तु समवायेनैवेति भवति परम्परासम्बन्धेन व्यवच्छेदे अन्यद् व्यवच्छेदकमिति। **संयुक्तपुरुषेति**। संयुक्तपुरुष (पुरुष) त्वव्यवच्छिन्नं परम्परासम्बन्धेनान्यगतं रूपमपीति तदपि सिध्येदितिभावः। [3]पुरुषेण श्यामेन संयुक्तो यः पुरुषः तच्छ्यामता पुरुषगता सिध्येत्। एवं परम्परासम्बन्धेन बाधाभावात् पुरुषमात्र समवेतत्वाच्च तस्य।

**नच साध्यसाधनेति**। तथा च श्यामत्वसाधकहेतोरुपाधिसंग्रहः इति भावः। **रूपादिसाक्षात्कारणादेरिति**।[4] अत्रादिपदेन स्पर्शादिपरिग्रहः। द्वितीयेन स्पर्शादि

---

१. अक्षरशून्यम्। × चिह्नत उपरिलिखितः पाठः प्रथमपुस्तके नास्ति।
२. संयुक्त समवेतेति। ३. मित्रातनयेन इत्यर्थः। ४. रूपसाक्षात्कृतिकरणादेरिति मुद्रितपुस्तकेषु पाठः।

**साधनेनापि च विशेषणतया निवेश्येन यदि केवलसाध्यव्यापकं व्यवच्छेद्यम्, तदा तस्य व्यभिचारशङ्काधानक्षमस्याप्युपाधित्वं न स्यात्। अथ न किञ्चिद् व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव। न हि प्रयोजनमात्राद्विशेषणमर्थवद् भवति, किन्तु किञ्चिद्व्यवच्छेदादिति। अन्यथा शरीर्यजन्यत्वमिव अकर्तृकत्वे व्यक्तमसिद्धौ पर्यवस्येदिति।**

**किञ्च–आभासे व्यतिरेकिणि पक्षधर्महेतौ जीवच्छरीरं पृथिव्याद्यष्टद्रव्याति-**

---

साक्षात्करणस्य स्पर्शानादेश्च। तैजसादित्वे इत्यत्र वायवीयत्वादेः परिग्रहः। तेन चक्षुस्तैजसं रूपसाक्षात्करणत्वात् प्रदीपवदित्यत्र उद्भूतरूपवत्त्वमुपाधिः स्यात्[१] निदाघोष्मणि शुद्धसाध्याव्यापकस्यापि साधनावच्छिन्नसाध्यव्यापकत्वादिति तन्माभूदिति न तथा विवक्षणीयम्। तथा स्पर्शनं वायवीयं स्पर्शादिषु मध्ये स्पर्श-स्यैव व्यञ्जकत्वात् व्यजनाभिघातजवायुवदित्यत्र उद्भूतस्पर्शवत्त्वं घ्राणं पार्थिवं गन्धादिषुमध्ये गन्धस्यैव व्यञ्जकत्वात् चम्पकवदित्यत्र उद्भूतगन्धवत्वमित्यादि दर्शनीयम्। दोषान्तरञ्चाह—**साधनेति**। साध्यसाधनसम्बन्धनिष्ठव्यभिचार इत्यत्र सम्बन्धद्वारा[२] निवेशनीयम्। यत्साधनं तेन शुद्धसाध्यव्यापको व्यवच्छिद्यते यदि तदा साधनावच्छिन्नसाध्यव्यापकत्वं केवलस्याप्यव्यापकोपाधौ नास्तीत्य-व्याप्तिः। नहि तत्र साधनं विशेषणीभूय व्याप्यतावच्छेदकमव्यावर्तकत्वात् तस्य व्यभिचारशङ्काधानक्षमस्यापि स शाकाद्याहारपरिणतिपूर्वको भिन्नतनयत्वादित्यत्र श्यामत्वस्येत्यर्थः। इदमुपलक्षणं व्यभिचारनिश्चयक्षणे आर्द्रेन्धनादावव्याप्त्यापत्तिः। ननु केवल साध्यव्यापकोपाधि व्यवच्छेदाय नेदं विशेषणं येनाव्याप्तिः स्यादिति आशङ्कते—**अथेति**। तथाच साधनावच्छिन्नसाध्यव्यापकोपाधिसंग्राहकत्वया इदं [४]प्रयोजनवदेवेति भावः। **तदाविशेषणत्वेति**। यदि न व्यवच्छेदकं तदा साधना-वच्छिन्नसाध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वे, साध्ये असमर्थविशेषण-त्वेन व्याप्यत्वासिद्धिः स्यादित्यर्थः। तथाहि क्षितिरकर्तृका शरीराजन्यत्वादित्यत्र शरीरपदं स्वरूपासिद्धिवारकतया सप्रयोजनमपि शरीरविशेषणं व्यर्थमित्युच्यते तथात्राऽपि स्यादित्यर्थः। इदमप्युपलक्षणं शब्दो नित्यः कृतकत्वादित्यत्र भावत्वेऽव्या-प्तिरपि बोध्या।

अन्वयव्यतिरेक्यनुमानाभासोपाधौ अव्याप्तिमुक्त्वा व्यतिरेक्यनुमानाभासो-पाधौ साध्यव्यापकग्रहासम्भवाद् अव्याप्तिमाह—**किञ्चेत्यादिना**। आभासत्वाभि-धानमुपाधिध्रौव्यार्थं तच्च न सम्भवति विनाप्युपाधिपक्षधर्मतयापि[५] आभासत्वो-पपत्तेरित्यत आह—**पक्षधर्मेति**। **जीवच्छरीरमिति**। जीवत्पदं भागासिद्धिवारणाय

---

१. निदोषोष्मणि। २. साधनाव्यापकत्वादिति। ३. सम्बन्धत्वा वा।
४. इ प्रयो······वदेवेति। ५. पक्षधर्मतयापि आसत्तोपपत्तेः।

**रिक्तानेकद्रव्यवत्, प्राणादिमत्त्वादित्यादौ कथमिदमुपाधिलक्षणं व्यवस्थाप्यम् । न ह्याभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिना व्याप्तमिष्यते, तस्य पराभिमतस्य क्वचित् सिद्ध्यापत्तेः। व्यतिरेकयोर्व्याप्तावुपाधिश्चेत्, तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्य उपाधिरवश्यं मन्तव्यः। अन्यथोपाधेरन्वये साध्यान्वयापत्तिरिति उपाधिव्यतिरेकव्याप्त्यवश्यम्भावस्य अभ्युपगम्यतया उपाधेर्यद्व्यापकं**

---

बाधवारणाय च। द्रव्यवदित्युक्ते सिद्धसाधनं[1]मित्यतिरिक्तान्तं विशेषणं तथापि सात्मकत्वेन सिद्धसाधन स्यादित्यनेकेति। तेन एकस्मिन् शरीरे अनेकभोक्तृमत्वं साध्यं दशमद्रव्यत्वं वा साध्यमिति विद्यासागरः।

निरुपाधिसम्बन्धस्य आभासत्वासिद्धेः अवश्यमुपाधिरवश्यं वाच्यः। स चान्वयव्याप्तौ व्यतिरेकव्याप्तौ वा। नाद्यः। अनेकचेतनवत्त्वलक्षणस्य साध्यस्याप्रसिद्ध्या उपाधेस्तद्व्यापकत्वग्रहासम्भवादित्याह—**नह्याभास** इति। व्यतिरेकीति विशेषणमसम्भवद्योतनाय। अभ्युपेत्य साध्यप्रसिद्धिं दूषयति—**तस्येति**[2]। क्वचित् सपक्षे पक्षे वा पराभिमतस्य स्थापनावाद्यभिमतस्य साध्यस्य सिध्यापत्तेरित्यर्थः।

अयमाशयः—सपक्षे प्रसिद्धस्य साध्यस्य व्यापकता चेद् उपाधेःवाच्या तदा हेतोस्तत्र वृत्तावन्वयित्वम् अवृत्तावसाधारणता। यदि पक्षे प्रसिद्धिः तदा उपाधेर्हेतुमन्मात्रवृत्तितया व्यभिचारज्ञानाधीनासामर्थ्याद् हेतुदोषत्वाभावादनुमानापत्तिः सिद्धसाधनाद् अनुमानवैयर्थ्यं वा उपाधेः साधनव्यापकत्वादनुपाधित्वं वेत्याशयः। **व्यतिरेकयोः व्याप्ताविति**। यत् पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यत्ववन्न भवति तत् प्राणादिमन्न भवति यथा लोष्टमित्यत्राभोगायतनत्वमुपाधिरित्यर्थः।

**व्यतिरेके यद्व्याप्यमिति**। साधनाभावेन[3] व्याप्तं साध्याभावरूपं तस्य व्याप्य उपाधिः अभोगायतनत्वं, यत्रोपाधिरभोगायनत्वं तत्र प्रतिज्ञानं साध्यं नास्तीति अवश्यं मन्तव्यम्। आवश्यकत्वे हेतुमाह—**अन्यथेति**। उपाधिः यदि न साध्याभावव्याप्यस्तर्हि उपाधेः साध्येन सहान्वयोऽपि क्वचित् स्यात्। साध्याभावाभावव्याप्यत्वेन[4] सन्नैव साध्याभावव्यभिचारः तत्रैव साध्यापत्तौ साध्यान्वयापत्तिरिति। इति शब्दः उपाधेः व्याप्यत्वप्रतिपादनसमाप्तौ।

ननु उपाधिर्भवतु साध्याभावव्याप्यः परन्तु[5]अन्वयव्याप्त्यैव न व्यतिरेकव्याप्त्या इति न साध्याभावात्मकस्यपरसाध्यापत्तिरित्याशङ्क्याह—**उपाधेरिति**। उपाधेरभोगायतनत्वस्य व्यतिरेकव्याप्तिः यत्र साध्याभावो नास्ति तत्राभोगायतनत्वं नास्तीत्यभ्युपेयम्।

---

१. सिद्ध साधनभासता च न स्यात्। २. अथेति।

३. साधनाभावेनाव्यापम्। ४. साध्याभावाव्याप्यत्वेनपपत्तैव। ५. परन्तु मव्याप्यैव।

**तद्व्यतिरेक उपाधेर्व्यतिरेकस्य व्याप्यतया मन्तव्य इति परसाध्यापत्तिः। असम-व्याप्तिकयोरन्वयव्याप्तिसाध्यसाधनभाववैपरीत्येन व्यतिरेकव्याप्तेरिति।**

**न च दोषान्तरमेव तर्हि वाच्यमिति वाच्यम्, हेतोः पक्षधर्मत्वस्थितौ**

---

[1]अयमाशयः—व्याप्यवृत्तिव्यतिरेकिणोः धर्मिणोर्व्याप्तिः नियतान्वयव्याप्तिः अन्यथा बाधोन्नीतपक्षेतरस्यापि उपाधितापत्तिः। उपाधेर्यद्व्यापकं साध्याभावात्मकं तस्य व्यतिरेकः साध्यमेव। उपाधिव्यतिरेकस्य अभोगायतनत्वव्यतिरेकस्य भोगायतनत्वस्य व्याप्यकतया मन्तव्य इति परसाध्यापत्तिः। क्वचित् साध्यसत्त्वव्यतिरेकावधारण एव सपक्षसद्भावात् व्यतिरेकित्वक्षतिरित्यर्थः।

ननु व्यापकाभावो व्याप्याभावव्याप्य इति नियमो नास्ति उपाधेर्यद् व्यापकं तद्व्यतिरेको न व्याप्यतया मन्तव्य इत्यतआह—**असमव्याप्तिकयोरिति**। समव्याप्तयोरिदमेव साध्यमिदमेव साधनमिति नियमाभावात् तत्र व्यतिरेकेऽपि व्यापकनियमो माभूत् असमव्याप्तिकयोर्धूमाग्न्योरन्वये यः साध्यसाधनभावः तद्वैपरीत्येन व्यतिरेके साध्यसाधनभावो, यत्र अव्यभिचारस्तत्र धूमाभाव इति व्याप्तेरत्रापि व्यापकाभावस्य व्याप्यत्वेनेति।[2] अन्वये यद् व्यापकं तदभावो[3] व्यतिरेके व्याप्य इत्यत्र केवलान्वयिनि व्यभिचार इत्यसमव्याप्तिकयोरिति।

ननु तर्हीदृशे व्यतिरेकिणि नोपाधिर्दोष इत्याशङ्कते—**नचेति**। **दोषान्तर-मिति**। हेत्वाभासतो भिन्नमित्यर्थः।

तर्हि [4]हेतुमत्वगुणस्य व्याप्यत्वपक्षधर्मताभ्यामप्रमितस्यैव हेत्वाभासत्वादस्य पक्षधर्मस्य [5]व्याप्यत्वहानिर्वक्तव्या तदर्थं चोपाधिरपीति नियमः अन्यथा व्याप्तिमत्पक्षधर्मस्य हेतोराभासत्वेऽतिप्रसङ्ग इत्यर्थं इति विद्यासागरः। तच्चिन्त्यम्। हेतोरदुष्टत्वाभावात् दोषान्तरस्य स्वीकारात्। तस्मादयं हेतुर्व्याप्यो नवा। आद्येऽपसिद्धान्तः क्वचिदपि साध्यवत्प्रवृत्तेः। नान्त्यः। व्याप्तिर्हि अनौपाधिकसम्बन्धरूपा तदभावश्चोपाधिरिति। सचान्वये व्यतिरेके च दूषित इति शङ्कामापन्नो[6] निर्वचनकारो कां दशामापतेदिति।

यस्तु उपाधेः प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मस्याप्रसिध्या निषेधानुपपत्तिरिति दूषणम्। तन्न युक्तम्। येन धर्मेण उपाधिमान् स उपाधिरित्युच्यते तेन धर्मेण तेन सम्बन्धेन तदभाववान् निरुपाधिक इति निर्वचनात्। तथाहि धूमे साध्ये वह्ने रार्द्रेन्धनोपाधिमाह—नत्वार्द्रेन्धनप्रभवो वह्निरिति उपाधिमत्तदभावव्यव-

---

१. वह्न्यभावः इति युक्तम्। २. भवितव्यमिति योजनीयम्। ३. तद्भावो।
४. हेतुवत्त्व गुणस्याव्याप्ति पक्षधर्मताभ्यां।
५. व्याप्तिहानिरिति भावः। ६. संङ्करापन्नो।

**व्याप्तिक्षत्यर्थं त्वयोपाध्युपगमध्रौव्यात्। भवतु वा या काचिद् व्याप्तिर्नाम। तत्सत्त्व एवानुमितिभावात्, तस्याश्चानुमितेश्च व्याप्तिरेष्टव्या, ततश्चाऽऽत्माश्रयः। तद्भेदे चाऽनुगमाविनिगमौ स्यातामिति।**

---

हारः वह्निरार्द्रेन्धनवान् इत्यत्र अव्याप्यत्वेन तत्सम्बन्धीति विषमव्याप्तये एवमार्द्रेन्धनप्रभववह्निर्नार्द्रेन्धनवान् इत्यत्र च व्याप्यत्वेन सम्बन्धे आर्द्रेन्धनशून्य इति प्रतीतेर्नानुपपत्तिः। यदि च व्याप्यत्वघटनायां दोषस्तदाऽर्द्रेन्धनं वह्नावव्यापकत्वेनास्ति नत्वार्द्रेन्धनवह्नावित्येव विषयः।

ननु यावत्साध्यव्यापकव्यापकत्वं यावत्साधनाव्यापकव्यापकसाध्यकत्वमेव अनौपाधिकत्वं व्याप्तिः, हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुतावच्छेदकरूपवत्वं वा साध्यसामान्यावच्छेदकहेतुतावच्छेदकरूपं वा सा अस्तु, हेतुसाध्यादिपदं तु धूमवह्न्यादि परमिति न कोऽपि दोषः।

नचेष्वपि अधिकरणत्वप्रतियोगित्वात् अभाववत्वसम्बन्धत्वानां व्याप्तिघटिततया दुर्निरूपत्वमिति वाच्यम्। तेषां पदार्थान्तरत्वस्वीकारात्। नचैव साध्यसाधनभेदेन अननुगमो दोषाय कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वादित्याशयवानाह—**भवतु वेति**।

**तत्सत्त्वे एवेति**। व्याप्तिसत्त्वे एवेत्यर्थः। सदनुमित्यभिप्रायं किं वा कारणताघटकव्याप्त्यभिप्रायेण, सत्येव कारणे कार्योदयात् तथाच व्याप्तिज्ञाने या अनुमितिं प्रति नियततेति निष्कर्षः। **व्याप्तिरेष्टव्येति**। अनन्यथासिद्धनिष्ठव्याप्तेरेव कारणतापदार्थत्वात्। अनुमितिकारणीभूतव्याप्तिज्ञानविषयीभूता व्याप्तिः सैव चेत् कारणताघटिका तदात्माश्रयः। नच तस्यामेव सा सम्भवति। नहि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोढुं क्षमते।

अथ व्याप्तिज्ञाने एव अनुमितिकारणता व्याप्त्यात्मिकेति चेन्न। ज्ञाने व्याप्तिः विशेषणतया विशिष्टनिष्ठा या व्याप्तेर्विशेषणत्वेऽपि च इष्टापत्तेः। अथ व्याप्त्यन्तरं वाच्यं तस्य तर्हि भिन्नजातीयतासिद्धये लक्षणान्तरं वाच्यम्। सजातीयस्य सजातीयसम्बन्धानाश्रयत्वात् तथा सति दोषमाह—**तद्भेदे चेति**। एकस्या व्याप्तेर्लक्षणमन्यत्र न वर्तते इत्यननुगमो दोषः। भिन्नलक्षणकानेकव्याप्तिस्वीकारे च असाध्यसाधनयोर्व्याप्तिः का च व्याप्त्यनुमित्योरित्यनिर्द्धारितविशेषस्य लक्षणाननुप्रवेशात्। सति वा लक्षणे अन्यतरव्याप्तिस्वीकारे च का साध्यसाधनयोर्व्याप्तिः का च व्याप्त्यनुमित्योरित्यपि निर्धारितविशेषस्य लक्षणाननुप्रवेशात्। सति वा लक्षणे अन्यतरैव व्याप्तिरिति विनिगन्तुमशक्यमिति विद्यासागरः तदनुपायी च। तदशुद्धम्। अन्वयव्यतिरेकाभ्यामेव तदवगमसिद्धे,। यज्ज्ञानानन्तरमनुमितिः

## ३१. पक्षतालक्षणखण्डनम्

**व्याप्तिपक्षधर्मते अनुमितिं भावयत इति वदन्ति। कश्चायं पक्षो नाम, यद्धर्मत्वं पक्षधर्मत्वम्? सिषाधयिषितधर्मा धर्मीति चेन्न, सिषाधयिषा हि प्रति-**

---

सा व्याप्तिः अनुमितिकरणं तस्यैव च अनुमानलक्षणेऽनुप्रवेशः तथापि विनिगमनाविरह इति चेत्तर्हि सर्वैव व्याप्तिरनुमिति हेतुः। व्यभिचारोद्धारस्तत्र व्याप्तिज्ञानाव्यवहितप्राक्कालिकानुमितित्वेन तद्व्याप्तिज्ञानत्वेन।

वस्तुतस्तु व्याप्तीनां भिन्नानां लक्षणप्रवेशेऽननुगमः। शक्यपरिहारः जातिघटनया किन्तु कारणताग्रहः एव न स्यात्। साध्यसाधनभेदेन भिन्नानां सर्वासां ज्ञानुमशक्यत्वात् तज्ज्ञानोत्तरानुमितौ यज्ज्ञानहेतुरित्येवमपि केषाञ्चिदेव ज्ञानसम्भवात्। यत्र च व्यभिचारादर्शनं धूमवह्न्योः सहचारज्ञानादेवानुमितिस्तत्र व्यभिचारश्च। नच तदनुमितिव्यक्त्यन्तर्भावेणापि[१] कार्यताग्रहो येन तत्र व्याप्तिज्ञानमनुमीयेत, न वा अनुमितिः [२]व्याप्तिज्ञानजन्या अनुमितित्वादिति अनुमितिः स्यात् [३]दृष्टान्तपक्षयोरेकव्याप्तिज्ञानाजन्यत्वादित्याह—**अननुगमेति**। नचोक्तव्याप्तिप्रकारेषु लाघवात् साध्यसम्बन्धितावच्छेदकरूपवत्त्वं तज्ज्ञानं हेतुरित्यत आह—**अविनिगमादिति**।

अयं भावः किं गुरुव्याप्तिज्ञानोत्तरमनुमितिर्विरलोत्पद्यते अथवा तत्राऽपि लघुशरीरव्याप्तेरेव ज्ञानं कल्प्यते। नाद्यः। धूमव्यापकवह्निसमानाधिकरणधूमवानयमिति शाब्दबोधानन्तरमनुभायाः[४] अनुभवसिद्धत्वात्। नान्त्यः। अननुभूततादृशव्याप्ते[५]स्तत्कल्पनाया असम्भवात् इति।

**अनुमितिं भावयत** इति अनुमितिं भवन्तीं प्रयोजयतः अनुमित्युत्पत्त्यनुकूलं ज्ञानं जनयत इति यावत्। **वदन्तीति**। नैयायिका इति शेषः। नैयायिकादीनित्यादिपदेन वैशेषिकपरिग्रहः। अतिरिक्तविषयविषयिभावानङ्गीकर्तृणां तेषां मते प्रमेयत्वस्य घट तत्प्रमास्वरूपस्य विषये घटे[६] वृत्तावात्माश्रयापत्तेः अवृत्तौ अपक्षधर्मता स्यादित्यर्थः। प्रमेयत्वं परम्परासम्बद्धमेव यद्यपि प्रमात्वं तथापि तदपि विषयघटितमेवेति हृदयम्। अनुभवत्वमेव प्रमात्वं प्रमेयत्वोपाधिघटकमिति चेन्न। तथा सति अनुभव इति प्रमेयमिति च बुद्ध्योरैक्यापत्तेः। अनुभव इति बुद्धौ समवायः प्रकाशते अनुभवस्य प्रमेयमितिं बुद्धौ तु विषयानुभवसम्बन्धविषया इति विशेष इति चेन्न। तथापि अनुभवत्वस्य प्रकारतया अनुभव इत्याकारापत्तिर्दुर्वारा

---

१. अन्तः शब्दस्याङ्किविधिणत्वे सूपसर्गत्वं वाच्यमिति" वार्तिकेन णत्वं न्याय्यम्।
२. अनुव्याप्तिज्ञान। ३. एकव्याप्तिज्ञानजन्यत्वात् इति पाठः। ४. अनुमाय।
५. तादृशव्याप्तिः। ६. घटे वृत्तित्वात्माश्रयापत्तेरपक्षधर्मता स्यात्।

**पिपादयिषा वा स्यात् प्रतिपित्सा वा ? आद्ये स्वार्थानुमित्यनुमित्यनुदयप्रसङ्गः। द्वितीये चासुरभिगन्धानुमेयकुत्सितरसविषयस्वार्थानुमित्यनुदयप्रसङ्गः।**

**न चानवधारितधर्मा धर्मी पक्षः, हेतुमत्तयाऽप्यनवधारणे अनुमानोदयनिदानभावासम्भवात्। अवधारणे चानवधारितधर्मत्वानुपपत्तेः।**

---

समवायातिरिक्तस्य सम्बन्धभानेऽपि अनुभवत्वस्यैव सम्बन्धित्वात् यथा[1] लोहितः स्फटिक इति हृदयम्।

अथ नैयायिकानां प्रमैव विषयता न विषयोऽपि। तदाहुः न्यायाचार्याः—प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयतेति चेन्न। घटज्ञानस्यापि पटबिषयतापत्तेः ज्ञानत्वाविशेषात्। तस्मात् [2]घटज्ञानत्वमेव घटज्ञानविषयता न च पटे सा अस्तीति नातिप्रसङ्ग इति तेषां मतमिति भावः। यदि च ज्ञानवृत्तिर्ज्ञानकरणजन्यतावच्छेदको धर्मविशेष एव विषयता अतो न घटज्ञानस्य पटविषयता किन्तु पटज्ञानकरणजन्यतावच्छेदकः एव तथा। अत एवानागतघटज्ञानमपि सविषयमिति। तच्च घटेन्द्रियसन्निकर्षजन्यज्ञानत्वं घटप्रत्यक्षे घटव्याप्यजन्यज्ञानत्वं घटानुमित्यादौ इति तदा नैष दोषः। परं तु तथापि घटज्ञानविषयता अनुगता न स्यात् घटज्ञानकरणजन्यत्वेनानुगमस्तु घटज्ञानत्वे व्यावृत्ते सिद्धिःस्यात् तथा चान्योन्याश्रय इति दिक्।

सिषाधयिषितधर्मा पक्ष इत्युक्ते धर्मविशिष्टस्य पक्षता स्यात् ततश्चासम्भवः स्यात् साध्यस्य पक्षवृत्तित्वेन आत्माश्रयापत्तेरिति। धर्मिपदं विशेष्यपरं तथा च सिषाधयिषा विषयः साध्यमेव पक्षतेत्यर्थः। **आद्य इति**। प्रतिपाद्याभावेन प्रतिपिपादयिषाया अभावादिति भावः।

**द्वितीये चेति**। सिषाधयिषेति [3]णिच् प्रत्ययः कथमिति तु चिन्त्यम्। **असुरभीति**। असुरभिगन्धेन प्रत्यक्षेण हेतुना कुत्सितरसानुमाने [4]प्रतिपाद्यमस्ति न तु तत्रेच्छेत्यर्थः।

हेतोरवधारणेन अनवधारितधर्मत्वं समान्याभावस्य यत् किञ्चित् विशेषेण विरोधात् अतः पक्षतोपपत्तये यदि हेतोरप्यनवधारणं वाच्यं तदा दूषयति—**हेतुमत्तयेति**। निदानभावो निदानत्वहेतोरिति शेषः। हेतोरनिश्चये सन्दिग्धासिद्धत्वेन हेत्वाभासत्वात् अनुमितिकरणत्वं न स्यादित्यर्थः। हेतोरनिश्चय इति [5]नोक्तं हेतोः

---

१. यथा यथा। २. पटज्ञानत्वमेवेतिपाठः प्रथम पुस्तके नास्ति।
३. प्रतिपादयितुमिच्छेत्यर्थे णिच्प्रत्ययस्य युक्तत्वेऽपि प्रतिपत्तुमिच्छेति द्वितीयकल्पे णिजर्थस्याप्रतीतेः तत्र णिच् प्रत्ययासम्भवादिति तात्पर्यम्। ४. प्रतियोग्स्वादावस्ति नतु तत्रेच्छेत्यर्थः। अयमेव वारद्वयं पठितः। ५. नोक्तहेतोः इति पाठः।

**न चाऽनवधारितहेतुविषयधर्मा धर्मी पक्षः । तथा हि—केन अनवधारितधर्मा ? न तावदनुमानप्रयोक्त्रा, स्वयमज्ञाते परं प्रत्यप्रयोगात् । प्रतिवादिनेति चेन्न. प्रतिवादिविदिते ह्यर्थे वादितया परस्परविद्योत्कर्षापकर्षनिरूपणार्थमनुमानदर्शनात् ।**

**तथा अनवधारणं यत्किञ्चिद्धेतुविषयधर्मगोचरम्, वादिप्रयोक्तव्यहेतुविषयगोचरं वा ? न तावदाद्यः, अग्निमत्त्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरधर्मानवधारणाद् धूमं प्रति पर्वतस्य पक्षत्वप्रसङ्गात् । न द्वितीयः, तथापि**

---

पक्षातिरिक्ते । निश्चयदशायां धर्मिणोऽनवधारितधर्मत्वेन पक्षत्वे बाधकाभावः । पक्षे तन्निश्चये हि अनवधारितधर्मत्वाभावे पक्षता न स्यात् इति तस्य हेतुमत्तया निश्चयाभावः पक्षतोपयोगी वाच्यः तत्रेदं दूषणमिति । अवधारणे इत्यत्र हेतुमत्तयेति षष्ठयन्तविपरिणामेन सम्बन्धः ।

विद्यासागरस्तु अवधारण इति लङ्घितपाठं मत्वा अनवधारणपक्षे एव दूषणान्तरमाह—**अनवधारणे वेति** । धर्मानवधारणे तद्विशिष्टस्य धर्मिणोऽप्यवधारणासम्भवेन पक्षासिद्धिर्विशेषणनिश्चयपूर्वकत्वाद् विशिष्टसिद्धेरित्यर्थः । नचानवधारितरूपतया धर्मस्य निश्चितत्वात्तद् विशिष्टपक्षसिद्धिरिति वाच्यम् । अनिश्चितरूपेण निश्चितमित्युक्तौ निश्चितभावाभावयोरेकतरोपाधौ व्याघातादिति व्याचष्टे ।

**हेतुविषयेति** । साध्येत्यर्थः । स्वयमज्ञाते = स्वयमनवधृते परं प्रति प्रमाणेन प्रतिपादनायोगादित्यर्थः । सन्देहविषये प्रमाणस्य व्याघातात् तथा चाप्तस्य स्वनिश्चितार्थस्यैव प्रतिपादकत्वादित्यर्थः । प्रतिवादिविहितेऽपीति = अनुमानवाक्यप्रयोक्तुरितरः वादी अनुमानवाक्यप्रयोक्ता ।

अयमाशयः यदा गुरुमुखादवधृतेऽप्यर्थे सतीर्थयोरेकः स्थापनावादी परश्च दूषकः । सच दूषणं स्थापनावादिनं पराजेतुं न ददाति किन्तु तस्य [1]विद्योत्कर्षज्ञानाय । न च दूषणवादिना सोऽर्थो न ज्ञायते[2] परं जानताऽप्ययमर्थोऽनेन स्थापयितुं शक्तो न वेति दूषणमुद्भावयति । अनुमानवक्ता च मम सामर्थ्यमयं जानात्विति कृत्वा स्थापयति तत्रेत्यर्थः । न चैवं तद्दूषको न प्रतिवादी स्यात् तत्त्वनिर्णयविजयफलकामनाविरहादिति वाच्यम् । स्थापनाप्रतिकूलवादितयैव प्रतिवादिता । यौगिको ह्ययं शब्दः । अनुमानवाक्यप्रयोक्तृप्रतिवचनवादिता विवक्षिता नतु तत्वनिर्णीषुता[3] प्रयोजनं पुनरस्याः कथायाः स्वोत्कर्षज्ञापनमेव वादिनः प्रतिवादिनश्च तद्वत् कर्मज्ञानमेव । यदि च कथात्रितयवहिर्भूतत्वात् इयं कथा नेष्यते मास्तु कथात्वं साधनदूषण[4]प्रयोक्तृवाक्यसन्दर्भस्तु एतादृशः सहाध्यायिनोः

---

१. विद्योत्कर्षज्ञापनाय इति पाठः । २. पम ३. तत्वनिर्णीतेषुता ।
४. प्रकक्तृ ।

तत्र प्रसङ्गात् । तद्धेतूनामपि वादिप्रयोज्यत्वात् । असाधारणविवक्षायाञ्च अननुगमाद्, इतरेतराश्रयदोषाच्च । पक्षधर्मत्वेन हेतुत्वनिरूपणात्, व्याप्तपक्षधर्मत्वस्य हेतुत्वात् हेतुना च पक्षनिरूपणात् ।

स्वार्थानुमाने च हेतोरप्रयोज्यत्वात्, पक्षाभावेनानुमानानुदयप्रसङ्गाद् विरुद्धहेतौ पक्षस्याभासत्वप्रसङ्गात् । तत्र साध्यस्य तद्धेतुविषयत्वाभावाद्, हेतोरेव

---

सम्भवत्येवेत्येतदुदाहृतम् । तत्त्वनिर्णयफलिकायान्तु नावधारितार्थमात्र विषयत्वमिति तदुपेक्षितमिति परिभाव्यम् ।

तत्तद्धेतुगोचरेति । पर्वते एव कृतकत्वसावयवत्व हेतुकसाध्यानित्यत्वकार्यत्वानिर्णयाद् धूमं प्रति अग्निमत्त्वनिर्णयदशायां पक्षतापत्तेरित्यर्थः । तद्धेतूनामिति । तेषां कृतकत्वादि हेतूनामपि वादिप्रयोज्यत्वात्[1] तत्साध्यानित्यत्वादिधर्माणामग्निमत्वनिर्णयदशायामपि अनवधारणादतिव्याप्तितादवस्थ्यात् । तत्तद्धेतुगोचरस्य धूमविषयप्रदेशश्यामलतादेरेव निश्चयात् अग्न्यनुमित्यन्तरमपि पक्षतापत्तेरिति व्याख्यानं तु मैथिलोक्तं हेयम् । तथापि तत्प्रसङ्गादेवेत्येतावतैव पूर्वदोषप्राप्तेः तत्तदिति [2]वीप्सावैयर्थ्यापत्तेः ।

किञ्च तत्तद्धेतूनामिति बहुबचनं व्यर्थमेव स्यात् । अथ धूमानुमानप्रयोगदशायां तेषां वादिप्रतिवादिप्रयोज्यता नास्तीति चेन्न । वादिप्रयोगयोग्यता प्रयोगाभावदशायामस्त्येव प्रयोगोपहितत्वं तु स्वार्थानुमाने पक्षत्वभङ्गप्रसङ्गादेव न युक्तः । असाधारणेति । वादिप्रयोज्यधूमवत्त्वेहेतुविषयानवधारणमग्निमत्त्वं प्रति पर्वतस्य पक्षत्वमिति विद्यासागरः । तदसत् । प्रदेशश्यामतामादाय अतिप्रसङ्गतादवस्थ्यात् हेतुविषयाग्निमत्वावधारणाभाव इति वाच्यम् । न चैवं सति धूमपदं व्यर्थमिति वाच्यम् । आलोकेन वह्न्यनुमितौ अधूमलिङ्गकानुमिति स्वीकारेण तत्र पक्षतासम्पत्तये तदावश्यकत्वाद् । अननुगमादिति । शब्दादेवेयं पक्षता न स्यादिति भावः ।

ननु तत्पक्षकतद्धेतुकपक्षता सा चानुमितिविशेषहेतुरिति नाननुगमो दोषाय इत्यनुशयेन असम्भवमाह—इतरेतरेति । अनुमानानुदयप्रसङ्गादिति । [3]प्रयोगयोग्यतायाः निर्वक्तुमशक्यत्वादिति भावः । तत्र साध्यस्येति । न नित्यत्वं कृतकत्वविषयः तज्जन्यानुमिति विषयत्वं हि तद् । विषयत्वं न च तत्रानुमितिरस्तीति भावः ।

ननु तत्र नास्त्येव शब्दादेः पक्षता किन्तु पक्षाभास एव सः । अतएव विरुद्धोऽपक्षधर्मत्वादेव[4] हेत्वाभास इत्याशङ्क्याह—हेतोरेवेति पक्षधर्मस्येत्यर्थः । विरुद्धो

---

१. वादि प्रयोजत्वात् । २. वीक्षा ।

३. प्रयोगियोग्यताया अनिर्वक्तुमशक्यत्वात् ४. अंतरविरुद्धोपसधर्म इति पाठः ।

च साध्यविपरीतव्याप्त्या दुष्टत्वात्। एतेन सन्दिग्धसाध्यधर्मा धर्मी पक्षः, साध्यत्वञ्च स्वपरार्थानुमानसाधारणमुत्पाद्यज्ञानत्वमिति निरस्तम्।

## ३२. पक्षधर्मतालक्षणखण्डनम्

भवतु वा यः कश्चन पक्षः, केयं पक्षधर्मता ?

पक्षाश्रिततेति चेन्न, नैयायिकादीन् प्रति प्रमेयत्वस्याहेतुत्वप्रसङ्गात्। विषयविषयिभावस्य ज्ञेयज्ञानरूपातिरिक्तस्यानङ्गीकारात्। तयोश्च ज्ञेयाश्रितत्वायोगात्।

प्रतीतिव्याप्तिबलेन सामान्यतो व्यापकावगाहनप्रवृत्तां विशेषमादाय परं

---

हि व्याप्तिज्ञानविघटनद्वारा हेत्वाभासो नतु अपक्षधर्मतया तथा च हेतुदोषेणैव अनुमानस्याभासनोपपत्तौ न पक्षस्य आभासत्वं कल्प्यं गौरवात् प्रमाणाभावात्। अन्यथा बाधितसाध्यपक्षाभासतापत्तेरितिभावः।

**एतेनेति।** विरुद्धहेतुकपक्षस्याभासप्रसङ्गेन। नहि तत्र वादिप्रयोज्यहेतूत्पाद्यानुमितिविषयता साध्यस्य सम्भवति। यदि च वादिप्रयोज्यहेतूत्पाद्यज्ञानत्वं[१], हेतुमात्रोत्पाद्यज्ञानत्वं, येन केनापि उत्पाद्यज्ञानत्वं वा विवक्षितं तदा अग्निमत्त्वनिश्चयदशायामपि पर्वतस्य अग्निमत्त्वं प्रति पक्षत्वप्रसङ्गः प्रागुक्तोऽस्त्येवेति। अननुगमश्चेह तृतीये पक्षेऽविशिष्टः।

सन्देहस्य विशेषणत्वोपलक्षणत्वव्युदासः सन्देहाधारपुरुषविकल्पादिनेति। एतेनेत्यस्य अर्थस्तु मिश्रोक्तो न ग्राह्यः। तस्याः बुद्धिस्थत्वादिति। पक्षस्यधर्मः पक्षधर्मः तद्भावः पक्षधर्मतेति दूषिते, पक्षधर्मताव्याप्यस्य सामर्थ्यविशेषो यद्बलात् साध्यगतो विशेषः पर्वतीयत्वादिरूपः सिध्यतीत्यर्थः।

व्याप्तितो व्यवच्छेत्तुमाह—**प्रतीतिमिति**। प्रतीतिमादाय विशेषं पर्यवसाययितुं व्याप्यसामर्थ्यमित्यन्वयः। यद्वा विशेषमादाय पर्यवसाययितुमित्यन्वयः। परं केवलम्। **सामर्थ्यमिति**। अनुपपत्त्या [२]आक्षेपकत्वशक्तिविशेषमुपादाय सामान्यपर्यवासानमनुपपत्तिरिति विद्यासागरः।

व्याप्यस्य हि व्यापकसामान्यबोधनमेकं कार्यं तत्र व्याप्तिरेव तस्य वलं व्यापकगतविशेषबोधनं व्यापकविशेषबोधनं वा। अपरः तत्र यत् सामर्थ्यं तद्व्याप्तितः परं, व्याप्तेः सकाशाद् भिन्नं कार्यवैलक्षण्यस्य तदुन्नायकत्वादिति फक्किकार्थः।

---

१. हेतूत्पाद्याज्ञानत्वम्। चतुर्थे पक्षे।

२. आक्षेपत्वशक्ति इति पाठः।

**पर्यवसाययितुं व्याप्तस्य सामर्थ्यं सेति चेन्न, तस्याः सामान्यविषयायाः अनुपपत्तेर-सिद्धे[1]र्व्याप्तिवत्सम्भवात्। अनुपपत्तित्वे व्याप्त्यनुप्रवेशात्, अधिकविषयाकाङ्-**

तत्रेदं विचार्यं, किं पक्षधर्मस्य व्याप्यस्य तत्सामर्थ्यं तद्व्याप्यमात्रस्य वा। तत्राद्ये शब्दोऽभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वस्य ज्ञानज्ञेयात्मनः पक्षधर्मता न स्यात् ज्ञानस्यात्मगुणत्वात् ज्ञेयस्य तु स्वावृत्तित्वादित्युक्तं विद्यासागरेण तु अत्रापि तद्-ग्रन्थोधृतः। द्वितीये त्वाह—**तस्या इति**। सामान्यप्रतीतेर्विशेषविषयत्वं विना अप-र्यवसानं यदि अनुत्पत्तिस्तदाह—**असिद्धेरिति**। उत्पद्य एव हि सामान्यज्ञानं विनाऽपि विशेषभानं द्वयोर्भेदाद्विशेषग्राहकसामग्र्याः सामान्यग्रहकारणत्वे माना-भावात् कथमन्यथा व्याप्तिज्ञानमित्याह—**व्याप्तिज्ञानवदिति**। यदि च तत्रापि विशेषाभासः तथैवेत्युच्यते तदा अनुमानस्य प्रमेयमेव विलीयेतेति।

अथास्ति कश्चिद्विशेषो यश्चानुमितावेव भासते नतु व्याप्तिज्ञाने तर्हि सिद्धं सामान्यज्ञानं विशेषज्ञानं विनापि उत्पद्यते इति। अत एव [2]विशेषविषयत्वं वा तथास्यापर्यवसानम् अनिश्चयरूपतेत्यपि परास्तम्। दोषाजन्यत्वेन व्याप्ति-निश्चयवदुपपत्तेः।

अथ व्याप्तिग्रहोऽपि विशेषविषयत्वं विना अनुपपन्नमित्युच्यते तत्राह—**अनुपपत्तित्व इति**। न विद्यते उपपत्तिर्यस्याः तथात्वे व्याप्तिग्रहणकाले सामान्य-प्रतीतौ विशेषभानस्वीकारे व्याप्त्यनुप्रवेश एव विशेषस्येत्यनुमानोच्छेदः। [3]व्याप्त्य-ननुप्रवेशादिति पाठे व्याप्तिग्रहे व्यापकसामान्यं न प्रतीयेते विशेषाग्रहादतो [4]व्याप्त्य-सिद्धिरेवेत्यर्थः।

मितभाषिण्यान्तु पक्षे विशेषस्याभावे व्याप्यस्यानुपपत्तिरित्येव व्याप्य-सामर्थ्यकल्पितत्वं विशेषस्येति चेत्तत्राह—अनुपपत्तित्वे इति। पक्षधर्मताया अनुप-पत्तिरूपत्वे व्याप्त्यतिरिक्तत्वं न स्यात्, यत्र हि अयं वर्तते धूमः तत्र अग्निं विना तस्यानुपपत्तिरिति व्याप्तिरेवेत्यर्थ इति व्याचष्टे। अनुपपत्तिवलेन विशेषविषयता-भ्युपगमे अर्थापत्तिरेव स्यात्। सा चानुमानमित्याह अनुपपत्तित्वे इति मिश्राः। उत्पन्नयोरपि (सामान्यविशेषप्रतीत्योः) व्यापकप्रतीतेरधिकविषयाकाङ्क्षा—(इदमेव) अपर्यवसानमिति चेत्तत्राह—[5]विरम्य व्यापारापत्तिरिति। [6]अर्थग्रहण-रूपाया बुद्धेर्जन्मैव व्यापारः तदनन्तरं पुनरधिकविषयाकाङ्क्षित्वं विरम्य व्यापार आपद्येतेत्यर्थः। तथा च सामान्ये तस्याः प्रतीतेर्व्यापारः प्रथमं पश्चाद् विशेषेण चैवं सम्भवति, तस्या जन्ममात्र व्यापारत्वात् जन्मनश्च एकत्वात्। बुद्धिर्हि उत्पद्य-

१. व्याप्तिवदिति पुस्तकान्तरे पाठः। २. विशेषयत्वं। ३. व्याप्त्यनत्वप्रवेशादिति पाठे।
४. व्याप्तिसिद्धिरिति क्वचित् पाठः।
५. विरलव्यापारापत्तिः। ६. अर्थग्रहणरूपायाः।

**क्षित्वे विरम्य व्यापारापत्तेः, मानान्तरत्वापत्तेर्वा । विशेषविषयायाश्च अनुपपत्ति-त्वेऽतिप्रसङ्गात् ।**

**पक्षधर्मतया च यदि साध्यव्यक्तिभेदः सिद्ध्येत्, तर्ह्यनुमाय तां प्रत्यक्षेण पुरुषद्वयदर्शने तद्विशेषासंशयो स्यात् । प्राग्विशेषादर्शनात्तथा स्यादिति चेन्न, पश्चा-त्तत्र तद्दर्शित्वान्न संशयीतेति ।**

---

माना यां विषयीकरोति तामेव नान्यं कालान्तरे घटबुद्धेः पटबुद्धित्वप्रसङ्गा-दिति भावः ।

अथ धूमज्ञानस्य धूमविषयस्यापि वह्निज्ञानजननाद् वह्निविषयत्ववत् सामान्यप्रतीतिरपि विशेषबुद्धिमुत्पादयिष्यतीत्याशङ्कयाह—**मानान्तरतापत्तेरिति** । तदेव हि प्रमाणान्तरं यस्यां लक्षणप्रमायां जनने मनसो धारणं सहकारीति सामान्यानु-मितिकरणाद् विशेषप्रतीतेः करणं प्रमाणान्तरत्वेन गण्येत । नहि तदनुमानं व्याप्तिज्ञानेतरत्वादितिभावः ।

व्याप्तिवलं सामान्यबुद्धिजनकमेकं तथा पक्षधर्मतावलं विशेषबुद्धिजनकम-परं प्रमाणान्तरमिति । **विशेषविषयायाश्चेति** । यदि सामान्यप्रतीतिरनुपपद्यमाना विशेषधियं जनयति तदा अपरापरविशेषधियमपि जनयेत् सामान्याश्रयगतत्वाविशे-षात् ? पर्वतवह्निगतैकहस्तद्विहस्तत्वादेरित्यर्थः । यदि च तादृशविशेषधियं विना नानुपपत्तिस्तदा सामान्याश्रयनिष्ठविशेषं विनापि नानुपपत्तिर्जातत्वादेवेति भावः ।

मितभाषिण्यां यदि पक्षधर्मतावलाद् बुद्धयुत्तरस्य विशेषविषयत्वमिष्यते तदा बुद्धचन्तरस्य मानान्तरतापत्तिः प्रमाणान्तराप्रतीतविषयबुद्धिजनकत्वादित्यभ्यु-पेत्य अदूषयत् ।

वस्तुतः पक्षधर्मताया अनुपपत्तिरूपत्वे चक्षुरादेरपि अनुपपत्तित्वप्रसङ्गो विशेषविषयत्वाविशेषादित्याह—**विशेषविषयादेरिति** । विशेषविषय आदीयते यथा पक्षधर्मतया सा विषयादिस्तस्या विशेषविषयाया इति पाठः सुगम एवेति । ननु सामान्यप्रतीतेर्नानुपपत्तिः येनोक्तदोषः स्यात् । अपितु विशेषविषया तस्या या पर्वत-निष्ठत्वादि विशेषमन्तारेण अनुपपत्तिः सा व्याप्यसामर्थ्यं पक्षधर्मतेत्युच्यते इत्यत आह—**विशेषेति** । अतिप्रसङ्गादनवस्थापातादित्यर्थ इति विद्यासागर. ।

**प्रागिति** । अनुमितो हि स विशेषो न प्रत्यक्षतो दृष्टोऽतोऽपरोक्षविषयदर्शना-भावात् संशयोऽपरोक्षो नानुपपन्नः । इत्याशङ्कार्थः ।

यद्यपि च संशयो निश्चयमात्रनिवर्त्यः अन्यथा अनुमितवह्नेः पर्वते तत् संशयापत्तेः तथापि दोषान्तरमाह—**पश्चादिति** । अनुमितस्यैव विशेषस्य पश्चाद् दर्शनादित्यर्थः । भवति च मया प्राक् शब्देन अनुमितो यः पुमान् सोऽयं नवेति संशयः । तस्माद् विद्यमानोऽपि विशेषो व्याप्यस्योपपादको न निश्चितः संशयविषय-

## ३३. उपमानलक्षणखण्डनम्

**उपमानमपि किमुच्यते ?**

**सादृश्यज्ञानमुपमानमित्येके । तन्न, स्मृतावपि प्रसङ्गात् ।**

**अनुभव इत्यभिधाने च 'सदृशाविमौ' इतीन्द्रियजेऽपि प्रसङ्गात् । सोऽपि गवयो गवा सदृशो गवयत्वात्, गवयान्तरवदि'त्यनुमानस्यापि तत्त्वापत्तेः । एवमाप्तोक्तिजेऽपि ।**

**किञ्च—उपमितिलक्षणमिदमुपमितिकरणलक्षणं वा स्यात् ? नाद्यः, सादृश्यस्योपमेयत्वापत्तेः । सदृशे चोपमेयव्यवहारोऽस्ति, 'चन्द्रोपमेयं मुखमि'त्यादि ।**

---

त्वादिति भावः । तस्मादनुमानं न सामान्यप्रमाणं नापि विशेषः तत्प्रत्यापनसामर्थ्याभावादिति[२] कल्पितमेव तत् प्रामाण्यमित्यनुमानानिर्वाच्यतया तत्प्रमेयस्य आपाततो निर्वाच्यत्वेऽपि वेदेन अद्वैतसिद्धिः अप्रत्यूहेति अनुमानखण्डनिगर्वः । इति समाप्तौ ।

० इत्यनुमानखण्डनम् ०

अक्षपादसौत्रक्रमप्राप्तम् उपमानं खण्डयितुमुपक्रमते—**उपमानमिति** । किमा आक्षेपे प्रश्ने च साधारणेन आक्षिप्तमपि पृष्टं सदाह—सादृश्यमिति विद्यासागरः ।

वस्तुतस्तु आक्षेप्तैव लक्षणखण्डनाय तानि तान्युपन्यस्यति उपमानमिति । करणमित्यर्थः । स्मृताविति । सादृश्येति लक्षणवाक्यतः एव ज्ञानविशेषणतया लभ्यते । अपि शब्दः संशयभ्रमयोरपि[३] संग्रहाय । नच सादृश्यज्ञानमात्रमुपमितिकरणं तदनन्तरमुपमितेरदर्शनात् । व्यापारविधुरस्य फलायोगव्यवच्छेदेनैव करणत्वात्[४] । अनुभवो निश्चयात्मकः प्रमात्मकश्चेति शेषः । यद्वा तद्दोषे सत्येव दोषान्तरमाह—**इन्द्रियजेऽपीति** । यद्यपि नेदमुपमितिः यद्यपि नेदमुपमितिलक्षणम् । किन्तु उपमितिकरणस्य सादृश्यस्य प्रत्यक्षन्तु नागरिकस्य[५] वनं गतस्य उपमिति जनयति एव[६] तथाप्येकमात्रविशेष्यकं तथा इति भावः ।

अथातिदेशवाक्यार्थधीमतः सादृश्यानुभवो यथार्थ इति विवक्षितमित्यत्राह—**सोऽपि गवय** इति । **एवमिति** । गोसदृशो गवय इत्याप्तवाक्यजं ज्ञानमुपमितिकरणं न भवति । संज्ञासंज्ञिसम्बन्धपरिच्छेदरूपा उपमितिः गवयदर्शनत्वादित्यतिव्याप्तिरुक्ता ।

**किञ्चेति** । ल्युडयं भावे करणे चेत्याशयेन विकल्पः । नच प्रमाणस्यैव लक्षणत्वेन भावव्युत्पत्तिपक्षे अर्थान्तरतेति[७] वाच्यम् । अस्य दोषस्यापि बोद्धव्यत्वात् ।

---

१. सामान्यप्रमाणम् । २. तत्प्रत्ययपंत । ३. संशयोभ्रमयोरपि संग्रहाय । ४. करणत्वतः । ५. नगोरेकस्येति पाठः । ६. एवं तथाकमात्रविशेप्यकं तथा । ७. इत्यपि व्याप्तिः । ८. प्रकृतादर्थादप्रतिसम्बद्धार्थम् अर्थान्तरमिलि तल्लणम् ।

**सदृशमितिः सेति चेन्न, अक्षादिकरणासम्भवे तदुदाहरणासिद्धेः। नापि द्वितीयः, सादृश्यज्ञानस्य सर्वस्यासम्भवत्प्रमाणान्तरव्यापारफलजनकताया दर्शयितुमशक्यत्वात्। न च सादृश्यमेकमनुगतमस्ति। मुखसादृश्यस्य हस्तसादृश्यस्य च भेदेनैवोपलम्भात्।**

**न च सादृश्यरूपत्वमनुगतं तेष्वपीत्यदोषः। तथापि सादृश्येन सह सादृश्ये अनेकस्थत्वादौ सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याऽऽश्रयणाभ्युपगमे परस्पराश्रय-**

---

यद्वा तदा उपमितिकरणमेव फलद्वारा लक्षणमिति तात्पर्यात् नार्थान्तरता परन्तु अप्राप्तकालता तु[१] स्यादेव।

**सदृशमितिः सेति**। सादृश्यविशिष्टज्ञानमेव उपमितिः तस्य विषयः सदृशमुपमेयमेवेति भावः। उपमित्यात्मकफलस्य वैजात्ये सिद्धे तत्करणमुपमानम्, मानान्तरं कल्प्यं तद्वैजात्यन्तु करणवैजात्येन वा स्यात् प्रत्यक्षादि सिद्धं वा। नाद्यः। तथानुभवाभावात् उपमेयमिति धीस्तु सादृश्यविशिष्टप्रत्यक्षादिगोचरत्वेनाप्युपपन्नेत्याह--**अक्षादिकरणेति**। तथा च लक्षणमिदमसम्भवीति भावः। **सादृश्यज्ञानस्य सर्वस्येत्यादि**=न सम्भवत् प्रमाणान्तराणां व्यापारो यस्मिन् फले तदसम्भवत्प्रमाणान्तरव्यापारफलं तज्जनकतयेत्यर्थः। नच सादृश्यव्यवहारस्तत्फलं प्रमाया एव प्रमाणफलत्वात्। नच सदृशानुभवस्तत्फलं तस्य प्रत्यक्षादिनैव सिद्धेः। नापि सादृश्यानुभवः करणफलयोरेकत्वानुपपत्तेः। नापि संज्ञासंज्ञिसम्बन्धपरिच्छेदः तत्फलं दृष्टगोररण्यगतस्य[२] अतिदेशवाक्यं श्रुतवतोऽयं गवयसंज्ञः अन्यथा गोसादृश्यानुपपत्तेरित्यर्थापत्त्यैव तत्सिद्धिरिति लक्षणासम्भवः।

किञ्च सादृश्यं ज्ञानस्य उपलक्षणं विशेषणं वा। आद्ये उपलक्षणस्य उपलक्ष्यवहिर्भावात्। अन्यस्य च ज्ञानगतधर्मस्य दुर्वचत्वात्। ज्ञानत्वमात्रस्य लक्षणत्वे अतिव्याप्तिः विशेषणे च सादृश्यस्य प्रतिव्यक्तिव्यावृत्त्या तत्तद्विशिष्टस्यापि व्यावृत्तेरव्याप्तिरित्याशयेनाह—**न चेति**। **भेदेनेति**। मुखे चन्द्रस्य सादृश्यमाह्लादकत्वं हस्ते करि पुष्करसादृश्यं दीर्घत्वे सति क्रमतः तनुत्वमिति भेदः।

**सादृश्यरूपत्वमिति**। सादृश्यत्वमित्यर्थः। सादृश्येषु यदेकं रूपं सादृश्यत्वं तत्राऽपि सादृश्येन सह सादृश्यमस्ति अनेकस्थत्वज्ञेयत्वादि सादृश्यत्वं यथा अनेकस्थे ज्ञेयेच तथा सादृश्यमपि ज्ञाने ज्ञेये चेति। तस्मिन् सादृश्यत्वाश्रिते सादृश्ये अनेकस्थत्वादौ सादृश्यरूपत्वस्य आश्रयभावो यद्यभ्युपगम्यते तदा सादृश्ये अनेकस्थत्वादि रूपं वर्तते तस्मिश्च सादृश्यत्वमिति अन्योन्याश्रयात् नैकस्यापि सिद्धिरित्यर्थः। अनेन भयेन यदि अनेकस्थत्वादेः सादृश्यरूपत्वाश्रयत्वं नाभ्युपगम्यते तत्राह—

---

१. अवयवविपर्यासेनासम्बद्धार्थं वचनम् अप्राप्तकालं निग्रहस्थानम्।

२. दृष्टगोचरारण्य इति।

भावः, अनभ्युपगमे वाऽननुगमः। तयोः सादृश्यानभ्युपगमे वाऽन्यत्रापि तथापत्तिः।

किञ्च---वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वमेवं स्याद्, अविशेषात्। एवमेवाभ्युपगमे च परिगणितप्रमाणाधिक्यप्रसङ्गो वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति। अप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरुपमानमित्यपि न, आप्तवाक्यादपि तथा प्रमितेः।

यत्र तद्व्यापारो नास्तीति चेन्न, 'स चायश्च अभिन्नौ' इतिवत् 'स चायश्च सदृशावि'ति पूर्वप्रतीतस्य प्रतीयमानेन सहैव ऐन्द्रियकसादृश्यप्रतीतावपि प्रसंगात्। इन्द्रियासम्पृक्तस्येति चेन्न, प्रत्यक्षतो गोगवयसादृश्यं प्रतीत्य 'साऽपि च गौर्गवयेन सदृशी, गोत्वादियमिवे'त्यनुमितावपि प्रसंगात्। अलिङ्गजापीति चेन्न, नन्वेवं प्रत्यक्षानुमानशब्दानुत्थत्वे सतीत्युक्तं स्यात्। तथा च विशेषणमेव समर्थमित्यप्रतीयमानस्येत्यादि व्यर्थम्।

---

[1]अनभ्युपगमेवेति। सर्वसादृश्येषु सादृश्यरूपत्वस्येति शेषः। अथ सादृश्येन सह सादृश्यरूपस्य सादृश्यमेव नास्ति सादृश्यसादृश्यत्वयोः सादृश्यमेव नास्तीति यावत्। तथाच नोक्तोपालम्भः इत्यत आह तयोरिति। सादृश्यसादृश्यत्वयोरित्यर्थः। सदृशबुद्धेर्विनैव सादृश्याभ्युपगमे मुखचन्द्रयोरपि सादृश्यं न स्यादेवेत्यर्थः।

वैधर्म्यप्रतीतेरिति। [२]धिक्करभमतिदीर्घग्रीवं प्रलम्बचञ्चलोष्ठपुटं कठोरतरकण्टकाशिनं कुत्सितावयवसन्निवेशम् अपसदं पशूनामित्येव पश्वन्तरवैधर्म्यप्रतीतिरित्यत्र विशेषाभावादित्यर्थः। यदि च प्रमाणान्तराधिक्यभयेन वैधर्म्यप्रतीतेः प्रत्यक्षादिष्वन्तर्भावः तदाह—सादृश्येति। इतिशब्दः खण्डनसमाप्तौ।

मीमांसकाभिमतं लक्षणं खण्डयति–अप्रतीयमानस्येति। अप्रत्यक्षीक्रियमाणस्येत्यर्थः।

एतेन न तद्बुद्धेः प्रत्यक्षान्तर्भावः अनेन सदृशी मदीया गौरिति बुद्धिर्न प्रत्यक्षात् सम्भवति गोः असन्निकर्षादिति भावः। उपमानम्=उपमितिकरणमित्यर्थः। सादृश्यस्य प्रमितिर्यस्मादिति बहुव्रीहिः। आप्तवाक्यादपीति। तथा शब्दे अतिव्याप्तिरिति शब्दाजन्यत्वे सतीति विशेषणीयमित्याशयेनाह—

यत्रेति। तद्व्यापारः तद्वाक्यव्यवहारो वेत्यर्थः। [३]सचायश्च=पूर्वोपलब्धश्च सम्प्रत्यनुभूयमानश्च देवदत्तौ अभिन्नौ इतिवत्। सच नगरे अनुभूतो गौरयश्च वने अनुभूयमानो गवयश्च सदृशाविति प्रमितौ प्रत्यक्षात्मिकायामतिव्याप्तिरित्यर्थः।

---

१. अभ्युपगमे वा। २. उष्ट्रमित्यर्थः।

३. सच पूर्वोलपब्धः, अयश्च सम्प्रत्यनुभूयमानश्चेत्येवं क्रमेण योजनीयम्।

**नोपादेयमेव पदान्तरमिति चेन्न, अर्थापत्तेरवश्यं सम्भवात्, तेन सार्धमेतत्सादृश्यस्यानेव सार्धं तत्सादृश्यव्यतिरेकेणानुपपद्यमानत्वात्। अन्यथा प्रत्ययोत्पत्तिविषयं प्रमाणान्तरमापद्येत। तस्मात् 'अयं ह्रस्वः' इति प्रतीतेः 'अस्मात् स दीर्घः' इति चान्यथा कतमा प्रमा स्यात्। अर्थापत्ति प्रमाणान्तरमनिच्छताऽपि इयमर्थापत्तिरनुमाने वाऽन्तर्भाव्या पृथक् प्रमाणीकर्तव्या वा। एतेन अप्रतीतगवयगवान्तरसामान्यस्य अदृष्टान्तानुमानासम्भवात् गवयेनानेन सदृशी सा गौरिति मितिरुपमितिरित्यपि व्युदस्तम्, तयैतत्सादृश्यस्य एतेन तत्सादृश्यं विनाऽनुपपत्त्यैव सिद्धेरिति।**

**अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपि न, प्रस्मृतसङ्गतेरेवम्भूतोपमित्यव्यापनात्। अस्मृतसंगतीत्यभिधेयमिति चेन्न, अनुभूतस्मृत-कालान्तरप्रस्मृतप्रसङ्गतेरव्यापनात्।**

---

यथा हि संस्कारेन्द्रियाभ्यां देवदत्तावभिन्नौ इति प्रत्ययः तथा गोगवयौ सदृशाविति प्रत्यक्षमपि सम्भवति। नच तत्र तत्तेदन्ताविशिष्टस्य धर्मिण एकत्वात् विशेष्यसन्निकर्षसत्त्वात् तादृश प्रत्यक्षं सम्भवति नतु प्रकृते विशेष्यभेदात् तथापि विशेष्यसंन्निकर्षः प्रत्यक्षहेतुः नतु[1] यावद् विशेष्यसन्निकर्षोऽन्यथाभ्रान्तविपरीतप्रत्यभिज्ञानं न स्यादिति मिश्राः।

वस्तुतः तत्राऽपि संस्कारात्मिका प्रत्यासत्तिरस्त्येवेति। एवं विशेषणे पर्यवसितमर्थं[2] लक्षणवाक्यस्य दर्शयन् विशेषणवैयर्थ्येन[3] दूषयति—**तथाचेति**[4]। **अन्यथेति**। तद्विधर्माऽयमिति प्रतीत्यनन्तरमेतद् विधर्मा स इति प्रतीतिरित्यर्थः।

आचार्यलक्षणं दूषयितुमुपन्यस्यति—**अनवगतेति**। अनवगता सङ्गतिर्यस्याः संज्ञायाः तस्याः समभिव्याहृतं सह पठितं यद्वाक्यं गौरेवेति तदर्थस्य संज्ञिनि अनुसन्धानमित्यर्थः। संज्ञिनीत्येतल्लक्षणप्रविष्टं संज्ञासम्बन्धि[5]परिच्छित्तिः प्रमाणफलमिति प्रदर्शनार्थम्। नचाप्तवाक्यात् असतिवृत्यन्तरे[6] वृद्धैस्तत्र प्रयुज्यमानत्वादिति लिङ्गाद् वा अवगत एव सम्बन्ध इति वाच्यम्। प्रवृत्तिनिमित्तस्य प्रागनवगतस्य अवगतस्य वा सादृश्यस्याप्रवृत्तिनिमित्तत्वात् तदाहुः—सादृश्यस्यानिमित्तत्वात् निमित्तस्याप्रतीतितः।

समयो दुर्ग्रहः पूव [6]शब्देनानुमयाऽपि वा इति। **प्रस्मृतसङ्गतेरिति**। तथाच अनधिगतसङ्गतित्वाभावात् अव्याप्तिः। **अनुभूतस्मृतेति**। पूर्वमनुभूय प्रस्मृता कालान्तरे प्रस्मृतासङ्गतिर्यस्य कालव्यवधानादिना तस्योपमितावव्याप्तिः। अस्मृ-

---

१. नतु इति पाठोनास्ति।

२. अर्थलक्षणवाक्यस्य। ३. विशेष्यवैयर्थ्येन। ४. तदा च। ५. संज्ञासम्बन्ध इत्याशयः वृत्तान्तरे वद्धैः। ६. पादेना इति। कुसुमाञ्जलिकाः ११ तृतीयस्तवके।

**अस्मर्यमाणेति चेन्न, कदाचिदस्मर्यमाणतायास्तत्रापि सम्भवात्। सर्वदा अस्मर्यमाणतया क्वचिदप्यसम्भवात्। उपमितिप्राक्काल इति चेत्, स्यादेवैतत् यद्युपमितिर्लक्षिता स्यात्. तदर्थमेव तु क्रन्दनमिदं भवतः।**

**किञ्च – सर्वैरनवगतसङ्गतित्वस्य प्रकृतेऽप्यसिद्धेः। केनाप्यनवगतसङ्गतित्वस्य वाक्यजेऽपि सम्भवात्। उपमात्रेति च पूर्ववत् निरस्तम्। यस्या प्रमितेर्येन प्रमात्रेति चाभिधाने अनुगतरूपाभावात् व्यक्तौ पतनेन लक्षणाननुगत्यापत्तेः।**

**संज्ञेत्यप्याकुलम्, गोसदृशो गवयः प्रायः कानने महति दृश्यते' इति श्रुतवाक्यस्य काननपदाविदितसङ्गतेर्गवयपदविदितसङ्गतेश्च असंज्ञासंज्ञिसम्बन्धप्रति-**

---

तेति। विशेषणाभावादित्याशयः। कदाचित् महति कानने हस्तिनः शतं सन्तीत्यत्रापि कदाचित् स्मर्यमाणार्थत्वस्य सम्भवात् स्मर्यमाणार्थतादशायामतिव्याप्तिरित्यर्थः। कदाचित् स्मर्यमाणार्थताया इति पाठे कदाचित् स्मर्यमाणार्थताया अनुभूतस्मृतकालोत्तरं विस्मृतस्थलेऽपि सम्भवेन अस्मर्यमाणताया[1] असम्भवेन अव्याप्तिरेवेत्यर्थः।

**सर्वदेति**। [2]लक्ष्याभिमतेऽपि फलसिद्ध्युत्तरकालं स्मरणसम्भवेन सर्वदा[3] अस्मर्यमाणतया विशेषणस्याभावाद् बिशिष्टासिद्धिरित्यर्थः[4]। क्रन्दनमाक्रोशनं रोदनं वा। **यस्याः प्रमितेरिति**। पूर्वलक्षणे येन प्रमात्रा व्यवहितलक्षणे संज्ञापदेन का संज्ञा विवक्षितेति न शक्यते निश्चेतुं ततश्चातिव्याप्तिरित्याह—**संज्ञेत्यपि आकुलम्**। अव्यवहितार्थः सन्दिग्धार्थ इति यावत्।

**गोसदृशो गवय** इति। अत्र विद्यासागराः एतादृशवाक्यं श्रुतवतो वनं गतस्य स एवायमुपदिष्टो गवय इत्यनुसन्धानं जायते। नचासौ उपमानं गवयसंज्ञायाः संज्ञिना सह सम्बन्धप्रतिपत्तिः[5] हि सा नचेयं तथा, काननपदेनविदितसङ्गतिना समभिव्याहारादतः तत्र वाक्यजानुसन्धाने अतिव्याप्तिरित्यर्थमाहुः। तन्न। काननगमनरहितस्याप्यनुसन्धाने अतिव्याप्तिः तत्पर्यन्तानुसरणवैयर्थ्यात् प्रायः पदवैयर्थ्यापत्तेः।

काननगमनविधुरस्यापि तादृशशाब्दबोधे अतिव्याप्तिरिति शिष्यहितैषिण्याम्।

मिश्रास्तु प्रायः पदं बाहुल्यवाचि व्याप्तिपरतां वाक्यस्य व्यनक्ति। तथाचेदं काननं गवयाधारवदित्यनुमितौ गतमित्यर्थं इत्याहुः। तन्न। ईदृशप्रतिपत्ताविति वाक्यार्थप्रतिपत्तावतिव्याप्तेरेव मूलार्थत्वात्।

---

१. अस्मर्थमाणतया। २. लक्षाभिमत। ३. सर्वस्मर्यमाणताया। ४. विशिष्टलक्षणस्यासिद्धिरित्यर्थः। ५. सम्बन्धः प्रतिपत्तिः।

पत्तिफलायामीदृशप्रतिपत्तौ गतत्वेनातिव्यापकत्वात् । विनाऽपि वा प्रायःशब्द-मभिहितस्य तस्यानुसन्धाने प्रसङ्गः । तत्र काननसंज्ञासंज्ञिसम्बन्धावधारणेऽपि अन्यत्रैव पदान्तरसमभिव्याहारोत्थाया अन्यथानुपपत्तेः प्रमाणत्वात्, न तु उपमानस्य । उपमेयसंज्ञासमभिव्याहृतेति विशेषणे च पूर्वोक्त एव निरासः ।

वाक्यार्थेत्यपि तादृगेव, प्रतिपत्तिकालास्मृतातिदेशवाक्यावगतकाननादि-पदार्थस्य तथाविधप्रत्ययाव्यापनात् । वाक्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वे 'सदृशोगवयः' इत्यादिस्मारिणोऽपि प्रत्यये प्रसङ्गात् ।

प्रतीत्युत्पत्तिं प्रति प्रयोजकीभूतं यावत्, तावद्वाक्यं विवक्षितमिति चेन्न, अन्तर्भावितवनाधिकरणतादृशप्रतिपत्तिं प्रति तस्यापि प्रयोजकत्वात् । उपमितिं

---

ननु प्रायः शब्दस्य प्रयोगात् काननपदस्यापि विदितसङ्केतिकत्वं गम्यते अतः प्रायः शब्दरहितमुक्तलक्षणम् उपमानमिति नातिव्याप्तिरित्यत आह—**विनापि प्रायः पदमिति** । अन्यत्रैवेति । इह प्रभिन्नकमलोदरे [1]मधूनि मधुकरः पिबति इत्यत्रैवेत्यर्थः । इह गोसदृशगवयपदयोः समभिव्याहारादेव गवयपदव्युत्पत्तेः सिद्धत्वाद्[2] न उपमानमस्तीति कथमुपमानस्येत्युक्तिरिति चेन्न । अभ्युपगम्यापि दोषोऽयमुक्तः । **उपमेयेति** । काननसंज्ञा च नोपमेयस्य गवयस्येति भावः ।

तादृगेव =आकुलमेवेत्यर्थः । गोसदृशो गवयो महति कानने दृश्यते इत्यपि कदाचित् अतिदेशवाक्यं तत्रेति विग्रहः समग्रवाक्यार्थानुसन्धानाभावादव्याप्तिरि-ति भावः । काननादीत्यादिपदेन महत्पदपरिग्रहः । वाक्यार्थस्य पदार्थघटितत्वेन[4] पदार्थस्मरणे वाक्यार्थास्मरणादव्याप्तिः । यदि पुनः पदानि न स्मर्यन्ते तदा पदार्थास्मरणाच्चाव्याप्तिः नचातिदेशवाक्यावगतयावत्पदघटितं न वाक्यं किन्तु तदेकदेशघटितमिति नोक्तदोषः इति चेत्तत्राह—**वाक्यैकेति** । **प्रतीत्युत्पत्तिमिति** । प्रतीतिप्रयोजकं[5] यावद् विविक्षितमित्यर्थः । अतः काननादिपदस्य प्रतीत्यप्रयोजकत्वान्नाव्याप्तिः **तत्र काननेति** । प्रसिद्धगवयपदार्थस्य कानन इत्यत्र प्रसिद्धस्य विभक्त्यर्थतोऽधिकरणस्य च समभिव्याहारान्यथानुपपत्त्या गवयस्याधि-करणं काननपदार्थ इत्यवगम्यते अर्थापत्त्येत्यर्थः । गोपदस्य प्रतीतिजनकस्यासत्त्वा-न्नातिव्याप्तिरितिभावः । **अन्तरिति**[6] । अन्तर्भावितं वनमधिकरणं यत्र[7] तादृश-बुद्धौ काननाधिकरणगवयो गवयपदवाच्य इति बुद्धौ काननपदमपि प्रयोजकमेवेति तदनुसन्धानस्थलीयोपमितावव्याप्त्यापत्तिरेवेत्यर्थः ।

ननु तत्राप्युपमितिं प्रति काननमप्रयोजकमेवेति उपमितिप्रयोजकस्य यावत्त्व-मस्त्येवेति नाव्याप्तिरित्याशङ्क्याह—**उपमितिमिति** ।

---

१. मधुनि । २. सिद्धत्वानुपमानमस्तीति कथं मनोचमानस्य । ३. नस्य ।
४. परार्थं । ५. प्रयोगकस्य । ६. अन्तमिति । ७. वनमधिकरणयं ।

प्रतीति तु पूर्ववन्निरस्तमिति। यावत् संज्ञासंज्ञिबुद्ध्यौपयिकं तावद्विवक्षितमिति चेन्न, लक्षणसहचरितसंज्ञोपदेशार्थानुसन्धानेऽपि प्रसङ्गात्।

किञ्च यदा तर्कानुसन्धानविरहिणः तत्यप्येवंविधानुसन्धाने सादृश्यमेव गवयपदप्रवृत्तिनिमित्तमिति मितिः फलमुत्पद्यते, तदा तस्याप्रमाकरणस्यापि उपमानत्वमापद्यते। प्रमाफलकमिति विशेषणप्रक्षेपपक्षे चानुसंहितरूपव्यवहार्यतानुमित्युत्पादेनापि एतादृशानुसन्धानमुपमानं स्यात्।

अव्याप्तविषयप्रमाफलकमिति विशेषणीयमिति चेन्न, वस्तुगत्याऽव्याप्तत्व-

---

ननूपमितित्वेन प्रवेशे स्यादात्माश्रय इत्यन्यथा प्रवेशं शङ्कते—**संज्ञा संज्ञी-त्यादि**। **लक्षणेति**। गन्धवती पृथिवीति लक्षणेन सहचरिताया पृथिवीति संज्ञा तस्या उपदेशो लक्षणवाक्यं तदर्थानुसन्धाने गन्धमुपलभ्य सेयं गन्धवती पृथिवीत्यनुसन्धानमित्यर्थः। न चैतदुपमानं लक्षणं केवलव्यतिरेकीत्युक्तत्वात्। नच संज्ञासंज्ञिबुद्धिरितो न जायतेति वाच्यम्। उपदेशपदोक्त्या गन्धवती पृथिवीति व्युत्पादकत्वलाभेन गन्धवती, पृथिवीपदवाच्येति वाक्यपरत्वात्।

संज्ञासंज्ञिसम्बन्धप्रतिपत्तिजनकवाक्यैकदेशार्थानुसन्धानमुपमानमित्यत्रातिव्याप्त्यन्तरमाह—**किञ्चेति**। गवयत्वेन गवयपदवाच्योऽयमित्युपमितेः करणमुपमानम्। तच्च लाघवतर्कावतारे सति सम्भवति। सादृश्यं वा गवयत्वं वा गवयपदप्रवृत्तिनिमितमिति चिन्तायां गवयत्वस्यैव तन्न्याय्यं सादृश्यस्य तत्त्वे उपाधेर्बहुधर्मघटिततया बहूनां तत्त्वानौचित्यात्। यदा तु तर्को[1] नावतीर्णः[2] तदा सादृश्यमेव गवयपदप्रवृत्तिनिमित्तत्वेन अवगाहमाना उपमितिः जायते भ्रान्ता अयं गोसादृश्येन गवयपदवाच्य इति तत्रातिव्याप्तिरित्यर्थः। **अनुसंहितेति**। स्मृत्यतिदेशवाक्यार्थस्य गोसदृशोऽयं गवयत्वेन व्यवहर्तव्यो गवयपदप्रवृत्तिनिमित्तवत्त्वात् यन्नैवं तन्नैवं यथा गौरिति याऽनुमितिस्तत्रातिव्याप्तिरित्यर्थः।

अथवा उपमित्युत्तरकालमुपमितस्वरूपस्य गवयादेः यद् व्यवहार्यताऽनुमानमित्यर्थः। **अव्याप्तेति**। अव्याप्तस्य विषये व्याप्तस्याविषये या प्रमा [3]सा फलं यस्येत्यर्थः। अनुमितिस्तु व्याप्तस्य लिङ्गस्य व्यापारानुबन्धितया विषये एवोत्पद्यत इति तद्व्यावृत्तिरितिभावः। **वस्तुगत्येति**। उपमितिकरणस्य अनुसन्धानस्यापि प्रमेयत्वज्ञानत्वादिना व्याप्तत्वात् तेन जायमानं ज्ञानं व्याप्तविषयकमेवेति असम्भवः अव्याप्तस्य करणस्य उपमेयेऽप्यभावादित्यर्थः। उपमेयमपि येन केनचिद् व्याप्तमित्यसम्भवि लक्षणमिति तु मैथिलानामपव्याख्यानम्। तथा सति शङ्काग्रन्थस्य असम्भवदुक्तिकतापत्तेरिति। नहि अनुमेयमपि तु व्यापकमेवेति कथमनुमितिजन-

---

१. तर्केनावतीर्णः। २. तर्कानुसन्धान विरहिणः पुरुषस्येत्यर्थः। ३. यां प्रमाताफलं यस्य।

**स्योपमेयेऽप्यभावात् । व्याप्ततयाऽनवगम्यमानस्येति च कृते यत्प्रति तल्लिङ्गं तेन सह व्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात् । उपमेयेन सह व्याप्तत्वानवगतत्वोक्तावप्यनुमाने प्रसङ्गस्तदवस्थः । अनुमेयेन सहेति कृते च तदनपायादव्याप्तिस्तदवस्थैव । संज्ञासंज्ञिसम्बन्धप्रमितिकरणमिति चेन्न, तथात्वासिद्धेः, अर्थापत्त्यादितस्तत्सिद्धेर्वक्ष्यमाणत्वात् ।**

**अननुमितिजनकं तादृक् प्रतिसन्धानमुपमानमिति चेन्न, तज्जातीयस्यानुमितिजनकत्वात् । व्यक्त्यपेक्षायाञ्च जनकत्वस्य सामान्याकारपर्यवसायिनो नित्यं व्यक्तावसम्भावितया अननुगमेन चायुक्तत्वादिति ।**

---

कानुसन्धानातिव्याप्त्युद्धारः शङ्क्यते । व्याप्ततया अनवगम्यमानस्य विषये यत्प्रमाफला[1]नुसन्धानमित्यर्थः । अनुमानजनने व्याप्यतया आगमोऽपेक्षणीयो ननु उपमितिजननेऽपीति नातिव्याप्तिः सत्यपि व्याप्तत्वेऽवगम्यमानत्वाभावेन विशिष्टाभावसत्त्वात् इति भावः । **तल्लिङ्गमिति** । उपमितिकरणं यस्य व्याप्यं तं प्रति व्याप्यतावगतमपि यदा उपमितिजनकं तदा अव्याप्तिः स्यात् व्याप्यतयाऽवगम्यमानत्वांशाभावात् । नहि तदा व्यापकानुमितिरेवोत्पद्यते भिन्नविषये अनुमितिसामग्र्या बलवत्त्वात् नतूपमितिरिति क्वाव्याप्तिः उपमित्सायां सत्यामुपमितेरेवोत्पादादिच्छाघटितसामग्र्या बलवत्वादिति भावः । **उपमेयेनेति** । उक्तव्यवहार्यतानुमानेऽतिप्रसङ्गः स्यादित्यर्थः । तदनपायात् = उपमितेरनपायात् । उपमित्सया उपमितेरुत्पादादित्यर्थः । तथाच स्वव्याप्तत्वाऽवगतोपमितिकरणकल्पनायामव्याप्ति[2]तादवस्थ्यमितिभावः ।

**प्रमितीति** । तेन व्यवहार्यतानुमितौ नातिव्याप्तिः तस्याः संज्ञासंज्ञिसम्बन्धज्ञानपूर्वकत्वेन तत्प्रमात्वाभावादित्याशयः । **तथात्वासिद्धेरिति** । भवदभिमतस्योपमितिकरणस्य संज्ञासंज्ञिपरिच्छेदकत्वासिद्धेरित्यर्थः । संज्ञासंज्ञिप्रमितेः करणमर्थापत्तिरनुमानं वा नतूपमानमधिकं करणमित्यर्थः । **तादृगिति** । अनधिगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिनि अनुसन्धानमित्यर्थः । तथा च न व्यवहार्यतानुमितिकरणेऽतिव्याप्तिरित्यर्थः । जनकता = अनन्यथासिद्धपूर्वजातीयता । तथा च व्यवहार्यतानुमितिजनकप्रतिसन्धानजातीयत्वमनुमितिफलानुपधायकेऽप्यस्तीत्यनुमिति जनकभिन्नत्वमसम्भवीत्यर्थः । असम्भवमेव विवृणोति— **व्यक्त्यपेक्षयेति** । या व्यक्तिस्तादृशी नानुमिति जनयतीत्युक्तावपि सामान्यधर्मपुरस्कारेण गृहीतायां व्यक्तौ अवश्यं भावात् व्यक्त्यपेक्षया तु कारणता न सम्भवति व्यक्तेर्व्यभिचारितया कार्यजातीयनियमाभावात् ।

अथ तत्कार्यनियमस्तत्कारणव्यक्तेः सम्भवतीत्युच्यते तत्राह—**अननुगमेन**

---

१. प्रमाफलं अनुसन्धानं । २. अव्याप्तिता व्याप्ति तादवस्थ्यं ।

किञ्च—गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवाख्यं तर्कमपास्य न स्यादिति तदुपन्यासंस्थितौ किमानुमानिक्येव तत्र गवयत्वस्य गवयपदवाच्यताप्रमितिरियं नेष्यते ? सम्भवति हि प्रयोगः—विमतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे तर्केणविषयीक्रियमाणविपर्ययकत्वात्, न यदेवं न तदेवं यथा गोत्वम्, तथा चेदम्, ततस्तथे'ति। न ह्यस्ति सम्भवो मूलशैथिल्यादिदोषविरहिततर्कनिवेदितविपर्ययश्चार्थो न च तथेति।

---

चेति। तथा च व्यवहार्यतानुमितेः कस्याश्चिद् भूताया भाविन्याः अधिकरणयोर्वा जनकत्वास्याभावः तादृशानुमिति जनकेऽप्यस्तीति अतिव्याप्तिरितिभावः।

लाघवतर्कोऽयम् उपमाने सहकारीष्यते। न च उपमानस्य प्रमाणता सिद्धा, क्लृप्ता तु अनुमानस्य प्रमाणता अतस्तत्रैव सहकारिता युक्ता। कीदृशं तदनुमानं तदाह—विमतिपदमिति। गवयत्वमित्यर्थः। तथात्वे [1]प्रवृत्तिनिमित्तत्वे तर्केण [2]गौरवेणाविषयी क्रियमाणो विपर्ययोऽप्रवृत्तिनिमित्तत्वं यस्य तत्तथा तादृशत्वादित्यर्थः। गवयत्वस्याखण्डतया प्रवृत्तिनिमित्तत्वं तत्वं सादृश्यस्य न प्रवृत्तिनिमित्तत्वं कल्पनागौरवतर्कप्रतिहतत्वादिति भावः इति यदि व्याख्या तदा तथात्वे इत्यसंगव्यापत्तेः। तथात्वे विपर्ययस्येतिसम्बन्धे तथात्वस्येति स्यात्। नवा प्रवृत्तिनिमित्तस्य विपर्ययः तर्केणागृह्यते इति युक्तं वक्तुम् तथात्वे तर्केण विषयीक्रियमाणत्वादित्येव वक्तुमुचितं नवा गवयत्वस्याप्रवृत्तिनिमित्तत्वं गौरवात् किन्तु सादृश्यस्य प्रवृत्तिनिमित्तत्वं गुरुः। यच्च गौरवादितर्केण यद्यपि विशिष्य व्याप्त्युपग्रहो नास्ति अतो [3]विपर्ययपर्यवसानं नास्त्येव तथापि लाघवमेवास्य विपर्ययः इति व्याख्यातम्। तदपि न युक्तम्। लाघवस्य [4]गौरवाभावत्वे न मानं मानाभावात्। तस्मात्तथात्वे तथाभावे तर्केण विषयीक्रियमाणो विपर्ययो=वैलक्षण्यं यस्य गवयत्वस्येत्यर्थः। आरोपितगवयपदवाच्यत्वाद् वैसादृश्यादस्य वैलक्षण्यं लाघवाख्यतर्केणावगम्यते ततस्तस्य गवयपदप्रवृत्तिनिमित्तत्वं तथ्यमेव भवतीत्यर्थः। तर्केणेत्यनुच्यमानेन[5] प्रमाणेनाविषयीक्रियमाणत्वादसिद्धिः स्यात् अतएव तर्केति। तथात्व इत्यस्य व्याख्यानाय उपक्षिप्तं मूलशैथिल्यादिदोषरहितमित्युच्यते तथापि विपर्ययपदं सादृश्यवैलक्षण्यपरम्। न तथा सत्य इत्यर्थः।

विद्यासागरस्तु गवयपदप्रवृत्तिनिमित्तत्वे तर्केण बोध्यमान सादृश्यादेर्धर्मान्तरस्य विपर्ययोऽभावो यस्य तत्तथात्वादित्यर्थः इति व्याचष्टे।

---

१. गवयत्वस्य गवयप्रवृत्तिनिमित्तत्वे इत्यर्थः। २. गौरवेण विषयीक्रियमाणः।
३. विपर्ययाभावः। ४. गौरवाभावाभावत्वे। ५ अनुमाने प्रमाणेन।

**अथवा गवयपदमसम्भवत्प्रवृत्तिनिमित्तान्तरमनुपपद्यमानाप्तोक्तगोसादृश्य-सामानाधिकरण्यमर्थाद् गवयत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु । सा च त्वया व्यतिरेकीकृत्य परेण पृथगेवावश्यं प्रमाणनीयेति ।**

## शब्दलक्षणखण्डनम्

**शब्दोऽपि क उच्यते ?**

**आप्तवाक्यं हि शब्दः प्रमाणमिति न युक्तम, विकल्पानुपपत्तेः । तथा हि—कोऽयमाप्तो नाम? यथादृष्टवादीति चेन्न, भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात् । प्रमाणदृष्टेति विशेषणे च तथाभूतस्यान्यथावादव्यापनात् । यथाप्रमाणेति करणे चांशे तथाभूतवादिवाक्यस्यायथार्थस्यापि व्यापनात् ।**

---

**गवयपदमिति** । इदं [1]गवयत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यनेन सम्बध्यते । अर्थात् स्वस्येति लभ्यते ।

ननु गौरवदोषाद् असम्भवत्सादृश्यप्रवृत्तिनिमित्तकमप्रवृत्तिनिमित्तकमेव कुतो न संभवतीत्यत आह—**अनुपपद्यमानेति** । सामानाधिकरण्यान्तमपि गवयपद-विशेषणम् । तथा च प्रसद्धार्थपदसमभिव्याहारान्यथानुपपत्तिरेव गवयत्वस्य गवयपदप्रवृत्तिनिमित्तत्वे मानम् इति न मानान्तरमिति । **प्रमाणनीयेति** । प्रमाणी-कार्या । इतिः उपमानखण्डन समाप्त्यर्थः ।

इति उपमानखण्डनम् ।

क्रमप्राप्तशब्दप्रमाणखण्डनाय उपक्रमते । **शब्दोपीति** । **तथाभूतस्यापीति** । प्रमाणदृष्टस्य रजतस्यापि शुक्तित्वेन वादसम्भवात् तथा च प्रतारकवाक्येऽतिव्याप्ति-रित्यर्थः । **यथाप्रमाणेति** । प्रमाणमनतिक्रम्य यो वदति स आप्त इत्यर्थः । **अय-थार्थस्यापीति** । इमे रज्जुरजते इति । वाक्यस्य अंशतः प्रमाणमनतिक्रम्यैवोक्तत्वा-दिति भावः। **यावदिति** । यावत् यथाप्रमाणदृष्टवक्ता आप्त इत्यर्थः तेनांशतोऽप्रमाण दृष्टस्योक्तौ नातिव्याप्तिरित्याशयः ।

यदि यावद् यथाप्रमाणदृष्टं [2]तावद् यो वदति स आप्तः तदाह—[3]**प्राये-णेति** । लक्ष्याणामाप्तानां प्रायेण बाहुल्येन यावत्प्रमितवादित्वाभावात् शब्द-प्रमाणशब्देऽतिव्याप्तेः । तदेव स्पष्टयति—[4]**नहीति** । अंशतः प्रमाणीभूतानि व्याप्ते-स्तादवस्थ्यञ्चेत्यपि बोध्यम् । [5]**यावत् प्रमितमिति** । [6]यस्य यावती यदुक्तिः तत्प्रमाण-दृष्टं स आप्तस्तेन नातिव्याप्तिः । अंशतोऽप्रमाणदृष्टस्य अभिधानात् । लक्षणवाक्यस्य निष्कृष्टमर्थमाह—**यथाप्रमितस्यैवेति** । यावत्पदसमभिव्याहाराद् एवकारार्थस्य लाभ इति भावः । **अनेवंभूतस्येति** । अश्वत्थामा हत इति वाक्यस्य अप्रमिताश्व-

---

१. इदं प्रवृत्तिनिमित्तकस्यामा इति पाठः । २. यावत् । ३. प्रमैवेति ।
४. क्वचित् तर्हीति मूलपाठः ५. यथाप्रमिततस्यैव । ६. यो यावतो तदुक्ति ।

यावद्यथाप्रमाणदृष्टनिरुक्तौ च प्रायेणातथाभूतत्वादेव लक्ष्याणां तदव्याप्तेः। नहि यावत्प्रमितं तावदभिधीयते। यथाप्रमितस्यैव च वक्तुर्वाक्यमिति व्याकारे च युधिष्ठिरवाक्यस्यापि अनेवम्भूतत्वेनाव्याप्त्यापत्तेः। तत्र विषय इति विशेषणे च विशेषरूपस्य विषयस्यासाधारण्येन अव्यापकत्वापातात्।

अथ निर्दोषस्य वाक्यं तथेति चेन्न, सदोषस्य 'नास्ति घटः' इत्यभिधित्सतः 'अस्ति घटः' इति दैवान्निर्गतयथार्थवाक्याव्याप्तेः। तत्प्रमाणं न भवत्येवेति चेन्न, पूर्वमुक्तोत्तरत्वात्। प्रवृत्तिसामर्थ्येन प्रामाण्यावधारणसम्भवादापाततः सन्देहेऽप्यदोषात्। सामान्यतो निर्दोषत्वस्य भीमाग्रजेऽप्यभावात्, विशेषतस्तथात्वस्य असाधारण्यपर्यवसायित्वात्।

यथार्थवाक्यं शब्दः प्रमाणमित्यत्र को दोष इति चेन्न, पूर्वोक्तयाथार्थ्यदूष-

---

त्थामननार्थकत्वेन प्रमितार्थकेऽपि तद्वाक्ये लक्षणाभावादसम्भव इति भावः। **तत्र विषय इति।** शब्दजप्रतिपत्तिविषये प्रकृते या प्रमा तद्विषयस्यैव पर्यवसाने 'हरो भजनीय' इति वाक्यस्य प्रामाण्यं स्यात् नतु 'हरिः सेव्य' इति। **दैवादिति।**

[1]करणापाटवेन वेत्यर्थः। **पूर्वमेवेति।** आभासीभूतकरणजन्यस्यापि अनुभवस्य यथार्थत्वं चेत् तर्हि तस्य प्रमात्वमेव, ततश्च तत्करणमपि प्रमाणमेवेति निर्दोषवाक्यं लक्षणमव्यापकं स्यात्। अनाप्तसम्बन्धाद् आपाततः प्रवृत्तिसम्भवादात् प्राक् ततः सन्देह एव जायत इत्याशङ्कामपवदति—**प्रवृत्तिसामर्थ्येनेति।** तथा च उदकाहरणार्थिनो घटे प्रत्यक्षेण जलादिकार्थदर्शनेन प्रामाण्यावधारणं भविष्यतीत्यर्थः।

यद्यपि च शब्दान्न सन्देहः एककोटिमात्रविषयकज्ञानसामग्रीतोऽनेककोटिकज्ञानस्यानुत्पत्तेः, तथापि उत्पन्ने ज्ञाने प्रामाण्यसन्देहाहितः सन्देहः। सच न प्राक्कालीनप्रमाविरोधी नचाप्तोक्तत्वनिश्चयः प्रमाहेतुः प्रतारकवाक्यजभ्रमेऽपि प्रमात्वापत्तेः। नापि आप्तोक्तत्वं तथा, तथा सति सुतरां व्यभिचारात् अकारणत्वापत्तेरन्यदेव आप्तत्वं निर्वाच्यम् तच्च प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत्त्वं तच्च अव्याप्त्यादूषितमिति भावः। भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषाः, तत्सामान्याभावो भीमाग्रजे युधिष्ठिरेऽपि नास्ति शरीरात्मभ्रमस्य तस्यापि आहारादिव्यवहारोन्नेयस्य सत्त्वात्। **विशेषत इति।** प्रकृतवाक्यार्थे भ्रमादिराहितस्येत्यर्थः।

आप्तोपदेशः प्रमाणमिति गौतमीयं [2]प्रमाणलक्षणं दूषयन् द्वितीयं केषाञ्चिल्लक्षणं दूषयितुमुपन्यस्यति—**यथार्थवाक्यमिति। पूर्वोक्तेति।** यथार्थोऽनुभवः

---

१. इन्द्रियापाटवेनेत्यर्थः। २ प्रमाणलक्षणे दूषयते द्वितीयं।

**णानि तावत्प्रथमः। यथार्थमिति विशेषणस्य व्यवच्छेदकत्वाव्यवच्छेदकत्वयोः पूर्ववद्दोषश्च द्वितीयः। वाक्यत्वानिरुक्तिश्च तृतीयः। तथाहि—किमिदं वाक्यं नाम ? एकार्थावच्छिन्नपदसमुदायो वाक्यमिति चेन्न, एकत्वविषयत्वावच्छिन्नत्वानां वाच्यानि बूषणानि तावत्सन्तु, पदपदार्थं तु चिन्तयामः—**

---

प्रमेत्यत्र यानि दूषणानि तानि प्रथमतोऽत्र दोषः[1]। तथाहि—अर्थसादृश्यं वाक्यस्य प्रमेयत्वादिना अनाप्तवाक्यस्यापि तेन यथार्थज्ञानजनकं वाक्यमित्यर्थो वाच्यः। तत्रापि यत्किञ्चित्सादृश्यं भ्रमेऽपीति तज्जनकवाक्येऽतिव्याप्तिः प्रकाशमानरूपेण सादृश्यविवक्षायां रूपवान् घट इत्यत्राव्याप्तिः तज्जन्यज्ञानस्य रूपादिमत्त्वाभावादेवमन्यत्रापीत्यसम्भव एव स्यादितिभावः। वहूनामपि दूषणानां प्रागुक्तत्वेन अनुगमेऽप्येकवचनं[2] प्रयुक्तम्। **यथार्थमिति।** यथार्थपदं यदि अयथार्थस्य व्यवच्छेदकं तदांशतो यथार्थायथार्थस्य अंशतः प्रमाणत्वं न स्यादित्यव्याप्तिः। अथाव्यवच्छेदकं तदा विशेषणवैयर्थ्यमित्यपव्याख्यानम्। यत् सर्वांशेऽयथार्थं तदेव व्यावर्त्यं तथाच नाव्याप्तिः। नचैवमयथार्थांशेऽपि प्रामाण्यापत्तिरिति वाच्यम्। प्रमाणशब्दो हि लक्ष्यः नचांशिकप्रमाणस्य प्रमाणता न वा बाधितांशे प्रमाणत्वस्यापादकं किञ्चित् अस्ति। नहि प्रमाणत्वं तदापादकं व्यभिचारात् बाधितांशप्रमाणत्वस्याप्रसिद्धत्वाच्च।

अत्रेदं हृदयम्। यदीदं वाक्यं प्रमाणं स्यात् तदा बाधितोप्यर्थः प्रमितः स्यात् प्रमाणविषयत्वात् अवाधितांशवत् तथाच तस्यालक्ष्यत्वं वाच्यं ततश्चाबाधितोऽप्यर्थः तत्प्रमितो न स्यादित्युभयथापि निरुक्त्यसम्भवः।

यद्वा विशेषस्य आभासव्यवच्छेदकता न सम्भवति आभासस्यापि अर्थसादृश्यसम्भवात्। अव्यवच्छेदकत्वे च न विशेषणत्वमिति पूर्वोक्तदोषादित्यर्थः फक्किकायाः।

**एकार्थावच्छिन्नेति।** वस्तुसमुदायात्मकेऽतिव्याप्तिवारणाय पदेति। अनाप्तवाक्येऽतिव्याप्तिवारणाय एकार्थेति। क्रियाकारकादिभेदेन विशिष्टः एकोऽर्थः तदपवदितुं समुदायः। एकत्वं यदि गुणः तदा गुणादौ वाक्यार्थो नास्ति। अथाभेदः तदा अर्थशब्देन विषयमात्राभिधाने अभासीभूतवाक्यस्यापि वाक्यत्वप्रसङ्गः न च भवत्येव तद्वाक्यं नतु प्रमाणमाप्तीयत्वाभावादिति वाच्यम्। तथासति 'भगो वां विभजतु', 'पूषा वां विभजतु', इति वाक्यद्वयस्यापि वाक्यत्वं स्यात्। अर्थपदं साकाङ्क्षपदप्रतिपाद्यपरमिति चेन्न। तथापि तदोषतादवस्थ्यं, परस्परमनयोराकाङ्क्षा

---

[1] यद्यपि अनेकानि त्रिकल्पोक्तानि दूषणानि तदनुरोधेन दोषा इति प्रयोग उचितस्तयापि वेदाः प्रमाणमितिवत् दोष इत्येकवचनप्रयोगः। २. अनुगमय्य एकवचनमिति युक्तः पाठः।

**सुप्तिङन्तं पदमिति केचित्। वर्णा विभक्त्यन्ताः पदमित्यन्ये। तत्र नाद्यः, प्रत्येकं मिलितस्य चाव्यापकत्वात्। पृथक्प्रवृत्तिनिमित्ततायाञ्च वाक्यलक्षणाव्यापकत्वापातात्। नापि द्वितीयः, विभक्त्यर्थस्यानुगतस्यासम्भवात् 'विभक्तिरि' त्यनेन सुप्तिङोः, प्राग्दिशो विभक्ति'रित्यनेन च तसिलादेः पृथक् पृथगेव विभक्तिसंज्ञाविधानात् शब्दसाम्येन च लक्षणायोगात्।**

---

नास्तीति चेत्। तर्हि यः पदसमुदायः परस्परमाकाङ्क्षावानेवेति न तदर्थ इति निरपेक्षपदसमुदायस्याकाङ्क्षाविरहादव्याप्तिः।

अथ यत्समुदायघटकानि परस्परसाकाङ्क्षाणीति विवक्षितं तदा यत् पदार्थाननुगमात् अननुगतं लक्षणम्। **तच्च**[१] शब्दप्रमाणलक्षणं न प्रमाणविभाजकं स्यात्।

किञ्च विषयता, स्वरूपम्[२] अतिरिक्तं वेति विकल्पानां दूषणं चतुर्थपरिच्छेदे वक्ष्यते[३]। अवच्छेदकत्वञ्च अर्थस्य पदसमुदायावृत्तेर्न सम्भवति तन्नियतानतिरिक्तवृत्तित्वञ्चेत् तदाऽव्याप्तिः सर्वस्यार्थस्य पदसमुदायाधिकरणे गगने वृत्त्यसम्भवात्। नापि पदसमुदायजन्ये ज्ञाने विषयीभूय व्यावर्तकत्वं, ज्ञानजननात् प्राक् अवाक्यतापत्तेः। नापि स्वरूपयोग्यज्ञानविषयव्यावर्तकत्वं स्वरूपयोग्यतानिरूपकस्य पदसमुदायगतस्य प्रागप्रतीतौ लक्षणस्य दुर्ज्ञेयता, प्रतीतौ तदेव लक्षणमस्तु इत्याशयः। **वर्णा इति** विशेष्यमात्रं वर्णसमाम्नाये अतिव्याप्तम्। विशेषणमात्रञ्च[४] वाक्ये इत्युभयमुपात्तम्। वर्णत्वञ्चेह वाक्यभिन्नत्वमिति। **अव्यापकत्वादिति**। प्रत्येकमव्यापकं सुवन्तस्य[५] तिङन्ते अभावात् तिङन्तस्य च सुवन्तेऽभावात् आदिपदेनासम्भवपरिग्रहः। **पृथगिति**। प्रवृत्तिनिमित्तभेदेन नानार्थतायां तु इत्यर्थः। **प्राग् दिशेति**। दिक्शब्देभ्यो यः तद्धितः तसिलादिः सविभक्तिसंज्ञो भवतीत्यर्थः[६]।

किञ्चावच्छेदकत्वं सम्बन्धविशेषः, सहि विशेषणविशेष्यभावादतिरिक्तोऽनतिरिक्तो वेति विकल्प्य दूषणं तत्रैव वक्ष्यते।

**अहमिति**। अत्राकारहकारौ द्वौ वर्णौ ततः परयोः विभक्तिः आदेशो मकार[७] इति बहूनां विभक्त्यन्ततानास्तीत्यपव्याख्यानम्। हकारेऽपि अकारस्य सत्त्वात्

---

१. तच्च तं च इति पाठः। २. विषयविषयिभावस्वरूपमित्यर्थः। ३. अवच्छिन्नत्वमपि विशेषणविशेष्यतत्सम्बन्धत्वातिरिक्तोऽनतिरिक्तो वेत्तित्यादिना तत्र वक्ष्यते इत्यर्थः।

४. विशेषणमात्रञ्च इत्युभयं इतिपाठः। ५. स्वरस्ततत्वस्य तिङन्तेऽभावात् स्वरतत्त्वे सति तिङन्ते चासम्भवि इति पाठः। ६. "प्राग् दिशो विभक्तिः इति पाणिनिसूत्रस्य अर्थः ५।३।१ अष्टाध्यायी ७. वस्तुतः 'ङे प्रथमयोरम्' ७।१।२८ इत्यनेन अमादेशो भवति।

किञ्च—वर्णा इति बहुत्वस्य विवक्षितत्वे 'अहम्' इत्यादेरपदत्वप्रसङ्गः। अविवक्षितत्वे 'देवदत्त' इत्यन्ताकारस्य पदत्वापातः, तस्य विभक्त्यन्तत्वात्।

सार्थकस्तथेति चेत्, 'भवती'त्यादौ शवकारादीनां पदत्वप्रसङ्ग, शपः सार्थकत्वात्। यत्र विहिता विभक्तिस्तदिति चेन्न, शबकारं परित्यज्य पदत्वप्रसङ्गात्।

तन्मध्यपतितत्वाच्छवकारोऽपि गृह्यत इति चेत्, तर्हि यत्र विभक्तिर्विधीयते तत्र तद्विभक्तिमध्यपतितं पदमिति वा विवक्षितम्, यत्र विभक्तिर्विधीयते तत्तद्विभक्तिमध्यवर्तिसहितं पदमिति वा? आद्ये शबकारस्यापि पृथगेव पदत्वप्रसङ्गः, लक्षणस्य चाव्यापकत्वात्। द्वितीये 'देवदत्तः' इत्यस्यापदत्वप्रसङ्गः, मध्यवर्तिनो-

---

तस्य चाद्याकारभिन्नत्वात्। तस्मादचो बहुत्वाद्[१] बहुत्वम्। तसिलादेरित्यादिपदेन "यत्तदः[२] काले दा" "प्रकार[३] वचने थाल्" इत्यादयः परिगृह्यन्ते नच विभक्तिशब्दवाच्यत्वेनानुगमः शक्यताया अस्वीकारात्। स्वीकारे वा संज्ञाविधानवैयर्थ्यात्। विभक्तिसंज्ञाविषयत्वेनानुगमे एतद्दूषणमाह[४]—अहम् इति। तदायं दोषः। यदि च वर्णत्वाश्रयबहुत्वं[५] तदा विष्णुशिववाचकयोः अकारोकारयोरव्याप्तिः बुद्धया इत्येव व्याख्यानं मिश्राणाम्।

मीमांसकमते आद्याकार[६]हकाराकारयोरभेदाद् वा आह–अहमिति। "कर्तरि[७] शवि"त्यनेन कर्तरि विधानात्। क्वचित्तु सार्थकत्वादित्यस्य स्थाने कर्तृवाचित्वादित्येव पाठः। यदि च कर्तरीति परसप्तमी नच शब्दसन्निवेशे कर्तुः परत्वं सम्भवतीति कर्तृवाचकपरं तथाच कर्तृवाचके [८]सार्वधातुके इत्यर्थः। शपः कर्तृवाचिता [९]नास्तीत्युच्यते। तदसत्। परसप्तमीलक्षणाश्रयणस्यान्याय्यत्वेन कर्तृवाचिताया एव सूत्रकारसम्मतत्वात्। उक्तश्चायमर्थो भट्टाचार्यैः—एकत्रविकरणे तत्सम्बादे वा अयं ग्रन्थः। **यत्रेति**। विषये सप्तमी, धातुं निमित्तीकृत्य विभक्तिर्विधीयते नतु शपमित्यर्थः। (तथा च यतो विभक्तिर्विधीयते नतु शप इत्यर्थः) तथाच यतो विभक्तिर्विधीयते तद्विभक्त्यन्तं पदमिति लक्षणवाक्यार्थः।

**पृथक् पदत्वप्रसङ्ग** इति। तथाच एकपदत्वप्रसिद्धिर्विरुध्येत। यद्वा भवतीत्यस्य पदसमूहत्वेन वाक्यत्वापत्तिरित्याशयः। देवदत्त स् इति वर्णेभ्यः परतः सकारो विभक्तिर्यदा प्रयुज्यते तदा अतिव्याप्तिरित्यर्थः। अथ नेदं पदं पदत्वे सति पदान्तस्य सकारस्य रुत्वविधानाद् रुत्वं स्यात् ततश्च विसर्जनीयः स्यात् तदभावात्तु पदत्वं

---

१. पूर्वरूपेण तु मकार एवावशिष्यते इत्यभिप्रायेण मकारस्य आदेशताभिधानम्।
२. बहुलं। ३. सर्वैकान्यकियत्तदः कालेदा इति समग्रं सूत्रम् ५।३।१५, २५।३।२३।
४. इति। ५. यदि च वर्णत्वान्वयबहुत्वं। ६. आद्याकाराहंकारयो भेदाद् वा।
७. पाणिनिसूत्रम् ३।१।६८। ८. आर्धधातुके इत्यपपाठः आर्धधातुके शपोऽविधानात्।
९. अस्तीतिपाठः।

ऽभावेन मध्यवर्तिसहितविशेषणाभावात्। क्वचिन्मध्यवर्तिसहितस्य क्वचित्केवलस्येति यथासम्भव इति चेन्न, एकानुगतरूपानभिधाने लक्षणस्याव्यापकतापत्तेर्दुर्निवारत्वात्।

किञ्च 'देवदत्त+सु' इत्यपि पदं स्यात्। अथ अपशब्दोऽयम्, पदत्वे सति रुत्वादेर्विधानस्यावश्यम्भावित्वादिति चेन्न, यत एवायमपशब्दः, अत एव भवतो दोषः प्रसज्यते—अपशब्देऽपि पदलक्षणं गतमिति। तस्मात् पाणिनिनाऽऽचार्येण शब्दसिद्ध्यर्थं पदसंज्ञेयं रुत्वादिविध्यनुरोधेनापशब्ददशायामन्यैव कृता नदीसंज्ञावत्, न तु लौकिकपदव्यवहारसिद्ध्यर्थम्। साधुशब्दविशेषे ततश्च तस्यान्यदेव लक्षणं वाच्यम्। अन्यथा दाक्षीनन्दनोदीरितनदीसंज्ञाप्रत्यभिज्ञायां पाथः प्रार्थयमानः काननस्थलीमलीकाभिमानी भवानीहेत।

अथोच्यते—विभक्त्यन्तमेव सर्वलक्षणप्रवृत्त्या निष्पन्नं व्यावहारिकं पदमिति लक्षणमस्तु। मैवम्, सर्वलक्षणप्रवृत्तेः सर्वत्रासम्भवात्। सम्भवत्सर्वलक्षणप्रवृ-

---

नास्तीत्यर्थः। संज्ञेयमिति। "सुप्तिङन्तं[१] पदमिति। रुत्वादेरिति। तस्य पदान्ते एव विधानात् इत्यर्थः। अन्यैव इत्यस्य प्रतियोगिनमाह—नतु लौकिकव्यवहारसिद्ध्यर्थम्। दाक्षीति। दाक्षीनन्दनेनोदीरिता या नदी संज्ञा तस्याः काननस्थलीमित्यत्र प्रत्यभिज्ञा अस्ति [२]"यूस्त्र्याख्यौ नदी" ति ईकारस्य नदीसंज्ञाविधानात्।

ननु काननस्थलीमपि पाथोऽर्थी भ्रान्त्या यात्येवेत्याशङ्क्याह—अलीकाभिमानीति। अभिमानपदं ज्ञानमात्रपरं मिथ्यापर्यायस्य अलीकशब्दस्य पृथक्ग्रहणात्।

जीविकाकृत्य व्याचष्टे इत्यर्थं इति। जीविकामिव कृत्वा व्याचष्टे इत्यत्र पदत्रयार्थे प्रयुज्यमानं जीविकाकृत्येतिपदं यस्येत्यर्थः। यदा जानाति काननस्थली जलात्मिका नदी न भवति तदापीत्यर्थः। यदि लोकोपयोगिनी सा स्यात्तदा तदाप्तवाक्यात् नदीत्वं जानन् [३] व्यवहरेदेवेत्याशयः।

सर्वलक्षणेति। सर्वाणि पाणिनिसूत्राणि तेषां प्रवृत्या तत्तत्सूत्रविहितकार्ये सति यन्निष्पन्नं देवदत्त इति विसर्जनीयान्तं नतु सान्तमिति नातिव्याप्तिरित्यर्थः। व्यावहारिकं=व्यवहारोपयुक्तमित्यर्थः। सर्वत्राभावादिति। नहि शप्श्यनोर्विधायकं सूत्रमेकस्मिन् प्रवर्तते। दिवादिभ्यः एव श्यन्विधेरित्यर्थः। अन्यथा सर्वपदानामैकरूप्यापत्तिरितिभावः। सम्भवदिति। यस्मिन् पदे यस्य लक्षणस्य प्रवृत्तिः सम्भवति तस्य सर्वस्य प्रवृत्त्येत्यर्थः। नचैकस्मिन् उदाहरणे शप्श्यनोः प्रवृत्तिरिति भावः। सम्भवतीत्यत्र दिवादेः श्यन् इत्यस्य प्रवृत्त्या पदत्वसिद्धिरित्यर्थः। रुत्व-

---

१. पाणिनिसूत्रम् १।४।१४। २. १।४।३। ३. व्यवहारादेव।

**स्येति चेन्न, सम्भवत्त्वं तत्काले कालान्तरे वा विवक्षितम् ? आद्ये 'देवदत्त+रु' इत्यपि पदं स्यात् रुत्वविधानकाले विसर्गस्यासम्भावितत्वात् । कालान्तरेऽपीति पक्षे 'देवदत्त' इत्यपि पदं न स्यात्, इत्यादिपदपूर्वकालभाविनी यत्वयलोपादेर-करणात् ।**

**शब्दान्तरसन्निधिव्यतिरेकेण यद्भावि लक्षणं तद्विवक्षितमिति चेन्न, 'जीवि-काकृत्य व्याचष्टे इत्यर्थे 'जीविकां कृत्वा व्याचष्टे' इति प्रयुज्यमानं वाक्यं स्याद्, एकार्थावच्छिन्नपदसमुदायस्य तत्रापि गतत्वात् । कृत्वेत्यनेन सम्बद्धस्य जीविका-मित्यस्योक्तपदलक्षणेन सङ्गृहीतत्वात् ।**

**यदुपाधिका यल्लक्षणप्रवृत्तिस्तदुपाधिसम्पत्तौ तेन निष्पन्नं तथेति चेन्न, यत्र नास्त्युपाधिसम्पत्तिस्तत्र केवले तस्यां सत्यामित्यस्याभावादपदत्वापत्तेः ।**

---

**विधानकाले** इति । विसर्गस्य तदुत्तरकाल एव विधानादिति भावः । देवदत्त इत्याह इत्यत्र कदाचिद् यत्वयलोपाभ्यां पदसिद्धिः नच देवदत्त इत्यत्र तत्सम्भवः तस्य इकारे परभूते विधानात् ।

**यद्भाविलक्षणमिति** । प्रवर्तते यल्लक्षणं सम्भवि च तस्य सर्वस्य प्रवृत्त्या इत्यर्थः । भाविपदं भावात् घञन्तात् मत्वर्थीयनिष्पन्नं सम्भविपदं व्याख्येयम् । औपम्यमन्तरेण जीविकां कृत्वेति भवत्यत आह—**उक्तपदलक्षणेनेति** । जीविका-पदस्य विभक्ति[2]सहितस्य सन्निधानं विना कृत्वेत्यत्र क्त्वा प्रत्ययस्य ल्यपो विधानाभावे जीविका कृत्वेत्यत्र सर्वलक्षणप्रवृत्तेः । न चेदं वाक्यं साधु "जीविको-पनिषदावौपम्ये"[3] इत्यनेन गति संज्ञायां गतिसमासस्य[4] नित्यत्वेन जीविकां कृत्वेति पदसमुदायोऽसाधुत्वान्न प्रयोगार्हः । नचानुच्यमानं वाक्यम्, उच्यते इति वाक्यमिति वाक्यपदव्युत्पत्तेः । शब्दान्तरसन्निधिव्यतिरेकेणेति न विवक्षणीयं किन्तु पदत्वसिध्यर्थं यथा लक्षणानां प्रवृत्तिः तेषां लक्षणानां साकल्यं विवक्षितं तेन देवदत्त इति पदं न तु जीविका कृत्वेति, समासोपाधावेव समुदायपदत्वादित्या-शङ्कते—**यदुपाधिकेति** ।

यदुपाधिका यन्निमित्तिका यस्य [5]सूत्रस्य प्रवृत्तिः तस्य उपाधिः समासौ-पम्यादि तत्सम्पत्तौ सत्यां तेन सूत्रेण निष्पन्नं पदं गतिसमासोपाधौ प्रवृत्तक्त्वाप्रत्ययस्य ल्यपो विधायकं लक्षणं तेन जीविकां कृत्वेति पदं समासाभावदशायां लक्षणस्या-प्रवृत्तौ पदत्वमेव नास्तीत्याशयः । **देवदत्त** इति । केवलं न स्यात् उपाधिघटितपद-लक्षणाभावादित्याह—**यत्रेति** । सत्यमित्यस्य उपाधिसम्पत्तौ सत्यामित्यंशस्याभावा-

---

१. यत्वस्य लोपस्य च इत्यर्थः । २. विभक्ति विहितस्य इति । ३. १।४।७९ ।
४. नित्यं क्रीडाजीविकयोरित्यनेन इति शेष । ५. पुत्रस्य ।

**यस्यामवस्थायां यस्य लक्षणस्योपनिपातस्तत्सर्वसम्पत्तौ विभक्त्यन्तं पदमिति चेन्न, यस्यामवस्थायामित्यवस्थानां भिन्नभिन्नाकारेण परामर्शे लक्षणस्याननुगमादव्यापकतादोषः । अवस्थानामैक्यमविवक्षितमसम्भावितं च । सर्वदा सर्वावस्थाविषये लक्षणप्रसङ्गादिति । स च 'भवति, भवति, भवतीति, भवत्य-**

---

दित्यर्थः । **यस्यामवस्थायामिति** । [1]उपाधिशब्देन न समासासादिविशेषो विवक्ष्यते किन्तु तत्तत्पदस्यावस्था तथा च निरुपाध्यवस्थायां यावतो लक्षणस्य सम्भवः तत्सर्वस्य सम्पत्तौ पदत्वं जीविका कृत्वेति सोपाध्यवस्थायामुपाधिकालीनसर्वसम्पत्तौ पदत्वम् । मैवम् । देवदत्त इत्यादि निरुपाधिका एकावस्था इति पूर्वसोपाधिकावस्था तस्यां यद् [2]रुत्वलोपाभ्यामेव पदत्वं नतु विसर्गान्तस्येति न क्वाप्यव्याप्त्यतिव्याप्ती इति भावः । यस्यामवस्थायामित्यत्र यत् पदेन प्रत्येकमवस्थाया ग्रहणेऽव्याप्तिः यौगपद्येन ग्रहणं चासम्भवीत्याह– **अवस्थानामैक्यमिति** । **अविवक्षितमिति** । एकत्र सर्वावस्थानामसम्भवादिति भावः । **असम्भावितमिति** । बह्वीनामवस्थानामैक्यासम्भवादित्यर्थः । नहि सर्वासु अवस्थासु एका जातिरस्ति येन तदात्मना ऐक्यं स्यात् तादृशजातौ मानाभावात् ।

अथ सत्यव्यवहारसिद्धपदसिद्ध्यनुगतकालत्वेनानुगमः तदाह सर्वदेति । कीदृशः प्रसङ्गस्तमाह—**सचेति** । एकरूपत्वं यदि अवस्थैक्यं विवक्षितं तदा भवतीत्याख्यातस्य सदृशसम्बोधनसाधारणानि लक्षणानि स्युः एकार्थत्वं चेत्तदाह— **भवत्यस्ति वेति** । अत्र समानलक्षणत्वप्रसङ्गः । समानविभक्तिकत्वञ्चेत् तदा पटः पटौ इत्यत्र तत्प्रसङ्गः । समानप्रातिपदिकत्वं चेत् पटं पटौ इत्यत्र न चैषां[4] समानलक्षणत्वमस्ति । तथा च तद्घटितलक्षणविरहात् [5]अव्याप्तिप्रसङ्ग इति भावः । तथा च पदसिद्धानुगुणतावच्छेदकमेव [6]निरूप्यमिति खण्डननिष्कर्षः ।

अथवा वर्तमानाकालावच्छिन्नानुभवेन कर्तृत्वविवक्षावस्थायां भूधातोर्भवतीति आख्यातपदं निष्पद्यते । स्त्रीलिङ्गे भवच्छब्दस्य सम्बोधनविवक्षायां भवति सप्तम्यन्तं भवति पुलिङ्गे भवत्छब्दस्य अधिकरणविवक्षावस्थादशायां सप्तम्यन्तं इति नामपदं निष्पद्यते । (अत्रापि पाठस्त्रुटितः) तदिह यदि तत्तदवस्थायां प्राप्तानां लक्षणानां यौगपद्येन प्रवृत्त्या निष्पन्नं पदं स्यात् तदा 'भवति[7] भवति भवति' इत्येकं पदं स्यात्, तथा 'पटः पटौ' इत्यादिकमेकं पदं स्यादित्याशयः । न चैकस्मिन्नेव पदे एकद्वितत्तल्लक्षणप्रवृत्तिसम्भवे आख्यातामन्त्रायपदयोरेकपदत्वं स्यात् नतु पदत्रयाणा-

---

१. उपाधिशब्देन समासादि विशेषः । २. यदुपलोपाभ्याम् ।

३. तदा सर्वदेति । ४. एकरूपत्वादीनमित्यर्थः ५. पूर्वोक्तस्थले इत्यर्थः ।

६ निरूपमिति पाठः ।

७. एषु एकं तिङन्तम् अपरं सप्तम्यन्तम् अन्यत् स्त्रीलिङ्गे स्म्बुद्ध्यन्तमिति बोध्यम् ।

स्तीति, पटः पटाविति, पटं पट इति चे'त्यतिव्याप्तिः। एतेन—अपौरुषेयं वाक्यं तदित्यपि निरस्तम्।

## ३५. अर्थापत्तिलक्षणखण्डनम्

का पुनरर्थापत्तिरपि ?

अन्यथानुपपत्तिरिति चेन्न, यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेः। सिद्धेना-

---

मैकपदमिति वाच्यम्। एकदैव सर्वलक्षणप्रवृत्तौ विवक्षाभेदेन तावतां पदानां भेदस्याप्यावश्यकत्वात् अन्यथा नानार्थबोधानुपपत्तेः सकृदुच्चरितस्य नानार्थाननुभावकत्वादिति।

यत्तु शक्तिमत्त्वमेवेह वाक्यलक्षणघटकपदत्वं, तदपि बोध्यबोधकोपाधिघटितेच्छा[1]मूलकतया अत्यननुगतं तादृशसमुदायस्य च निर्विभक्तिकदशायामपि वाक्यताप्रसङ्गाच्च। अत एवाकाङ्क्षायोग्यताऽसत्तिमत्त्वमेव वाक्यलक्षणं पदाघटितमित्यपास्तम्। आकाङ्क्षादीनामर्थधर्मत्वे तत्रातिव्याप्तिः। पदधर्मत्वे वा आकाङ्क्षाया अनुभवजनकतावच्छेदकानुपूर्वीरूपाया अननुगतत्वात् वाक्यलक्षणमव्यापकं स्यात्। अपभ्रंशानामपि शक्त्यारोपेणानुभवजनकत्वादतिव्याप्तिश्चेति।

प्रभाकरमते लौकिकवाक्यं प्रमाणमेवेति तन्मते शब्दलक्षणमनूद्य अतिदेशेन दूषयति—**एतेनेति**। वाक्यत्वानिरुक्तिदोषेणेत्यर्थः। अपौरुषेयशब्दत्वं तु पदेऽतिव्याप्तमिति वाक्यपदपरित्यागेऽपि न निस्तारः।

इति शब्दप्रमाणखण्डनम्।

### अर्थापत्तिप्रमाणखण्डनारम्भः

**अन्यथानुपपत्तिरिति**। उपपाद्यं जीविदेवदत्तगतगृहासत्त्वम् अन्यथा बहिःसत्त्वादन्येन प्रकारेण नोपपद्यते इति गृहेऽसत्त्वानुपपत्तिरर्थापत्त्याख्यं प्रमाणं बहिःसत्त्वप्रमायाः करणमित्यर्थः। अनुपपत्तिरित्युक्ते सर्वथा अनुपपत्तावतिव्याप्तिरिति अन्यथेति। [2]अन्यथेत्युक्ते अन्यथाप्युपपत्तावस्तीति तन्निरासा अन्यथानुपपत्तिरित्याह—

**यतोऽन्यत्वमिति**। बहिःसत्त्वसिद्धेः प्रागबहिः—सत्त्वान्यथात्वं ज्ञातुमशक्यं प्रतियोगिज्ञानाधीनत्वात् प्रतियोगिप्रकारकाभावज्ञानस्येत्याह—**तत्सिद्धेः**=प्रतियोगिसिद्धेरग्रे अन्यथानुपपत्त्यसिद्धेः अन्यथानुपपत्तेरज्ञानात् न कारणत्वम्। नहि

---

१. घटितेच्छाप्तकतया।

२. अनुपपत्तिरन्यथाप्युपपत्तावस्तीति अन्यत्थेयाह।

**नुपपत्तिरिति चेन्न, विशेषणव्यवच्छेद्याप्रतीतौ सद्वैयर्थ्येन तदनुपादाने सर्वथाऽनुपपत्त्यर्थतायां फलविरोधात् । केनाऽप्यनुपपत्त्यर्थत्वे साध्यसिद्ध्यपर्यवसानात् ।**

---

स्वरूपमन्यथानुपपत्तेः करणं सर्वदैवोपपादकसिद्ध्यापत्तेः अर्थापत्त्याभासोच्छेदापत्तेश्चेति । यद्वा यतोऽन्यत्वमग्रे प्रथमं तत्र तत्सिद्धेः तत्प्रमायाः फलीभूतायाः सिद्धेरर्थापत्तेरसिद्धेः प्रमाणत्वासिद्धेः । बहिःसत्त्वस्य प्रथमत एव ज्ञातत्वात् किम् अर्थापत्त्या इत्यर्थः ।

ननु देवदत्तीयबहिःसत्त्वज्ञानं प्रमाणफलं बहिःसत्त्वान्यथानुपपत्तिश्च करणं तच्च सामान्यतः सिद्धमेवेत्याशङ्कते—**सिद्धेनेति** । सिद्धं प्रसिद्धमादाय अनुपपत्तिज्ञानं करणमित्यर्थः । सिद्धे वहिःसत्त्वसामान्ये अनुपपत्तिर्नास्तीवार्थः । अन्यथानुपपत्तिज्ञानं नानुपपन्नमित्यर्थनिष्कर्षः ।

सिद्धेत्यसिद्धदेवदत्तीयवहिःसत्त्वव्यवच्छेदाय विशेषणं[१], तद् यदि व्यवच्छेद्यं प्रसिद्धं तदा अलमर्थापत्त्या । अथाप्रसिद्धं तदा[२] सप्तमरसादेरिव व्यवच्छेद्यत्वानुपपत्त्या विशेषणं व्यर्थमित्यर्थः इत्यपव्याख्यानम् । जीविनो गृहासत्त्वं वहिःसत्त्वं विना नेति ज्ञानस्य नानुपपन्नता यज्ञदत्ते तदुभयग्रहसम्भवादित्युच्यते नतु सिद्धेति विशेषणं दीयते येनोक्तदोषः स्यादिति । तस्मादेवं व्याख्येयं – न वयं सिद्धे अनुपपत्तिं ब्रूमः किन्तु एकप्रकारं व्यवच्छेद्यमपेक्ष्य अन्येन प्रकारेणेति विशेषणं सिद्धमिति । तथा च अन्यथेति विशेषणं व्यवच्छेद्यस्य एकस्य प्रकारस्याप्रतीतौ विशेष्यस्यान्यथेत्यस्य वैयर्थ्यमित्यर्थः ।

नच वहिःसत्त्वमेव व्यवच्छेद्यं प्रसिद्धमिति वाच्यं, तथापि वहिःसत्त्वं विना जीविनो गृहासत्त्वं नोपपन्नमिति सामान्यतो ज्ञानं न देवदत्तस्य बहिःसत्त्वसाधकं किन्तु देवदत्तस्य जीविनो गृहासत्त्वं बहिःसत्त्वं विना नोपपन्नमिति वाच्यं तदप्रसिद्धेः । नच पक्षधर्मतावलात् देवदत्तस्य बहिःसत्त्वसिद्धिरिति वाच्यम् । तथासति जीवित्वे सति गृहासत्त्वहेतोरवगमकता स्यात् । यज्ञदत्ते गृहवर्तिनि तयोर्व्यतिरेकव्याप्तिग्रहादिति देवदत्तबहिःसत्त्वमन्तरेणानुपपत्तिर्वाच्या नचैवं व्यतिरेकी, व्यतिरेकप्रतियोगिनोऽप्रसिद्ध्या व्याप्त्यग्रहात् तथात्मकार्थापत्तिफलं विनेति तेषामाशयः । तच्च तदा सम्भवति यदि चान्यथा इत्यर्थस्य व्यावर्त्यस्य देवदत्त बहिःसत्त्वस्याप्रसिद्ध्या विशेषणमन्यथेति नोपादीयते तदाह—**सर्वथेति** । यदि जीविनो गृहासत्त्वं सर्वथैवानुपपन्नं तदा तस्योपपादकमलीकमेव स्यादिति बहिःसत्त्व[३] कल्पनानवकाश इत्यर्थः ।

**साध्यसिद्ध्यपर्यवसानादिति** । देवदत्तीयवहिःसत्त्वमात्रं न सिद्ध्येत् तेन विना अनुपपत्तेरज्ञानात् । तथाचार्थापत्तिलक्षणमसम्भवीत्याशयः ।

---

१. बहिःसत्त्वं प्रमाफलं । २. तथा । ३. बहिरसत्त्व इति पाठः ।

**प्रमाणयोर्विरोधानुपपत्तिरिति चेन्न, असिद्धत्वात् । प्रमाणत्वेनाभिमन्यमानयोरिति चेन्न, अभिमतेऽर्थमार्थत्वेऽतिप्रसङ्गात् । ज्ञानार्थत्वेऽप्युक्तदोषानिवृत्तिरेव । अनिर्णीयमानप्रामाण्याप्रामाण्ययोरित्यत्रापि तथैव । तथा हि सत्प्रतिपक्षेऽपि तस्य तदुपपादकप्रमाफलकत्वापत्तेः । तत्र विरोधे व्याहत्यैकाप्रामाण्यनिश्चयः, यत्र तु नैवं तद्विवक्षितमिति चेन्न, एवं सत्प्रतिपक्षवदन्यत्रापि विरोधार्थत्वेनैवाभासत्वाविशेषात् । तर्कयोर्विरोधोऽपेक्षित इति चेन्न, मिथो विरोधेन तर्कयोरप्याभासत्वात् ।**

---

**प्रमाणयोरिति ।** तथा च न विशेषणदोषाव्यवहितोक्तदोषस्य[1] प्रसङ्ग इति । जीवो क्वचिदस्तीति सामान्यतो दृष्टमाप्तवाक्यं वा क्वचित्तेन रूपेण देवदत्तस्य गृहसत्त्वं विषयीकरोति । देवदत्तो गृहे नास्तीति चानुपलब्ध्याऽभावमतः प्रमाणयोरेकत्र भावाभावग्राहकयोर्विरोधमालोच्य विरोधभङ्गाय बहिःसत्त्वकल्पना, सा फलं, विरोधज्ञानं च करणमित्याशयः ।

**असिद्धत्वादिति ।** प्रमाणयोर्विरोध एव नास्ति, किं करणं स्यादित्यर्थः । नहि विरुद्धविषयकं प्रमाणद्वयमेकत्र सम्भवति प्रमेयस्य विरुद्धस्यापत्तेरित्याशयः । **अतिप्रसङ्गादिति ।** अह्नि कस्यचित् सर्प इति भ्रमस्य दण्डोयऽमिति चापरपुरुषभ्रमस्य एकपुरुषीयस्य च स्वप्ने तादृशभ्रमस्य प्रमाणत्वेन भ्रमविषयस्य स्वोपपादकवस्तुकल्पकत्वप्रसङ्गादित्यर्थः । व्याहत्यैव[2] एकस्य धर्मिणो विरुद्धत्वापत्तिः व्याघातः ननु इहाप्रामाण्यनिश्चयः एकस्य विषयसङ्कोचेनापि द्वयोः प्रामाण्योपपत्तेरित्यभिमानः ।

**आभासत्वेति ।** अप्रमाणत्वनिश्चयः स्यादेवेत्यर्थः । सत्प्रतिपक्षस्थले व्याप्तिग्राहकतर्कयोर्विरोधो नास्ति । एकस्यासत्तर्कत्वादित्यन्यतराप्रामाण्यनिर्णयात् नोपपादककल्पकत्वम् । नत्विह । तथाहि—जीविदेवदत्तो यदि क्वचित् न स्यात् तदा जीवी न स्यात्, तथा यदि बहिर्न स्यात् तदा गृहनिष्ठाभावप्रतियोगी न स्यात् इति तर्कयोर्द्वयोरपि मूलशैथिल्यादिविरहिणोराभासत्वाभावेन अप्रामाण्यनिश्चायकत्वाभावादित्याशयः ।

बहवस्तु तर्कयोर्विरोधानुपपत्तिरित्याशङ्कार्थं वर्णयन्ति । तच्च न युक्तं, तथासति प्रमाणविरोधानुपपत्तिशङ्काया विशेषप्रवृत्तप्रमाणेत्यादिना करिष्यमाणायाः परत एवास्य ग्रन्थस्यारम्भः स्यात्, ननु ततः प्राक् एकां शङ्कामनिवर्त्य शङ्कान्तरानौचित्यादिति । **मिथः इति ।** यथा प्रमाणयोर्न विरोधः तथा सत्तर्कयोरपि अतो मिथो विरोधे तर्कयोरपि आभासत्वादन्यतराप्रामाण्यनिर्णायकत्वमेव सत्प्रतिपक्षवदिति भावः ।

---

१. दोषाणां; २. व्याहृत्यैव एकस्य धर्मिणो विरुद्धरुपपत्तिः ।

**विशेषप्रवृत्तप्रमाणार्थप्रतिक्षेपविषयत्वसंशयोऽविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य विरोध इति चेन्न, विशेषविषयप्रमाणबोधितवैपरीत्ये सति तद्विरुद्धार्थतांशे संशयस्य दुर्बलस्यानवकाशत्वेन अविशेषप्रवृत्तप्रमाणविषयतां तदीयां गोचरयितुमप्यसामर्थ्यादेव। अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरीतार्थविशेषविषयप्रमाणदर्शनं तदितरविशेषविषयप्रमाफलकं तथेति चेन्न, अविशेषप्रवृत्तस्य प्रमाणस्य**

---

प्रमाणयोर्विरोध इत्यनेन संशयविशेषोऽभिमत इत्याशयेन शङ्कते—**विशेषप्रवृत्तेति।** विशेषे प्रवृत्तं प्रमाणं गृहेऽसत्त्वग्राहकम् अनुपलब्धिरूपं तदर्थः तद्विषयो गृहासत्त्वं तत् प्रतिक्षेपो गृहसत्त्वं तद्विषयत्व संशयः। स विरोधः कस्येत्यपेक्षायामविशेषप्रवृत्ततद्विपरीतार्थग्राहिप्रमाणस्येति सम्बन्धः इति सर्वे व्याख्यातारः।

वस्तुतस्तु संशय एव कारणं बहिःसत्त्वप्रमायामिति मतान्तरमेव। स इति। अर्थापत्तिशब्दार्थ इत्यर्थः। सत्त्वग्राहिप्रमाणं विरुद्धार्थकं नवेति संशयो बहिःसत्त्वकल्पनया शाम्यति। तदाहि द्वयोर्भिन्नविषयतया विरोधाभाव एव पर्यवस्यतीति भावः। विशेषप्रकृतप्रमाणार्थो देवदत्तस्य गृहासत्त्वं तत्प्रतिक्षेपो देवदत्तस्य सत्त्वं तत् क्वचिदस्तीत्यविशेषेण प्रवर्तमानस्य क्वचिदस्तीत्यस्य विषय एव न भवति कुतः पुनरविरुद्धार्थतयेति। कथमयं संशयः कथञ्चानुत्पन्नः कारणं स्यादित्याशयवान् प्रथमतः प्रमाणयोरेकविषयतैव नास्ति देवदत्तस्य गृहाभावे निश्चिते गृहसत्त्वज्ञानानुत्पत्तेः। ततश्च तयोः सत्त्वासत्त्वयोः विरुद्धत्वेनैव निश्चयात्, ततश्च सत्त्वग्राहकप्रमाणविशेषप्रवृत्तप्रमाणविरुद्धार्थकत्वस्यापि निश्चयात् तादृशप्रमाणविरुद्धार्थकत्वाभावकोटिकः संशयो न भवतीत्याह—**विशेषविषयप्रमाणेति।** गृहे नास्तीति विशेषविषयप्रमाणेन [1]बोधिते वैपरीत्ये सति अविशेषप्रवृत्तप्रमाणविषयतां सत् सम्बन्धिनीं गोचरयितुमपि संशयस्यासामर्थ्यादेवेति सम्भवः। अत्र हेतुः दुर्बलस्यानवकाशत्वेनेति। स्थाणुरयमिति निश्चिते यथा ऊर्ध्वत्वसामान्यज्ञानात् स्थाणुः पुरुषो वेति संशयो न जायते तथापि विशेषप्रमाणविरुद्धार्थतारूपोंऽशः तद्विषयसंशयस्यानवकाशः। विशेषविषयप्रमाणार्थो नाविशेषविषय[2]प्रमाणविषयता

---

१. वैपरीत्ये विशेषविषयप्रमाणैर्बोधिते सति तद्विरुद्धार्थतांशे संशयस्य अविशेषप्रवृत्तप्रमाणविषयतां तदीयां विशेषप्रमाणबोधितवैपरीत्यविरुद्धार्थांशसम्बन्धिनीं गोचरयितुमप्यसामर्थ्यादेव इति विद्यासागरी।

२. विषयतां गोचरयितुं शक्यते इति पाठो न युक्तः। तुमुनाद्यन्वयि क्रियानिरूपितशक्तेरयं स्वभावो यत् स्वसमानाधिकरणगुणभूततुमुनादि प्रकृत्यर्थनिरूपितशक्तेः स्ववद् अभिहितत्वेन अनभिहितत्वेन वा प्रकाशः इति कारकप्रकरणे शब्दरवम्।

हरिरपि अमुमेवार्थमाह—

**तद्विपरीतार्थविशेषविषयस्य च प्रमाणस्य च विषययोस्तद्विपरीतत्वविशेषणप्रतीत्यङ्गीकारकक्ष्यायां परस्परविरुद्धत्वप्रतीतौ धर्मिणोर्विरुद्धधर्माध्यासस्य भेदस्य विरोधविवेचनस्फुटतद्गर्भप्रवेशतया तत्सहज्ञेयस्य तन्नान्तरीयकस्य वाऽन्यत्रेवाऽन्यत एव प्राप्तेः ।**

---

गोचरयितुं शक्यते । संशयेन दूरत एव अविशेषविषयप्रमाणविरुद्धतयेत्यर्थः । गृहसत्त्वग्राहिप्रमाणस्य विपरीतार्थोपस्थापकं गृहासत्त्वग्राहिप्रमाणमनुपलब्धिः तद्दर्शनमर्थापत्तिप्रमाणम् अविशेषप्रवृत्तस्य प्रमाणस्य तदितरविशेषविषयत्वप्रमायाः फलं विशेषप्रमाणेन यो विशेषो देवदत्तस्य गृहेऽभावो गृहीतस्तदितरो विशेषः देवदत्तस्य बहिःसत्त्वरूपो विषय इति यज्ज्ञानं तत्प्रमाणस्य फलमित्यर्थः । अर्थापत्तिमन्तरेणापि सामान्यप्रमाणस्य विशेषप्रमाणविषयभिन्नविषयतासिद्धेर्नार्थापत्तिर्मानमिति इति परिहरति—नेति । अविशेषप्रवृत्तस्य तद्विपरीतार्थविशेषविषयस्य च प्रमाणस्य प्रमाणविषयायां परस्परविरुद्धत्वप्रतीतौ धर्मिणोर्भेदस्यान्यत एव प्राप्तेरिति योजना । कथं परस्परविरुद्धप्रतीतिरित्यत आह—तद्विपरीतत्वेति । तस्माद् विशेषप्रवृत्तप्रमाणाद् विपरीतत्वप्रवृत्त्यङ्गीकारेण लब्धाभेदस्य स्वरूपमाह—**विरुद्धधर्माध्यासस्येति** । विरुद्धयोर्धर्मयोः सत्त्वासत्त्वयोः सम्बन्धो विरुद्धधर्माध्यासः । तदाहुराचार्याः—अयमेव भेदो भेदहेतुर्वा [1]यद्विरुद्धधर्माध्यासः कारणभेदश्चेति । स च भेदः विरोधगर्भे प्रविशति तेन विरोधेन सह ज्ञेयः । तथा च विरोधप्रतीत्यैव विषयभेदस्य विरोधप्रतीतिकाले एव सिद्धेरलमर्थापत्त्येति । अर्थभेदस्य विरोधगर्भत्वमुपपादयति—**विरोधेति** । विरोधस्य एकधर्म्यसमावेशस्य विवेचनं तस्मिन् स्फुटः तद्गर्भे प्रवेशो यस्य धर्मिभेदस्य, तत् प्रतिसन्धानविषयत्वमेव तद्गर्भप्रविष्टत्वं धर्मस्य, एकधर्म्यसमाविष्टत्वमनेकधर्म्याश्रितत्वे एव सम्भवतीति धर्मिभेदसिद्धिः । अन्यत एव =विरोधप्रतीतिसाधकत एव तत्सिद्धिः ।

यदि च धर्मिभेदोऽन्योन्याभावस्तदाह—तन्नान्तरीयकस्य विरुद्धस्य भिन्नधर्मिकत्वव्याप्यत्वं, तन्नान्तरीयकत्वं तदा अन्यतः सिद्धिः सत्त्वासत्त्वे भिन्नधर्मिके विरुद्धत्वादित्यनुमानतः सिद्धेरित्यर्थः । **अन्यत्रेव** । घटतदभावयोर्यथा धर्मिभेदसिद्धिस्तथेत्यर्थः ।

---

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ।।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ।। इति

१. यद् विरुद्धधर्माध्यस्तत्वमिति ।

किञ्च—अविशेषप्रवृत्तस्यैव तस्य किं विशेषविषयत्वम्, अथ सामान्यतः प्रवृत्तस्य नान्तरीयकतया प्रागेव विशेषविषयस्य विशेषविषयत्वेनाज्ञातस्य विशेषविषयत्वम्? अथवा सामान्यस्य तद्विषयस्य विशेषः? उत तद्विषयीकृतविशेषगतं किमपि धर्मान्तरमिदानीं प्रमीयते? नाद्यः अर्थापत्तेर्भ्रमकरणत्वापत्तेः। न द्वितीयः, तदनुव्यवसायोत्पत्तेस्तद्विषयाप्रतीत्यसम्भवात्। न तृतीयः, सामान्यस्यानन्तर्भावितःश्रयस्य प्रत्येतुमशक्यत्वात् प्रागेव तत्सिद्धेः।

---

यद्यपि एवमपि सत्त्वासत्त्वं धर्मिभेदेन सिद्ध्यति तच्च देवदत्तस्य गृहसत्त्वेऽपि सम्भवन् न देवदत्तस्य बहिः—सत्त्वनिर्णयाय अलमिति अर्थापत्त्या बहिःसत्त्वसिद्धिरिति शक्यते परेण वक्तुं तथापि असत्त्वस्य गृहधर्मिकत्वप्रमादशायां सत्त्वं साध्यमानं बहिर्धर्मिकत्वमादाय [1]पर्यवस्यतीति। विशेषविषयत्वमित्यस्य प्रमीयते इति क्रियया सम्बन्धः सामान्यमात्रविषयस्य विशेषविषयत्वज्ञानमर्थापत्तेः फलमिति प्रथमविकल्पः। सामान्यविषयत्वेन विशेषविषयतया नियतस्य ज्ञानस्य विशेषविषयत्वज्ञानमिति द्वितीयः कल्पः। प्रमाणतः सिद्धस्य सत्त्वसामान्यस्य विशेषो बहिर्देशत्वमिति तृतीयः कल्पः। सामान्यप्रमाणविषयीकृते विशेषबहिःसत्त्वे प्रतीयमानविरोधिव्यतिरिक्तत्वमिति [2]तुरीयस्यार्थः।

पूर्वविकल्पद्वयं प्रमाणाश्रयं परं द्वयं प्रमेयाश्रयमिति विशेषः। अर्थापत्तेर्भ्रमेति। सामान्यमात्रविषयकस्य ज्ञानस्य विशेषविषयत्वज्ञानं भ्रमः तत्करणत्वे अर्थापत्तेः प्रमाणत्वं न स्यात् इति भावः। विशेषविषयकस्य ज्ञानस्य विशेषविषयकत्वेन [2]ज्ञानमेव न सम्भवति। यदा हि तज्ज्ञानस्य विशेषविषयकत्वम् अर्थापत्त्या प्रमेयं तदा तत्पूर्वज्ञानस्योपस्थित्यपेक्षायां तज्ज्ञानविषयकानुव्यवसायेनैव विशेषविषयकत्वस्यापि प्रमितेरर्थापत्तिर्न मानम्। अनुव्यवसायकरणस्य मनसा ज्ञानातीन्द्रियत्वे तज्ज्ञानतात्मकस्य लिङ्गस्यैव तत्करणत्वात्। ज्ञानस्य स्वप्रकाशत्वे तु ज्ञानकरणत्वस्यैव तत्रापि मानत्वात्। सामान्यमात्रमवबोध्य प्रमाणं निवर्तते ततस्तस्य सामान्यस्य विशेषोऽर्थापत्तेः प्रमेयः इति तृतीयः कल्पः तं दूषयति—न तृतीय इति। जीविद्देवदत्तः क्वचिदस्तीति ज्ञानमेव सामान्याश्रयं विशेषमपि विषयीकरोति सामान्यस्य निर्विशेषस्य शब्दादिभानाविषयत्वात्।

यद्यपि विशेषं यं कञ्चिदादायैव सामान्यप्रतीत्युपपत्तेः। सत्त्वस्य बहिर्निष्ठता न सिध्यति तथापि गृहनिष्ठताभावप्रमायां सत्यां गृहभिन्नबहिःपदार्थनिष्ठतासिद्धिरिति भावः। प्रागेवेति। अर्थापत्तेः सामान्यज्ञानकरणाभिन्नात् प्रमाणात् पूर्वमेव विशेषसिद्धिरित्यर्थः। वस्तुगत्या बहिःसत्त्वसिद्धावपि बहिःरूपेण तन्न सिद्ध-

---

१. असमर्थः शाङ्कर्यां स्फुटतरः।

२. पुरुषार्थः। अज्ञानमेव।

नापि चतुर्थः, तद्धि प्रतीयमानविरोधिव्यतिरिक्तत्वम्, अन्यद्वा स्यात्? नान्त्यः, तत्प्रतीतौ सामर्थ्यानुपदर्शनेन अनियमप्रसङ्गात्। न प्रथमः, अनुगताननुगतजातिव्यक्तिचाक्षुषाचाक्षुषादिव्यक्तिगन्धादितादात्म्यवादिनये तदुभयप्रमातादात्म्यविषयताव्युदासं विना विरोधासिद्ध्या तद्गमनिकाबलस्यैवासिद्धेः। तदुभयप्रतीतौ च तदवधारणे प्रागेव तत्प्रतीत्याऽर्थापत्त्यनुवादतापत्तेः।

---

मिति गृहभिन्नवृत्तित्वं सत्ताया धर्मान्तरमर्थापत्तेः प्रमेयमिति तुरीयविकल्पं विकल्पयति–अन्यद् वेति। तद्गतपरिमाणादि इत्याशङ्कते—तद्धिति। धर्मान्तरमित्यर्थः। प्रतीयमानो गृहे विरोधी अभावो यस्य तत् प्रतीयमानविरोधिगृहसत्त्वं ततो व्यतिरिक्तत्वं बहिःसत्त्वमिति यावत् बहिर्वृत्तित्वं सत्त्वस्येति निष्कृष्टार्थः। तत्रापि गृहभिन्नत्वं सत्त्वाधिकरणस्येति परमनिष्कर्षः।

अथमाशयः—सामान्यप्रवृत्तात् प्रमाणात् गृहेऽपि भावः प्रतिपन्नो विशेषप्रमाणात् तत्राभावः प्रमीयते ततश्च भावस्य प्रमीयमानविरोधित्वं प्राप्नोत्यतोऽर्थापत्या प्रतीयमानविरोधिकाद् रूपाद् व्यतिरिक्तत्वधर्मान्तरं प्रमीयते। अर्थापत्त्येति। तत्प्रतीतौ तद्गतपरिमाणादिप्रतीतौ अर्थापत्तेः सामर्थ्यस्य दर्शयितुमशक्यत्वेन अर्थापत्तेरिदं प्रमेयमिति निश्चेतुमशक्यतया अर्थापत्तिः संशायकतया अप्रमाणं स्यादित्यर्थः।

भट्टनयमनुसृत्येदमुच्यते प्रभाकरमतं वा। आद्यमभिप्रेत्याह—नेति। अनुगता च अननुगता च अनुगताननुगते जातिव्यक्ती चाक्षुषी च अचाक्षुषी च ते आदीयासां व्यक्तीनां ता अनुगताननुगताजातिव्यक्तिचाक्षुषाऽचाक्षुषादिव्यक्तयः तदभिन्ना ये गन्धादयः ताः चाक्षुषाचाक्षुषगन्धादिव्यक्तयः तासां तादात्म्यवादिनो ये तदुभयस्य सामान्यविशेषप्रमाणार्थयोः तादात्म्यविषयता निरासं विना विरोधासिध्या अर्थापत्तिः धर्मान्तरगमनिकाबलमेव न सिध्यति। विरोधो हि अर्थापत्तेः सामर्थ्यं तदसिद्धौ धर्मान्तरगमकत्वमेव न सिध्येत्। एकस्मिन्नेवाधिकरणे भावाभावयोः सम्भवापत्तेः।

अथ सामान्यविशेषप्रमाणार्थयोः प्रतीतौ जातायां प्रमायास्तादात्म्यविषयत्वाभावोऽवधार्यते तत्राह—तदुभयेति। य एव सामान्यप्रमायाविषयः स एव विशेषप्रमाया विषयो न भवति इति प्रमायास्तादात्म्यविषयत्वावधारणं प्रथमतः एव प्रतीयमानविरोधि (क) [२]व्यतिरिक्तत्वस्य प्रतीत्या अर्थापत्तेरनुवादत्वापत्तेः प्रामाण्यमेव नास्तीत्यर्थः।

अयमाशयोऽनुगता जातिः अननुगता व्यक्तिः तयोस्तादात्म्यविषयाप्रतीतिः प्रमा, तथा घटश्चाक्षुषोऽचाक्षुषो गन्धः, रसना ग्राह्यो रसो न तदाश्रयद्रव्यं, तथापि तत्र

---

१. तदुभयोरिति। २. विरोधिका।

तादात्म्यविषयाप्रतीतिः प्रमेत्यभ्युपेयते, तथा देवदत्तभावाभावयोरपि विरोधासिद्धचा एकस्मिन्नेव गृहे सम्भवापत्त्या विशेषदर्शनस्यैव वहिःसत्त्वगमनिका सामर्थ्यस्यासिद्धेरर्थापत्त्यसम्भवः ।

यदि गुरुमतानुसारिणोच्यते तदा "तदुभयेति" ग्रन्थः आवृत्त्या योज्यः । तयोर्विशेषाविशेषार्थयोः प्रतीतौ तयोर्विरोधोऽवधार्यः अन्यथा अवधार्यानवधारणे तत्त्वस्य विरोधस्य अवधारणानुपपत्तेः तथाच अतन्निष्ठा[1] सहावस्थानविरोधावधारणे एव अर्थापत्तिविषयस्य वहिःसत्त्वस्य सिद्धेः सामान्यप्रमाणस्य तद् विरुद्धार्थविशेषप्रमाणदर्शनरूपा अर्थापत्तिरनुवादत्वेनाप्रमाणं स्यादित्यर्थः ।

एतेन अनुपपद्यमानदर्शनात् उपपादके बुद्धिरर्थापत्तिरिति परास्तम् । अनुपपत्तिविषयो हि अनुपपद्यमानः सचानुपपत्तेर्दुर्निरूप्यत्वात् दुर्निरूपः ।

अत्र मीमांसकाः भावाभावयोरेकप्रतियोगिकयोः देवदत्तो गृहेऽस्ति नास्ति इत्यप्रतीते[2]विरोधः गन्धवद्द्रव्यरसवद्द्रव्ययोस्तादात्म्येऽपि[3] तयोः रसगन्धयोस्तादात्म्याप्रतीतेर्नाभेदः । नहि रसद्रव्ययोरभेदे आम्रनिष्ठो मधुर उत्पन्नः इतिवत् रसः आम्रो नष्टो मधुर उत्पन्न इति प्रतीतिरस्ति । तस्मात् धियो विरोधः प्रामाणिकः तयोरेकाधिकरणे अनुपपत्त्या वैयधिकरण्यमेवेति । देवदत्तस्य जीवतो भावो[5] गृहातिरिक्ते तस्य सत्तां गमयति । नच जीवित्वे सति गृहासत्त्वमेव तर्हि लिङ्गं तस्य गमकमिति वाच्यम् । बहिःसत्त्वाप्रतीतौ गृहासत्त्वस्यैव निश्चेतुमशक्तेः एकस्यैकावच्छेदेन भावाभावप्रत्ययासम्भवात् जीवतो देवदत्तस्य गृहेऽपि प्रसक्त्या अभावानिर्णयात् । जीवनं गृहातिरिक्ते सत्तयाऽपि उपपन्नमिति चेत् । सत्यम् । किन्तु तत्प्रतीतिमन्तरेण गृहे असत्त्वमेव न प्रतीयते । तथाहि जीवति चेत् तर्हि अधुना नास्त्येवेति प्रतीतौ नास्तीति यथा न प्रतीयते एकस्मिन् ज्ञाने भावाभावयोरवच्छेदभेदं बिना । प्रतीतेः देशे कालस्येव कालेऽपि वृत्तौ देशस्यावच्छेदकत्वात् तथाऽभावस्यैकदैवावागमो भावदेशमन्तर्भाव्यैव, अग्रे वृक्षः कपिसंयोगी न मूले इतिवत् अन्यथा तत्रापि वृक्षो न संयोगी, संयोगी चेति प्रतीत्यापत्तिः । तथाच जीवतो गृहासत्त्वम् अनुपलब्ध्या, वहिः सत्वञ्च अर्थापत्त्या एकदैव प्रमीयते इति वक्तव्यम् । तदाहुः—तेन जीवित्वसंसृष्ट–गृहाभावविधिपादनया ।

'गृहादुत्कालितासत्त्वो बहिरेवावतिष्ठते' । इति तथा मूर्तस्यैकत्र सतो देशान्तरेऽभावोऽपि मूर्तत्वान्यथानुपपत्त्या प्रतीयते । नच इदं न देशान्तरे अत्रोपलभ्यमानत्वात् यो यदा यत्रोपलभ्यते स ततो देशान्तरे नास्ति महान् इति वाच्यम् । विभुपदार्थे[6] व्यभिचारात् ।

---

१. अतन्निष्ठासहावस्थान इति प्रथम पुस्तके । २. इत्यप्रमीतेः । ३. गन्धद्रव्य–

४. आल्मनिष्ठो मधुरः उत्पन्न इतिवत् रसः आम्लो नष्टः इति पुस्तकद्वयेऽपि ।

५. जीवतोऽभावो इति पाठः । ६. विभू ।

किञ्च एकस्मिन् गृहे देवदत्तमुपलभ्य मध्यगतं गृहमनुपलभ्यैव तृतीयगृहगतं देवदत्तं पश्यतो मध्यगृहे तदभावोऽप्यर्थापत्तिगम्य एव । नच मध्यगृहं देवदत्ताभाववद् एतद्गृहातिरिक्तदेशत्वात् देवदत्ताभाववत्तया प्रतीयमानचक्षुःसन्निकृष्टदेशवदित्यनुमानतः तत् सिद्धिः मध्यगृहं देवदत्ताभावशून्यं देवदत्ताभाववत्तया[1] प्रतीयमानो योऽयं चक्षुःसन्निकृष्टदेशस्तद्भिन्नदेशत्वादेतद् गृहवदिति सत्प्रतिपक्षसत्त्वात् ।

किञ्च यादृशात् करतलानलसंयोगात् दाहो दृष्टः सति प्रतिबन्धके ततो दाहो न जायते इत्यनुभवोऽपि करतलसंयोगनिष्ठं धर्मं विना अनुपपद्यमानः धर्मान्तरं शक्त्याख्यमुत्थापयति । नच प्रतिबन्धकादेव तदुपपत्तेः, सति कारणे प्रतिबन्धस्यैवानुपपत्तेः प्रतिबन्धकं[2] न कारणमिति चेन्न । कारणतायाः शक्तिभिन्नाया अल्पज्ञानिर्वचत्वात् । अनन्यथासिद्धस्य नियतपूर्वभावित्वं सा इति चेत् । तत् किं करतलानलसंयोगो न तथा । अथ प्रतिबन्धकाभावोऽपि कारणमिति न तस्मिन् सति दाह इति चेन्न । तस्य कारणत्वे प्रमाणाभावात् । तस्य कारणत्वमपेक्ष्य कारणीभूतः करतलानलसंयोगो नास्तीति कल्पनमेव लघु । अनन्यथासिद्धनियतपूर्ववर्त्येक स इति चेत् । सत्यम् । तथापि तस्यां दशायां फलोपधायकता तस्य नास्तीत्यनुभवसिद्धत्वात्[3] ······ प्रतिबन्धकाभावे धर्मद्वयकल्पनाया गरीयस्त्वात् ।

यदि च प्रतिबन्धकाभावः फलोपधायकस्तदा विना अनलसंयोगमपि दाहयोग्यः[4] । अथ मिलितमेव तथेति चेन्न मिलितस्यातिरिक्तस्याभावात् । भावे वा मिलिते कारणता न प्रत्येकमिति सिद्धा अतिरिक्ता सा इति आकलय । तस्याश्चाप्रतिबद्धमेव आश्रयो भूतलं कालविशेषावच्छिन्नमिव घटाभावस्येति प्रतिबन्धके न तस्याः नाशो नवा तदभावेन पुनस्तस्या जन्मेति वदन्ति । तन्न । गृहे नास्तीति धियः संशयात्मकत्वाभावात् । नवा योग्यानुपलब्ध्या अभावग्रहे वहिःसत्त्वधीः[5] कारणं [6]घटाभावनिश्चयवदुपपत्तेः । तत्राऽपि घटो देशान्तरवर्ती अस्त्येवेति चेन्न । विनष्टस्य देशान्तरेऽभावात् । तथा प्रागभावप्रतियोगिनश्च अन्यथा तयोर्नित्यतापत्तेः । जीवित्वेन निश्चितस्य गृहेऽसत्त्वनिश्चये बहिःसत्त्वधीः कारणमिति चेन्न । मानाभावात् । एकस्मिन् काले अस्ति नास्ति इति धीर्नोदेतीति चेन्न । तथापि गृहेऽधुना नास्तीतिधीः[7] स्यादेव क्वचिदस्तीत्यनेन गृहेऽपि सत्त्वं प्रसक्तं सामान्यशास्त्रमिव विशेषशास्त्रेण[8] गृहासत्त्वधिया बाध्यते तथापि बहिःसत्त्वसिद्धिः कुतः इति चेत् । क्वचिदस्तीति अनुमानादेव । तथापि बहिःसत्त्वप्रकारिकासिद्धिर्न[9] स्यादिति चेन्न ।

---

१. देवदत्ताभाववत्तया । २. प्रतिबत्वं न । ३. अनुभवसिद्धस्यव शक्तिः । ४. दाहायोग्यः । ५. इत्याकलय । ६. बहिः सधी । ६. निश्चयाबुपपत्तेः । ७. अधुनास्ति इति पाठः । ८ विशेषशास्त्रेणागृहासत्त्वधियाबाध्यते ।

## ३६. अनुपलब्धिलक्षणखण्डनम्

**योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तम्, प्रमाणाभावस्य तथात्वे विभ्रमानुदयप्रसङ्गात्। उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिमप्रतिसन्जानवतः**

एकविशेषबाधे सामान्यज्ञानस्य[1] तदितरविशेषप्रकारकत्वनियमात्। तथापि विशेषस्यानुपस्थितस्य न प्रकारता स्यादिति चेन्न। देवदत्तो गृहातिरिक्तवर्ती-जीवित्वे सति गृहासत्त्वात् यो जीवित्त्वे सति गृहेऽसन् स बहिः सन् तथाविधोऽहमिवे-त्यनुमानतः तत्सिद्धेः। एवमेव द्वितीयगृहेऽसत्त्वमप्यात्मदृष्टान्ते नैव साध्यम्। मूर्तत्वे-नैव देशान्तरवर्तित्वाभावोऽपि निर्णेतव्यः तस्य तद्व्याप्यत्वात्। नापि शक्तिः पदार्था-न्तरं क्लृप्तेनानन्यथासिद्धनियतपूर्ववर्तित्वेनैवोपपत्तेः।

यत्तु प्रतिबन्धकाभावमात्रादेव फलं स्यादिति तन्न—(इयान् भागस्त्रुटितः प्रथम पुस्तके।) युक्तम् अनलस्यापि कारणतायाः प्रमितेः तथाच यावत्कारण-तावच्छेदकानामाश्रयादेव फलसिद्धेः। नच तावता कारणता व्याघातः।

यत्तु पार्थसारथिना मूषिकाघ्रातशालिवीजाद् अङ्कुरोत्पत्य दर्शनात् घ्राण-नाश्या शक्तिः कल्प्यते। नच घ्राणस्य प्रतिबन्धकतया तदुपपत्तिः। सत्यपि घ्राण-ध्वंसे अङ्कुरानुत्पत्तेः। नच घ्राणप्रागभावो हेतुः प्रागभावस्यातिरिक्तस्याभावादि-त्युक्तम्। तन्न घ्रातभिन्नवीजत्वेनैव स्वरूपयोग्यत्वमिति कल्पनयैव तदुपपत्ते-रिति दिक्।

इत्यर्थापत्तिखण्डनम्।

### अथानुपलब्धिप्रमाणखण्डनम्

अभावोऽपि[2] प्रमाणाभावो नास्तीत्यर्थस्यार्थस्यासन्निकृष्टस्येति शावरभाष्यं तद्दूषयति—**योग्यानुपलम्भ** इति। अत्र प्रमाणपदं यदि प्रमापरं तदा शुक्तौ रजतप्रमाभावात् रजताभावप्रमा स्यादिति रजतभ्रमो न स्यात्। किञ्च स्वरूपमात्रदृष्टं च वेश्माद्यर्थं स्मरन्नथ तत्रान्येन[3] अस्तितां पृष्टः तदैवं प्रतिपद्यते इति भवतां मतम्। तदपि न स्मरणभावस्य[4] प्रमाणभावाभावात्।

यदि न उपलम्भस्य निश्चयस्याभावो हेतुः तदा शङ्खे पीतभ्रमो न स्यात् पीताभावग्रहसामग्रीसत्त्वात्। श्वेतत्वेन अनुभवदशायां न भवत्येवेतीष्टापत्तिमा-शङ्क्याह—**धवलिमप्रतिसन्धानवत्** इति आनुमानिकधवलिमज्ञानवतः धवलिम-स्मरणतो वा पित्तदूषितनयनस्य पीतभ्रमः स्वीक्रियते स न स्यात् पीतानुपलम्भे सति पीताभावप्रमायाः पातादित्याशयः।

१. सामान्यतानस्य २. प्रमाणाभावोपि प्रमाणान्तरं नास्तीति अस्यार्थस्येति इति पाठः।
३. तत्रान्यनास्तितां। ४. स्मरणाभावस्य प्रमाणाभाववाभावात्।

**पीतभ्रमानुदयप्रसङ्गात् । कालभेदात्तत्राविरोध इति चेन्न, तथापि संसृष्टयोरन्योन्याभावाग्रहणप्रसङ्गात्, तादात्म्यस्य स्वरूपमात्रानतिरेकात् । अभावस्फुरणे च तत्प्रतिभानस्य ध्रौव्यात् ।**

धवलिमज्ञानं पीतज्ञानेन बाधिततया पीतानुपलब्धिसम्पादकतया कथितम् । अयं अथ श्वैत्यस्मरणकाले पीतानुपलम्भेऽपि तदुत्तरकाले पीतोपलम्भसम्भवेन अनुपलब्ध्यभावात् न पीताभावप्रमेति भ्रमो नानुपपन्नः इति शङ्कते—**कालभेदादिति ।** स्मरणग्रहणयोरेकदानुत्पादादिति भावः ।

पीतभ्रमप्राक्काले[1] अभावप्रमासामग्रीसत्त्वात् पीताभावप्रमोत्पादो दुर्वार इति पीतभ्रमोत्पत्तेः सम्भवेन पीतानुपलब्धेरावश्यकत्वमिति भावः ।

ननु पीतभ्रमात् प्राक् श्वैत्यस्मरणोत्तरकालं पीतोपलम्भो नास्त्येवेति शङ्केयमत्यनुपपन्ना । नच पीतगतपीतिमानुभवोऽस्त्येवेति वाच्यम् । तस्याभावाधिकरणवृत्तितया शङ्के पीताभावप्रमायाः अप्रतिबन्धकत्वादिति चेन्न । पीताभावप्रमायाः फलस्यादर्शनेन दोषनिष्ठपीतग्रहस्यापि प्रतिबन्धकत्वमिति शङ्कितुराशयात् ।

किञ्च पीतानुपलब्धिरियं न प्रमा हेतु दोषेण तस्याः प्रमाजननसामर्थ्योत्सारणादित्युक्तौ का गतिः । न च ज्ञानजननसामर्थ्यातिरिक्तं न प्रमाजननसामर्थ्यं, तस्य प्रतिबन्धे भ्रमस्याप्यनुत्पत्त्यापत्तिः । अतिरिक्तत्वे च प्रमायाः स्वतस्त्वहान्यापत्तिरिति वाच्यम्, भ्रमो न ज्ञानं किन्तु आभासः स इत्यसकृदावेदितत्वादित्युपपन्नैव[2] शङ्का ।

अनुपलब्धेः कारणत्वं व्यभिचारेणं दूषयति **तथापीति ।** अन्योन्यसंसृष्टयोर्गिरिवृक्षयोरन्योन्याभावग्रहो न स्यादित्यर्थः ।

ननु गिरिवृक्षयोर्नान्योभावप्रतियोगित्वं येन तदुपलब्धावपि अभावग्रहादनुपलब्धेर्व्यभिचारः स्यात् किन्तु तादात्म्यं, न चेह तदुभयतादात्म्यज्ञानमस्तीत्याशङ्क्याह—**तादात्म्यस्येति ।** प्रतियोगिस्वरूपातिरिक्तं तादात्म्यं निष्प्रमाणकम् । न च प्रतियोगिनावच्छेदको धर्म एव तादात्म्यार्थः । तथा सति गिरित्वं वृक्षः त्वं च तत्. नच तस्यानुपलब्धिः । गिरित्वस्य वृक्षवृत्तितया अनुपलम्भोऽस्तीति चेत्तर्हि गिरित्वसंसर्गाभावात् अस्य विशेषो न स्यात् । तस्मात् यत्र संसृष्टतया प्रतियोगित्वं संसर्गस्य वा तत्र संसर्गाभावधीः अन्योन्याभावे तु स्वरूपेणैव प्रतियोगित्वं, स्वरूपमेव च तादात्म्यं नच तदुपलब्धिरस्तीति व्यभिचारः ।

ननु तथापि गिर्यात्मना वृक्षोपलम्भो नास्तीति । चेन्न । तथा सति तस्यापि भावात् तत्रान्योन्याभावग्रहोऽपि न भवति ।

१. पीतज्ञाननिबोधितया । २. इत्युपपन्नमेवशङ्काम् । ३. मान्योन्याभाव ।

परन्तु भेदभ्रम एव इति चेन्न। स एव न स्यात् अन्योन्याभावप्रमासामग्र्याः तत् प्राक्काले सत्त्वादित्यपव्याख्यानम्। व्यभिचारप्रदर्शनपरत्वादस्य ग्रन्थस्य।

वस्तुतस्तु गिरिर्वृक्षो नेति प्रतीतौ गिरौ वृक्षाभेदो भासते। स च स्वरूपतो बाधित इति—अभावात्मना भासते।

"भावान्तरमभावो हि कयाचित्तु व्यपेक्षया[1]" इति भट्टोक्तेः। तथाच गिरिरेव पटान्योन्याभाव इति स्थिते पटात्मको योऽन्योन्याभावस्तदभेदो यदि गिरिस्तदा प्रतियोगितादात्म्योपलब्धेः कथं न व्यभिचारः।

अथ अभावभाने तादात्म्यं भासतां न तु तत्र प्राग् इति चेन्न कारणीभूतज्ञाने तदभाने फलीभूतज्ञाने तदभानापत्तेः।

यदि च प्रतियोगितादात्म्यज्ञानं विना अन्योन्याभावज्ञानं तदा संसर्गाभावात् को विशेषः स्यात्।

अथ आहार्यतादात्म्यज्ञानं हेतुः, अनाहार्यं तादात्म्यानुपलब्धिः कारणमितिचेत्। न। अन्योन्याभावग्रहात् प्राक् तज्ज्ञानस्य आहार्यताया असिद्धेः, ग्राह्याभावनिश्चये सति आहार्यात्मकं दोषाद् यत् ज्ञानं तदेव हि आहार्यम्।

यद्वा यदि तादात्म्यं स्वरूपातिरिक्तं प्रतियोगि स्यात् तदा अभावभाने तत्[2] पूर्वं स्मरेत्, न चैवं किन्तु गिरिर्वृक्षभिन्नः इत्येव प्रकाशते तथाच नास्त्येव तादात्म्यं प्रतियोगिनोऽतिरिक्तम्। ततश्च प्रतियोगिनः उपलम्भात् सिद्धो व्यभिचारः।

यद्वा प्रतियोगिनोऽनुपलम्भे अभावबुद्धौ तस्य भानं न स्याद् यतो प्रतियोगिप्रकारकाभावबुद्धौ प्रतियोगिनो विशेषणस्य ज्ञानं कारणमिति सिद्धोऽनुपलब्धेर्व्यभिचारः।

नचाधिकरणे प्रतियोगिज्ञानाभावो हेतुः वंशे [3]नायनोरगभ्रमसत्त्वेऽपि त्वचा तदभावग्रहात् तत्रेन्द्रियाणां हेतुत्त्वेऽपि अनुपलब्धेर्व्यभिचारस्य सत्त्वात्।

अथाभावग्राहकातिरिक्तप्रतियोग्युपलम्भाभावो हेतुः प्रतियोगिस्मृतिः उरगभ्रमादिकञ्चाभावग्राहकमेवेति चेत्। तदिदमन्योन्याश्रयग्रस्तम्। इति शिवम्।

---

१. विवक्षया इति पाठः। २. त्पूवमरेत्।

३. नारायणोरग इति प्रथम पुस्तके पाठः।

तर्काम्भोनिधिमन्दरो बुधकुलाम्भोमप्रचण्डांशुमान् ।
ग्रन्थग्रन्थिविमोचने सुरगुरुः प्रेक्षावतामग्रणीः ।।
शास्त्रार्थार्णवसेतुरुद्भटभटान् सम्प्राप्तलीलाजयः ।
जातो मे जनको गुरुर्हरिहरः सार्थः कृपालुः कविः ।।१।।

येनाकारि सुबोधकल्पकलिका भाष्ये स्फुटं शावरे ।
गीताया मधुसूदनस्य सुकृतौ भाष्यञ्च भाषामयम् ।।
व्याख्या कापि कृता नवा मतिमता न्यायप्रसूनाञ्जलेः ।
काव्यञ्चापि मनोहरं सुकृतिना ब्रूमः कियत् तत्कृतिम् ।।२।।

श्रीमद्रामनिरञ्जनाभिधमहाविद्यालये [1]पाटने ।
श्रेष्ठिश्रीलमुरारकान्वितमहावीरादिभी रक्षिते ।।
प्राचार्यस्य महत् पदं बहुतिथं निर्वाह्य 'भूषामणिं"
संशोध्याथ च टिप्पणेन सुमतिः श्रीब्रह्मदत्तोऽयुनक् ।।३।।

प्रारम्भात् अनुपलब्धिप्रमाणखण्डनस्य इयन्तमंशं यावदेव खण्डनभूषामणिरुपलब्धः सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्थ सरस्वतीभवन-पुस्तकालयात् ।

१७-१२-७९



१. पाटलिपुत्रस्थे इत्यर्थः ।

# मूलस्थश्लोकावलिः

# खण्डनभूषामणिटीकान्तर्गतश्लोकानुक्रमणिका

# मुकुलितवर्णविवरणम्

१—सम्पूर्णानन्द—संस्कृतविश्वविद्यालये समुपलब्धा पाण्डुलिपि:

"प्रथमपुस्तकम्", "आदर्शपुस्तकम्", "क पुस्तकम्"

इति नाम्ना पठितम् ।

२—कश्मीरपुस्तकालयात् समुपलब्धापाण्डुलिपि:

"ख" पुस्तकनाम्नाभिहितम् ।

३—मुद्रितपुस्तकम्—"तृतीय पुस्तकम्"

इति नाम्नाभिहितम् ।



## खण्डनभूषामणिटीकान्तर्गतसमुद्धृतानां ग्रन्थानां विदुषां च नामावलिः

